भगवन्नहमेतेन पृथुना पृथुतेजसा ।
उप(द्व ? द्रु)ता त्वां शरणं प्राप्ता त्रायस्व मां ततः ॥ ८ ॥

वदन्त्यामिति मेदिन्यामाविरासीदथो पृथुः ।
संरम्भमुक्तहृदयो ब्रह्माणं प्रणनाम च ॥ ९ ॥

जगादैनमथ स्निग्धध्वनिगम्भीरया गिरा ।
कुर्वंस्तद्यानहंसानां पयोदध्वनिशङ्कितम् ॥ १० ॥

त्वयास्मि जगतां नाथ[1] ! जगतोऽधिपतिः कृतः ।
स्थापितानि च भूतानि सर्वाण्यपि वशे मम ॥ ११ ॥

तेष्वियं मम विश्वेश ! कदाचिद् वशवर्तिनी ।
समीकरोमि पाषाणजालान्यस्याः किलाधुना ॥ १२ ॥

व्यस्तानि धनुषा तावद् गौर्भूत्वेयं पलायिता ।
दोग्धुकामोऽहमप्येनां चिरमन्वगमं महीम् ॥ १३ ॥

यत्रक्वापि[2] प्रयात्येषा तत्र मामेव पश्यति ।
अपश्यन्त्यन्यतस्त्राणमदुग्धा त्वामुपस्थिता ॥ १४ ॥

अस्यां वर्णाश्रमस्थानविभागश्च विधास्यते ।
इयं च दुर्गमानेकक्षोणीधरकुलाकुला ॥ १५ ॥

विधास्येऽस्यां कथं त्वेतदिति मे शङ्कितं मनः ।
पृथुनेत्यथ विज्ञप्तो[3] भगवानब्जसम्भवः ॥ १६ ॥

उवाच बोधयन्नेनं[4] कृत्वा भूमिं च निर्भयाम् ।
इयं मही महीपाल ! विधिवत् पालिता सती ॥ १७ ॥

सस्यैरुत्पाद्यै[5] निष्पन्नैस्तव भोग्या भविष्यति ।
यच्च ते स्यादभिप्रेतं स्थानादिविनिवेशनम् ॥ १८ ॥

---

१ क. प्रतेरारम्भः । २ ख–द आदर्शौ अत आरभ्येते । ३ द. विज्ञप्ते । ४ द. नैवं विकीर्य विभयां भुवम् । ५ क. रद्यैव, द. रुपाद्य । गणपतिशास्त्रिभिः उपाय–इति पाठनिर्देशः कृतः अस्माभिः उत्पाद्य इति ।

तदेष त्रिदशाचार्यः सर्वसिद्धिप्रवर्तकः ।
[1]सुतः प्रभासस्य विभोः स्वस्रीयश्च बृहस्पतेः ॥ १९ ॥

विश्वाभिसायि[2]र्धीः सर्वं विश्वकर्मा करिष्यति ।
राजन्नसौ महेन्द्रस्य विदधावमरावतीम् ॥ २० ॥

[3]अन्या अप्यमुना रम्याः पुर्यो लोकभृतां कृताः ।
त्वया क्षेत्रीकृतां मूर्त्तिं दृष्ट्वा साद्रिद्रुमामसौ ॥ २१ ॥

सन्निवेशान् पुरग्रामनगरा[4]णां विधास्यति ।
तद् गच्छ वत्स ! लोकानामितस्त्वं हितकाम्यया ॥ २२ ॥

भयोज्झिता त्वमप्युर्वि ! पृथोः प्रियकरी भव ।
काले स्मृतः स्मृतः पुण्यो राज्ञः प्रियचिकीर्षया ॥ २३ ॥

त्वमप्यखिलमेवैतद् [5]विश्वकर्म(न्) ! करिष्यसि ।
इत्युक्त्वा गमनमुपेयुषि प्रजेशे [6]स्वं स्थानं क्षितिभुजि चाश्रिते मुदोर्व्याम् ।
प्रालेयावनिभृतमाजगाम खेलत्सिद्धस्त्रीपरिगतमाशु विश्वकर्मा ॥२४॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
[7]महासमागमनो नाम प्रथमोऽध्यायः ॥

---

## अथ विश्वकर्मणः पुत्रसंवादो नाम द्वितीयोऽध्यायः ।

अथ पृष्ठे हिमगिरेः शशाङ्कशुचिरोचिषि ।
सिद्धामरवधूभुक्त[8]मणिमञ्जुगुहागृहे ॥ १ ॥

विस्तीर्णासनमासीनं सर्वज्ञमथ सं[9]स्मृताः ।
आययुर्विश्वकर्माणं चत्वारो मानसाः सुताः ॥ २ ॥

[10]जयो विजयसिद्धार्थौ चतुर्थश्चापराजितः ।
तमुपागम्य शिरसा नेमुः प्राञ्जलयो मुनिम् ॥ ३ ॥

---

१ क. श्रुतप्रभावश्च विभो प्रीतये ते बृहस्पतिः । २ शा. विश्वातिशायि° । द. विश्वाभिसायि । क. सुराणामपि चान्येषां । ४ द. ग्रामभगवादीनविं ५ क. विश्वकर्मा, द. विश्वकर्म । ६ द. यं । द. पृथिव्याख्याना शास्त्रसंभवा° । ८ द. पाणिगुहा° । ९ द. स्मृताः । १० द. भूयो ।

तानुवाच मुनिर्वत्सा ! विदितं वो यथा पुरा ।
[1]वास्तुब्रह्म सदा विश्वं व्याप्नोति सकलं जगत् ॥ ४ ॥

[2]धर्म्यं कर्म तदा स्वेष्ट[3]प्राप्त्यै लोकावनानि च ।
व्यवस्थाप्य चकारैष लोकपालश्च कल्पनाम् ॥ ५ ॥

अहमप्यमुना विश्वनाथेनाम्बुजजन्मना ।
लोकानां [4]संनिवेशार्थमादिष्टोऽस्मि स्वयम्भुवा ॥ ६ ॥

रम्याणि नगरोद्यानसभास्थानान्यथो मया ।
सुरासुरोरगादीनां निर्मितान्यात्मबुद्धितः ॥ ७ ॥

गत्वोर्वीं वैन्यनृपतेर्वत्साः ! प्रियचिकीर्षया ।
नगरग्रामखेटादीन् करिष्यामि पृथक् पृथक् ॥ ८ ॥

कार्ये त्वमुष्मिन् सकले मम विश्वसृजार्पिते ।
सम्यक्साहायकैर्भाव्यं भवद्भिरिति नः स्थितम् ॥ ९ ॥

यतस्त्रिभुवनालोकप्रो[5]द्यतस्याब्जिनीपतेः ।
सहायतां तमश्छेदे कलयन्ति मरीचयः ॥ १० ॥

स्वयं करिष्येऽहमथो निवासाय पृथोः पुरीम् ।
विचित्रनगरग्रामखेटामतिमनोहराम् ॥ ११ ॥

भवन्तः पुनरागत्य चत्वारोऽपि चतुर्दिशम् ।
तांस्तान् निवेशान् कुर्वन्तु पृथग्जनकृताश्रयान् ॥ १२ ॥

[6]अन्तरेष्वध्वपाथोधिशैलानां सरितां तथा ।
विधातव्यानि दुर्गाणि[7] नृपाणां भयशान्तये ॥ १३ ॥

वर्णप्रकृतिवेश्मानि संस्थानानि च लक्ष्मभिः ।
विधेयानि प्रतिग्रामं प्रति[8]पूः प्रतिपत्तनम् ॥ १४ ॥

---

१ द. सपर्यादौ विश्वाप्यखिलं तथा; क...... व्याप्नोति सकलं जगत् । वास्तुब्रह्मेत्यादि मूलस्थितः श्रेष्ठः पाठः शास्त्रिभिः टिप्पण्यां प्रदत्तः, स तु पाटनप्रतेः प्रतीयते । २ द. धर्म्मं । ३ द. स्वेष्ट°; क. श्रेष्टय; ख. श्रेष्ट । ४ ख. द. सन्निवासार्थं । ५ द. प्रतौ मूलपाठः प्रोद्यत°, पश्चाद्विकृतः प्रद्योत° । क. त्रुटितः; ख. प्रद्योत° । ६ द. अन्तरेष्वध्वनाम्भोधि° । ७ ख. द. संजातभयशान्तये । ८ द. प्रतिष्ठः ।

तानित्थमात्मतनयानभिधाय सम्यक्
सारार्थभूतमपरिस्फुटनोज्झितं च ।
[1]स्थानार्पितोरुभरनिर्वृतचित्तवृत्ति-
स्तूष्णीं प्रभासतनयो नयविज्जगाम ॥ १५ ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
[2]विश्वकर्मणः पुत्रसंवादो नाम द्वितीयोऽध्यायः ॥ छ ॥

---

## अथ प्रश्नो नाम तृतीयोऽध्यायः ।

अथ तेषु जयो नाम वाक्यं तद् विश्वकर्मणः ।
श्रुत्वा कृताञ्जलिः प्राह स्निग्धगम्भीरया गिरा ॥ १ ॥

ज्ञानैकनिधिरप्यस्मान् यत् सहायतया किल ।
वृणोषि तेन न वयमात्मानं बहु मन्महे ॥ २ ॥

तदिदानीं हितार्थे नः प्रजानामपि च प्रभो ! ।
अप्रमेयप्रभावस्त्वं सर्वमाख्यातुमर्हसि ॥ ३ ॥

पूर्वमेकार्णवे जाते जगति प्रलयं गते ।
महाभूतामरपुरीज्योतिषां कथमुद्भवः ॥ ४ ॥

किमाकारा किमाधारा किंप्रमाणा च मेदिनी ।
विस्तृतिः परिधिश्चास्या बाहुल्यमपि कीदृशम् ॥ ५ ॥

उच्छ्रायव्यासदीर्घत्वैः कैः केऽस्यां कुलभूभृतः ।
कति ख्यातानि वर्षाणि द्वीपा नद्योऽब्धयस्तथा ॥ ६ ॥

काः सूर्येन्दुग्रहर्क्षादिगतयश्च पृथक् पृथक् ।
भूमेरुपरि किं चैषामन्योन्यं प्रोक्तमन्तरम् ॥ ७ ॥

किमाधारं दिवि ज्योतिश्चक्रं भ्रमयते च कः ।
लोके कथं महाभूतान्यूर्ध्वाधो बिभ्रति स्थितिम् ॥ ८ ॥

---

१ क. स्थानार्पणातिशयनि° । २ क. 'जयविजयसिद्धार्थपराजितसुतागमनो नाम' ।

युगधर्मव्यवस्थाभिः काश्चादौ लोकवृत्तयः ।
कश्चादिमस्ततो राज्ञां ग्रहाणां वर्णिनां कथम् ॥ ९ ॥

कति देशाः कति भुवः पृथक्त्वेन निरूपिताः ।
कार्यः क च कथं सन्निवेशो जनसंश्रयः ॥ १० ॥

[1]व्यक्तचिह्नैः स्वनस्पर्शगन्धवर्णरसादिभिः ।
काः शस्ता निन्दिताः काश्च पुराणामपि भूमयः ॥ ११ ॥

कार्यं केन विधानेन भूभृत्पुरनिवेशनम् ।
किं फलं सुनिविष्टेऽस्मिन् दुर्निविष्टे च किं पुनः ॥ १२ ॥

कतिप्रकारं दुर्गं च दुर्गकर्मक्रमश्च कः ।
किमग्रपुरसंस्थानमनिन्द्यं किं [2]च निन्दितम् ॥ १३ ॥

कश्चात्रानुक्रमविधिः प्रमाणैरुपपादितः ।
प्राकारगोपुराट्टालपरिखावप्रकर्म च ॥ १४ ॥

तमङ्गनिर्गमद्वारप्रतोल्यट्टालकादिभिः ।
कीदृशः प्रविभागश्च रथ्याचत्वरवर्त्मभिः ॥ १५ ॥

भूमिप्रमाणसंस्थानं सीमा [3]च क्षेत्रदिक्पथैः ।
नगरग्रामखेटानां निवेशाः स्युः पृथक् पृथक् ॥ १६ ॥

पुरस्याभ्यन्तरे पूर्वं कैर्द्रव्यावयवक्रमैः ।
कस्मिन् स्थाने कथं कार्यं शक्रध्वजनिवेशनम् ॥ १७ ॥

प्रतिसंवत्सरं तस्य नियुक्तस्य कथं पुनः ।
हिताय नृपलोकानां विधातव्यो महोत्सवः ॥ १८ ॥

गृहेषु केषु केष्वत्र कासु कासु ककुप्सु च ।
भागैर्बाह्यान्तरैः कैः कैः कार्याः काः काश्च देवताः ॥ १९ ॥

कैः कैर्यानपरीवारवर्णरूपविभूषणैः ।
कार्याः कैः कैः सुरा वस्त्रवयोवेषायुधध्वजैः ॥ २० ॥

---

१ क. ख. द. व्यक्तिचिह्नैः । २ द. विनिन्दितम् । ३ क. ग. भू पाठः, ख. द. च ।

प्रमाणमितिसंस्थानसङ्ख्यानोच्छ्रयलक्ष्मभिः ।
प्रासादाः कस्य के वा स्युः सुरराजद्विजातिषु ॥ २१ ॥

प्राकारपरिखागुप्तं पुरे स्याद् गोपुरं क च ।
युग्ममध्याम्बुवेश्मानि क च स्युः क महानसम् ॥ २२ ॥

कोष्ठागारायुधस्थानभाण्डागारनिवेशनैः ।
व्यायामनृत्तसङ्गीतस्नानधारागृहादिभिः ॥ २३ ॥

शय्यावासगृहप्रेक्षावेश्मादर्शगृहैः पृथक् ।
क्रीडादोलाश्रयारिष्टगृहान्तः पुरवेश्मभिः ॥ २४ ॥

विटङ्कभ्रमनिर्यूहकक्षासंयमनादिभिः ।
अशोकवनिकाभिश्च लतामण्डपवेश्मभिः ॥ २५ ॥

वापीभिर्दारुगिरिभिश्चित्राभिः पुष्पवीथिभिः ।
एतैर्विशेषैरन्यैश्च विचित्रैर्विपिनाश्रयैः ॥ २६ ॥

मानोन्मानक्रियायामद्रव्याकृतिविनिर्मितः ।
निकेतननिवेशः स्याद् राज्ञां भागाश्रितः कथम् ॥ २७ ॥

पुरोधःसैन्यभूश्रेष्ठदैवचिन्तकमन्त्रिणाम् ।
कं कं च भागं प्राप्य स्युर्निवेशा नृपवेश्मनः ॥ २८ ॥

पुरे स्युर्दिक्षु भागेषु पदभागेषु केषु च ।
विप्रराजन्यविट्शूद्रास्तज्जैरन्तरजैः समम् ॥ २९ ॥

तथा कृषितुला[1]शिल्पकलापण्योपजीविनः ।
हिंसाश्रिताश्च पुरुषा निवेश्याः स्युः कथं क्व च ॥ ३० ॥

निवेशाः कीदृशाश्चैषां कियन्तो वा भवन्ति ते ।
[2]शस्यं लोकेन वा तेषां कैः प्रवेशजलभ्रमैः ॥ ३१ ॥

धिष्ण्यमाद्यं कतिविधं द्रव्याण्याद्यानि कानि वा ।
हेतुरेषां च सर्वेषां स्याच्च कीदृगनुक्रमः ॥ ३२ ॥

---

१ द. शिल्पिकल्याणाद्योप॰ । २ द. सरयां (? शस्यं) लोकेन वा तेषां । क. शस्यन्ते केन वा तेषां ।

भजन्ते योगमन्योन्यं कानि द्रव्याणि कैः सह ।
कानि योगं न गच्छन्ति कैर्वा कः क्व वसेत् पुमान् ॥ ३३ ॥

इष्टकाकर्म किं चेष्टं कीर्तिता कतिधा च भूः ।
परिकर्मक्रमस्तासां वह्त्यम्बुपवनैश्च कः ॥ ३४ ॥

गुरुवर्णिध्वजोर्वीशतद्भृत्यप्रतिमा पुराम् ।
वृक्षाः के के प्रशस्ताः स्युर्गृहार्थे के च गर्हिताः ॥ ३५ ॥

तच्छेदस्रावसंभूतं शब्ददिक्पातगर्भजम् ।
विज्ञायते कथं कर्तृकारकादिशुभाशुभम् ॥ ३६ ॥

प्रमाणं तक्षणच्छेदैः [1]शोधितानां कथं भवेत् ।
आहृत्य स्थापनं पूर्वं दारूणां स्थानके क्व च ॥ ३७ ॥

सामान्यतोऽखिलानां काः काश्च जातेर्विशेषतः ।
प्रशस्तैर्लक्ष्मभिर्युक्ता भूमयः परिकीर्तिताः ॥ ३८ ॥

शल्योद्धारविधिः कीदृक् कीदृशं भूमिकर्म च ।
[2]दिग्ग्रहः सूत्रणं चाधिवासनं च कथं भवेत् ॥ ३९ ॥

प्रमाणं मूलपादस्य शिलान्यासे च को विधिः ।
विभज्यते कथं वेश्म शालालिन्दविभाजनैः ॥ ४० ॥

मानानि कानि भित्तीनां पीठानामुच्छ्रयाश्च के ।
कथं तानि विकल्प्यानि वर्णानां मेखलादिभिः ॥ ४१ ॥

समस्तकानां स्तम्भानां द्वारस्तम्भासनैः सह ।
नागवीथ्युपधानानां समं कण्ठविनिर्गमैः ॥ ४२ ॥

जयन्तीसङ्ग्रहतुलाकार्याणां वास्तुनोऽपि च ।
कीदृशं फलकानां च प्रमाणं परिकीर्तितम् ॥ ४३ ॥

स्वमानात् सर्ववर्णानां तलोच्छ्रायास्तु कीदृशाः ।
का गवाक्षकपोतालिवेदिकाजालकक्रियाः ॥ ४४ ॥

---

१ द. ख. ग. साधितानां । २ द. दिग्वहसू° ।

स्थूणा [1]निस्पुष्टिकोत्सूका मृगा(ल्यो ? ल्यु)पतुलास्तथा ।
सान्तःप्राणिशिरोवंशाः किंप्रमाणाः प्रकीर्तिताः ॥ ४५ ॥

छाद्योदयाः कियन्तः स्युर्वृत्तच्छाद्यक्रमश्च कः ।
त्र्यश्राणां खण्डवृत्तानां [2]लुपानां च क्रियाः कथम् ॥ ४६ ॥

सीमालिन्दशिरस्तासां कीदृशी [3]चावलम्बना ।
कतिप्रकाराः प्रासादशिरसां च विकल्पनाः ॥ ४७ ॥

यच्चान्यदेवमादि स्यात् प्रासादभवनादिषु ।
द्रव्यकाष्ठकलासङ्गि प्रमाणं तस्य कीदृशम् ॥ ४८ ॥

शालालिन्दप्रमाणानि चतुःशालेषु धामसु ।
ज्यायोमध्ययवीयस्सु मूषाभिः काष्ठकल्पना ॥ ४९ ॥

एकद्वित्रिचतुःशालान्येषां संयोगतोऽपि च ।
कथं कति च वेश्मानि [4]कल्प्यन्ते प्रविभागशः ॥ ५० ॥

कथं च षोडशचतुःषष्ट्येकाशीतयः शतम् ।
संविभागाः पदानां स्युः कथमत्रामरस्थितिः ॥ ५१ ॥

आद्यो नवपदो वास्तुरन्त्यः साहस्रिकः कथम् ।
अङ्गप्रत्यङ्गभागेषु केषु केषु क्व तस्थुषः ॥ ५२ ॥

कथमेते सुराः सर्वे वास्तोरस्य व्यवस्थिताः ।
एतद्वंशशिरश्च[5]क्षुःकुक्षिहृन्मूर्धमर्मसु ॥ ५३ ॥

जायेत पीडा द्रव्येषु सन्निविष्टेषु कस्य का ।
वास्त्वारम्भप्रवेशेषु यात्रायां स्थापनेषु च ॥ ५४ ॥

दूतस्वप्ननिमित्ताद्यैः कथं ज्ञेयं शुभाशुभम् ।
दारुक्रियासु चित्रेषु तथा लेप्यक्रियासु च ॥ ५५ ॥

[6]योज्यं किं किमयोज्यं च किं भूपभवनादिषु ।
हस्तस्य लक्षणं मानसंज्ञा वै ज्ञायते कथम् ॥ ५६ ॥

---

१ द. णिमुष्टिकोत्सूकामृगाल्योपतुलास्तथा । २ द. लुमानां । ३ द. भावलम्बना । ४ द. कल्पन्ते । ५ द. शिरोकक्ष । ६ द. अंगप्रत्यंगयोज्यं किं किमयोज्यं च ।

किं हव्येष्वग्निलक्ष्म स्यात् किं च निर्युक्तलक्षणम् ।
अनुक्रमेण वर्णानां बलिकर्म च कीदृशम् ॥ ५७ ॥
विधेयं विधिना केन भवने च प्रवेशनम् ।
पतिते स्फुटिते जीर्णे प्लुष्टे वज्राशनिक्षते ॥ ५८ ॥
निमग्नभग्ननिर्भिन्नप्रशीर्णेषु च वास्तुषु ।
मधुवल्मीकसंभूतौ प्रविरूढे च दारुणि ॥ ५९ ॥
जायते किं फलं कुत्र प्रायश्चित्तेन को विधिः ।
इत्येवमादिकमनेकविधं विधानं वेश्मोपगं च पृथगाश्रयसंभृतं च ।
अस्मास्वनल्पकरुणार्द्रितचित्तवृत्तिर्व्याख्यातुमर्हसि समस्तमनु-
क्रमेण ॥ ६० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
प्रश्नाध्यायस्तृतीयः ॥

---

## अथ महदादिसर्गश्चतुर्थोऽध्यायः ।

जयस्येति समाकर्ण्य विश्वकर्मा च तद् वचः ।
जगाद गर्जदम्भोदध्वनिगम्भीरया गिरा ॥ १ ॥
साधु वत्स ! त्वया सम्यक् प्रज्ञयातिविशुद्धया ।
प्रश्नोऽयमीरितो वास्तुविद्याब्जवनभास्करः ॥ २ ॥
स त्वं निधाय प्रश्नानां समुदायममुं हृदि ।
वदतो मेऽवधानेन शृणु यद् ब्रह्मणोदितम् ॥ ३ ॥
इदमासीद् युगान्ताग्निप्लुष्टं संवर्तकादिभिः ।
समुत्सृजद्भिरम्भांसि विश्वमेकार्णवीकृतम् ॥ ४ ॥
तमोभूते ततस्तस्मिन् भोगिपर्यङ्कमाश्रितः ।
हरिः सुष्वाप सलिले कृत्वोदरगतं जगत् ॥ ५ ॥
अथास्य नाभावम्भोजमभूत् तस्मिन्नजायत ।
सर्वज्ञानाश्रयः श्रीमांश्चतुर्वक्त्रः सुरेश्वरः ॥ ६ ॥
स कदाचिद् दधच्चेतः प्रजासृष्टिं प्रति प्रभुः ।
महान्तमसृजत् तत्र पूर्वं विश्वस्य हेतवे ॥ ७ ॥

त्रिधाहङ्कृतमेतस्मान्मनोऽभूत् सात्त्विकादतः ।
राजसादपि चाक्षाणि तन्मात्राणि च तामसात् ॥ ८ ॥

तेभ्यः पञ्च महाभूतान्याविरासन्ननुक्रमात् ।
व्योमादीनि धरान्तानि स्वैः स्वैर्युक्तानि तैर्गुणैः ॥ ९ ॥

अधरोत्तरभावश्च सम्यगेषामथोच्यते ।
आदौ पृथ्वी ततोऽधस्तादापस्तासां च पावकः ॥ १० ॥

तस्याप्यधस्तात् पवनस्ततः खमवकाशदम् ।
भूतादिस्थं वियत् सोऽपि महता परिवारितः ॥ ११ ॥

महांश्च विशति व्यक्तं व्यक्तमव्यक्तकं पुनः ।
ग्राह्यग्राहकभावेन व्यक्तो भूतसमुद्भवः ॥ १२ ॥

आधाराधार्यभावश्च यथार्थौ च स्थितिव्ययौ ।
महाभूतानि सगुणान्येवं सृष्ट्वा ततः प्रभुः ॥ १३ ॥

मनः पुनरसौ सर्गे भौतिके सम्यगादधौ[1] ।
सुरासुरान् सगन्धर्वान् यक्षरक्षांसि पन्नगान्[2] ॥ १४ ॥

[3]नागान् मुनीनप्सरसो मनसा समजीजनत् ।
अर्केन्दू चक्षु (षी ? षो) जातौ गगनभ्रमणक्षमौ ॥ १५ ॥

गात्रेभ्योऽपि च नक्षत्रचक्रमस्मादजायत ।
इन्द्रियेभ्यश्च पञ्चभ्योऽभूत् ताराग्रहपञ्चकम् ॥ १६ ॥

ग्रहत्वं पुनरेतेषामिन्द्रियग्रहणाद् विदुः ।
सुरेन्द्रचापचिह्नानां विद्युद्वलयशालिनाम् ॥ १७ ॥

भीमाशनिभृतां चासीत् केशेभ्योऽम्बुमुचां भवः ।
विश्वमापूरयन् कृत्स्नमाविरासीत् तदिच्छया ॥ १८ ॥

त्रिलोकीपावनस्तिर्यग्गामी चण्डः समीरणः ।
ततश्चण्डानिलोद्धूतमुपर्यर्कांशुतापितम् ॥ १९ ॥

---

१ द. आदधे । २ द. राक्षसान् । ३ ख. ग. द. सावित्री पुनरप्सरसो ।

वायुभिः शोषमानीतं जगाम घनतां पयः ।
तस्योपरिष्टादम्भोधेरधः कुण्डलितं वपुः ॥ २० ॥

विष्णोः [1]सज्या(? शय्या)त्वमभ्येत्य धत्तेऽनन्तोऽखिलां भुवम् ।
न तप्तं येषु येष्वम्भः प्रदेशेष्वर्करश्मिभिः ॥ २१ ॥

नीतं न वानिलैः शोषं तत्र तत्राब्धयोऽभवन् ।
महाम्भोवीचिसङ्घाता विक्षिप्ताश्चण्डमारुतैः ॥ २२ ॥

यत्र यत्रापुरैक्यं ते तत्र तत्राद्रयोऽभवन् ।
निश्चलत्वार्थमवनिश्चर्मवद् वितताथ तैः ॥ २३ ॥

शैलैः कीलैरिव स्थानेष्वाचिता तेषु तेष्वियम् ।
वृद्धिं गताद्रिनिःष्यन्दैर्भूभृतां प्रविभागजा ॥ २४ ॥

निम्नगाभूत् ततोऽम्भोधेः कान्ता निम्नानुसारिणी ।
मेदिन्यन्तेषु [2]जलधिपर्यन्तेषु विनिर्ययुः ॥ २५ ॥

अम्भांसि यत्र यत्रासंस्ते द्वीपाश्चित्ररूपिणः ।
सनिम्नगाम्बुधिद्वीपा विभक्ताखिलभूधरा[3] ॥ २६ ॥

व्यक्ता बभूव कृत्स्नैवं भूमिर्भूतानि बिभ्रती ।
स चक्रे रौरवादीनां निरयाणामधः क्षितेः ॥ २७ ॥

स्वकर्मफलभुक्त्यर्थं स्थानं दुष्कृतकर्मणाम् ।
जरायुजाण्डजोद्भिज्जस्वेदजैः सह स प्रभुः ॥ २८ ॥

चतुर्धेत्यसृजल्लोके भूतग्रामं चराचरम् ।
द्वेधा जरायुजास्तत्र मनुष्याः पशवस्तथा ॥ २९ ॥

ग्राम्याः सप्ताभवंस्तेषु सप्तारण्यकृतालयाः ।
पुमान् गौस्तुरगच्छागौ मेषो वेगसरः खरः ॥ ३० ॥

ग्रामवासैकनिरताः सप्तैते परिकीर्तिताः ।
सिंहद्विपोष्ट्रमहिषाः शरभो गवयः कपिः ॥ ३१ ॥

१ द. सज्यात्व (? शय्यात्व); ग. सच्यात्व । २ द. जलधेः । ३ द. भूधराः ।

अरण्यगोचरा जीवाः सप्तैते वत्स! निर्मिताः।
धर्माधर्मविवेकित्वाच्छ्रेयान् ग्राम्येषु पूरुषः॥ ३२॥

अरण्यचारिषु श्रेष्ठः सिंहः शौर्यबलादिभिः।
सुपर्णा भुजगाः कीटा येऽपि च स्युः पिपीलिकाः॥ ३३॥

चतुर्धेत्यण्डजन्मानो जन्मिनस्ते प्रकीर्त्तिताः।
[2]क्लेद (केप? केश)समुद्भूताः कृमियूकादिजन्तवः॥ ३४॥

सर्वेऽपि स्वेदजन्मानस्ते प्रजापतिना कृताः।
उद्भिज्जाः पञ्चधा भूत्वा निर्दिष्टाः स्थावराश्च ते[3]॥ ३५॥

द्रुमा वल्लयश्च गुल्माश्च वंशाः सतृणजातयः।
छन्नान्तःकरणत्वं च स्वस्थानात्त्यागिताऽपि च॥ ३६॥

छिन्नप्ररोहिता चैषां वैशेषिकगुणत्रयम्।
गायत्री भूतसंज्ञै(षां? षा) चतुर्विंशतिपर्विका॥ ३७॥

ज्ञात्वैनां पुरुषः पुण्यां भवति स्वर्गभाजनम्।
भुवनभूजलवह्निमरुद्वियत्प्रमुख एष भवस्तव कीर्त्तितः।
वसुमतीपरिमाणविनिश्चयं कथयतः शृणु सम्प्रति वत्स! मे॥३८॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

महदादिस(ङ्गा? र्गा)ध्यायश्चतुर्थः॥

---

## अथ भुवनकोशः पञ्चमोऽध्यायः।

अथो यथाक्रमं भूमेः कृत्स्नायाः कथयामि ते।
विष्कम्भपरिधी वत्स! बाहुल्यमपि च स्फुटम्॥ १॥

विष्कम्भोऽस्याः समुद्दिष्टो दशयोजनकोटयः।
लक्षाण्यपि च मेदिन्यास्तद्वदेकोनविंशतिः।
विष्कम्भत्रिगुणो यावद् विष्कम्भांशश्च पञ्चमः॥ २॥

---

१ द. विवेकित्वा। २ द. क्लेशकोषु (?)। ३ ख. ग. द. ये।

मेदिन्याः परिधिस्तावद्योजनैः परिकीर्त्तितः ।
द्वात्रिंशत्कोटयः षष्टिर्लक्षाणि परिधिः क्षितेः ॥ ३ ॥

अशीतिश्च सहस्राणि योजनानां प्रकीर्त्तितः ।
योजनानां सहस्राणि विंशतिर्लक्षयोर्द्वयम् ॥ ४ ॥

इति बाहुल्यमेतस्याः क्षितेर्वत्स ! तवोदितम् ।
चतुर्णां सलिलादीनां भूतादेर्महतोऽपि च ॥ ५ ॥

उत्तरोत्तरमुर्वीतो मानं शतगुणं विदुः ।
तोयादिषु स्थितेयं भूश्चक्रवद् वृत्तशालिनी ॥ ६ ॥

पात्रस्थापर[1]पात्रश्रीहारीण्यन्यान्यपि क्रमात् ।
प्रमाणमिदमेतेषां क्षित्यादीनां तवोदितम् ॥ ७ ॥

द्वीपा[2]दीनां तु पाथोधिनिवेशः पुनरुच्यते ।
द्वीपानामम्बुधीनां च सप्तानामपि मध्यगः ॥ ८ ॥

जम्बूद्वीपो भवेद् वृत्तः सहस्र[3]शतविस्तृतः ।
हिमाद्रिर्हेमकूटाख्यो निषधो नीलसंज्ञितः ॥ ९ ॥

श्वेतः शृङ्गी च षडमी भवन्त्यस्मिन् कुलाचलाः ।
एतस्मादुत्तरेणाद्रेस्तुषाराङ्कितमेखलात् ॥ १० ॥

पूर्वापरायताः सर्वेऽप्यद्रयो यावदम्बुधि ।
अन्तरा नीलनिषधौ जम्बूद्वीपस्य नाभिगः ॥ ११ ॥

वृत्तः पुण्यजनाकीर्णः श्रीमान् मेरुर्महाचलः ।
उदग्याम्यायते मेरोः प्राग्भागे माल्यवान् गिरिः ॥ १२ ॥

सेवितः सिद्धनारीभिरानीलनिषधायतः ।
सुमेरोः पश्चिमेनाद्रिर्गन्धर्वकुलसङ्कुलः ॥ १३ ॥

माल्यवत्सदृशायामो महीभृद् गन्धमादनः ।
पर्वताबुभयान्तस्थौ हिमवान् शृङ्गवांस्तथा ॥ १४ ॥

---

१ द. पात्रस्थापर; शास्त्रिभिः 'वर' पाठः टिप्पण्यां दत्तः । २ द. ख. ग. द्वीपावनीषु पाथोधेः
३ क. सम ।

योजनानां सहस्रे द्वे [1]सार्धे स्यादुच्छ्रयस्तयोः ।
श्वेतश्च हेमकूटश्चेत्यन्तयोः पृथिवीधरौ ॥ १५ ॥

योजनानां सहस्रार्धमेकैकस्योच्छ्रयस्तयोः ।
निषधाचलनीलाद्रिमाल्यवद्गन्धमादनाः ॥ १६ ॥

सहस्रयोजनोच्छ्रायाश्चत्वारोऽमी पृथक्पृथक् ।
एतेऽष्टावपि शैलेन्द्राः सहस्रद्वयविस्तृताः ॥ १७ ॥

उच्छ्रयार्धमधश्चापि विलग्नाः सह मेरुणा ।
मेरोः समुच्छ्रयोऽशीतिः सहस्राणि चतुर्युता[2] ॥ १८ ॥

षोडशाधः सहस्राणि द्वात्रिंशन्मूर्ध्नि विस्तृतिः[3] ।
जम्बूतरुर्महान् मध्ये सुमेरोर्निषधस्य च ॥ १९ ॥

द्वीपस्यामुष्य यद्योगाज्जम्बूद्वीप इति श्रुतिः ।
शृङ्गैर्हिमशिलानद्धैः सर्वतो हिमवानयम् ॥ २० ॥

महान्तो निवसन्त्यत्र पिशाचा यक्षराक्षसाः ।
कूटैर्हैममयैर्हेमकूट इत्यवनीधरः ॥ २१ ॥

यं सर्वतो निषेवन्ते सदा चारणगुह्यकाः ।
तरुणार्कप्रभाजालप्रतिमो निषधाचलः ॥ २२ ॥

निवसन्ति सुखं तत्र शेषवासुकितक्षकाः ।
हेमाब्जकर्णिकाकारः सुमेरुर्मणिकन्दरः ॥ २३ ॥

अत्रामराः साप्सरसस्त्रयस्त्रिंशद् वसन्ति ते ।
वैडूर्यनद्धैः शिखरैर्नीलो नीलमहीधरः ॥ २४ ॥

कलयन्ति तपोनित्या यत्र ब्रह्मर्षयः स्थितिम् ।
श्वेतः स काञ्चनैः शृङ्गैर्गगनोल्लेखिभिर्वृतः ॥ २५ ॥

दोर्दर्पशालिनां यत्र निवासस्त्रिदशद्विषाम् ।
महानीलमयो बर्हिपिच्छच्छायो बहिर्महान् ॥ २६ ॥

---

१ द. ख. ग. द्वेद्वे सार्धे उच्छ्र° । २ द. चतुर्युताः । ३ द. विस्तृतः ।

पितॄणामालयः शृङ्गैरुच्छ्रितैः शृङ्गवान् गिरिः ।
हिमाचलस्य याम्येन क्षाराब्धिवृतम[1]न्यतः ॥ २७ ॥

वर्षं स्याद् भारतं नाम प्रथमं कार्मुकाकृति ।
तुषारनिलयस्याद्रेर्हेमकूटाचलस्य च ॥ २८ ॥

मध्ये किंपुरुषं नाम द्वितीयं वर्षमीरितम् ।
अन्तरे हेमकूटस्य निषधस्य च भूभृतः ॥ २९ ॥

हरिवर्षमिति प्रोक्तं तृतीयं वर्षमुत्तमम् ।
निषधाचलनीलाद्रिमाल्यवद्गन्धभूभृताम् ॥ ३० ॥

चतुर्णां मध्यगं वर्षं तुर्यमस्मिन्निलावृतम् ।
उत्तरे नीलशैलस्य याम्ये च श्वेतभूभृतः ॥ ३१ ॥

पञ्चमं वर्षमत्यर्थरम्यं रम्यकसंज्ञितम् ।
श्वेतशृङ्गवतोः शैलराजयोरनयोरिह ॥ ३२ ॥

मध्ये षष्ठं हिरण्यांशुरम्यं हैरण्यकाद्वयम् ।
अस्योत्तरे शृङ्गवतो याम्ये च क्षारवारिधेः ॥ ३३ ॥

कुरुवर्षाभिधं वर्षमुत्तरेण प्रचक्षते ।
अन्तरा नीलनिषधौ प्राग्भागे माल्यवद्गिरेः ॥ ३४ ॥

भद्राश्वमष्टमं वर्षं प्राक्समुद्रान्तमीरितम् ।
गन्धमादनशैलस्य प्रत्यक् प्राक् चापराम्बुधेः ॥ ३५ ॥

नवमं वर्षमाचार्याः केतुमालं प्रचक्षते ।
इति प्रोक्तानि वर्षाणि नवामूनि मया तव ॥ ३६ ॥

साम्प्रतं पुनरेतेषां प्रमाणमवधारय ।
प्रमाणेन सहस्राणि चतुस्त्रिंशच्चतुर्दिशम् ॥ ३७ ॥

योजनानामिहेच्छन्ति चतुरश्रमिलावृतम् ।
प्राक्प्रत्यग्भागगे वर्षे तस्योदग्याम्यतः समे ॥ ३८ ॥

१. द. ख. ग. मध्यतः ।

एकत्रिंशत्सहस्राणि किञ्चित् प्राक्प्रत्यगायते ।
यान्युक्तानि षडन्यानि वर्षाण्येभ्योऽवराणि ते ॥ ३९ ॥
तेषां नवसहस्राणि प्रत्येकं विस्तृतिर्मता ।
वर्षे किम्पुरुषे नार्यो नराश्च प्लक्षभोजनाः ॥ ४० ॥
जीवन्त्ययुतमब्दानां जात्यजाम्बूनदत्विषः ।
हरिवर्षे नरा नार्यो वसन्तीक्षुरसाशिनः ॥ ४१ ॥
[1]सायुतं च सहस्रं ते जीवन्ति रजतत्विषः ।
इलावृते नराः पद्मरागभासोद्गतास्तथा ॥ ४२ ॥
जम्बूफलरसाहाराः सपादायुतजीविनः ।
नास्मिन् मेरुतटच्छन्ने तारकार्केन्दुरश्मयः ॥ ४३ ॥
स्वाङ्गप्रभाभिः किन्त्वत्र कृतोद्योता वसन्त्यमी ।
कैरवोदरसच्छाया भद्राश्वे साङ्गना नराः ॥ ४४ ॥
नीलाम्रकफलाहारा भवन्त्यत्रायुतायुषः ।
दलत्कुवलयश्यामाः केतुमाले शरीरिणः ॥ ४५ ॥
शरदामयुतं तेषामायुः पनसभोजिनाम् ।
श्वेताभो रम्यके रम्ये न्यग्रोधफलभुग् जनः ॥ ४६ ॥
हरिवर्ष इव प्रोक्तमेतस्मिन् मानमायुषः ।
श्यामत्विषः स्त्रियो वर्षे पुमांसश्च हिरण्यके ॥ ४७ ॥
जीवन्त्ययुतमब्दानां सर्वेऽपि लकुचाशिनः ।
कुरुष्वभीष्टदैर्वृक्षैर्जीवन्ति स्त्रीयुता नराः ॥ ४८ ॥
सपादमयुतं देवगर्भभा गौरकान्तयः ।
पुण्यकर्मा वसत्येषु वर्षेषु निखिलो जनः ॥ ४९ ॥
शोकव्याधिजरातङ्कशङ्कोन्मुक्तः सदा सुखी ।
वनैः कीर्णानि सर्वाणि कुसुमस्तबकानतैः ॥ ५० ॥
उद्भिज्जाद्रिर्नदीभिश्च तैस्तैस्तुङ्गैश्च पादपैः ।
उदञ्चद्वीचिमालेन लावणेनाब्धिना बहिः ॥ ५१ ॥

---

१ द. अयुतं सहस्रांते ।

परिक्षिप्तोऽयमुक्तस्ते जम्बूद्वीपो मयाखिलः ।
द्वादशाम्बुनिधावत्र पृथग् भूमिभृतः स्थिताः ॥ ५२ ॥
त्रयस्त्रयो दिशि दिशि स्फारोर्मिस्थगितोपलाः ।
मैनाकश्च बलाहश्च चक्रनामा च दक्षिणे ॥ ५३ ॥
नारदाख्यो वराहाख्यः सौमकाख्यश्च पश्चिमे ।
उदग्भागेऽपि च द्रोणकङ्कचन्द्रा इति त्रयः ॥ ५४ ॥
धूम्रको दुन्दुभिश्चैव सार्द्रकश्चेति पूर्वतः ।
सहस्रं योजनानां ते दीर्घास्तस्यार्धमुच्छ्रिताः ॥ ५५ ॥
मग्नास्तदर्धमम्भोधौ विस्तृताश्च धराधराः ।
जुष्टाः सर्वे सुरैः शृङ्गप्रौढिलीढविहायसः ॥ ५६ ॥
ज्वलितौषधयः कान्तविचित्रद्रुमवीरुधः ।
द्वीपाः शाककुशक्रौञ्चशाल्मल्य इति च क्रमात् ॥ ५७ ॥
गोमेदः पुष्कराख्यश्च षडमी बाह्यतः स्थिताः ।
क्षीराज्यदधिमद्येक्षुरसस्वाद्वम्भसोऽर्णवाः ॥ ५८ ॥
द्वीपान् शाकादिकानेते परिवार्य स्थिताः क्रमात् ।
स्वद्वीपतुल्याः सर्वे ते प्रमाणेन यथाक्रमम् ॥ ५९ ॥
अमी शाकादयो द्वीपा जम्बूद्वीपप्रमाणतः ।
यथाक्रमं स्युर्द्विगुणास्तथाम्भोनिधयोऽपिच ॥ ६० ॥
शाके सप्ताद्रयस्तेषूदयो जलधरस्तथा ।
नारको रैवतः श्यामो राजतोऽथाम्बिकेयकः[1] ॥ ६१ ॥
चतुःसाहस्त्रिकस्तेषां विष्कम्भोऽर्धं समुच्छ्रयः ।
तदर्धं भूप्रदेशश्च सेवितानां सुरर्षिभिः ॥ ६२ ॥
वृत्तानां द्वीपवत् तेषां बाह्यतोऽमून्यनुक्रमात् ।
वर्षाणि सन्निविष्टानि सप्त तानि ब्रवीमि ते ॥ ६३ ॥
जलदाख्यं कुमारं च सुकुमारं मणीचकम् ।
कुसुमोत्तरमोदाकीमहाद्रुमवनानि च ॥ ६४ ॥

---

१ द. थांबिको जयः । ख. जांबिको° । जयः. ग. पाठः ।

कुशे विद्रुमहेमाख्यौ द्युतिमानथ पुष्पवान्।
कुशेशयो हरिक्ष्माभृन्मन्दरश्च कुलाचलाः॥ ६५॥
विष्कम्भोऽष्टसहस्राणि तेषां प्रत्येकमीरितः।
तदर्धमुच्छ्रयस्तद्वदुच्छ्रयार्धमधोगमः॥ ६६॥
उद्भिदं वेणुवत्संज्ञं सरालमथ लम्बनम्।
वर्षं श्रीमत् प्रभाकृच्च कपिलं [1]पन्नगाभिधम्॥ ६७॥
क्रौञ्चे क्रौञ्चोऽन्धकारश्च देवो गोविन्दवामनौ।
द्विविदः पुण्डरीकश्चेत्यस्मिन् सप्त [2]कुलाद्रयः॥ ६८॥
विष्कम्भोऽयुतमेतेषां विष्कम्भार्धं समुच्छ्रयः।
अधोगतिस्तदर्धं च वर्षाण्येषां तु बाह्यतः॥ ६९॥
[3]कुसलाख्याष्टवर्षाख्ये [4]परापतमनोनुगे।
मुनिवर्षान्धकाराख्ये सप्तमं दुन्दुभीति च॥ ७०॥
गिरयः शाल्मलिद्वीपे रक्तः पीतः सितस्तथा।
वैपुल्यमेषां द्वात्रिंशत्सहस्राणि प्रचक्षते॥ ७१॥
वैपुल्यार्धं समुच्छ्रायस्तदर्धमवनौ गतिः।
वर्षे शान्तभयं वीतभयं चेत्यत्र संस्थिते॥ ७२॥
गोमेदे तु सुरश्चेति कुमुदश्चेति भूधरौ।
योजनानां चतुःषष्टिस्तौ सहस्राणि विस्तृतौ॥ ७३॥
उच्छ्रायो विस्तरस्यार्धं तदर्धं चाप्यधोगतिः।
धातकीखण्डनामास्य मध्ये वर्षमुदीरितम्॥ ७४॥
अस्त्यद्रिः पुष्करद्वीपे मानसोत्तरसंज्ञितः।
बाह्यतो वर्षमेतस्य महावीतमिति स्मृतम्॥ ७५॥
विस्तृतोऽष्टौ सहस्राणि शैलोऽयं द्वे तथायुते।
सहस्रशतमन्यच्च सुरसिद्धर्षिसेवितः॥ ७६॥
व्यासार्धेनोच्छ्रयस्तस्य तदर्धेनाप्यधोगमः।
सुरेशानां नगर्योऽस्मिन् मया वत्स! निवेशिताः॥ ७७॥

---

१ द. न्यूनगाभिधम्। २ द. ख. ग. कुलाचलाः। ३ द. कुशला°। ४ द. पारापत°।

ऐन्द्री [1]वस्वोकसारा प्राग् याम्या संयमनी ततः ।
प्राचेनसी सुखा पश्चात् तथा सौम्युत्तरे विभा ॥ ७८ ॥
धर्मरक्षार्थमेतासु चत्वारश्चतसृष्वपि ।
तथा लोकव्यवस्थार्थं पृथग् लोकभृतः स्थिताः ॥ ७९ ॥
लोकालोकाचलः स्वादुसलिलाद् द्विगुणो बहिः ।
स्वादूदाब्धिप्रमाणात् स विस्ताराद् द्विगुणोऽपि च ॥ ८० ॥
समुच्छ्रितोऽसौ नियुतं नियुतार्धमधो गतः ।
पञ्च क्रोशाः प्रतिदिशं नियुतानि तथा नव ॥ ८१ ॥
तद्वच नियुतस्यार्धं मेरुमध्यात् तदन्तरम् ।
समुद्भासितदेहार्धस्तिग्मांशोः किरणैरयम् ॥ ८२ ॥
तत्समेन च भूम्यर्धेनावृतः परतः पुनः ।
भौतान्यावरणान्युर्व्या यस्यैतानि स्थितान्यधः ॥ ८३ ॥
बाह्यतोऽपि च भूम्यूर्ध्वं निविष्टानि तथानघ ! ।
इति वत्स ! [2]तव प्रोक्तः सन्निवेशोऽखिलः क्षितेः ॥ ८४ ॥
स्थितिं गतिं च कथयाम्यर्कादीनामतःपरम् ।
सूर्येन्दुधिष्ण्यज्ञसितभौमार्किंत्रिदशार्चिताः ॥ ८५ ॥
सप्तर्षयो ध्रुवश्चेति भूमेरूर्ध्वं क्रमात् स्थिताः ।
चत्वारि द्वे तथा भूमेरूर्ध्वमा सूर्यनन्दनात् ॥ ८६ ॥
षडेवमन्तराणि स्युः सहस्राणां शतं शतम् ।
[3]ग्रहान्तराणि यान्यन्यान्यवशिष्टान्यनुक्रमात् ॥ ८७ ॥
तानि चत्वार्यपि द्वे द्वे लक्षे प्रोक्तानि मानतः ।
धरित्रीध्रुवयोर्मध्ये योजनानां चतुर्दश ॥ ८८ ॥
नियुतानि समुत्सेधस्त्रैलोक्यस्य प्रकीर्त्तितः ।
एकाथ द्वे चतस्रोऽष्टावन्तरं कोटयः क्रमात् ॥ ८९ ॥
महोजनस्तपःसत्यलोकानामुपरि ध्रुवात् ।
ये स्थिताः सत्यलोकोर्ध्वमधस्तादण्डकर्परात् ॥ ९० ॥

---

१ द. वस्वौकसारा । २ द. यथोक्त...खिलक्षितेः । ३ द. सूक्ष्मांतराणि ।

एका कोटिर्भवेत् तेषां पञ्चाशन्नियुतान्विता ।
अथावरणयोगोऽस्य विहितः (स ? प )द्मजन्मना ॥ ९१ ॥
यथैवाधस्तथा तिर्यक् तथैवोर्ध्वमपि क्रमात् ।
वहेऽब्दाः प्रवहे सूर्यः स्थितः शीतांशुरुद्वहे ॥ ९२ ॥
संवहस्थानि नक्षत्राण्यावहस्थाः पुनर्ग्रहाः ।
सप्तर्षयः परिवहे ध्रुवश्चापि परावहे ॥ ९३ ॥
प्रदक्षिणममी सप्त मरुतो भ्रमयन्त्यमून् ।
मेधीभूतः स्थितो मध्ये सुमेरुक्ष्माभृति ध्रुवः ॥ ९४ ॥
समस्तमपि तद्बद्धं ज्योतिश्चक्रं भ्रमत्यदः ।
सप्ताश्वेनैकचक्रेण रथेन रथिनां वरः ॥ ९५ ॥
[1]तेजोमयेन [2]सततं भ्राम्यति ज्योतिषां पतिः ।
केतुमाले ( रजन्यर्धं ? व्रजन्नूर्ध्वं ) करोत्यस्तं कुरुष्वपि ॥ ९६ ॥
मध्यन्दिनं च भद्राश्वे( ष्टद्व ? स्तं ग )च्छन् भारते रविः ।
रसाब्धिपक्षसङ्ख्यानि योजनानि निमेषतः ॥ ९७ ॥
सप्तविंशतिकां चाष्टौ भागान् सर्पत्यहर्पतिः ।
[3]योजनान्य( ध्विनन्दनु ? ब्धिनन्दतु ) गुणसङ्ख्यानि काष्ठया ॥ ९८ ॥
नवांशकचतुष्कं च क्रामत्यहिमदीधितिः ।
वह्न्यग्निवसुखेन्द्रक्ष्मासङ्ख्यातान्यब्जिनीपतिः ॥ ९९ ॥
योजनस्य त्रिभागं च प्रयाति कलयैकया ।
वियत्खव्योमभूताश्विगुणपावकसङ्ख्यया ॥ १०० ॥
योजनान्युष्णकिरणो मुहूर्तेन प्रसर्पति ।
रात्र्यह्नेण सहस्राणि पञ्चाशन्नवकोटयः ॥ १०१ ॥
लक्षाणि सप्तनवतिर्गतिः स्यात् तिग्मरोचिषः ।
मध्येन पुष्करद्वीपस्यार्को गत्यानया व्रजन् ॥ १०२ ॥
नभस्तलेन पुनरप्युदयादुदयं श्रयेत् ।
इत्थं गतिरियं सम्यक् तिग्मभानोर्निरूपिता ॥ १०३ ॥

---

१ एतदादिश्लोकद्वयं ख. ग. मातृकयोर्नास्ति । २ द. पतितं । ३ योजनान्यं नाध्विनंदनु (?)

गतिं चन्द्रग्रहर्क्षाणां भोगं चार्काद् विभावयेत् ।
प्रोक्तं तवेत्यहोरात्रप्रमाणमधुनानघ[१] ! ।
पक्षमासर्तुवर्षादीन् व्यवहाराय कल्पयेत् ॥ १०४ ॥
इति निगदित एष द्वीपशैलाम्बुधीना-
मवनिवलयवर्त्ती कात्स्न्र्यतः सन्निवेशः ।
गतिरपि दिनभर्त्तुः कीर्त्तिता विश्वमानं
पुनरिह युगधर्मं कीर्त्त्यमानं निबोध ॥ १०५ ॥

इति[२] महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे भुवनकोशाध्यायः पञ्चमः ॥

---

## अथ सहदेवाधिकारः षष्ठोऽध्यायः ।

अथ प्राक्कथितादस्माद् भूतसर्गादनन्तरम् ।
प्रजासीदमरैः सार्धमियं पूर्णजनाकुला ॥ १ ॥
शोकव्याधिजरातङ्कविमुक्तास्त्रिदशा इव ।
पुराभवन् कृतयुगे पुमांसः स्थिरयौवनाः ॥ २ ॥
ते निकुञ्जेषु शैलानां नदीषु च सरस्सु च ।
वनेषु च विचित्रेषु चिक्रीडुर्दैवतैः सह ॥ ३ ॥
हेलया ते समुत्पत्य कदाचिदमरैः सह ।
निरर्गलाः समासाद्य स्वर्विचेरुः सुरा इव ॥ ४ ॥
चित्राम्बरावृताः सर्वे नानाभरणशालिनः ।
विमानाकृतयस्तेषामासन् कल्पद्रुमा द्रुमाः ॥ ५ ॥
मनोज्ञाभिः सह स्त्रीभिर्विचित्राभर(णास्त्रि ? णश्रि)यः ।
कल्पद्रुमेष्वकार्षुस्ते वासं क्रीडां च तेष्वथ ॥ ६ ॥
क्षुत्तृड्दुःखोज्झिताः सर्वे बभूवुरयुतायुषः ।
रत्नावदातदेहास्ते कदाचिद् भूरसाशिनः ॥ ७ ॥
रतिप्रायास्तदासंस्ते स्वेच्छाहारविहारिणः ।
स्वीकारविग्रहच्छेदविशदीकृतचेतसः ॥ ८ ॥

---

१ द. ममुनानघ । २ द. इतः परं ६/२९ पर्यन्तं त्रुटितं ।

नास्मिन्नर्कस्तपत्युग्रं न वाति प्रबलोऽनिलः।
नीहारच्छेदसुन्दर्यो निशाः पूर्णेन्दुभूषणाः ॥ ९ ॥
भिन्नस्निग्धाञ्जनश्यामाः सतडिन्मन्द्रनिस्वनाः।
अचण्डाशनयश्चासन् कबरीकान्तयो घनाः ॥ १० ॥
माद्यत्पिकवधूदष्टमाकन्दमुकुराङ्कुराः।
आसन् सदापुष्पफलाभोगा येषां वनालयाः ॥ ११ ॥
एकोऽग्रजन्मा वर्णोऽस्मिन् वेदोऽभूदेक एव च।
ऋतुर्वसन्त एवैकः कुसुमायुधबान्धवः ॥ १२ ॥
रूपश्रुतसुखैश्वर्यभाजस्ते निखिला अपि।
समत्वान्नाभवत् तेषामुत्तमाधममध्यता ॥ १३ ॥
न खेटनगरग्रामपुरक्षेत्रखलादिकम्।
न दंशमशकक्रव्याद्भयं वा न ग्रहादि च ॥ १४ ॥
कल्पद्रुमाप्तभोगानां न चैषां प्रभुरप्यभूत्।
पुरास्मिन् भारते वर्षे तेषां निवसतामिति ॥ १५ ॥
जगाम सुबहुः कालः सुरैः सार्धं सुर(स्त्रि ? श्रि)याम्।
अज्ञाततत्प्रभावानां सहसंवाससंभवा ॥ १६ ॥
अथैषामभवद् दैवादवज्ञा त्रिदशान् प्रति।
अपूज्यमानास्ते पूज्याः सर्वेऽप्यखिलवेदिनः ॥ १७ ॥
आदाय तत्कल्पतरुं निपेतुर्द्यां दिवौकसः।
दिवंगमनशक्तिश्च दिव्यो भावश्च तद्गतः ॥ १८ ॥
सरसः परमो भूमौ भूरसश्च न्यवर्तत।
स्मृत्वा कल्पद्रुमांस्तांस्तान् क्रीडास्ताश्च सुरैः सह ॥ १९ ॥
व्यलपन् बहुधात्यर्थमनर्थकृतचेतसः[1]।
ततो विलपतां भूरि स्वैरमाहारहेतवे ॥ २० ॥
प्राणत्राणार्थमेतेषामभूत् पर्पटको भुवि।
भूरसेनैव तेनैते कुर्वाणाः प्राणरक्षणम् ॥ २१ ॥

---

१ 'नर्थीकृ' ख. पाठः।

विना कल्पद्रुमैर्वासमन्यवृक्षेषु चक्रिरे ।
अथैषां पश्यतामेव कदाचिद् भाग्यसंक्षयात् ॥ २२ ॥
विपर्ययाच्च कालस्य भूमेः पर्पटकोऽप्यगात् ।
ततः पर्पटके नष्टे तुषशूककणोज्झिताः ॥ २३ ॥
अकृष्टपच्या मेदिन्यामभवञ् शालितण्डुलाः ।
शाल्योदनेन तेनाथ सुस्वादुव्यञ्जनेन ते ॥ २४ ॥
परमां तृप्तिमासेदुः परितोषात्तचेतसः ।
तन्नाशशङ्कया शालितण्डुलानां द्रुमेष्वधः ॥ २५ ॥
ते व्यधुर्महतो राशींस्तं[1]त्क्षेत्राणि च चक्रिरे ।
अजायत ततो लोभो मात्सर्येर्ष्यापुरस्सरः ॥ २६ ॥
तत्र तत्र शनैश्चक्रे पदन्यासं च मन्मथः ।
द्वन्द्वप्राप्त्या ततस्तेषां बिभ्रतामुत्तमां गतिम् ॥ २७ ॥
धैर्यध्वंसादभूत् स्त्रीषु भृशं रागतुरङ्गमः ।
दारक्षेत्रनिमित्तानि भूयांस्येषामनन्तरम् ॥ २८ ॥
परिक्लेशैकमूलानि द्वन्द्वान्यासन् पृथक्पृथक् ।
ततः स्वक्लृप्तम[2]र्यादोच्छेदिष्वेष्वजितात्मसु ॥ २९ ॥
अविनीतेष्वभाग्येषु स शालिस्तुषतामगात् ।
प्रवृद्धरजसां तेषां सा पुण्यश्लोकता गता ॥ ३० ॥
मलप्रवृत्तिरभवत् तुषधान्योपसेवया ।
तुषधान्ये ततो नष्टे परिभुक्ते च सञ्चये ॥ ३१ ॥
चीरवल्कलवस्त्राणां कन्दमूलफलाशिनाम् ।
ऋतवः कालपर्यासात् षड् वसन्तादयोऽभवन् ॥ ३२ ॥
ततस्तेषामभूद् दोषरोगशोकाकुलं वपुः ।
मनश्च कामक्रोधेर्ष्यादैन्यासूयादिदूषितम् ॥ ३३ ॥
आधिदैवकमुष्णाम्बुशीतादिजनितं महत् ।
आधिभौतिकमप्यासीद् दुःखं व्यालमृगादिजम् ॥ ३४ ॥

---

१ 'स्ततः क्षेत्राणि चक्रि' ख. ग. पाठः । २ 'र्यादास्वनिष्टेष्व' क. पाठः ।

इत्थं दुःखत्रयार्त्तास्ते व्यवायाद्यभिगुप्तये ।
हिमनीहारशीताम्बुवाताद्यापच्छिदेऽपि च ॥ ३५ ॥
अजातप्रीतयो वृक्षैः कुट्टिमानि गृहाणि (ते ? च) ।
व्यधुश्छित्त्वाश्मभिर्वृक्षानन्यान् दुःखार्तचेतसः ॥ ३६ ॥
स्मृत्वा कल्पद्रुमाकारास्तद्रूपाणि गृहाणि ते ।
एकद्वित्रिचतुःसप्तदशशालानि चक्रिरे ॥ ३७ ॥
श(ब्दा ? ष्प)प्राकारपरिखेष्वाच्छन्नेषु तृणादिभिः ।
हृष्टास्तेष्वनयन् [1]कालमाप्तेषु गृहमेधिनः ॥ ३८ ॥
इत्यमीषु गृहिणो गृहेषु ते शीतवातजलतापनाशिषु ।
हर्षसंवलितमानसाश्चिरं सन्निरस्तविपदोऽवसन् सुखम् ॥ ३९ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
सहदेवाधिकारो नाम षष्ठोऽध्यायः ॥

---

## अथ वर्णाश्रमप्रविभागः सप्तमोऽध्यायः ।

अथामरगणैः सार्धमाजगाम पितामहः ।
दुःखच्छेदाय मर्त्यानामादाय नृपतिं पृथुम् ॥ १ ॥
स तानूचे प्रभुर्वोऽसौ मरुतामिव वासवः ।
दण्डधारी च दुष्टानां प्रभावे लोकपालवत् ॥ २ ॥
प्रतापतापिता[2]रातिसिंहः सिंहपराक्रमः ।
युष्माकमाधिपत्येऽसावभिषिक्तो मया पृथुः ॥ ३ ॥
रक्षाकृत् सर्वशिष्टानामुच्छेत्ता दुष्टचेतसाम् ।
[3]वृत्तितो भीतिहर्ता च भविष्यत्येष वो नृपः ॥ ४ ॥
भवद्भिरेतदायत्तैर्भवितव्यं ममाज्ञया ।
करिष्यत्येष वो [4]नीत्या चातुर्वर्ण्याश्रमस्थितीः ॥ ५ ॥

---

१ द. कामास्तेषु; ख. ग. कामानाप्ते । २ क. °रातिः शश्वत् सिंह° । ३ द. वृत्तिदो । ४ द. नित्याचारवर्णाश्रमस्थितीः ।

उक्त्वेति ब्रह्मणि गते नाथमासाद्य तेऽथ तम् ।
अवोचन् दुःखिता दुःखादस्मात् त्रायस्व नः प्रभो ! ॥ ६ ॥
कल्पद्रुमामरत्यक्तान् द्वन्द्वार्तिक्रान्तचेतसः ।
व्यसनार्णवनिर्मग्नान् पाहि नः पृथिवीपते ! ॥ ७ ॥
अथो पृथुरुवाचैतान् मा भैष्ट सुखमास्यताम् ।
दुःखान्यपहरिष्यामि करिष्ये च सुखानि वः ॥ ८ ॥
ततः स चतुरो वर्णानाश्रमांश्च व्यभाजयत् ।
तेषु ये वेदनिरताः स्वाचाराः संयतेन्द्रियाः ॥ ९ ॥
[1]सूरयश्चावदाताश्च ब्राह्मणास्तेऽभवंस्तदा ।
यजनाध्ययने दानं याजनाध्यापनार्थिताः ॥ १० ॥
धर्मास्तेषां विमुच्यान्त्यांस्त्रींस्तुल्याः क्षत्रवैश्ययोः ।
ये तु शूरा महोत्साहाः शरण्या रक्षणक्षमाः ॥ ११ ॥
दृढव्यायतदेहाश्च क्षत्रियास्त इहाभवन् ।
विक्रमो लोकसंरक्षाविभागो व्यवसायिता ॥ १२ ॥
एतेषामयमप्युक्तो धर्मः शुभफलोदयः ।
निसर्गान्नैपुणं येषां रतिर्वित्तार्जनं प्रति ॥ १३ ॥
श्रद्धादाक्ष्य[2]दयावन्तो वैश्यांस्तानकरोदसौ ।
चिकित्सा कृषिवाणिज्ये स्थापत्यं पशुपोषणम् ॥ १४ ॥
वैश्यस्य कथितो धर्मस्तद्वत् कर्म च तैजसम् ।
नातिमानभृतो नातिशुचयः पिशुनाश्च ये ॥ १५ ॥
ते शूद्रजातयो जाता नातिधर्मरताश्च ये ।
कलारम्भोपजीवित्वं शिल्पिता पशुपोषणम् ॥ १६ ॥
वर्णत्रितयशुश्रूषा धर्मस्तेषामुदाहृतः ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थस्तथा यतिः ॥ १७ ॥
इत्याश्रमाः [3]पृथक् तेन चत्वारः प्रविभाजिताः ।
गुरुशुश्रूषणं भैक्षं व्रतचर्याग्निकर्म च ॥ १८ ॥

१ द. ख. ग. शुचयश्चा°। २ द. °दयावन्तो। ३ द. पृथक्त्वेन।

स्वाध्यायश्चाभिषेकश्च धर्मोऽयं ब्रह्मचारिणः ।
पूजाग्न्यतिथिदेवानां स्ववृत्त्या जीवनं दमः ॥ १९ ॥
असमानार्षिगोत्रेषु विवाह ऋतुगामिता ।
[1]परस्य स्त्रीषु वैमुख्यं परानुग्रहशीलता ॥ २० ॥
विनिवृत्तिरकार्येभ्यो धर्मोऽयं गृहिणां कृतः ।
देवतातिथिसत्कारो ब्रह्मचर्यं वने स्थितिः ॥ २१ ॥
वल्काजिनजटाचीरधारणं शयनं भुवि ।
उपोषणैर्व्रतैर्देहकर्शनं नियमैस्तथा ॥ २२ ॥
आहारोऽकृष्टपच्यैश्च धर्मोऽयं वनवासिषु ।
वैराग्यमिन्द्रियजयश्चिन्तात्यागः प्रशान्तता ॥ २३ ॥
आकिञ्चन्यमनारम्भो यतिधर्मः सदा स्मृतः ।
क्षमत्वं गुर्वधीनत्वं शौचं स्वाध्यायनित्यता ॥ २४ ॥
विशुद्धिर्व्यवहारेषु शिष्यधर्मोऽयमीरितः ।
शुचित्वं वाङ्मनःकायैः पतिशुश्रूषणं क्षमा ॥ २५ ॥
पूजनं पतिपूज्यानां स्त्रीधर्मः शौचमेव च ।
एवं वर्णाश्रमान् सम्यक् कृत्वा वर्णांस्तदुद्भवान् ॥ २६ ॥
विभज्य तेषां वैन्येन ते ते धर्माः प्रकीर्तिताः ।
वृत्तिं कर्माणि चैतेषां पृथगुद्दिश्य सोऽभ्यधात् ॥ २७ ॥
स्वधर्मावस्थितानां वो भावि लोकद्वये सुखम् ।
य एतां स्थितिमुल्लङ्घ्य मोहादन्यद् विधास्यति ॥ २८ ॥
तस्याहं यमवत् क्रुद्धः करिष्याम्यनुशासनम् ।
युक्तानां कर्मसु स्वेषु [2]वृत्त्यर्थं भवतामहम् ॥ २९ ॥
खेटकग्रामवेश्मानि विधास्यामि पुराणि च ।
इत्युक्त्वा तानथो कोट्या कार्मुकस्य पृथुर्नृपः ॥ ३० ॥
विषमां साधयामास पृथिवीं पृथुविक्रमः ।
तत्सङ्क्लेशेन गौर्भूत्वा नश्यन्ती तेन मेदिनी ॥ ३१ ॥

---

१ द. परस्व° । २ द. ख. ग. भूत्यर्थं ।

विधेर्नियोगाद् दुदुहे साधु सस्यानि भूतये ।
कल्पितास्तेन शैलानां सरितामन्तरेषु च ॥ ३२ ॥

समेषु चावकाशेषु पुरादीनां विभक्तयः ।
तेन सीराग्रकृष्टेयं धान्यैरुप्तैर्यथाविधि ॥ ३३ ॥

ससस्या क्रियते क्षोणी भगवत्यम्बुदागमे ।

इत्युद्भवो निगदितः प्रथमो नृपस्य
धर्मेण सार्धमपि चाश्रमवर्णभेदाः ।
प्रोक्ताः कृषिव्यतिकरोऽपि च दर्शितस्ते
कात्स्न्येंन वत्स ! शृणु देशविभागभूमिम् ॥ ३४ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
वर्णाश्रमप्रविभागो नाम सप्तमोऽध्यायः ॥

---

## अथ भूमिपरीक्षा नामाष्टमोऽध्यायः ।

देशाश्च देशभूम्यश्च समासात् तव सम्प्रति ।
तत्सङ्ख्या तद्विभागाश्च प्रोच्यन्तेऽवहितः शृणु ॥ १ ॥

देशः स्याज्जाङ्गलानूपसाधारणतया त्रिधा ।
त्रिविधस्याप्यथैतस्य यथावल्लक्ष्म कथ्यते ॥ २ ॥

दूराम्बुरिरिणप्रायो ह्रस्वकण्टकिपादपः ।
रूक्षोष्णचण्डपवनः कृष्णमृत् तेषु जाङ्गलः ॥ ३ ॥

निम्नो भूरिजलः स्निग्धो बहुमत्स्यामिषो हिमः ।
स्यादनूपः सरित्प्रायः स्निग्धोच्छ्रितबहुद्रुमः ॥ ४ ॥

यः पुनर्नातिशीतोष्णः स्याद् देशद्वयलक्षणः ।
स साधारण इत्युक्तो देशो देशविशारदैः ॥ ५ ॥

जाङ्गलादिषु देशेषु त्रि( पुण्ये ? ष्वप्ये )षु स्वलक्षणैः
युक्ताः षोडश विज्ञेया भूमयः प्रविभागतः ॥ ६ ॥

बालिशस्वामिनी भोग्या सीता गोचररक्षिणी ।
अपाश्रयवती कान्ता खनिमत्यात्मधारिणी ॥ ७ ॥
वणिक्प्रसाधिता द्रव्यसम्पन्नामित्रघातिनी ।
आश्रेणीपुरुषा शक्यसामन्ता देवमातृका ॥ ८ ॥
धान्या हस्तिवनोपेता सुरक्षा चेति षोडश ।
भुवः संज्ञाभिरुद्दिष्टा लक्ष्मासामथ कथ्यते ॥ ९ ॥
भूभुजा बालिशेनापि शक्यते या प्रशासितुम् ।
या च भद्रजना सा स्याद् बालिशस्वामिनी क्षितिः ॥ १० ॥
वितरन्त्यधिकं यस्यां भागभोगादिकान् करान् ।
नरा भूरिश्रियः सात्र भोग्येति क्षितिरुच्यते ॥ ११ ॥
यस्यां नदाश्च नद्यश्च गिरिर्मध्येऽथवा बहिः[1] ।
विभक्तक्षेत्रसीमा सा सीता गोचररक्षिणी ॥ १२ ॥
सरिदद्रिवनाद्येषु त्रासाद् यस्यां विशेज्जनः ।
जनापाश्रययोग्यत्वादपाश्रयवतीति सा ॥ १३ ॥
वनोपवनवत्यद्रिसरित्कुञ्जमनोहरा ।
देहिनो रमयत्युर्वी या सा कान्तेति कीर्तिता ॥ १४ ॥
यस्यां सदैव जायन्ते कलधौतादिधातवः ।
लवणानि च भूयांसि प्राहुः खनिमतीति ताम् ॥ १५ ॥
यात्यन्तं नानुगृह्येत दण्डकोशासनादिभिः ।
स्फीतलोकाश्रया या च सा स्याद् भूरात्मधारिणी ॥ १६ ॥
प्रसिध्यन्त्यसकृद् यत्र पण्योपक्रयविक्रयाः ।
वणिक्प्रसाधितेत्युक्ता सा भूर्वणिगलङ्कृता ॥ १७ ॥
शाकाश्वकर्णखदिरश्रीपर्णीस्यन्दनासनैः ।
वेणुवेत्रशराद्यैश्च युक्ता द्रव्यवतीति भूः ॥ १८ ॥
यस्यां जनपदाः साधु विभक्तास्त्यक्तविक्रमाः ।
योगं यान्ति च मित्राणि स्याद् भूः सामित्रघातिनी ॥ १९ ॥

---

१ द. हितः ।

न क्षुद्रा [1]वन्दिनो यस्यां दुर्गप्रत्यन्तसंश्रयाः ।
भूः साश्रेणीमनुष्येति विनीतैराश्रिता जनैः ॥ २० ॥
मन्त्रोत्साहादिवैमुख्यं यस्यां सामन्तभूभुजः ।
भजन्ते सा स्मृता शक्यसामन्ता भूः समन्ततः ॥ २१ ॥
जीवन्ति क्षेत्रिणो यस्यां न(दी ? द)नद्यादिवारिभिः ।
तां देवमातृकेत्याहुरनपेक्षितवारिदाम् ॥ २२ ॥
निष्पद्यन्तेऽधिकं यस्यां बीजान्युप्तान्ययत्नतः ।
कृष्टानुपहतक्षेत्रा धान्या सा धान्यशालिनी ॥ २३ ॥
पर्यन्तेष्वद्रयो यस्यां या च हस्तिवना[2]श्रिता ।
सा हस्तिवनवत्युर्वी भूभृतः सैन्यवर्धिनी ॥ २४ ॥
दुष्प्रधृष्यैव या नित्यं विषमत्वादरातिभिः ।
विषमाद्रिसरिद्गुप्ता सा सुरक्षेति भूः स्मृता ॥ २५ ॥
षोडशेत्युदिता भूम्यः प्रविभागाद् यथातथम् ।
अन्या जनपदादीनां ब्रूमः सम्मिश्रलक्षणाः ॥ २६ ॥
धातुस्यन्दोल्लसत्कुञ्जगुल्मद्रुमलतावृतैः ।
उत्सङ्गिताः पृथुशिलैः समन्तादवनीधरैः ॥ २७ ॥
तीर्थावतारकान्ताभिः स्वादुतोयाभिरावृताः ।
नदीभिः पुलिनप्रान्तैर्विचित्रद्रुमशालिभिः ॥ २८ ॥
कोकिलालापसुभगैर्मधुमत्तालिशालिभिः ।
विचित्रफलपुष्पाढ्यैः काननैरुपशोभिताः ॥ २९ ॥
दलत्कुवलयश्रेणीक्वणन्मधुपहारिभिः ।
सरसीदेवखाताद्यैर्भूषिताः प्राज्यवारिभिः ॥ ३० ॥
समैः सुगन्धिभिः स्वादुशीतैः कान्तैरभङ्गुरैः ।
क्षेत्रैरक्षतसीमान्तैः सस्यनिष्पादिभिर्वृताः ॥ ३१ ॥
निष्कण्टकाश्मवल्मीकैः प्रभूतयवसेन्धनैः ।
विभक्तक्षेत्रसीमान्तैर्गोचरैरुपशोभिताः ॥ ३२ ॥

१ क. द. वृन्दिनो । २ द. ग. °नान्विता ।

स्थले तृणसमुद्राणामन्तरेषु वसुन्धराः ।
प्रशस्यन्ते समासन्नस्वादुशीतलवारयः ॥ ३३ ॥

दुरात्मनामधृष्या यास्तथानेकाश्रयान्विताः ।
संरम्भत्रासनिर्मुक्तं मनश्च रमयन्ति याः ॥ ३४ ॥

तास्वेवंगुणयुक्तासु महीषु विनिवेशयेत् ।
यथास्थानं जनपदान् खेटग्रामपुरादि च ॥ ३५ ॥

युता महीध्रमूला[1](स्व ? म्बु)प्राकारैस्तु पृथक्पृथक् ।
चतस्रः कीर्तिता धन्या भूमयो दुर्गहेतवः ॥ ३६ ॥

दुरारोहतया दुर्गे टङ्कच्छिन्न इवान्ततः ।
[2]समपृष्ठेऽम्बुयुक्ताद्रौ गिरिदुर्गावनिर्भवेत् ॥ ३७ ॥

कण्टकिद्रुमनीरन्ध्रन[3]द्धे साम्भसि कानने ।
गूढप्रवेशमार्गे भूर्मूलदुर्गेति कीर्तिता ॥ ३८ ॥

द्वीपेषु स्वादुतोयेषु बह्वागाधजला बहिः ।
रम्यावकाशदेशा स्याज्जलदुर्गा च मेदिनी ॥ ३९ ॥

स्निग्धाः सारभृतः शुद्धाः प्रदक्षिणजलाशयाः ।
बहूदकास्तरुच्छन्ना निबिडाः प्रागुदक्प्लवाः ॥ ४० ॥

[4]दूर्वास(स्त्वौ ? स्यौ)षधीमुञ्जकुरुन्दकुशवल्कलैः ।
परितः परिणद्धाश्च स्वादुस्वच्छस्थिरोदकाः ॥ ४१ ॥

वास्तुयज्ञामरस्थानाद्यारामोद्यानसंभृताः ।
तटाकवापीस्थानैश्च याः समन्तादलङ्कृताः ॥ ४२ ॥

या वाहनानां सुखदा मिथुनानां रतिप्रदाः ।
पुरार्थं ताः प्रशस्यन्ते भूमयो जनितश्रियः ॥ ४३ ॥

कुङ्कुमागुरुकर्पूरस्पृक्कैलाचन्दनादिभिः ।
सुगन्धा मिश्रितैरेभिः पृथक्स्थैर्वा वसुन्धरा ॥ ४४ ॥

---

१ द. मूलास्व; क. मूलासु । २ शा. समपृष्ठेन्दु( ? )युक्तेऽदौ; क. समपृष्ठेऽम्बुयुक्तादौ; द. समपृष्ठे तु युक्तोदौ । ३ द. नद्धे साम्भसि; क. °तीराम्बुनद्धे° । ४ क. दूर्वाशस्त्रौषधी°; द. पूर्वासस्तौषधी° ।

कल्हारपाटलाम्भोजमालतीचम्पकोत्पलैः ।
स्थलाम्बुप्रभवैश्चान्यैः सुगन्धा कुसुमैस्तथा ॥ ४५ ॥
गोमूत्रगोमयक्षीरदधिमध्वाज्यगन्धभाक् ।
समानगन्धा मदिरामाध्वीकेभमदासवैः ॥ ४६ ॥
शालिपिष्टकगन्धैश्च धान्यगन्धैश्च या तथा ।
प्रशस्ताखिलवर्णानामीदृग्गन्धा वसुन्धरा ॥ ४७ ॥
सिता रक्ता च पीता च कृष्णा[1] चैव क्रमान्मही ।
विप्रादीनां हि वर्णानां सर्वेषामथवा हिता ॥ ४८ ॥
स्वादुः कषाया तिक्ता च कटुका चेत्यनुक्रमात् ।
वर्णानां स्वादतः शस्ता सर्वेषां मधुराथवा ॥ ४९ ॥
घर्मागमे हिमस्पर्शा या स्यादुष्णा हिमागमे ।
प्रावृष्युष्णहिमस्पर्शा सा प्रशस्ता वसुन्धरा ॥ ५० ॥
मृदङ्गवल्लकीवेणुदुन्दुभीनां समा ध्वनौ ।
[2]द्विपाश्वाब्धिसमस्वाना चेति स्युर्भूमयः शुभाः ॥ ५१ ॥
इदानीमप्रशस्तानां भुवां लक्ष्माभिदध्महे ।
पुरादिसन्निवेशार्थं परित्याज्या भवन्ति याः ॥ ५२ ॥
भस्माङ्गारकपालास्थितुषकेशविषाश्मभिः ।
मूषकोत्करवल्मीकशर्कराभिश्च निर्भरा ॥ ५३ ॥
रूक्षा प्ररोहिणी निम्ना भङ्गुरा सुषिरोषरा ।
वामावर्तजलास्राविण्यसारा विषमोन्नता ॥ ५४ ॥
कटुकण्टकिनिःसारशुष्कनिष्फलपादपा ।
क्रव्यात्पक्षिसमाकीर्णा कृमिकीटवती च या ॥ ५५ ॥
सुकृतान्यपि भोज्यान्नभक्ष्यपानानि तत्क्षणात् ।
यस्यां विनाशमायान्ति सह तूर्यादिनिस्वनैः ॥ ५६ ॥
सरित् पूर्ववहा यस्यां पुरार्थं तामपि त्यजेत् ।
बहुनापि यतस्तत्र कालेनायाति सा पुनः ॥ ५७ ॥

१. द. कृष्ट चेति । २. क. द्विपांश्वाब्धिसम°; द. द्विपादौप्यसमस्थाना (?)

वसासृङ्मज्जविण्मूत्रमलको(थ ? श )पतत्रिणाम् ।
समगन्धां त्यजेदुर्वीं तैलस्य च शवस्य च ॥ ५८ ॥
सदैव धूम्रवर्णा या मिश्रवर्णाथवा मही ।
विवर्णा रूक्षवर्णा वा सा न स्यादिष्टदायिनी ॥ ५९ ॥
तिक्ताम्ललवणा चापि भूमिर्या [1]खादतो भवेत् ।
तां लोकविद्वेषकरीं त्यजेत् पुरनिवेशने ॥ ६० ॥
या रूक्षखरसंस्पर्शा सदैवोष्णा हिमाथवा ।
अनिष्टसुखसंस्पर्शा या स्यात् तामपि सन्त्यजेत् ॥ ६१ ॥
क्रोष्ट्रष्ट्रश्वखरस्वाना या च निर्झरनिस्वना ।
भिन्नभाण्डसमक्रूरध्वनितापि च नेष्यते ॥ ६२ ॥
इति गन्धादिभिर्भूमिः कथितेयं शुभाशुभा ।
हलेन कृष्यमाणायां भूमौ काष्ठे समुद्धृते ॥ ६३ ॥
विद्याद् भयं वह्निभवमिष्टकायां धनागमम् ।
पाषाणेषु तु कल्याणं कुलप्रध्वंसमस्थिषु ॥ ६४ ॥
सरीसृपेषु सर्वेषु स्तेनेभ्यो भयमादिशेत् ।
अनूषरा बहुतृणा शस्ता स्निग्धोत्तरप्लवा ॥ ६५ ॥
प्रागीशानप्लवा सर्वप्लवा वा दर्पणोदरा ।
शुभेऽह्न्युपोषितः स्नातः शुचिः शुक्लस्रगम्बरः ॥ ६६ ॥
स्वस्ति विप्रान् वाचयित्वा वास्तुदेवान् समर्च्य च ।
करप्रमाणं कुर्वीत खातं तद्भूमिमध्यगम् ॥ ६७ ॥
ततस्तन्मृदमाकृष्य तत् तयैवानुपूरयेत् ।
खाताधिकमृदुक्ता भूः श्रेष्ठा मध्या च तत्समा ॥ ६८ ॥
प्रहीणखातमृत् क्षोणी हीना शस्ता न सा नृणाम् ।
खन्यमाने यदा खाते तन्मृदोऽन्तर्विलोक्यते ॥ ६९ ॥
मणिशङ्खप्रवालादि तदातिश्रेयसी क्षितिः ।
सापि प्रशस्यते भूमिर्यस्यां स्युः खातपांसवः ॥ ७० ॥

१ क. ख. ग. द. स्वादतो ।

तुषकेशोपलाङ्गारभस्मास्थिलववर्जिताः ।
भृत्वाद्भिः खातमापूर्णं तस्मिन् पदशतं व्रजेत् ॥ ७१ ॥
तावच्चेद[1]दागमेऽम्भः स्यात् तदा भूः सार्वकामिकी ।
मध्यमात्रप्रहीणे स्यात् ततो हीनतरेऽधमा ॥ ७२ ॥
खाते सितादिमाल्यानि यस्यां निश्युषितानि च ।
यद्वर्णानि न शुष्यन्ति सा तद्वर्णेष्टदा मही ॥ ७३ ॥
खातस्योदकप्रभृतिषु दिक्षु प्रज्वालयीत वा ।
दीपान् यस्यां चिरं तिष्ठेत् तद्वर्णेष्टप्रदा हि सा ॥ ७४ ॥
इत्येवं कीर्त्तिताः कार्त्स्न्याल्लक्ष्मभिः पुरभूमयः ।
खर्वटग्रामखेटानामेता एव स्मृता हिताः ॥ ७५ ॥
वर्णिनां वर्णधाम्नां च शिबिराणां च सर्वदा ।
प्रासादयज्ञवाटानामेता एवेष्टदा भुवः ॥ ७६ ॥
इत्येवमादिभिरिमाः शुभलक्ष्मयुक्ता
भूम्यः शुभा निगदिता नगरादिहेतोः ।
आभ्यः परेण बहुधा परिकल्प्यमानं
ब्रूमस्त्रिधा स्थितवतोऽपि करस्य मानम् ॥ ७७ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
भूमिपरीक्षा नामाष्टमोऽध्यायः ॥

---

## अथ हस्तलक्षणं नाम नवमोऽध्यायः ।

हेतुः समस्तवास्तूनामाधारः सर्वकर्मणाम् ।
मानोन्मानविभागादिनिर्णयैकनिबन्धनम् ॥ १ ॥
परिध्युदयविस्तारदैर्घ्याणां स्युरमी यतः ।
ज्येष्ठमध्याधमा भेदा यं च ज्ञात्वा न मुह्यति ॥ २ ॥
इदानीं तस्य हस्तस्य सम्यङ् निश्चयसंयुतम् ।
कथ्यते [2]त्रिविधस्यापि लक्षणं शास्त्रदर्शितम् ॥ ३ ॥

---

१ क. दागतेऽम्भ(:)स्यात्। २ ख. ग. विविध॰।

रेण्वष्टकेन वालाग्रं लिक्षा स्यादष्टभिस्तु तैः ।
भवेद् यूकाष्टभिस्ताभिर्यवमध्यं तदष्टकात् ॥ ४ ॥
अष्टाभिः सप्तभिः षड्भिरङ्गुलानि यवोदरैः ।
ज्येष्ठमध्यकनिष्ठानि तच्चतुर्विंशतिः करः ॥ ५ ॥
सोऽष्टभिः पर्वभिर्युक्तः करः कार्यो विजानता ।
करस्यार्धं चतुःपर्व शेषं स्याद् भक्तमङ्गुलैः ॥ ६ ॥
तत्राग्रे पर्वरेखाः स्युस्तिस्रः पुष्पकभूषिताः ।
शेषास्वङ्गुलरेखासु पुष्पाणि विदधीत न ॥ ७ ॥
अत्रार्धे मध्यतः कार्यं द्वेधा पञ्चममङ्गुलम् ।
[1]मध्यं त्रिधाष्टमं कार्यं चतुर्धा द्वादशं ततः ॥ ८ ॥
हस्तः स्वाङ्गुलमानेन विधेयाङ्गुल(मि ? इ)ष्यते ।
तत् सार्धं द्विगुणं वापि बाहुल्यं तु तदर्धतः ॥ ९ ॥
कथितः करभेदोऽयमङ्गुलानां विभेदतः ।
तस्य निर्माणदारूणि देवताश्च प्रचक्ष्महे ॥ १० ॥
खदिराञ्जनवंशादि श्लक्ष्णं हीरं मनोरमम् ।
सारवच्च भवेदिष्टं दारु हस्तप्रकल्पने ॥ ११ ॥
ग्रन्थिलं लघु निर्दग्धं जीर्णं विस्फुटितं[2] तथा ।
अदृढं कोटराक्रान्तं दारु हस्ताय नेष्यते ॥ १२ ॥
त्रिविधस्याप्यथैतस्य पर्वरेखासु देवताः ।
†[3]मध्यादारभ्य विज्ञेयाः क्रमेण नव वच्मि ताः ॥ १३ ॥
*ब्रह्मा वह्निर्यमो विश्वकर्मा नाथश्च पाथसाम् ।
वायुर्धनाधिपो रुद्रो विष्णुश्चाग्रे जगत्पतिः ॥ १४ ॥

१ ख. ग. द. मध्यात्। २ द. विस्फटितं। ३ द. मूला°।

† 'मध्यपर्वत एकस्मिन् पार्श्वगणनया प्रान्तसंयुक्तानि चत्वारि पर्वाणि भवन्ति। मध्यादेव परस्मिन् पार्श्वे समध्यमपर्वत्वात् पञ्च भवन्ति'।

* 'मध्ये ब्रह्मा। ततो वामे पर्वणि वह्निः दक्षिणे पर्वणि यमः, पुनर्वामे विश्वकर्मा दक्षिणे वरुणः, पुनर्वामे वायुः दक्षिणे धनदः, पुनर्वामे रुद्रो दक्षिणे विष्णुः। ततस्तु क्रमेण गणनायां रुद्रो वायुर्विश्वकर्मा वह्निर्विधाता कालस्तोयेशः कुबेरो विष्णुरिति पर्वदेवता भवन्ति' इति टिप्पणमिह दत्तमस्ति।

वास्तुद्रव्यविभागेषु यानेषु च विशेषतः ।
प्रारभेत यतो मानं कल्पयेद् देवतास्ततः ॥ १५ ॥
विद्धैश्च द्रव्यमध्यैश्च देवताभिश्च [1]पीडिते ।
प्रत्येकं त्रिदशस्थाने यथोक्तं फलमादिशेत् ॥ १६ ॥
शिरोर्त्तिरनलप्लोषो मरणं स्थपतेर्वधः ।
[2]अतिसारो मरुद्व्याधिरर्थभ्रंशो भयं नृपात् ॥ १७ ॥
कुलपीडा च महती कर्तृकारक[3]योरिति ।
यथाक्रमममी दोषा ब्रह्मादीनां निपीडनात् ॥ १८ ॥
ब्रह्मानलकयोर्मध्ये यदा हस्तं तु [4]धारयेत् ।
कर्मस्वधिगतस्तेषां पुत्रलाभो भविष्यति ॥ १९ ॥
कर्मणः सुष्ठुनिष्पत्ति(स्तिष्टतेभोग ? स्थपतेर्भोग्य)मक्षयम् ।
ब्रह्मा यमस्तयोर्मध्ये यदा हस्तं तु धारयेत् ॥ २० ॥
कर्ता सशिल्पिकश्चैव(अ ? न)चिरेण[5] विनश्यति ।
विश्वानलकयोर्मध्ये हस्तसूत्रं यदा धृतम्[6] ॥ २१ ॥
[7]सु(ष्ठु)कर्मणि मध्यान्तं निष्पन्ने पुरवृद्धिता ।
यमजलदयोर्मध्ये मध्यमं च विनिर्दिशेत् ॥ २२ ॥
पवनो विश्वकर्मा चोभयोर्मध्ये च धारणम् ।
यदा तु तत्र कर्मान्तं [8]शुभं तत्सर्वकामदम् ॥ २३ ॥
[9]नीरधनदयोर्मध्ये मध्यमं च विनिर्दिशेत् ।
एषां मध्ये यदा वत्सहस्तं तत्र यदा धृतम्[10](?) ॥ २४ ॥
अनावृष्टिभयं लोके देशभङ्गो न संशयः ।
रुद्रपवनयोर्मध्ये रुचिहस्तं तु धारयेत् ॥ २५ ॥
तत्र लक्ष्मीवतस्तस्य कार्यसिद्धिर्न संशयः ।
विष्णुधनदयोर्मध्ये यदा पाणिकरा[11]यतः ॥ २६ ॥

---

१ द. ख. ग. पीडितैः । २ द. प्रमीसारो । ३ द. क. ख. °योरपि । ४ क. कारयेत् । ५ द. कर्तारो शिल्पिनश्चैव अचिरेण विनश्यति । ६ द. वृतम् । ७ द. क. सुमतिर्मणिमध्यन्तं । ८ द. शुभं तं सर्व°; क. शुभान्तं सर्व° । ९ द. नीरदधन° । १० द. एषां मध्ये न हस्तं तत्र यदा वृतम् । ११ द. ख. ग. काराग्रतः ।

विविधास्तत्र भोगाश्च [1]प्रजायन्ते नरस्य हि ।
ज्येष्ठादीनामथैतेषां संज्ञाभेदो विधीयते ॥ २७ ॥

यच्च येन भवेद् द्रव्यं मेयं तदपि कीर्त्यते ।
यवाष्टकाङ्गुलैः क्लृप्तः प्रकर्षेणायतः किल ॥ २८ ॥

ज्येष्ठो हस्तः स विद्वद्भिः प्रोक्तः प्राशयसंज्ञितः ।
यः पुनः कल्पितः सप्तयवक्लृप्तैरिहाङ्गुलैः ॥ २९ ॥

तज्ज्ञैः स मध्यमो हस्तः साधारण इति स्मृतः ।
मात्रेत्यल्पं यतः प्रोक्तं हस्तश्च शय उच्यते ॥ ३० ॥

तेन मात्राशयः स स्याद्धस्तो यः षड्यवाङ्गुलः[2] ।
विभागायामविस्ताराः खेटग्रामपुरादिषु ॥ ३१ ॥

प्रासादवेश्मपरिखाद्वाररथ्यासभादिषु ।
मार्गाश्च निर्गमा[3](ये ? श्चै)षां सीमक्षेत्रान्तराणि च ॥ ३२ ॥

वनोपवनभागाश्च देशान्तरविभक्तयः ।
योजनक्रोशगव्यूतिप्रमाणमपि चाध्वनः ॥ ३३ ॥

प्राशयेन प्रमातव्याः खातक्रकचराशयः ।
तलोच्छ्रयान् मूलपादान् जलोद्देशानधः क्षितेः[4] ॥ ३४ ॥

तथा दोलाम्बुशस्त्रादि पात[5]मानविनिर्णयम् ।
शैलखात[6]निकेतानि सुरुङ्गामानमा[7]न्तरम् ॥ ३५ ॥

साधारणेन वाह्यध्वमानं च परिक[8]ल्पयेत् ।
आयुधानि धनुर्दण्डान् यानं शयनमासनम् ॥ ३६ ॥

प्रमाणं कूपवापीनां गजानां वाजिनां नृणाम् ।
अरघट्टेक्षुयन्त्राणि युगयूपहलानि च ॥ ३७ ॥

शिल्प्युपस्करनौछत्रध्वजातोद्यानि यानि च ।
बृसीधर्मोपकरणपटवानादिकं च यत् ॥ ३८ ॥

---

१ द. ख. ग. सदा चैतस्य संभवेत् । २ द. षट्पञ्चाङ्गुलः । ३ द. °श्चार्गमायेषां । ४ द. स्थितैः । ५ द. पातयामानविनिर्णयम् ; क. °तयामाननि° । ६ द. ख. ग. °खातनिवोतानि । ७ द. सान्तरम् । ८ द. ख. ग. परिकीर्तयेत् ।

[1]नल्वदण्डांस्तथा मात्राशयहस्तेन मापयेत् ।
भेदत्रयान्वितमपि प्रोक्तं हस्तस्य लक्षणम् ॥ ३९ ॥
संज्ञाभेदोऽथ सामान्यमानानां प्रतिपाद्यते ।
स्यादेकमङ्गुलं मात्रा कला प्रोक्ताङ्गुलद्वयम् ॥ ४० ॥
पर्व त्रीण्यङ्गुलान्याहुर्मुष्टिः स्याच्चतुरङ्गुला ।
तलं स्यात् पञ्चभिः षड्भिः करपादाङ्गुलैर्भवेत् ॥ ४१ ॥
सप्तभि( ई ? र्दि )ष्टिरष्टाभिरङ्गुलैस्तूणिरिष्यते ।
प्रादेशो नवभिस्तैः स्याच्छयतालो दशाङ्गुलः ॥ ४२ ॥
गोकर्ण एकादशभिर्वितस्तिर्द्वादशाङ्गुला ।
चतुर्दशभिरुद्दिष्टः पादो नाम तथाङ्गुलैः ॥ ४३ ॥
रत्निः स्यादेकविंशत्या स्यादरत्निः करोन्मितः ।
द्वाचत्वारिंशता किष्कुरङ्गुलैः परिकीर्त्तितः ॥ ४४ ॥
चतुरुत्तरयाशीत्या व्यामः स्यात् पुरुषस्तथा ।
षण्णवत्याङ्गुलैश्चापं भवेन्नाडीयुगं तथा ॥ ४५ ॥
शतं षडुत्तरं दण्डो नल्वस्त्रिंशद्धनुर्मितः ।
क्रोशो धनुःसहस्रं तु गव्यूतं[2] तद्द्वयं विदुः ॥ ४६ ॥
चतुर्गव्यूतमि[3]च्छन्ति योजनं मानवेदिनः ।
एकं दश शतमस्मात् सहस्रमनु चायुतम् ॥ ४७ ॥
नियुतं प्रयुतं तस्मादर्वुदन्यर्वुदे अपि ।
वृन्दखर्वनिखर्वाणि शङ्कुपद्माम्बुराशयः ॥ ४८ ॥
ततः स्यान्मध्यमन्त्यं च परं चापरमप्यतः ।
परार्धं चेति विज्ञेयं दशवृद्धयोत्तरोत्तरम् ॥ ४९ ॥
सङ्ख्यास्थानानि कथितान्येवमेतानि विंशतिः ।
इदानीं कालसङ्ख्यायाः प्रमाणमभिधीयते ॥ ५० ॥
दृङ्निमेषो निमेषः स्यात् तैः पञ्चदशभिः स्मृता ।
काष्ठा ताभिः कला ताभिर्मुहूर्त्तस्तैरहर्निशम् ॥ ५१ ॥

१ क. भल्लद॰; द. नव्वद॰ । २ ‘ व्यूतिं त ’ । ३ ‘ ति ’ क. पाठः ।

त्रिंशतैतत् त्रिकं विद्यात् क्रमादित्युत्तरोत्तरम् ।
अहोरात्रैः पुनः पञ्चदशभिः पक्ष उच्यते ॥ ५२ ॥

पक्षद्वयेन मासः स्याद् भवेन्मासद्वयादृतुः ।
ऋतुत्रयं स्यादयनं वत्सरस्त्वयनद्वयम् ॥ ५३ ॥

दशधायमिति प्रोक्तः कालः कालविदां वरैः ।

इत्युक्तमेतदखिलं करमानमत्र सम्यक्तया निगदितापि च कालसङ्ख्या ।
अन्तःपुरं जनपदामरधाममार्गैराचक्ष्महे नगरसंप्रविभागमत्र ॥ ५४ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
हस्तलक्षणं नाम नवमोऽध्यायः ॥

---

## अथ पुरनिवेशो दशमोऽध्यायः ।

पुरस्य त्रिविधस्यापि प्रमाणमथ कथ्यते ।
प्राकारपरिखाट्टालद्वाररथ्याध्वभिः सह ॥ १ ॥

ज्येष्ठं तत्र चतुश्चापसहस्रं पुरमिष्यते ।
मध्यं द्वाभ्यां सहस्राभ्यामेकेन व्यासतोऽधमम् ॥ २ ॥

साष्टमांशं सपादं वा सार्धं वा व्यासमायतम् ।
कुर्यादेकैकमायामं[1] चतुरास्रीकृतं शुभम् ॥ ३ ॥

चतुःषष्टिपदाख्येन पुरं सर्वं प्रकल्पयेत् ।
द्विरष्टकोष्ठं तत् कुर्यात् षट्पथं नवचत्वरम् ॥ ४ ॥

चतुरश्रीकृते क्षेत्रे प्रागुदीच्यन्तमागताः ।
चतुर्भागान्तरा वंशाः कार्यास्तस्य त्रयस्त्रयः ॥ ५ ॥

वंशषट्कविभक्तेऽस्मिन् पदषोडशकान्विते ।
राजमार्गः शुभः कार्यो मध्यमं वंशमाश्रितः ॥ ६ ॥

कार्यो ज्यायसि (च) ज्यायांश्चतुर्विंशतिकः[2] करैः ।
विंशत्या मध्यमे मध्योऽधमे षोडशकोऽधमः ॥ ७ ॥

---

१ द. ग. मासास्थं । २ क. °विंशतिभिः ।

बलस्य चतुरङ्गस्य पौराणां पार्थिवस्य च ।
असम्बाधसमश्चैष[1] कार्योऽयं काश्मशर्करः ॥ ८ ॥

महारथ्याद्वयं कार्यं तदुपान्तस्थवंशयोः ।
तद् द्वादश दशाष्टौ स्यात् करान् ज्येष्ठादिकं त्रिषु ॥ ९ ॥

पदमध्यगतं कार्यं यानमार्गचतुष्टयम् ।
ज्येष्ठादिषु पुरेष्वेषु तत्पद्यं च चतुःकरम् ॥ १० ॥

उपरथ्या महामार्गस्यार्धं[3] वा द्विशयाधिकम्[2] ।
शेषा रथ्यास्तदर्धेन विधातव्याः प्रमाणतः ॥ ११ ॥

यानमार्गचतुष्कस्य कार्यौ पार्श्वद्वयाश्रितौ ।
पदाष्टकपदान्तस्थौ द्वौ द्वौ जङ्घापथावपि ॥ १२ ॥

पुरे ज्येष्ठे त्रिहस्तौ तौ मध्यमेऽर्धकरोज्झितौ ।
मध्यमादर्धहस्तेन हीनौ स्यातां कनीयसि ॥ १३ ॥

पुरस्यान्तर्गतौ कार्यौ घण्टामार्गौ तथापरौ ।
राजमार्गगुणोपेतौ प्रमाणेन च तद्विधौ ॥ १४ ॥

प्राक्प्रत्यगायताः सप्तदश मार्गा इतीरिताः ।
याम्योत्तरायतास्तद्वदन्ये स्युस्तत्प्रमाणतः ॥ १५ ॥

घण्टामार्गप्रमाणेन घण्टामार्गस्य बाह्यतः ।
समन्ततो वप्रभुवं स्थापयेत् तद्विधानवित्[4] ॥ १६ ॥

महारथ्याप्रमाणेन तद्भूमेर्बाह्यतस्ततः ।
[5]व्यासखातान्तरैः सार्धं विधेयं परिखात्रयम् ॥ १७ ॥

खातोत्पादोज्झितं कार्यं सत्र्यंशेनार्धतोऽपि वा ।
व्यासतः स्यादशेषेण मूलतस्तद्वदेव तत् ॥ १८ ॥

कुर्याद् वप्रं स्वभूभागे परिखोत्खातया मृदा ।
सोत्सङ्गं गजपृष्ठं वा गोत्रीयपदताडितम् ॥ १९ ॥

---

१ द. असम्बाधः । २ क. चतुःप्रान्त° । ३ ख. ग. द. स्यार्धस्वादिसया° । ४ द. ख. विधानवत् । ५ द. ख. ग. व्यासः ।

खातोद्वृत्तमृदा वप्रनिर्माणाधिकया ततः ।
भूप्रदेशान् पुरा निम्नानापूर्य समतां नयेत् ॥ २० ॥
एवं संशोध्य परिखात्रितयं परितोऽश्मभिः ।
विधेयमिष्टकाभिर्वा सम्यग्बद्धतलं स्थिरम्[1] ॥ २१ ॥
सिरावारिभिरापूर्णं पूर्णं वागागिनाम्भसा ।
विचित्राब्जमनोहारि [2]ससंग्राहाम्बुनिर्गमम् ॥ २२ ॥
सर्वपार्श्वेष्वथैतस्य गन्धान्धमधुपाङ्गनान् ।
सुमनोविटपारामान् कुर्याद् [3]वासान् समुत्सकान् ॥ २३ ॥
बाह्यभागं पुनस्तस्य विदध्यात् सर्वतोदिशम् ।
द्रुममूलैर्लताजालैः कण्टकैरपि संवृतम् ॥ २४ ॥
वप्रोर्ध्वभागगं मध्यं स्थूलोपलशिलाचितम् ।
कुर्यात् प्राकारमुद्दामं यद्वा पक्वेष्टकामयम् ॥ २५ ॥
[4]ज्यायान् करैर्द्वादशभिर्दशभिर्मध्यमः स्थितः ।
कनीयानष्टभिर्हस्तैर्विस्तारः[5] स्यात् त्रिधेत्यसौ ॥ २६ ॥
उच्छ्रायः सप्तदशभिः करैर्ज्यायान् प्रशस्यते ।
मध्यमः पञ्चदशभिस्त्रयोदशभिरन्तिमः ॥ २७ ॥
ऊर्ध्वं न सप्तदशकान्न त्रयोदशकादधः ।
प्राकारोच्छ्रयमिच्छन्ति नापि युग्मकरोन्मितम् ॥ २८ ॥
[6]हस्ते हस्तेऽङ्गुलद्वन्द्वमायतः सम्यगुच्छ्रयात् ।
यस्य वा द्वादशकरा मूले भवति विस्तृतिः ॥ २९ ॥
चतु(रस्रो ? र्हस्तो)च्छ्रितिस्[7]तस्य शिरः स्याद् दशविस्तृतम् ।
हस्तोच्चं कपिशीर्षं स्याद् द्विहस्ता [8]काण्डवारिणी ॥ ३० ॥
कार्याः कर्णाश्रितैर्द्वारकर्णान्तस्थैश्च संयुताः ।
प्राकारेऽट्टालकास्तस्मिन् दिक्षु दिक्षु चतुर्दिशम् ॥ ३१ ॥

---

१ द. ख. ग. °तलस्थितम् । २ द. ससंग्राहां तु निर्गमम् (?) । सग्राहं साम्बुनिर्गमम् इति शास्त्रिभिः संस्कृतः पाठ । ३ क. द्वादशकच्छकान् । ४ क. ज्येष्ठः । ५ क. द. विस्तारात् । ६ द. हस्ताङ्गुलद्वन्द्वमायतः । ७ द. °स्थितिस्तस्य । ८ द. द्विहस्तात् कण्ठचारिणी ।

द्विभौमांश्चरिकोर्ध्वं च प्राकारोच्छ्रायविस्तृतान् ।
तदर्धं निर्गमान् कुर्यात् ससालाट्टालकानथ ॥ ३२ ॥
शतं शतं स्याद्धस्तानां मिथश्चाट्टालकान्तरम् ।
इत्थं पुरमगम्यं स्यात् पत्त्यश्वरथदन्तिनाम् ॥ ३३ ॥
चरिकां संचरद्वारां सुखारोहां सवेदिकाम् ।
ससोपानां सनिर्यूहां कुर्यात् सकपिशीर्षकाम् ॥ ३४ ॥
राजमार्गमहारथ्यासंश्रितानि चतुर्दिशम् ।
त्रीणि त्रीणि विधेयानि पुरे द्वाराणि तद्विदा ॥ ३५ ॥
राजमार्गमहाद्वारचतुष्कं विस्तरान्नव ।
अष्टौ सप्त करा नोर्व्या द्विगुणं त्रिकरोज्झितम्(?)[1] ॥ ३६ ॥
महारथ्याश्रयं द्वारं तत् षट्पञ्चचतुष्करम् ।
उच्छ्रयात् सार्धसार्धैकहस्तोनं विस्तरेण तत् ॥ ३७ ॥
कुर्यात् प्रतोलीः सर्वेषु महाद्वारेष्वथो दृढाः ।
दृढार्गलाश्चेन्द्रकीलाः कपाटपरिघान्विताः ॥ ३८ ॥
राजमार्गसमा[2] शाला स्यात् प्रतोलीविनिर्गमा[3] ।
तदर्धं कोष्ठकान्तः स्याद् व्यासो[4]ऽध्यर्धं तयोः स्मृतः ॥ ३९ ॥
चतुरश्रामिति न्यस्य प्रतोलीं वदनायताम् ।
व्यासतस्त्र्यंशविन्यस्तमार्गां मूषाद्वयान्विताम् ॥ ४० ॥
अन्तर्भित्तौ चतुर्द्वारं महाद्वारेण सम्मितम् ।
विकल्पकोष्ठकान्तेषु[5] दारुभिस्तद् विभूषयेत् ॥ ४१ ॥
द्वारे चोभयतःशाले द्वे द्वे द्वारे च मूषयोः ।
ते कार्ये सम्मुखे व्यासाद् द्विकरे द्विगुणोच्छ्रिते ॥ ४२ ॥
(ष ? त)दारु[6]मूषयोः पट्टमध्यं पञ्चकरोच्छ्रितम् ।
[7]तद्वत् कार्या द्वितीया भूर्द्वारशेषोदयोच्छ्रिता ॥ ४३ ॥

---

१ द. ख. ग. °करोच्छ्रितम् । २ द. ख. ग. °समः । ३ क. विनिर्गमः, द. ख. विनिर्गमात् । ४ द. ख. व्यासो वृद्ध । ५ द. ख. ग. °न्ते यद् दा° । ६ द. षद्दारु°, °रुं मू° [शा.] । ७ द. ख. बद्धा ।

बहिर्द्वारविनिर्मुक्तां पूर्ववत् तां प्रकल्पयेत् ।
पुरःसंरोधनसहैर्गवाक्षैरग्रतो युताम् ॥ ४४ ॥

तलं ततो महाद्वारस्योर्ध्वं बद्ध्वा तृतीयकम् ।
[1]रोधनद्वारयुग्हर्म्यसंयुक्तं सपरिक्रमम् ॥ ४५ ॥

सन्न्यस्तस्तम्भवेद्यन्यदूर्ध्वं तस्योपकल्पयेत् ।
व्यालजालशतव्यस्त्रशस्त्रयन्त्रादिभिर्युतम् ॥ ४६ ॥

वृद्धिशोभाभिगुप्त्यर्थं पुरस्य प्रविकल्पयेत् ।
बृहद्द्वाराणि परितस्त्रितलाभिः प्रतोलिभिः ॥ ४७ ॥

प्रतोल्या दक्षिणाद् भागादुच्छ्रितो वामतो गतः ।
यावद् द्वितीयं तत्पार्श्वमेकः कार्यो बहिः स्थितः ॥ ४८ ॥

द्वितीयो वामभागात् तु निर्गत्यास्यैव वेष्टकः ।
कार्यः स्यादा तदुत्थानात् प्राकारस्तस्य बाह्यतः ॥ ४९ ॥

एतयोरन्तरालं च राजमार्गेण सम्मितम् ।
कर्तव्यं स्यादिहैवं तु वक्त्रद्वारकमुत्तमम् ॥ ५० ॥

दृष्ट्वा दृष्ट्वोपभोगार्हान् सरिद्गिरिजलाशयान् ।
पक्षद्वाराणि कुर्वीत स्वेच्छया तत्र तत्र च ॥ ५१ ॥

जलभ्रमान् पुरे कुर्याच्छिलादारुतिरोहितान् ।
द्विकरान् करमालान् वा [2]साम्भसोऽस्मिन् प्रदक्षिणान् ॥ ५२ ॥

छिन्नकर्णं विकर्णं च वज्रं सूचीमुखं तथा ।
वर्तुलं व्यजनाकारं [3]चापाकृतिधरं च यत् ॥ ५३ ॥

शकटद्विसमं यच्च विस्ताराद् द्विगुणायतम् ।
विदिक्स्थं सर्पचक्रं च तत् पुरं निन्दितं भवेत् ॥ ५४ ॥

छिन्नकर्णे वसंल्लोकः पुरे तस्करतो भयम् ।
व्याधिभ्यो वापरेभ्यो वा प्राप्नोतीति विनिर्दिशेत् ॥ ५५ ॥

१ द. रोधनद्वारेषु हर्म्यं सं । २ 'विस्तराद् द्विगुणायतः ।' (?) क. पाठः । ३ द. चापाकारं पुरं भवेत् ।

विद्विष्टस्वामिता सर्वलोकगर्हानपत्यता ।
जायते स्वल्पमायुष्यं विकर्णपुरवासिनाम् ॥ ५६ ॥
स्त्रीजयं विषरोगांश्च भेदांश्च विविधांस्तथा ।
जनो वसन्नवाप्नोति वज्राकृतिधरे पुरे ॥ ५७ ॥
व्रजन्ति प्राणिनो नाशं क्षुद्व्याधिपरिपीडिताः ।
निवसन्तः सदा सूचीमुखाकारधरे पुरे ॥ ५८ ॥
स्वामिना सह हीयन्ते सर्वतः सश्रयोज्झिताः ।
स्वल्पायुषश्च जायन्ते जना वृत्तपुराश्रयाः ॥ ५९ ॥
असत्यवादिनः स्वल्पायुषः पवनपीडिताः ।
जनाः स्युश्चलचित्ताश्च नगरे व्यजनाकृतौ ॥ ६० ॥
दुश्चरित्राङ्गनायुक्तस्तथा बहुनपुंसकः ।
चापाकारे पुरे लोको निवसन् भवति ध्रुवम् ॥ ६१ ॥
रोगशोकानलस्तेनभयं तत्र प्रजायते ।
शकटद्विसमाकारं पुरं यद् विनिवेश्यते ॥ ६२ ॥
आरम्भासिद्धिदं विप्रभयदं ज्ञातिभेदकृत् ।
पौराणां स्वामिनश्च स्याद् गजवाजिक्षयावहम् ॥ ६३ ॥
परैराक्रम्य भुज्येत तत् पुरं बलशालिभिः ।
द्विगुणायतसंस्थानं यत् क्वचिद् विनिवेश्यते ॥ ६४ ॥
जनक्षयोऽग्निदाहश्च स्त्रीकृतानि भयानि च ।
पुरे भवति दिङ्मूढे न च निर्योगमेति तत् ॥ ६५ ॥
[1]शस्त्रानिलपिशाचाग्निभूतयक्षभयार्दिताः ।
[2]रुक्पीडिताश्च नश्यन्ति भुजङ्गकुटिले जनाः ॥ ६६ ॥
पुराणामप्रशस्तानि संस्थानानीदृशानि यत् ।
एकस्मिन्नपि तेनैषां न पुरं विनिवेशयेत् ॥ ६७ ॥
संस्थानमेकमप्येषां प्रमादात् क्रियते यदि ।
तदा राष्ट्रं निपीड्येत क्षुद्द्विषद्भीतिमृत्युभिः ॥ ६८ ॥

१ 'सस्वामिनः पि'। २ 'रुक्पीडाभिश्च' ख. ग. पाठः ।

शास्त्रज्ञः स्थपतिस्तस्मात् प्रयत्नपरया धिया ।
यथावत् कथितं [1]चारु नगरं विनिवेशयेत् ॥ ६९ ॥

वेदीनिवेशयात्रायां[2] देवागाराभिचारयोः ।
नदीकर्मणि मैत्रे च शान्तिं कुर्याच्छ्रमेषु च ॥ ७० ॥

यज्ञे पुरनिवेशे च स्थापने प्रयतः सुधीः ।
कुर्यात् तथाभ्युदयिकं यद्वान्यदपि किञ्चन ॥ ७१ ॥

पुरे भीतिकरं शश्वदनायुष्यमपौष्टिकम् ।
कृतमप्रयतैः कर्म नृपतिघ्नं च जायते ॥ ७२ ॥

विहितं यदशास्त्रज्ञैर्यच्च निर्लक्षणैः कृतम् ।
कृतमप्रय[3]तैर्यच्च तदशस्तं फलोज्झितम् ॥ ७३ ॥

शास्त्रज्ञः स्थपतिर्ज्योतिर्विदा तद्वत् पुरोधसा ।
अधिष्ठितः पुरे कर्म विदध्याच्छान्तिकेषु च ॥ ७४ ॥

पुरोहितोऽग्निं जुहुयाद् दद्यान्मौहूर्त्तिकः स्थिरं[4]म् ।
स्थपतिश्च बलिं दद्याद् योजयेदिति शान्तिकम् ॥ ७५ ॥

तदा तस्मिन् पुरे शान्तिर्यत्र मर्मस्थिताः सुराः ।
पूज्यन्ते सततं पौरैश्चत्वरस्थायिनस्तथा ॥ ७६ ॥

चतुःप्रकारं स्थापत्यमष्टधा च चिकित्सितम् ।
धनुर्वेदश्च सप्ताङ्गो ज्योतिषं कमलालयात् ॥ ७७ ॥

सामान्यलक्षणोत्पातनिमित्तानि च सर्वशः ।
ब्रह्मा विष्णुश्च रुद्रश्च त्यजन्त्येते न तत् पुरम् ॥ ७८ ॥

नगरस्य विभागोऽयं यथावत् समुदीरितः ।
खेटं तदर्धविष्कम्भमाहुर्ग्रामं तदर्धतः ॥ ७९ ॥

योजनेन पुरात् खेटं खेटाद् ग्रामं प्रचक्षते ।
गव्यूतिपरिमाणेन ग्रामाद् ग्रामं प्रचक्षते ॥ ८० ॥

---

१ 'चात्र न' क. पाठः । २ 'यां वेदागा' ग. पाठः । ३ 'यतैः कर्म त' क. पाठः । ४ 'तम्' ख. ग. पाठः ।

द्विक्रोशाद् विषये सीमा तदर्धेन पुरस्य सा ।
खेटके पुरसीमार्धं ग्रामे खेटार्धतः स्मृता ॥ ८१ ॥

त्रिंशद्धनूंषि विष्कम्भः पुरे दिग्वर्त्मसु स्मृतः ।
विंशतिः खेटके मार्गो ग्रामे दश च दर्शितः ॥ ८२ ॥

[1]नव ग्रामसहस्राणि [2]नवति(श्च ? श्च) प्रचक्षते ।
चतुःषष्टिमपि ग्रामान् ज्यायो राष्ट्रं विदुर्बुधाः ॥ ८३ ॥

[3]दशार्धं च सहस्राणि ग्रामाणां त्रिशती तथा ।
ग्रामाश्चतुरशीतिश्च मध्यमं राष्ट्रमीरितम् ॥ ८४ ॥

सहस्रमेकं ग्रामाणां तद्वच्च शतपञ्चकम् ।
[4]द्यूना च ग्रामपञ्चाशत् कनीयो राष्ट्रमुच्यते ॥ ८५ ॥

अध्यर्धसङ्ख्ययैतेषां ज्येष्ठमध्यकनीयसाम् ।
विधाय नवधैकैकं विभजेद् विधिवत् सुधीः ॥ ८६ ॥

राष्ट्रेष्वेवं विभक्तेषु यथाभागं विधानवित् ।
निवेशयेत् पुराण्येषु सप्त सप्त यथागमम् ॥ ८७ ॥

विभागश्च प्रमाणं च लक्षणं चादिमस्य यत् ।
जातिवर्णाधिवासश्च यथावत् तदिहोच्यते ॥ ८८ ॥

सुवर्णकारानाग्नेय्यां तथा वह्न्युपजीविनः ।
निवेशयेत् कर्मकरानन्यानपि विधानवित् ॥ ८९ ॥

वैश्यानामक्षधूर्तानां चक्रिकाणां च दक्षिणे ।
नटानां नर्त्तकानां च गृहाणि विनिवेशयेत् ॥ ९० ॥

निवेशयेत् सौकरिकान् [6]मे(यी ? षी)कारान् मृगच्छिदः ।
कैवर्तान् नैर्ऋताशायां दमनाधिकृतांस्तथा ॥ ९१ ॥

रथेषु कौशलं येषां येषां स्यादायुधेषु च ।
वारुण्यां दिशि तान् सर्वान् पुरस्य विनिवेशयेत् ॥ ९२ ॥

१ क. द. तत्र ग्राम°। २ द. भवन्ति च। ३ क. द. दश द्वे च। ४ द. ख. ग. न्यूनाच्च। ५ क. यथाक्रमम्। ६ सर्वत्र मेयी° पाठः।

कर्मस्वधिकृता ये च ये चापि परिकर्मिणः ।
शौण्डिका ये च तान् सर्वान् वायोर्दिशि निवेशयेत् ॥ ९३ ॥

यतीनामाश्रयान् ब्रह्मवत्सानां च तथा सभाम् ।
प्रपाश्च पुण्यशालाश्च कुर्याद् दिशि धनेशितुः ॥ ९४ ॥

घृतविक्रयिणो ये च फलविक्रयिणश्च ये ।
निवेशिताः प्रशस्यन्ते पुरस्यैशानदिग्गताः ॥ ९५ ॥

पूर्वभागे बलाध्यक्षान् राज्ञो मुख्यांस्तथा बले ।
निवेशयेत् तथाग्नेय्यां बलं नानाविधं सुधीः ॥ ९६ ॥

श्रेष्ठिनो दक्षिणाशायां तथा देशमहत्तरान् ।
याम्येकहारान्( ? )कुर्वीत तथा ककुभि निर्ऋतेः ॥ ९७ ॥

कोशपालमहामात्यादेशिकान् कारुकानपि ।
[1]निर्यामकांश्च कुर्वीत सलिलाधिपतेर्दिशि ॥ ९८ ॥

वायोः ककुभि कुर्वीत दण्डनाथान् सनायकान् ।
पुरोहितज्योतिषिकानुत्तरस्यां निवेशयेत् ॥ ९९ ॥

विप्राः सौम्य[2] दिशो भागे क्षत्रियाः शक्रदिग्गताः ।
वैश्यशूद्रास्तु कर्तव्या दक्षिणापरयोः क्रमात् ॥ १०० ॥

निधेया वणिजो वैद्या मुख्याश्चापि चतुर्दिशम् ।
चतुर्दिशं विशेषेण स्थापयीत बलानि च ॥ १०१ ॥

नगरस्य बहिः प्राच्यां लिङ्गस्थान् विनिवेशयेत् ।
श्मशानानि तथा तत्स्थान् याम्यायां स्थपतिः सुधीः ॥ १०२ ॥

सर्वतोदिशमुद्दिष्टो विभागो नगरे यथा ।
तथा ग्रामेषु खेटेषु सेनायाश्च निवेशने ॥ १०३ ॥

नगराभिमुखौ कार्यौ संपूर्णाङ्गमहोदयौ[3] ।
द्वारे द्वारे सौम्यमुखौ लक्ष्मीवैश्रवणौ शुभौ ॥ १०४ ॥

---

१ द. प्रतेः श्रेष्ठः पाठः निर्यामकांश्च, अन्यत्र नियामकांश्चेत्यपपाठः । २ क. सौम्यदिशो, शा. सौम्या दिशो । ३ क. द. °सहोदरौ ।

राष्ट्रं खेटमथ ग्रामं पश्य[1]न्तेतपुरं महत्(?) ।
तत्रारोग्यार्थसंसिद्धी प्रजाविजयमादिशेत् ॥ १०५ ॥

क्लेशबन्धवधैर्लोकाः स्युर्मिथः [2]सूत्रहिंसकाः ।
ग्रामं खेटं पुरं राष्ट्रं यदेतौ नैव पश्यतः ॥ १०६ ॥

स्थाप्यन्ते ये यथा देवा नगरे सर्वतोदिशम् ।
बाह्यान्तरासु भूमीषु ब्रूमहे तानतःपरम् ॥ १०७ ॥

चतुर्दिशं समारभ्य प्राकारपरिखान्ततः ।
बहिः शते शते सार्धे धनुषां द्विशतेऽपि च ॥ १०८ ॥

धनुःशतमितैः शुद्धैरनिन्द्यैर्धरणीतलैः ।
स्वस्वप्रासादयुक्तानि स्वस्वानुगगृहैः सह ॥ १०९ ॥

निवेशनानि कुर्वीत त्रिदशानां यथाक्रमम् ।
नगराभिमुखं चित्रवनभाञ्जि शुभानि च ॥ ११० ॥

याम्योत्तरायतं वंशं विकल्पपुरमध्यगम् ।
बहिरन्तश्च कुर्वीत देवानां विनिवेशनम् ॥ १११ ॥

प्राच्यां प्रत्यङ्मुखान् कुर्यात् प्राङ्मुखांश्चाम्बुभृद्दिशि ।
याम्योदक्पार्श्वयोस्तस्य [3]प्रादक्षिण्येन वंशगान् ॥ ११२ ॥

दक्षिणस्यां न कुर्वीत त्रिदशानप्युदङ्मुखान् ।
चैत्यशान्तिसभायक्षमातृप्र[4]थमयान्विताः(?) ॥ ११३ ॥

इत्यमी कथिताः सम्यग् ये यथादिङ्मुखाः सुराः ।
दिक्षु दिक्षु बहिर्ये स्युस्तानिदानीं प्रचक्ष्महे ॥ ११४ ॥

विष्णोर्दिनाधिनाथस्य सहस्रनयनस्य च ।
धर्मस्य च विधातव्यं दिशि प्राच्यां निकेतनम् ॥ ११५ ॥

सनत्कुमारसावित्र्योर्मरुतां मारुतस्य च ।
पूर्वदक्षिणदिग्भागे विदधीत निकेतनम् ॥ ११६ ॥

१ क. द. पश्यन्त्ये ते पुरं, 'पश्यतस्तौ पुरं च यत्' इति शास्त्रिभिः निर्दिष्टः पाठः । २ द. तत्रहिंसकाः । ३ द. प्राग्द° । ४ क. °प्रमथया°, °प्रमथपा° इति शास्त्रिभिः निर्दिष्टः पाठः, द. °प्रथमया° ।

गणेशमातृभूतानां याम्ये प्रेतपतेर्गृहम् ।
भद्रकाल्याः पितॄणां स्याद् वेश्म चैत्यं च नैर्ऋते ॥ ११७ ॥
सागरस्य नदीनां च शिल्पिभर्तुः प्रजापतेः ।
निलयं पश्चिमाशायां विदध्याद् वरुणस्य च ॥ ११८ ॥
फणिनां भवनं कार्यमपरोत्तरदिग्गतम् ।
शनैश्चरस्य चात्रैव कात्यायन्याश्च मन्दिरम् ॥ ११९ ॥
विशाखस्कन्दसोमानां तथा यक्षाधिपस्य च ।
पृथक्पृथग् विधातव्याः प्रासादाः सौम्यदिग्गताः ॥ १२० ॥
जगद्गुरोर्महेशस्य श्रियो वह्नेश्च मन्दिरम् ।
पूर्वोत्तरस्यां ककुभि प्रविधेयं मनोरमम् ॥ १२१ ॥
नदीनामम्बुधीनां च समन्तान्नगरस्य च ।
कान्तारेष्वद्रिषु स्थानं सर्वत्रेष्टमुमापतेः ॥ १२२ ॥
निवेश्यन्ते स्वदिग्भागेष्वेवं यस्मिन् सुरोत्तमाः ।
सम्यक्समृद्धिमासाद्य चिरं नन्दति तत्पुरम् ॥ १२३ ॥
नगरस्य विदूरेऽपि ककुप्सु निखिलास्वपि ।
बाह्यतोऽभिमुखा देवाः शस्यन्ते न पराङ्मुखाः ॥ १२४ ॥
क्रियते यदि [1]भूभागे वंशेन स पराङ्मुखः ।
विधिमेनं तदा तस्मिंस्तज्ज्ञः शास्त्रोक्तमाचरेत् ॥ १२५ ॥
तद्वेषवर्णभूषास्त्रवाहनैरन्वितं सुरम् ।
तद्भित्तौ प्रकटाकारं नगराभिमुखं लिखेत् ॥ १२६ ॥
वैकङ्कतशमीबिल्वैः क्षीरकण्टकिभिर्द्रुमैः ।
उदपानाग्न्यगारेषु स्यान्न दोषोऽन्तरस्थितैः ॥ १२७ ॥
अर्चाश्रितेष्वयं प्रोक्तो विधिर्नालिङ्ग्यवर्तिषु ।
कर्तव्याः सर्वतोवक्त्रास्तस्माच्चित्रगताः सुराः ॥ १२८ ॥
विधानं यद् यथा प्रोक्तं सुरधाम्नां पुराद् बहिः ।
तत् तथाभ्यन्तरेऽपि स्यात् कार्यं स्वस्वदिगाश्रयम् ॥ १२९ ॥

---

१ द. भूभागवशेन ।

मध्ये पुरस्य कर्तव्यं गृहमम्भोजजन्मनः ।
निवेशनं तथेन्द्रस्य तथैव हरिकृष्णयोः ॥ १३० ॥

मातृयक्षगणाधीशान् शिवकान् भूतसंज्ञकान्[1] ।
विनापि वेश्मभिः कुर्यात् पुरे चत्वरकर्णिकान् ॥ १३१ ॥

राज्ञा वर्णाश्रमकलापण्यशिल्पोपजीविनः ।
स्वदिक्पदस्थाः कर्तव्यास्ते देवाश्चेच्छता श्रियम् ॥ १३२ ॥

प्रासादे सति भक्तीच्छाशक्तियुक्तो यदापरम् ।
प्रासादं कारयेत् पूर्वं न तदा पीडयेत् सुधीः ॥ १३३ ॥

प्रतिवेश्म प्रतिग्रामं प्रतिदेवकुलं तथा ।
कुर्यात् प्रतिपुरं चापि न प्राज्ञानगुणाधिकम् ॥ १३४ ॥

पूर्वप्रासादतो रुद्रसोमयोर्ब्रह्मणोऽथवा ।
प्रासादे विहितेऽन्यस्मिन् भवेत् पीडाग्रजन्मनाम् ॥ १३५ ॥

कृते धाम्न्यधिकेऽन्यस्मिन् वह्नेर्वाग्निस्थलेरुत ।
पुरोधसां भयं विद्याद् ध्रुवं ज्योतिर्विदां तथा ॥ १३६ ॥

धनाधिपामराधीशयमानां वरुणस्य वा ।
अधिके विहिते धाम्नि भयं विद्यान्महीपतेः ॥ १३७ ॥

स्कन्दधाम्नोऽधिकेऽन्यस्मिन् विहिते तस्य वेश्मनि ।
सेनापतेर्बलानां च पीडा सञ्जायते ध्रुवम् ॥ १३८ ॥

प्रजापतेरभ्यधिकं हरेर्वान्यत् कृतं गृहम् ।
कर्तुः कारयितुश्च स्याद् बन्धाय[2] च विलप्तये ॥ १३९ ॥

गणेशयक्षफणिनामधिकोऽन्यः कृतो यदि ।
प्रासादः स्यात् तदा नित्यं सेनाङ्गानां महद्भयम् ॥ १४० ॥

स्त्रीनाम्न्यो देवतास्तासां पीड्यन्ते यदि वेश्मभिः ।
मुख्यानां पुरनारीणां तदा कुर्वन्त्युपद्रवम् ॥ १४१ ॥

पूर्वामरेषु सर्वेषु पीडितेष्वमरालयैः ।
अन्यैस्तल्लिङ्गिनां पीडा चैत्यैर्वा चैत्यपीडितैः ॥ १४२ ॥

१ क. द. संहकान् । २ द. ख. वन्धायाथ ।

हीनाधिकप्रमाणेषु दुर्निविष्टेषु धामसु ।
कर्तुः कारयितुः पीडा स्यान्न पूजा तथास्य च ॥ १४३ ॥

नैवातिसंभृतं[1] कुर्यात् स्वल्पमल्पामरालयम् ।
[2]पुरं चानाश्रितं कुर्याद् वेधभागाश्रितं न च ॥ १४४ ॥

ज्येष्ठमध्यकनिष्ठानि नवषट्त्रिपदान्तरे ।
सुरवेश्मानि कुर्वीत दोषायान्यथा पुनः ॥ १४५ ॥

कथितोऽयं विधिः [3]स्वैः स्वैस्त्रिदशानां निवेशने ।
बहिर्निवेशनात् स्वेच्छं विदध्यादमरालयम् ॥ १४६ ॥

नगरेषु समग्रेषु ग्रामेषु निखिलेषु च ।
खेटकेषु च सर्वेषु सामान्योऽयं विधिः स्मृतः ॥ १४७ ॥

इत्युक्त एष नगरोपगतः सुराणां
स्वस्वै[4]र्भागविहितैः पदसन्निवेशः ।
ब्रूमो विभागमधुना गृहदेवतानां
सम्यक् शुभाशुभफलै[5]र्विभागयुक्तम् ॥ १४८ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
पुरनिवेशो दशमोऽध्यायः ॥

---

## अथ वास्तुत्रयविभागो नामैकादशोऽध्यायः ।

चतुरश्रीकृते क्षेत्रे विभक्ते नवधा ततः ।
मध्ये महाद्युतिर्ब्रह्मा विधेयो नवभिः पदैः ॥ १ ॥

तस्मादनन्तरं प्राच्यां षट्पदः कीर्तितोऽर्यमा ।
आग्नेयकर्णे सवितृसावित्रौ पदिकावुभौ ॥ २ ॥

ब्रह्मणोऽनन्तरं याम्ये विवस्वान् षट्पदाश्रितः ।
नैर्ऋते पदिकौ कर्णे जयेन्द्रौ कथितावुभौ ॥ ३ ॥

---

१ द. संसृतं । २ द. ख. धुरं दानाश्रि° । ३ द. स्वे स्वे । ४ द. °विभाग° । ५ द. प्रविपाक°।

[1]षट्पदः स्यात् ततो मित्रः काष्ठायां पत्युरम्भसः ।
कर्णेऽपरोत्तरे यक्ष्मा रुद्रश्च पदिकावुभौ ॥ ४ ॥

षड्भिः पदैस्ततः सौम्ये निश्चलः पृथिवीधरः ।
आपस्तथापवत्सश्च पदिकावीशदिग्गतौ ॥ ५ ॥

इत्यन्तःसंश्रया देवाः प्रोक्ता ब्रूमो बहिःस्थितान् ।
ज्ञेयं प्रदक्षिणं तेषां स्थानं पूर्वोत्तरादितः ॥ ६ ॥

[2]अग्निस्तदनु पर्जन्यो जयन्तश्चेन्द्र एव च ।
रविः सत्यो भृशश्चेति नभस्तस्मात् ततोऽनिलः ॥ ७ ॥

पूषाख्यो वितथाख्यश्च गृहक्षतयमावथ ।
गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्ततः ॥ ८ ॥

दौवारिकोऽथ सुग्रीवः पुष्पदन्तो [3]जलेश्वरः ।
असुरः शोषनामा च पापयक्ष्मा ततः परम् ॥ ९ ॥

रोगो नागश्च मुख्यश्च भल्लाटः सोम एव च ।
चरकोऽथादितिर्दैत्यमातेति पददेवताः ॥ १० ॥

वह्नेर्वायोः पितॄणां च व्याधेश्चैव क्रमाद् बहिः ।
चरकी च विदारी च पूतना पापराक्षसी ॥ ११ ॥

पर्दभोगोऽस्ति नैतासां स्थानमेव हि केवलम् ।
[5]पदभोगमथ ब्रूमो बहिःस्थानां नभःसदाम् ॥ १२ ॥

तत्राष्टौ द्विपदाधीशा जयन्तो भृश एव च ।
वितथो भृङ्गसुग्रीवशोषमुख्यास्तथादितिः ॥ १३ ॥

एभ्यः शेषा बहिर्ये तु ते स्युः पदभुजः सुराः ।
एकाशीतिपदे प्रोक्तो देवतानां पदक्रमः ॥ १४ ॥

चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ।
भवेच्छतपदो वास्तुर्ब्रूमोऽत्राप्यमरस्थितिम् ॥ १५ ॥

---

१ द. षट्पदाम्यन्तरो । २ ख. ईशस्त° । ३ क. जलोद्विपः (? जलाधिपः) । ४ द. पदभागो । ५ द. पदभाग° ।

द्विरष्टगुणितं मध्ये पदमेकं पितामहः।
भुङ्क्ते शतपदे वास्तौ चतुर्गुणितमर्यमा ॥ १६ ॥

विवस्वतोऽथ मित्रस्य तद्वच्च पृथिवीभृतः।
भोगमिच्छन्ति वै तेषामर्यम्ण इव सूरयः ॥ १७ ॥

सवित्राद्यापवत्सान्ता ये च नोक्ताः सुरोत्तमाः।
यथैकाशीतिके तद्वत् तेषां भोगः पदाष्टकम् ॥ १८ ॥

अग्न्यन्तरिक्षपवना मृगश्च पितरो[1]ऽपि च।
रोगोऽदितिस्तथाध्यर्धपदभाजो बहिः स्थिताः ॥ १९ ॥

चतुर्विंशतिरुक्ता ये पर्जन्याद्याः सुरोत्तमाः।
अदित्यन्ता द्विपदिकास्ते शेषं प्राक् प्रसाधितम् ॥ २० ॥

चतुरश्रीकृते क्षेत्रे पूर्ववद् भाजितेऽष्टभिः।
चतुःषष्टिपदो वास्तुश्चतुःषष्ट्या पदैर्भवेत् ॥ २१ ॥

अस्मिन् पदानि चत्वारि भुनक्त्यन्तः पितामहः।
अर्यमाद्याः सुराश्चात्र द्वे द्वे मध्यगताः पदे ॥ २२ ॥

मध्येऽष्टौ बाह्यतोऽष्टौ ये स्थिताः कर्णेषु चाष्टसु।
ये देवाः सर्व एवात्र ते पदार्धभुजः स्मृताः ॥ २३ ॥

[2]पर्जन्योऽथ भृशः पूषा भृङ्गदौवारिकौ तथा।
शोषनागादितिप्रान्ताः स्युरध्यर्धपदस्पृशः ॥ २४ ॥

[3]जयन्तादिषु बाह्येषु चरकान्तेषु कीर्तिता।
प्रत्येकं षोडशस्त्वत्र सुरेषु द्विपदस्थितिः ॥ २५ ॥

सिरां वह्निपदादूर्ध्वं नयेत् [4]पितृपदान्ततः।
[5]बाह्याशानिर्गतां चैनां रोगनामानमानयेत् ॥ २६ ॥

द्विनाम्नः प्रापयेद् भृङ्गं भृङ्गात् सुग्रीवमानयेत्।
ततोऽदितिं तां गमयेद् द्विनामानं प्रवेशयेत् ॥ २७ ॥

---

१ क. पितरः क्षयः। २ द. पर्जन्यो जयभृशः भृंगोदौवारिकस्तथा। ३ द. ख. द्विनामादिषु। द्विनामशब्दो जयन्तपर्यायः (शास्त्री)। ४ द. पितृपदं ततः। ५ द. स्वास्वाशा।

सौराद् याम्यं पदं नीत्वा वारुणं[1] प्रापयेत् ततः ।
नयेत् पदं ततः सौम्यं तत आदित्यमानयेत् ॥ २८ ॥
भृशादानीय वितथं शोषाख्यं वितथादथ ।
शोषान्मुख्यं समानीय नयेत् तस्मात् पुनर्भृशम् ॥ २९ ॥
ये विभागाः समुद्दिष्टा यथासङ्ख्येन तैरिह ।
यज्ञामरनृणां वास्तु समस्तं विभजेत् सुधीः ॥ ३० ॥
देवैः सर्वैरप्यमीभिर्विशोकः
प्रीत्युत्कर्षादित्थमालोक्यतेऽसौ ।
कृत्स्नानेषोऽप्यब्जपत्रायताक्षः
पश्यत्येतान् स्फारितेनेक्षणेन ॥ ३१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
वास्तुत्रयविभागो नाम एकादशोऽध्यायः ॥

## अथ नाड्यादिसिरादिविकल्पो नाम द्वादशोऽध्यायः ।

अथाभिधीयते[2] वास्तुः कनीयान् षोडशपदः ।
पदैः षोडशभिः स स्यात् तत्र देवान् प्रचक्ष्महे ॥ १ ॥
भुङ्क्ते मध्ये स्थितो मुख्यः पदमेकं सुरोत्तमः ।
क्लृप्तं पदचतुर्भागैश्चतुर्भिश्चतुराननः ॥ २ ॥
पदार्धभागभोक्तारश्चत्वारोऽमी सुरोत्तमाः ।
अर्यमा च विवस्वांश्च मित्रश्च क्षमाधरोऽपि च ॥ ३ ॥
सवित्राद्यापवत्सान्ता येऽष्टौ कोणेषु वेधसः ।
चतुर्भागभुजस्ते स्युस्त्रिदशास्तपनत्विषः ॥ ४ ॥
चतु[3](र्थी ? ष्वी)शादिकोणेषु ये स्थिताः क्रमशः सुराः ।
अष्टभागभुजस्तेऽष्टौ विनिर्दिष्टा मनीषिभिः ॥ ५ ॥
ये तथादितिपर्यन्ताः पर्जन्याद्याः सुरोत्तमाः ।
तेऽष्टौ चतुर्भागभुजो विद्वद्भिरिह कीर्तिताः ॥ ६ ॥

१ क. वारुण्यां । २ क. द. अथो विधीयते । ३ द. ख. चतुष्टीशादिकों° ।

चरकान्ता जयन्ताद्या ये बाह्यस्थितयोऽमराः ।
[1]भोगोऽर्धपदिकस्तेषां षोडशानामपि स्मृतः ॥ ७ ॥

चतुरश्रीकृते क्षेत्रे त्रयस्त्रिंशद्विभाजिते ।
अन्त्ये[2]पङ्क्तिद्वयं सार्धं चरक्याद्यर्थमुत्सृजेत् ॥ ८ ॥

अन्तरे वीथिकामर्धपदिकामुत्सृजेत् ततः ।
मध्ये तु सप्तविंशत्या भोगैर्वास्तु विभाजयेत् ॥ ९ ॥

एकोनत्रिंशता युक्तं पदानां शतसप्तकम् ।
यद् भवेत् तत्र गर्भे स्यादेकाशीतिपदः स्वभूः ॥ १० ॥

अष्टादशपदाश्चाष्टौ चापप्रभृतयः पृथक् ।
अर्यमाद्यं चतुःपञ्चाशत्पदं स्याच्चतुष्टयम् ॥ ११ ॥

ईशादयस्त्वदित्यन्ता बाह्या नवपदाः सुराः ।
देशानां सन्निवेशोऽसौ साहस्रो वास्तुरुच्यते ॥ १२ ॥

अथोच्यते वृत्तवास्तुर्वृत्तप्रासादहेतवे ।
एकश्चतुःषष्टिपद[3]स्तयोः शतपदोऽपरः ॥ १३ ॥

अष्टधा [4]भाजिते वृत्तविष्कम्भे भागिकान्तरान् ।
चतुरः परिधीन् कुर्यान्मध्यवृत्तं द्विभागिकम् ॥ १४ ॥

स्याद् बहिर्वृत्तवलयमष्टाविंशतिभागिकम् ।
तदन्तर्वृत्तवलयमष्टाष्टांशोज्झितं क्रमात् ॥ १५ ॥

एवं कृते भवेन्मध्ये ब्रह्मणस्तच्चतुष्पदम् ।
इत्थं चतुःषष्टिपदो वृत्तवास्तुरुदाहृतः ॥ १६ ॥

दशधा भाजिते वृत्तविष्कम्भे भागिकान्तराः[5] ।
कार्याः परिधयः पञ्च मध्ये वृत्तं द्विभागिकम् ॥ १७ ॥

बहिस्थं वलयं तस्य भजेत् षट्त्रिंशता ततः ।
शेषं चतुःषष्टिपदस्थित्या [6]स्याच्छतवास्तुनि ॥ १८ ॥

---

१ द. भागार्ध° । २ क. अन्ते पङ्क्तित्रयं । ३ द. ख. °पदस्तयोः शतपदोत्तरः । ४ द. वृत्तविभक्ते विष्कम्भे, क. वृत्तविष्कम्भे विभक्ते । ५ द. भागिकान्तरात् । ६ क. स्याद्वृत्तवा° ।

देवतापदसङ्क्षिप्तिरनयोश्चतुरश्रवत् ।
एवं कार्यवशात् कार्या वास्तवोऽन्येऽपि धीमता ॥ १९ ॥
त्र्यश्रे षडश्रे चाष्टाश्रे षोडशाश्रे च वृत्तवत् ।
वृत्तायतेऽर्धचन्द्रे च वास्तौ पदविभाजनम् ॥ २० ॥
एक एव पुमानेषु[1] बहुधा परिकल्पितः ।
सर्वस्मिन्नपि संस्थाने विभक्ते लक्षयेत् ततः ॥ २१ ॥
शरीरं वास्तुपुंसोऽस्य गुणदोषा भवन्ति यत् ।
मुखं मूर्धा ततः श्रोत्रे हृत्तात्वोष्ठरदाः क्रमात् ॥ २२ ॥
वक्षः कण्ठः स्तनौ नाभिर्मेढ्रमुष्कावथो गुदम् ।
बाहू प्रबाहू पाणी स्फिगूरुजङ्घं पदद्वयम् ॥ २३ ॥
कल्पयेदेवमेतेन स भवेत् पुरुषाकृतिः ।
सिरावंशानुवंशाश्च सन्धयः सानुसन्धयः ॥ २४ ॥
मर्माण्यथ महावंशा लक्ष्या वास्तुशरीरगाः ।
सिराः कर्णगता याः स्युस्ता नाड्यः परिकीर्तिताः ॥ २५ ॥
पदस्य षोडशो भागस्तत्प्रमाणं प्रकीर्तितम् ।
महावंशौ प्राक्प्रतीच्यौ याम्योदीच्यौ च मध्यगौ ॥ २६ ॥
प्रमाणं पञ्चमो भागः पदस्योदाहृतं तयोः ।
वंशास्तेऽस्मिन् समुद्दिष्टा रेखा याः स्युर्मुखागताः ॥ २७ ॥
यास्तिर्यगायता रेखास्तेऽनुवंशाः प्रकीर्तिताः ।
सम्पाता ये स्युरेतेषां मर्म तत् संप्रचक्षते ॥ २८ ॥
उपमर्माणि तान्याहुः पदमध्यानि यानि हि ।
भागोऽष्टमोऽथ दशमो द्वादशः षोडशोऽपि च ॥ २९ ॥
पदतो मानमिष्टं स्याद् वंशादीनामनुक्रमात् ।
वंशाष्टकस्य यः सन्धिः स सन्धिरिति कीर्तितः ॥ ३० ॥
ये पुनः स्युस्तदङ्गानां प्रोक्तास्ते[2] चानुसन्धयः ।
वालाग्रतुल्यं सन्धीनां प्रमाणं परिचक्षते ॥ ३१ ॥

१ क. द. पुमानेष । २ द. तत्रानुसंधयः ।

तदर्धमनुसन्धीनां प्रमाणं समुदीरितम् ।
यत्नेनैतानि सन्त्यज्य वास्तुविद्याविशारदः ॥ ३२ ॥
द्रव्याणि प्रयतो नित्यं स्थपतिर्विनिवेशयेत् ।
महावंशस्य नाक्रान्तिं कुर्याद् द्रव्येण केनचित् ॥ ३३ ॥
इतरेषु पुनर्द्रव्यं मध्यवंशेषु सन्त्यजेत् ।
महावंशसमाक्रान्तौ भवेत् स्वामिवधो ध्रुवम् ॥ ३४ ॥
वर्षेण तपनाद् भीतिं वंशानां पीडनाद् विदुः ।
उपमर्माणि रोगाय मर्माणि कुलहानये ॥ ३५ ॥
उद्वेगायार्थनाशाय सिराश्च स्युः प्रपीडिताः ।
कलिः स्यात् [1]सन्धिविद्धेषु पीडितेष्वनुसन्धिषु ॥ ३६ ॥
तस्मादेतानि सर्वाणि पीडितान्युपलक्षयेत् ।
ज्ञात्वा सिराः सानुसिराश्च नाडीवंशानुवंशानपि वास्तुदेहे ।
यत्नेन मर्माणि फलानि चैषां वेधं त्यजेद् यस्तमुपैति नापत् ॥३७॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
नाडीवंशानुवंशानां सिरानुसिराममार्नुमर्मवेधविकल्पो नाम द्वादशोऽध्यायः ॥

---

## अथ मर्मवेधस्त्रयोदशोऽध्यायः ।

एकाशीतिपदो यः स्यात् तथा शतपदश्च यः ।
चतुःषष्टिपदो यश्च वास्तुरत्र त्रिधोदितः ॥ १ ॥
यद् येन विभजेत् तेषु तदिदानीं प्रचक्ष्महे ।
यानि मर्माणि चैतेषां कथ्यन्त इह तान्यपि ॥ २ ॥
वर्णिनां भवनादीनि निवेशा राजवेश्मनाम् ।
एकाशीतिपदेनेन्द्रस्थानं च विभजेत् सुधीः ॥ ३ ॥
प्रासादा विविधास्तद्वद् विचित्राश्चात्र मण्डपाः ।
तान् मापयेच्छतपदप्रविभागेन बुद्धिमान् ॥ ४ ॥

---

१ द. सन्धिषण (? षू.) द्वेगः पी° ।

यः पुनः स्याच्चतुःषष्टिपदस्तेन विभाजयेत् ।
नरेन्द्रशिबिरग्रामखेटादि नगरादि च ॥ ५ ॥
अन्तस्त्रयोदश सुरा द्वात्रिंशद् बाह्यतश्च ये ।
तेषां स्थानानि मर्माणि सिरा वंशाश्च तेषु तु ॥ ६ ॥
मुखे हृदि च नाभौ च मूर्ध्नि च स्तनयोस्तथा ।
मर्माणि वास्तुपुंसोऽस्य षण्महान्ति प्रचक्षते ॥ ७ ॥
वंशानुवंशसम्पाताः पदमध्यानि यानि च ।
देवस्थानानि तान्याद्ये पदषोडशकान्विते ॥ ८ ॥
देवस्थानानि सम्पाताश्चतुःषष्टिपदे पुनः ।
तथैकाशीतिपदिके पदान्तशतिकेऽपि च ॥ ९ ॥
चतुर्ष्वपि विभागेषु सिरा याः स्युश्चतुर्दिशम् ।
मर्माणि तानि चोक्तानि द्वारमध्यानि यानि च ॥ १० ॥
भित्तिविस्तृतमध्येन यद्वा मध्येन दारुणः ।
मर्म यत् पीड्यते येन गृहे तत्रोच्यते फलम् ॥ ११ ॥
द्वारैर्वा भित्तिभिर्वापि मर्मणां परिपीडनात् ।
दौर्गत्यं गृहिणः प्राहुः कुलहानिमथापि वा ॥ १२ ॥
भवेत् स्वामिक्षयः स्तम्भैस्तुलाभिः स्त्रीपरिक्षयः ।
स्नुषावधो जयन्तीभिर्बन्धुनाशश्च सङ्ग्रहैः ॥ १३ ॥
मर्मस्थानगतैः [1]कार्यैर्भर्तुः कायो निपीड्यते ।
सुहृद्विश्लेषमिच्छन्ति सन्धिपालैश्च तद्विदः ॥ १४ ॥
नागपाशैर्धनोच्छेदो[2] नागदन्तैः सुहृत्क्षयः ।
कपिच्छकैश्च मर्मस्थैः प्रेष्याणां क्षयमादिशेत् ॥ १५ ॥
षड्दारुकाण्यनुसिरागवाक्षालोकनानि च ।
मर्ममध्योपगान्येतान्यावहन्ति धनक्षयम् ॥ १६ ॥
द्वारद्रव्यतुलास्तम्भनागदन्तगवाक्षकैः ।
द्वारमध्यार्दितै रोगकुलपीडाधनक्षया( : ? न् ) ॥ १७ ॥

१ क. कार्यैर्भ । २ द. धनोच्चाटो ।

नृपदण्डभयं[1] पत्युः पीडनं च प्रचक्षते ।
द्वारमध्येषु षड्दारुमध्येष्वपि च सूरयः ॥ १८ ॥
कर्णद्रव्यादिभिर्विद्धे[2]ष्वेतदेव फलं विदुः ।
शय्यानुवंशविहिता गृहिणां कुलनाशिनी ॥ १९ ॥
क्षयावहा नागदन्ता भर्तुः शय्या[3]वितानगाः ।
वातायनैरथ स्तम्भैर्ये विद्धा नागदन्तकाः ॥ २० ॥
ते शस्त्रभीतिदा भर्तुर्यद्वा चौरभयप्रदाः ।
द्रव्यधान्यविनाशाय शोकाय कलहाय च ॥ २१ ॥
गृहमध्यगतं द्वारं भवेत् स्त्रीदूषणाय च ।
द्रव्येणान्यतरेणापि महामर्म[4] निपीडितम् ॥ २२ ॥
भवेत् सर्वस्वनाशाय गृहिणो मरणाय [5]च ।
अंशुकाश्चोर्ध्ववंशाश्च[6] तुम्बिकाः सेन्द्रकीलकाः ॥ २३ ॥
पुरप्रासादगेहानां वेधेऽप्येते न दोषदाः ॥
इत्थं सुरक्षितिपवर्णगृहाश्रितोऽयं
भेदः पदेष्वखिलमर्मगतो व्यधश्च ।
उक्तः पृथक्पृथगमुष्य फलं च सम्यग्
ब्रूमोऽथ वास्तुपुरुषाङ्गविभागमत्र[7] ॥ २४ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

मर्मवेधो नाम त्रयोदशोऽध्यायः ॥

---

## अथ पुरुषाङ्गदेवतानिघण्ट्वादिनिर्णयश्चतुर्दशोऽध्यायः ।

देवतानां पदैरित्थं संविभक्तैः पृथग्विधैः ।
स्थपतिः प्रयतः कुर्याद् वास्तुमित्थं पुमाकृतिम् ॥ १ ॥

---

१ द. भयापत्य° । २ क. निहिता । ३ क. शय्यावहानगाः, द. शय्यावतानगाः । ४ क. मर्मणि पीडिते, द. महामर्मनिपीडिते । ५ द. वा । ६ क. चार्ध्ववंशास्तु, द. सोर्ध्ववंशास्तु । ७ द. °मग्रे ।

शिरस्तस्याग्निरुद्दिष्टं दृष्टिर्दित्यम्बुदाधिपौ ।
जयन्तश्चादितिश्चास्य कर्णौ वायुर्मुखे स्थितः ॥ २ ॥
अर्कः स्याद् दक्षिणे वामे भुजे सोमः प्रतिष्ठितः ।
महेन्द्रचरकौ सापवत्सावस्योरसि स्थितौ ॥ ३ ॥
स्तनेऽर्यमा दक्षिणे स्याद् वामे च पृथिवीधरः ।
यक्ष्मा रोगश्च नागश्च मुख्यो भल्लाट इत्यमी ॥ ४ ॥
दक्षिणेतरमेतस्य बाहुं देवाः समाश्रिताः ।
सत्यो भृशो नभो वायुः पूषा चेत्यथ दक्षिणम् ॥ ५ ॥
पश्चापि बाहुमेतस्य संश्रितास्त्रिदिवौकसः ।
सावित्रसवितारौ च रुद्रशक्तिधरावपि ॥ ६ ॥
चत्वारोऽमी [1]क(लाधि ? फोणि)स्थाः करयोर्हृदि च स्वभूः ।
वितथौकः क्षतौ पार्श्वे दक्षिणेऽस्य व्यवस्थितौ ॥ ७ ॥
वामे पुनः स्थितावस्य देवौ शोषासुराभिधौ ।
मित्राभिधो विवस्वांश्च द्वावप्युदरमाश्रितौ ॥ ८ ॥
मेढ्रमध्यस्थितावस्य सुराविन्द्रजयाभिधौ ।
यमश्च वरुणश्चोर्वोः क्रमाद् दक्षिणवामयोः ॥ ९ ॥
गन्धर्वभृङ्गौ [2]सभृगौ जङ्घां राज्यामथेतराम् ।
द्वास्थसुग्रीवपुष्पाख्याः[3] संश्रिताः पितरोऽङ्घ्रिगाः ॥ १० ॥
एकाशीतिपदस्येशादिग्विभागाश्रितं शिरः ।
माहेन्द्रीसंश्रितं विद्याच्चतुःषष्टिपदस्य तु ॥ ११ ॥
एकाशीतिपदाज्जातो वास्तुः शतपदाभिधः ।
यः षोडशपदः स स्याच्चतुष्षष्टिपदोद्भवः ॥ १२ ॥
मध्ये य [4]एव देवानां स्थितो ब्रह्माब्जसंभवः ।
स सहस्राननोऽचिन्त्यविभवो जगतां प्रभुः ॥ १३ ॥

---

१ द. कलाधिस्थाः । २ द. सभृंगौ । ३ द. °सुग्रीवपुष्पाख्यौ । ४ द. एप ।

योऽयं वह्निरिहोक्तः स सर्वभूतहरो हरः ।
पर्जन्यनामा यश्चायं [1]वृष्टिमानम्बुदाधिपः ॥ १४ ॥

जयन्तस्तु द्विनामाख्यः कश्यपो भगवानृषिः ।
महेन्द्रस्तु सुराधीशो दनुजानां विमर्दनः ॥ १५ ॥

आदित्यं पुनरिच्छन्ति विवस्वन्तमहस्करम् ।
सत्यो भूतहितो धर्मो भृशः कामोऽथ मन्मथः ॥ १६ ॥

योऽन्तरिक्षः स्मृतो देवस्तन्नभः समुदाहृतम् ।
मारुतो वायुरुद्दिष्टः पूषा मातृगणः स्मृतः ॥ १७ ॥

अधर्मो वितथाख्यः स्यात् कलेरप्रतिमः सुतः ।
गृहक्षतः पुनर्योऽत्र स चन्द्रतनयो बुधः ॥ १८ ॥

प्रेताधिपो मतः श्रीमान् यमो वैवस्वतश्च सः ।
गन्धर्वो भगवान् देवो नारदः परिकीर्तितः ॥ १९ ॥

भृङ्गराजमिहेच्छन्ति राक्षसं निर्ऋतेः सुतम् ।
यो मृगोऽस्मिन्ननन्तः स स्वयंभूर्धर्म इत्यपि ॥ २० ॥

आदिः प्रजापतिः [2]स्रष्टा मनुः सुग्रीव ईरितः ।
पुष्पदन्तस्तु विनतातनयः स्यान्महाजवः ॥ २१ ॥

वरुणः पाथसां नाथो लोकपालः स कीर्तितः ।
असुरो राहुरर्केन्दुमर्दनः सिंहिकात्मजः । २२ ॥

शोषस्तु भगवानेष सूर्यपुत्रः शनैश्चरः ।
पापयक्ष्मा क्षयः प्रोक्तो रोगस्तु कथितो ज्वरः ॥ २३ ॥

भुजङ्गमानामधिपः श्रीमान् नागस्तु वासुकिः ।
त्वष्टा स्यान्मुख्यसंज्ञोऽत्र विश्वकर्माभिधश्च सः ॥ २४ ॥

चन्द्रो भल्वाट[3] इत्युक्तः कुबेरः सोमसंज्ञितः ।
चरको व्यवसायाख्यः श्रीरिहादितिसंज्ञिका ॥ २५ ॥

---

१ द. वृष्टिमान् स घनाधिपः । २ क. ब्रह्मा । ३ भल्लाट इति प्राक् पाठः ।

दितिरत्रोच्यते शर्वः शूलभृद् वृषभध्वजः ।
हिमवानाप इत्युक्त आपवत्स उमा स्मृता ॥ २६ ॥

आदित्यस्त्वर्यमा वेदमाता सावित्र उच्यते ।
[1]देवी गङ्गात्र विद्वद्भिः सवितेति प्रकीर्तिता ॥ २७ ॥

मृत्युः शरीरहर्तासौ विवस्वानिति स स्मृतः ।
जयाभिधस्तु वज्रीति स्यादिन्द्रो बलवान् हरिः ॥ २८ ॥

मित्रो हलधरो माली रुद्रस्तूक्तो महेश्वरः ।
राजयक्ष्मा गुहः प्रोक्तः क्षितिध्रोऽनन्त उच्यते ॥ २९ ॥

चरकी च विदारी च पूतना पापराक्षसी ।
रक्षोयोनिभवा ह्येता देवतानुचरीर्विदुः ॥ ३० ॥

इत्येष वास्तुदेवानां निघण्टुः परिकीर्तितः ।
क्षो मूर्ध्नि हो दृशोर्मध्ये सो घ्राणे चिबुके तु षः ॥ ३१ ॥

शः कण्ठे हृदये वः स्याल्लकारो नाभिदेशगः ।
रेफो बस्तौ यकारस्तु मेढ्रे मः [2](पुष्य ? मुष्क)कावुभौ ॥ ३२ ॥

नकार ऊरुणो जानु ञकारः पिण्डिकाश्रितः ।
[3](ड ? ङ)कारो गुल्फयोरन्ते पकारोऽङ्घ्रितले स्मृतः ॥ ३३ ॥

उक्तानि वास्तुपुरुषस्य यथावदित्थमङ्गानि वास्तुपददैवतनामभेदाः ।
वर्णाश्च वास्त्ववयवेष्विह षोडशैव ब्रूमोऽथ दैवतवशेन पुरे [4]निवेशम् ॥ ३४ ॥

इति महाराजाधीराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
पुरुषाङ्गदेवतानिघण्ट्वक्षराङ्गनिर्णयो नाम चतुर्दशोऽध्यायः ।

---

## अथ राजनिवेशो नाम पञ्चदशोऽध्यायः ।

कृते पुरनिवेशेऽथ चतुःषष्टिपदाश्रये ।
नियुक्तपरिखासालगोपुराट्टालकेऽपि च ॥ १ ॥

---

१ इत आरभ्यार्धपञ्चक, द. ख. पुस्तकयोर्न पठ्यते। २ 'पुष्यकावि'ति क. पाठः, 'पुत्रकावि'ति द. ख. पाठश्चाशुद्धौ, ग. पुस्तके तु पत्रं लुप्तम्। ३ 'डगुल्फगष्टकारोङ्घ्रोः सिकारोऽङ्घ्रि (?)' द. ख. पाठः। ४ क. निवासम्, द. निवेशा।

विभक्तरथ्ये परितः प्रविभाजितचत्वरे ।
क्रमादन्तर्बहिः क्लृप्तदेवतायतनस्थितौ ॥ २ ॥
प्रागुदक्प्रवणे देशे प्राग्द्वाराभ्युन्नतेऽथवा ।
यशःश्रीविजयाधायि मैत्रं पदमधिष्ठितम् ॥ ३ ॥
यथावर्णक्रमायातं[1] चतुरश्रं समं शुभम् ।
पुरमध्यादपरतोदिक्स्थं कुर्यान्नृपालयम् ॥ ४ ॥
दुर्गेषु भूवशात् कार्यं यद्वा दिक्ष्वपरास्वपि ।
विवस्वद्भूधरार्यम्णां कार्यमन्यतमे पदे ॥ ५ ॥
त्रिचत्वारिंशता युक्ते ज्येष्ठं स्याद् द्वे धनुःशते ।
मध्यं शतं तु द्वाषष्टिः शतं साष्टकमन्तिमम् ॥ ६ ॥
ज्येष्ठे पुरे विधातव्यं ज्येष्ठं राजनिवेशनम् ।
मध्यमे मध्यमं कार्यं कानिष्ठं च कनीयसि ॥ ७ ॥
प्राकारपरिखागुप्तं चारुकान्ति समन्ततः ।
तमङ्गभ्रमनिर्यूहसुदृढाट्टालकान्वितम् ॥ ८ ॥
एकाशीत्या पदैर्भक्तं विधेयं नृपमन्दिरम् ।
राजमार्गं समाश्रित्य वास्तुद्वारमुदङ्मुखम् ॥ ९ ॥
युक्त्यानयैव कर्तव्यमन्यदिक्संश्रयेऽपि च ।
भल्लाटपदवर्त्यस्य गोपुरद्वारमिष्यते ॥ १० ॥
तत्पुरद्वारविस्तारोच्छ्रायसम्मितमिष्टदम् ।
महेन्द्रं द्वारमिच्छन्ति निविष्टस्य महीधरे ॥ ११ ॥
वैवस्वते पुष्पदन्तमर्यम्णि च गृहक्षतम् ।
अन्येष्वेषामपरतः प्रदक्षिणपदेष्वथ ॥ १२ ॥
अन्यान्यपि स्वासु दिक्षु द्वाराण्येवं प्रकल्पयेत् ।
आभिमुख्ये च सर्वेषां शस्यन्ते गोपुराणि च ॥ १३ ॥
तदीयनगरद्वाराद् विंशत्यंशोज्झितानि वा ।
पक्षद्वाराणि सुग्रीवे जयन्ते मुख्यनाम्नि च ॥ १४ ॥

1 द. ख. यथावर्णं ।

वितथेऽथ भ्रमांस्तद्वद् विदधीत प्रदक्षिणान् ।
वास्तौ विभक्ते पुरवत् क्लृप्तेऽमरपदव्रजैः[1] ॥ १५ ॥
तत्र मैत्रपदस्थाने निवेशायावनीपतेः ।
प्रासादः प्राङ्मुखः कार्यो यथावत् पृथिवीञ्जयः[2] ॥ १६ ॥
श्रीवृक्षं सर्वतोभद्रं मुक्तकोणमथापरम् ।
यमिच्छेन्नृपतिः कुर्यात् प्रासादं शुभलक्षणम् ॥ १७ ॥
शालापरिक्रमोपेतकर्मान्तैरपि चान्वितम् ।
तत्र प्राच्यां भवेद् गेहमादित्यपदसंश्रितम् ॥ १८ ॥
धर्माधिकरणं सत्ये व्यवहारेक्षणाय च ।
भृशे च कोष्ठागारं स्यादम्बरे मृगपक्षिणाम्[3] ॥ १९ ॥
अग्नेः ककुभमाश्रित्य कार्यं वायोर्महानसम् ।
सभाजनाश्रयं पूष्णि विदध्याद् भोजनास्पदम् ॥ २० ॥
सावित्रे वाद्यशाला स्यात् सवितृस्थाश्च वन्दिनः ।
चर्माणि वितथे कुर्यात् तद्योग्यान्यायुधानि च ॥ २१ ॥
स्वर्णरूप्यादिकर्मान्तान् विदधीत गृहक्षते ।
याम्ये दक्षिणतो गुप्तिं कोष्ठागारं च कल्पयेत् ॥ २२ ॥
प्रेक्षासङ्गीतकानि स्युर्गन्धर्वे वासवेश्म च ।
कार्या वैवस्वते शाला रथानां दन्तिनां तथा ॥ २३ ॥
पश्चिमोत्तरभागस्थां वापीमपि च कारयेत् ।
वा(यौ ? यु)सुग्रीवपदयोर्गन्धर्वस्य च बाह्यतः ॥ २४ ॥
कुर्यादन्तःपुरस्थानं प्राकारवलयावृतम् ।
कुर्यात् तद्गोपुरद्वारमुदगास्यं जयाभिधे ॥ २५ ॥
कार्यः स्थपतिना चैव प्रासादश्चापराङ्मुखः ।
क्रीडादोलालयान् भृङ्गे कुमारीभवनं तथा ॥ २६ ॥
नृपान्तःपुरमिच्छन्ति मृगे पित्र्ये त्ववस्करम् ।
नृपस्त्रीणामुपस्थानगृहमिन्द्रपदे[4] विदुः ॥ २७ ॥

१ द. ख. व्रजेत् । २ क. पृथिवीजयः, द. पृथिवींजयः । ३ द. ख. पक्षिणः । ४ द. °इन्दु° ।

सुग्रीवपदसंसक्तमरिष्टारमिष्टदम् ।
द्वास्थसुग्रीवपि(श्यं ? श्यां)शापश्चाद्भागे मनोहरा ॥ २८ ॥

विधेयाशोकवनिका स्नानधारागृहाणि च ।
लतामण्डपसंयुक्ताः स्युरत्रैव लतागृहाः ॥ २९ ॥

दारुशैलाश्च वाप्यश्च पुष्पवीथ्यः सुकल्पिताः ।
पुष्पदन्ते भवेद् य[1](त्त ? न्त्र)कर्मान्तः पुष्पवेश्म च ॥ ३० ॥

वरुणस्य पदे कुर्याद् वापीपानगृहाणि च ।
स्यात् कोष्ठागारमसुरे शोषे त्वायुधमन्दिरम् ॥ ३१ ॥

भाण्डागारं तु रौद्राख्ये विदध्यात् स्थपतिः श्रिये ।
उलूखलशिलायन्त्रभवनं पापयक्ष्मणि ॥ ३२ ॥

दारुकर्मान्तमप्याहुः श्रेयसे राजयक्ष्मणि ।
[2]स्यादोषधेरधिष्ठानं रोगे दिशि नभस्वतः ॥ ३३ ॥

नागानां शस्यते स्थानं पदे नागस्य सूरिभिः ।
भवन्ति मुख्ये व्यायामनाट्यचित्रगृहाणि च ॥ ३४ ॥

गवां स्थानं तथा क्षीरगृहं [3]भल्लाटनामनि ।
उदक्प्रदेशे सौम्यस्य पुरोधःस्थानमिष्यते ॥ ३५ ॥

[4]राज्ञोऽभिषेचनं चात्र दानाध्ययनशान्तयः ।
चामरच्छत्रधाम स्यान्मन्त्र[5]वेश्म च भूधरे ॥ ३६ ॥

कार्यिणां चात्र कार्याणि स्थितः पश्येन्नराधिपः ।
विधेया मन्दुराश्वानामुत्तरं पार्श्वमाश्रिता ॥ ३७ ॥

महीधरपदस्यैव यथावद् दक्षिणामुखी ।
कार्या सर्वत्र चाश्वानां शाला राज्ञो यथागृहम् ॥ ३८ ॥

विशतो दक्षिणेन स्याद् वामेन च विषाणिनाम् ।
वेश्मानि राजपुत्राणां विदध्याच्चरकाभिधे ॥ ३९ ॥

---

१ क. दन्तकर्मान्तः, द. यत्रकर्मान्तः । २ द. स्यादौषधेरिधस्थानं । ३ द. भल्वाट । ४ क. राजाभिषेचनं । ५ द. ख. मन्त्रि° ।

अत्रैव विद्याधिगमशालाश्चैषां निवेशयेत् ।
नृपस्य मातुरदितिस्थाने कुर्यान्निवेशनम् ॥ ४० ॥
पृथगत्रैव शिबिकाशय्यासनगृहं विदुः ।
नृपद्विपानां शस्ता स्यादापे सदनकल्पना ॥ ४१ ॥
अभिषेचनकं स्थानमिहैव स्याद् विषाणिनाम् ।
आपवत्सपदे हंसक्रौञ्चसारसनादिताः ॥ ४२ ॥
स्युः फुल्लाब्जवनाः स्वच्छसलिलाः सलिलाशयाः ।
पितृव्यमातुलादीनां कार्यं दितिपदे गृहम् ॥ ४३ ॥
अन्येषामपि चात्रैव [1]सामन्तानां महीपतेः ।
ऐशान्यामनलस्थाने वोच्छ्रितस्तम्भवेदिकम् ॥ ४४ ॥
कार्यं देवकुलं चारु[2] सुश्लिष्टमणिकुट्टिमम् ।
पर्जन्यस्य पदे होराज्योतिर्विद्गृहमिष्यते ॥ ४५ ॥
जये सेनापतेर्वेश्म विधेयं विजयप्रदम् ।
द्वारं प्राकारमाश्रित्य पदेऽर्यम्णः प्रशस्यते ॥ ४६ ॥
प्रागुदक्षिणाश्रितं शस्त्रकर्मान्तं शस्त्रमल्ल च ।
विमुञ्चेद् ब्रह्मणः स्थानमिन्द्रध्वजयुतं नृणाम् ॥ ४७ ॥
तत्राशुभानि वेश्मानि निवेशाश्चासुखावहाः ।
गवाक्षस्तम्भशोभिन्यो विधेयाश्चानुकामतः ॥ ४८ ॥
सभा यथादिक्प्रभवा नृपवेश्माभिगुप्तये ।
सर्वत्र नृपतेः सौधान् नृपसौधस्य सम्मुखा ॥ ४९ ॥
पश्चाद्भागाश्रिता यद्वा शाला कार्या विषाणिनाम् ।
इत्यास्पदं सुरपदास्पदकल्पमाद्य-
मेतद् यथावदनुतिष्ठति यः सदैव ।
स क्ष्मामिमां भुजबलक्षपितारिपक्षः
सप्ताम्बुराशिरशनां नृपतिः प्रशास्ति ॥ ५० ॥

१ द. समन्तानां । २ क. चात्र ।

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
राजनिवेशो नाम पञ्चदशोऽध्यायः ॥

# अथ वनप्रवेशो नाम षोडशोऽध्यायः ।

प्राग्वोदग्वापि गेहार्थे द्रव्यं विधिवदानयेत् ।
गन्तव्यमेव धिष्ण्येषु[1] मृदुक्षिप्रचरेषु च ॥ १ ॥

उपवास्यं च तेष्वेव च्छेद्यं भेद्यं च दारुणैः ।
प्रवेशनं स्थिरैः कार्यमारम्भः शस्यते चरैः ॥ २ ॥

गत्वा शुभे शुचौ देशे निवेशं कारयेत् ततः ।
तस्मिन्निवेश्य कर्मान्तमन्नपानेन तर्पयेत् ॥ ३ ॥

पुष्टतुष्टपरीवारः क्षपायां समुपोषितः ।
गृह्ययोग्यं परीक्षेत न्यस्तशस्त्रस्ततोऽङ्घ्रिपम् ॥ ४ ॥

पुरश्मशानग्रामाध्वह्रदचैत्याश्रमोद्भवान् ।
क्षेत्रोपवनसीमान्तर्विषमस्थलनिम्नजान् ॥ ५ ॥

कट्वम्लतिक्तलवणास्ववनीषु तथोद्गताम् ।
श्वभ्रावृतान् स्थिरोर्वीषु सम्भूतांश्च त्यजेद् द्रुमान् ॥ ६ ॥

सम्यक् संलक्ष्य वृक्षाणां वर्णस्नेहत्वगादिकम् ।
विजानीयाद् वयस्तेषां बालान् वृद्धांश्च सन्त्यजेत् ॥ ७ ॥

शतानि त्रीणि वर्षाणां सारद्रुमवयः स्मृतम् ।
गृह्णीयात् षोडशादूर्ध्वं सार्धवर्षशतावधेः ॥ ८ ॥

वयसः परिणामेन निर्वीर्यत्वं यथा नृणाम् ।
प्रोक्तं तद्वद् द्रुमाणां च स्यात् तथा छिद्रपत्रता ॥ ९ ॥

भङ्गुराः सुषिरास्ते स्युः सकोलाक्षाः खरत्वचः ।
तस्मादिमांस्त्यजेद्[2] वृक्षांस्तथा चैवोर्ध्वशोषिणः ॥ १० ॥

वक्रान् रूक्षानवप्लुष्टान् दुःस्थितानपि च द्रुमान् ।
वर्जयेद् भग्नशाखांश्च ह्येकशाखान्वितांस्तथा ॥ ११ ॥

१ धिष्ण्येषु नक्षत्रेषु । २ द. वृक्षान्ये तथा चोर्ध्वशोषिणः ।

अन्यैरधिष्ठितान् विद्युत्पातवातैसरित्क्षतान्[1] ।
ग्रन्थिं[2] निर्युक्तदानांश्च भ्रमराहिकृताश्रयान् ॥ १२ ॥

संघृष्टानेकतो भ्रष्टा[3]न् मधुभिर्मलिभिर्वृतान् ।
मांसामेध्याशनैस्तद्वद् दूषितानपि पक्षिभिः ॥ १३ ॥

लूनानन्त्वावृतान् वन्यसत्त्वोद्घृष्टान् गजक्षतान् ।
बुध्नतोऽतिबृहत्स्कन्धांश्छिद्रभूनांस्तथाध्वनः ॥ १४ ॥

अकाले पुष्पफलिनो रोगैरपि च पीडितान् ।
वासभूतानुलूकानां त्यजेदन्यानपीदृशान् ॥ १५ ॥

खदिरो बीजकः सालो मधूकः शाकशिंश (पौ? पे) ।
सर्जार्जुनाञ्जनाशोकाः कदरो रोहिणीतरुः ॥ १६ ॥

विकङ्कतो देवदारुः श्रीपर्णीपादपस्तथा ।
कुटुम्बिनाममी प्रोक्ताः पुष्टिदा जीवदास्तथा ॥ १७ ॥

वृक्षाणां लक्ष्यते येषां भारवारिसहिष्णुता ।
ते यथायोग्यमन्येऽपि शस्यन्ते गृहकर्मणि ॥ १८ ॥

कर्णिकारधवप्लक्षकपित्थविषमच्छदाः ।
शिरीषोदुम्बराश्वत्थशेलुन्यग्रोधचम्पकाः ॥ १९ ॥

निम्बाम्रकोविदारा[4]क्षव्याधिघाताश्च गर्हिताः ।
गृहकर्मणि नेष्टास्ते यतस्तेऽनिष्टदायिनः ॥ २० ॥

नेष्टाः कण्टकिनः स्वादुफलाः क्षीरद्रुमाश्च ये ।
सुगन्धयश्च ये तद्वद् ध्रुवं तेषु पशुक्षयः ॥ २१ ॥

सत्त्वप्रमाणच्छाया तु नियतं दृश्यते यदा ।
द्रुमच्छाया तदा ग्राह्या तत्प्रमाणस्तु स द्रुमः ॥ २२ ॥

नक्षत्रं लक्षयेद् वृक्षे पूर्वस्यां दिशि तत्क्षितेः ।
स्याद् भस्याद्यक्षरं यस्य तत्र जातं तमादिशेत् ॥ २३ ॥

१ द. ख. वाताशनिक्षतान् । २ क. ग्रन्थिभिर्युक्त°, द. ग्रन्थिभिर्युक्तहीनांश्च । ३ द. ग्रस्तान् ।
४ क. कोविदाराख्या विधेयास्ते च ।

क्षेम्यं तं स्वामिनो वृक्षं ज्ञात्वा साधकमेव च।
अग्रन्थिकोटरं स्निग्धमृजुं सारसमन्वितम् ॥ २४॥
पीनस्कन्धं हरित्पत्रं वृत्तं चाभ्यर्च्य पादपम्।
द्विजान् सन्तर्प्य च स्वस्ति वाच्यं च स्थपतिस्ततः ॥ २५॥
पक्वापक्वामिषैस्तद्वद् भूतभक्तैः सुरासवैः।
गन्धैश्च धूपमाल्यैश्च बलिं दद्यान्निशागमे ॥ २६॥
[1]अपक्रामन्तु भूतानि यानि वृक्षाश्रितानि हि।
[2]कल्पनं वर्तयिष्यामि क्रियतां वासपर्ययः ॥ २७॥
धन्यः शिवः पुष्टिकरः प्रजावृद्धिकरो भव।
स्वस्ति (ते ? च)न्द्रा नलयमाः सूर्यरुद्रानलास्तथा ॥ २८॥
दिशो नद्यस्तथा शैलाः पान्तु त्वामृषिभिः सह।
जल्पेद् यो मानुषगिरा कम्पते वाभिमन्त्रितः ॥ २९॥
स त्याज्यः स्यात् तथा म्लानप्रवालकुसुमश्च यः।
ततो भास्करमालोक्य वृक्षं कृत्वा प्रदक्षिणम् ॥ ३०॥
स्वस्तिवाक्येन विप्राणां छेत्ता स्थित्वोदगाननः।
प्राङ्मुखो वा तरुं छिन्द्याच्छस्त्रैः क्षौद्रार्दिताननैः ॥ ३१॥
शाखिनश्छिद्यमानस्य जायते यद्यसृक्स्रुतिः।
कम्पनं वा ध्वनिर्वाऽपि मृत्युः स्याद् गृहिणस्तदा ॥ ३२॥
यद्वा दधिमधुक्षीरघृतानि स्रवति द्रुमः।
छिद्यमानस्तदा विद्याद् [3]बन्धव्याधिन् कुटुम्बिनः ॥ ३३॥
अतीव यस्य स्रवति श्यामः स्नेहान्वितो रसः।
सुगन्धिः स्वल्पमधुरः कषायः स प्रशस्यते ॥ ३४॥
प्राच्यां शुभस्तरोः पात उदीच्यां कर्मसाधकः।
याम्यप्रत्यङ्निपाते तु शान्तिं कृत्वा द्रुमं त्यजेत् ॥ ३५॥
ज्ञातितः स्यात् तदा भीतिर्यदान्यं मर्दयेत् पतन्।
दूरं दलति यो मू(लं ? ले) छिन्नो वा धरणीरुहः ॥ ३६॥

---

१ द. आक्रमन्ति च भूतानि। २ द. कल्पान्तं वर्तयिष्यामि। ३ द. बधव्याधीन्।

कूजत्यतीव वायुश्च स्मृतः [1]सोऽथ शुभप्रदः ।
खरोष्ट्रयोः शृगालानां दर्शनं भुजगस्य वा ॥ ३७ ॥
छेदे स्यात् कर्मविघ्नाय निगडैर्बन्धनाय वा ।
हलचक्रपताकाब्जध्वजच्छत्रादिदर्शनम् ॥ ३८ ॥
श्रीवृक्षवर्धमानादिदर्शनं वा शुभप्रदम् ।
उत्क्षिप्यते यदि च्छेदात् तदर्द्धिः स्यात् कुटुम्बिनः ॥ ३९ ॥
सर्वतः परिहानिः स्याच्छिन्नश्चाक्षिप्यते यदि ।
एकवृक्षे यथोद्दिष्टलक्षणोत्क्षेपदर्शने ॥ ४० ॥
शेषान् दोषविनिर्मुक्तान् पादपानुपलक्षयेत् ।
धीरस्तं कल्पयेत् सम्यगनुलोमार्जवं तरुम् ॥ ४१ ॥
छिन्द्याच्च[2] शुभभागा[3]र्धदशभागाधिकं कृतम् ।
[4]तुङ्गीसाग्रवमध्यश्च(?)सगर्भो धरणीरुहः ॥ ४२ ॥
ज्ञेयानि मण्डलान्यस्य त(त्क्षणोच्छे ? क्षणे छे)दनेऽपि च ।
मञ्जिष्ठाभे विदुर्भेकं कपिलाभे च मूषकम् ॥ ४३ ॥
पीतभासि तथा गोधां सर्पं दीर्घसितायते ।
गुडच्छाये मधु भवेत् कृकलासस्तथारुणे ॥ ४४ ॥
गृहगोधा कपोताभे गौधेरो घृतमण्डभे ।
रसाञ्जनाभे शस्त्राभे कमलोत्पलभासि च ॥ ४५ ॥
धौतासियष्टिवर्णे च मण्डले जलमादिशेत् ।
आकारो यस्य सर्पस्य वर्णो वा संप्रदृश्यते ॥ ४६ ॥
तं सर्पगर्भितं वृक्षमादिशेदविचारयन् ।
तस्करेभ्यो भयं क्षौद्रे सलिले सलिलाद् भयम् ॥ ४७ ॥
विद्यात् सर्पे विषाद् भीतिं पाषाणे भयमग्नितः ।
अजाविगोमहिष्युष्ट्रासभादिनिपीडितम् ॥ ४८ ॥
गोधागौधेरमण्डूककृकलासैश्च गर्भिते ।
मूषके पुनरिच्छन्ति मरणं वास्तुवेदिनः ॥ ४९ ॥

---

१ द. सोऽप्यशुभप्रदः । २ क. छिन्द्यात्तु । ३ शा. गार्धे । ४ द. तुंगीस्याग्रधमध्यस्कं (?)

अमुनैव वदन्त्यन्ये गृहपीडां मनीषिणः ।
क्षेमेण यद्यविघ्नः स्यादसङ्गश्चागमो यदि ॥ ५० ॥

वनान्तरे तदा क्षेमं सुभिक्षं च समादिशेत्
अर्घदानविधिना विधानविद् द्रव्यमागतमिहार्चयेद् गृही ।
प्रत्युपेत[1]कुलिशायुधध्वजं द्रव्यमुज्ज्वलमुतावनीपतिः ॥ ५१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
वनप्रवेशो नाम षोडशोऽध्यायः ।

---

## अथ इन्द्रध्वजनिरूपणं नाम सप्तदशोऽध्यायः ।

सुराणामर्थसिद्ध्यर्थं वधाय च सुरद्रुहाम् ।
यथा शक्रध्वजोत्थानं प्राह ब्रह्मा तथोच्यते ॥ १ ॥

भगवन्तमथाम्भोजसंभवं वचसांपतिः ।
प्रोवाच कथमिन्द्रेण जेतव्यास्त्रिदशद्विषः ॥ २ ॥

सोऽब्रवीत् सर्वरत्नानां ध्वजं कुरुत सङ्गताः ।
तं चाभिचारिकैर्मन्त्रैरुद्वहन्तोऽभिमन्त्रितम् ॥ ३ ॥

स्थितं चोपरि यन्त्रस्य सम्यक् पक्षिशतान्वितम् ।
अग्रतो देवसैन्यस्य नयन्तो जेष्यथ द्विषः ॥ ४ ॥

सहस्रधारमप्येकमन्यं रिपुकुलान्तकम् ।
दिव्यरूपमयं प्रादाद् ध्वजमिन्द्राय दुर्धरम् ॥ ५ ॥

वीर्यप्रवर्धनी चेष्टिरेतदर्थं विधीयते ।
कर्मणानेन निःशेषाञ् शक्रः शत्रूञ् जयेदिति ॥ ६ ॥

जयैषी तमथ क्षिप्रमसृजच्चेतसा ध्वजम् ।
यन्त्रस्थितं स येनाजावमोहयदरीन् हरिः ॥ ७ ॥

आदित्या वसवो रुद्रा विश्वेदेवास्तथाश्विनौ ।
अलश्चक्रुस्तमालोक्य मरुतश्च विभूषणैः ॥ ८ ॥

---

1 द. ख. प्रत्युपेत्य ।

तेजो वीर्यं वपुश्चेष्टां बलमप्येष पश्यताम् ।
अहरच्छत्रुसैन्यानां तेजस्वी तरसा ध्वजः ॥ ९ ॥
तमभ्यर्च्य सुराधीशः शत्रून् बलवतोऽप्यसौ ।
त्रिरात्रेणाजयद् युद्धे कुलिशेन बलाद् बली ॥ १० ॥
ततः प्रीतस्तमृक्षेऽसौ वैष्णवे द्वादशे तिथौ ।
त्रैलोक्यराज्यं प्राप्याभ्यषिञ्चद् बलनिषूदनः ॥ ११ ॥
स सर्वलोकमभ्यर्च्य सर्वलोकाभिपूजितः ।
ध्वजमभ्यर्च्य तुष्टाव वाक्यैर्वृत्रनिषूदनः ॥ १२ ॥
ततस्तमन्तिके वीक्ष्य ध्वजं प्रोवाच वासवः ।
इन्द्रध्वजाक्षया[1] लोकाः करिष्यन्ति तवार्चनम् ॥ १३ ॥
वीक्षमाणा निमित्तानि भूमिपालाश्च शाश्वतः[2] ।
ततः प्रभृत्यसौ लोके सर्वलक्षणसंभृतः ॥ १४ ॥
वरप्रदानादिन्द्रस्य नृपैः शक्रध्वजोऽर्च्यते ।
दुर्गमायतनं वह्निशरणं वेदिकाः कृताः ॥ १५ ॥
विचित्राः स्थालिकापाका भक्षपानानि यानि च ।
एतान्यायतनात्[3] प्राक् स्युर्यद्वान्यानि प्रकल्पयेत् ॥ १६ ॥
विजेतुं यदि वाञ्छास्ति दुर्धर्षान् द्विषिणो रणे ।
तेजो बलं यशश्चाप्तुं तदैन्द्रं कारयेद् ध्वजम् ॥ १७ ॥
सेनायां वा पुरे वापि प्रतिष्ठाप्य पुरन्दरम् ।
विजयार्थं महीपालैरभि[4]प्रशमनाय च ॥ १८ ॥
यथा शक्रध्वजोत्थानविधानं जगतीभुजः ।
करिष्यन्ति तथा सम्यक् कात्स्न्र्येन प्रतिपाद्यते ॥ १९ ॥
वनादुपाहृतं द्रव्यमथ प्राग्विधिना सुधीः ।
पाद्यार्घ्यादिभिरभ्यर्च्य गन्धैर्माल्यैरलङ्कृतम् ॥ २० ॥
द्विजान् संपूज्य च शुचौ देशे सम्यक्समाहितः ।
पूर्वाग्रमुत्तराग्रं वा प्रयत्नादवतारयेत् ॥ २१ ॥

---

१ द. ख. इन्द्रध्वजाख्यया । २ शा. काक्षताः । ३ द. न्यायतनानि स्युर्य° । ४ शा. °रेभिः ।

प्रागुदग् वा पुरस्याथ स्थपतिः कर्मवानपि ।
कारयेत् सर्वयन्त्राणि ध्वजपूर्वाणि शिल्पिभिः ॥ २२ ॥

श्रेष्ठं द्वात्रिंशता हस्तैर्विंशत्या युतयाष्टभिः ।
मानं स्यान्मध्यमं तस्य चतुरन्वितयाधमम् ॥ २३ ॥

मूलविस्तृतिरायामादङ्गुलार्धं करे करे ।
विष्कम्भोऽग्रे च मूलार्धात् तत्त्र्यंशार्द् वाखिलेष्वपि ॥ २४ ॥

ध्वजमूलाष्टमांशोनं विस्तारात् कुष्यमिष्यते ।
[2]विस्तारार्धेन च स्थूलं स्थूलत्वत्रिगुणायतम् ॥ २५ ॥

ध्वजविस्तारबहलं साङ्घ्रिबाहल्यविस्तृतम् ।
भ्रमपीठं विधातव्यं सार्धायामं शुभावहम् ॥ २६ ॥

सम्मितो [3]ध्वजकुष्येण वेधः स्याद् भ्रमपीठगः ।
कुष्यकोट्यधिकौ[4]वृत्तावक्षौ कोटिद्वयायतौ ॥ २७ ॥

कार्यावङ्घ्री भ्रमस्थूलौ भ्रमविस्तृतिविस्तृतौ ।
तद्युक्तिवेधे तावेत( वि ? द्वि )स्तृतेर्द्विगुणोच्छ्रितौ ॥ २८ ॥

ध्वजायतिचतुर्भागात् पीठमत्र प्रकल्पयेत् ।
मल्लप्रतिष्ठितं मध्ये प्रान्तयोः स्तम्भधारितम् ॥ २९ ॥

तत्पीठस्तम्भनीयाभ्यां द्वाराभ्यामन्वितं दृढम् ।
याम्योत्तरप्रतिक्षोभं प्राङ्मुखं सुदृढार्गलम् ॥ ३० ॥

केतुव्यासार्धविस्तारं तद्दैर्घ्याष्टांशकोच्छ्रितम् ।
विस्तारसदृशायामं मध्ये स्याद् वज्रिणो गृहम् ॥ ३१ ॥

मल्लश्च पीठिकाङ्घ्री च बाहू स्तम्भविनिर्गतौ ।
शक्रमाता कुमार्यश्च ध्वजविस्तृतिविस्तृताः ॥ ३२ ॥

निम्नभागाश्च सर्वेषां स्वविस्तृतिचतुर्गुणाः ।
कार्या वा पञ्चगुणिताः [5]सप्त (का ? वा) मूलदेश(कं ? तः) ॥३३॥

---

१ द. विस्तरात् । २ द. विस्तरार्धेन । ३ द. ध्वजकुष्येण वधः । ४ शा. द. °धिको वृत्ता कक्षौ । ५ द. सत्त्वत्कामूलदेशकः ।

कन्यानामुदयः प्रोक्तो यः ष[1](ष्ठयो ?)ष्ठांशस्त्रिसंगुणः ।
इन्द्रमाता तु सर्वाभ्यः स्यात् तदष्टांशतोऽधिका ॥ ३४ ॥
वेधः स्वविस्तरैः सप्तभागे स्यात् कन्यकोदयात् ।
निर्वेधश्चतुरश्रः स्याल्लकटस्य समाहितः ॥ ३५ ॥
निर्वेधावस्य चोर्ध्वाधः सप्तांशान्तरवर्तिनौ ।
कार्यौ सूचीव्यधावन्यौ सूचीमानप्रमाणतः ॥ ३६ ॥
कन्याव्यासत्रिभागेन सूची विस्तारतो भवेत् ।
पादोनबहला चारुदारुजा दृढसंहिता ॥ ३७ ॥
कुमारीव्याससंयुक्ता[2] द्विगुणा लकटायतिः ।
एतद्बाह्यान्तरं ज्ञात्वा यन्त्रं संयोजयेत् ततः ॥ ३८ ॥
तयोरधस्तदर्धेन मृगाल्यौ सूचिविस्तृतौ ।
क्षेत्रस्य लेखितं कार्यं [3]सम्बन्धे सूचिकन्ययोः ॥ ३९ ॥
साङ्घ्रिकेतनमूलार्धं लकटे विस्तृतायती ।
अक्षाभ्यां योजयेत् सम्यग् दृढं बाह्य[4]क्षवेधयोः ॥ ४० ॥
पञ्चानामपि तुल्यैव कन्यानां स्यात् प्रकल्पना ।
कृत्वानुपूर्व्या यन्त्राणि स्थापयेदखिलान्यपि ॥ ४१ ॥
आश्विने मासि पक्षे च धवले प्रतिपत्तिथौ ।
स्थिरोदयैर्ग्रहैः सौम्यैर्वीक्षिते त्वाष्ट्रभेऽपि च ॥ ४२ ॥
पौरजानपदैः सर्ववादित्रध्वनितेन च ।
यन्त्राण्युत्क्षिप्य यष्टिं च कर्मस्थानान्नयेज्जलम् ॥ ४३ ॥
चित्रप्रतिसराकीर्णां यष्टिं तत्राज्यलेपिताम् ।
चूर्णैः सर्वौषधीभिश्च स्थपतिः स्नापयेत् स्वयम् ॥ ४४ ॥
जलाशयात् समुत्तार्य नृणां कलकलस्वनैः ।
प्रागग्रां स्थापयेद् दारुहस्तिन्योः प्राक्समुन्नताम् ॥ ४५ ॥

१ द. °प्रोक्तो यष्टाष्टांशस्°. २ द. °संयुक्तां द्विगुणां लकटायतिम् । ३ द. सम्बन्धि-सूचिकानयोः । ४ द. ख. °क्षि° ।

अहतेप्सितवासोभिराच्छाद्याच्र्य स्रगादिभिः ।
[1]विक्षिप्य च बलिं दिक्षु द्विजातीन् स्वस्ति वाचयेत् ॥ ४६ ॥

त्रिसन्ध्यं पूजितां तत्र सर्वप्रकृतिभिस्ततः ।
पश्चाहं वासयेद् यष्टिं गुप्तां चापधरैर्नरैः ॥ ४७ ॥

तस्मिन्नेवाह्नि यन्त्राणि सर्वाण्यपि च यष्टिवत् ।
स्नातान्याच्छादितानीन्द्रस्थानदेशं प्रवेशयेत् ॥ ४८ ॥

सूत्रितेऽथ ध्वजस्थाने यष्टेरष्टांशदैर्घ्यतः ।
तदर्धविस्तृते दिक्स्थे समे प्रागायते शुभे ॥ ४९ ॥

विभक्तेऽत्र विभागानामेकाशीत्या ततः क्रमात् ।
विन्यस्तास्वथ सर्वासु देवतासु यथातथम् ॥ ५० ॥

प्राचि मध्ये मैत्रपदे तन्मध्यान्मरुतो दिशि ।
मल्लं निम्नप्रमाणेन पादकोणे निवेशयेत् ॥ ५१ ॥

भृङ्गमुख्यपदद्वन्द्वं[2]मध्ययोर्वायुकोणयोः ।
न्यस्येत् स्तम्भौ तयोः पीठीं मल्ले च विनिवेशयेत् ॥ ५२ ॥

पीठिका निर्गता बाहुयुग्मात् तत्रा[3]ग्रयोगतः ।
स्तम्भिन्यौ रोपयेद् ब्राह्मं पृथक्पदयुगं श्रिते ॥ ५३ ॥

प्रतिक्षोभाविह द्वौ द्वौ बाहुद्वितयमाश्रितौ ।
बाह्यतः प्रान्तपदयोर्मैत्रयोर्विनिवेशयेत् ॥ ५४ ॥

प्राच्यां मल्लाग्रतो ज्ञात्वा शक्रस्योर्ध्वग[4]तिं क्रमात् ।
योजयेद् भ्रमणोपेतौ भ्रमपादावभङ्गुरौ ॥ ५५ ॥

मल्लात् पश्चिमदिग्भागे वरुणस्याश्रितां पदम् ।
भद्रां निवेशयेन्निम्नमानतः शक्रमातरम् ॥ ५६ ॥

स्युः पर्जन्यान्तरिक्षद्वा[5]र्य(क्ष्मा ? क्ष्म)णां पदमाश्रिताः ।
क्रमान्नन्दोपनन्दाख्यजयाख्यविजयाभिधाः ॥ ५७ ॥

---

१ द. निक्षिप्य । २ द. ख. भृंगमुख्यापदं द्वन्द्वं मध्याभ्यां वायु° । ३ शा. तत्त्वाग्र° । ४ द. गतिः क्रमात् । शा. गतिक्रमः । ५ द. वार्यक्ष्माणां ।

विन्यस्तास्वथ सर्वासु कुमारीषु विभागशः[1]।
त्र्यस्त्रयः प्रतिक्षोभा योज्या दार्ढ्याय बाह्यतः ॥ ५८ ॥

निक्षिपन्नखिलं द्रव्यं भावयेत्[2] पददेवताः।
प्राप्नोति तत्तदाख्यां[3] तद् द्रव्यं पूजां च तद्गताम् ॥ ५९ ॥

पीठीपृष्ठसमं कन्यापार्श्वयोरुभयोरपि।
कुर्यादनुसरद्वन्द्वं कीलकैर्बद्धमायसैः ॥ ६० ॥

संश्रित्यानु[4]सरद्वन्द्वं पीठीं[5] चोपरि सङ्ग्रहात्।
बध्नीयात् कीलकैर्लौहैर्यन्त्रनिश्चलताकृते ॥ ६१ ॥

यन्त्रकर्मणि निर्वृत्त इति शास्त्रविधानतः।
प्रवेशयीत स्वस्थाने त्रिदशाधिपमैन्द्रभे ॥ ६२ ॥

स्नातस्य विधिवद् वस्त्रच्छन्नस्यालेपितस्य च।
श्रीखण्डाद्यैः सुरभिभिः कुसुमैरर्चितस्य च ॥ ६३ ॥

रौहिणादिमुहूर्तेषु त्रिषु मैत्रेऽथ वज्रिणः।
प्रवेशमभिनन्दन्ति करणेष्वर्चितेषु च ॥ ६४ ॥

स्थपतिर्वा पुरोधा वा शुचिः स्नातः समाहितः।
गन्धमाल्यार्चितान् विप्रांस्तर्पयेद् दक्षिणादिभिः ॥ ६५ ॥

ततो मङ्गलघोषेण वादित्रनिनदेन च।
पुण्याहजयशब्दैस्तमुत्क्षिपेयुः समाहिताः ॥ ६६ ॥

अलङ्कारभृतः पौराः प्रहृष्टमनसोऽखिलाः।
नीरुजो बलिनः शक्ताः प्रकृत्यभिमताश्च ये ॥ ६७ ॥

स्तुवीरन् पुण्यमनसः स्तुतिभिः सूतमागधाः।
वन्देरन् वन्दिनश्चैनं सेवेरन् गणिका अपि ॥ ६८ ॥

प्रविशन्तं निजं स्थानमनुगच्छेन्नराधिपः।
सुराधिपं बलामात्यपौरजानपदान्वितः ॥ ६९ ॥

---

१ शा. द. विभागतः। २ क. नादयेत्। ३ द. ख. °ख्यानां द्रव्यं। ४ क. संश्रितानु°। ५ द. ख. पीठं।

प्रोद्यत्कलकलारावसुस्वराः पुरुषा यदि ।
उत्क्षिपेयुः प्रहृष्टा वा वहेयुर्वा सुराधिपम् ॥ ७० ॥

तदा भवति भूपालो जयी नन्दन्ति च प्रजाः ।
राष्ट्रे सुखं पुरे हर्षो भवेन्नश्यन्ति चेतयः ॥ ७१ ॥

मुञ्चत्युत्थापितः कृच्छ्राद् यदि शय्यां [1]स गौरवात् ।
तदा नृपतिरभ्येति महतीं विमनस्कताम् ॥ ७२ ॥

स्खलन्तो दुःखिता दीना निःश्वसन्तः पदे पदे ।
[2]वैचित्त्यभाजो गच्छेयुर्देशहानिस्तदा ध्रुवम् ॥ ७३ ॥

भूमौ यदैकदेशेन ह्रसितः( ? )पतति ध्वजः ।
न सुभिक्षं न च क्षेमो न राज्ञो विजयस्तदा ॥ ७४ ॥

दीर्णे भग्नेऽथ पतिते कृत्स्ने चास्मिन् समुद्धृते ।
स्यान्नृपस्यावनिच्छेदः सुतध्वंसोऽथवा मृतिः ॥ ७५ ॥

वस्त्रालङ्कृतिमाल्यानां हरणात् पतनादुत ।
तादृशद्रव्यविध्वंसः पौराणां भवति ध्रुवम् ॥ ७६ ॥

पुरं भवति निःशब्दं निष्प्रभं वा प्रवेशने ।
समुच्छ्रये वा शक्रस्य तदा तन्नाशमृच्छति ॥ ७७ ॥

शक्रं स्वस्थानमानीतं शीघ्रं सुखमविघ्नतः ।
प्राग्वत् प्रदक्षिणं न्यस्येत् प्रागग्रं शयने निजे ॥ ७८ ॥

कुर्यात् तत्रैव नक्षत्रे शय्यास्थस्यामरेशितुः ।
भ्रमे [3]कुष्ये च संयोगं यथाभागविकल्पितम् ॥ ७९ ॥

[4]कुष्ये संयोज्यमानश्चेद् ध्वजो निपतति क्षितौ ।
तदा नरपतेः स्थानभ्रंशो भवति निश्चितः ॥ ८० ॥

[5]कुष्ययोगे यदा शक्रो वामतः परिवर्तते ।
तदा स्यात् स्थपतेर्मृत्युर्भवेद् भङ्गश्च दक्षिणे ॥ ८१ ॥

---

१ क. च पाठः । २ द. वैच्छिरय° । ३ द. ख. कृष्ये । ४ द. पुष्ये । ५ द. पुष्ययोगे ।

स्ववेधं प्रतिपद्येत तद्यष्टिर्यदि कृच्छ्रतः ।
प्रमादिनस्तदा राज्ञो जायते व्यसनं महत् ॥ ८२ ॥
निष्कुष्य योजितः शक्रध्वजो विघटते यदि ।
विश्लिष्यति तदा सन्धिः सामन्तैः सह भूपतेः ॥ ८३ ॥
स्फुटेद्[1] भज्येत वा कुष्ये योज्यमानोऽथ सर्वतः ।
तदा भङ्गे नृपव्याधिः स्फुटनाद[2]ङ्गनावधः ॥ ८४ ॥
अविदीर्णमपर्यस्तमव्यङ्ग[3]मविलम्बितम् ।
यथावन्न्यासमायाति योगं चेद् वासवध्वजः ॥ ८५ ॥
धनभृत्याङ्गनापत्यैः सामन्तैश्चान्वितोऽनुगैः[4] ।
निरातङ्को बलाङ्गैश्च वृद्धिमेति तदा नृपः ॥ ८६ ॥
यत्नतो रक्ष्यमाणस्य शय्यास्थस्यैव वज्रिणः ।
तस्याङ्गान्यखिलान्येव कुटन्यादीनि[5] योजयेत् ॥ ८७ ॥
ऐन्द्रं बलार्कं[6] यक्षेशं सर्पमादं दिगाह्वयम् ।
मयूरं चेन्द्रशीर्षं च पिटकाष्टकमित्यदः ॥ ८८ ॥
स्वप्रमाणेन कर्तव्यं स्पष्ट[7]रूपसमन्वितम् ।
तदाख्याश्चा[8]न्तरेष्वेषां सन्धयो वस्त्रनिर्मिताः ॥ ८९ ॥
मूलादन्वग्रमायातैः स्ववंशै[9]र्विदलैर्दृढैः ।
गुणैश्च वेष्टयेदेनं घनैरशिथिलैर्ध्वजम् ॥ ९० ॥
साङ्घ्रिणा ध्वजनाहेन सत्र्यंशेनाथ विस्तृतिः ।
विधेया शक्रपिटकस्योच्छ्रयस्तु तदर्धतः ॥ ९१ ॥
अस्मिन्नष्टौ दिशः कृत्वा वंशव्यवहिते ततः ।
न्यस्येद् दिगीशांश्चतुरस्तस्योपरि यथादिशम् ॥ ९२ ॥
पञ्चमांशगते कुष्याद् वज्रिणः पिटके कृते ।
शेषाण्यप्यष्टभागोनान्यस्मिन् न्यस्येद् यथाक्रमम् ॥ ९३ ॥

---

१ द. स्फटेद ।- २ द. स्फटनाद° । ३ क. मवल° । ४ द. °द्रगैः । ५ द. कुटभ्यादीनि, ख. कूटभ्या° ६ शा. बजार्कं । ७ शा. स्वेष्ट°, द. स्पष्टं । ८ क. दाक्षाश्च । ९ द. ख. तैस्तं वंशै ।

बलाकादीनि विस्तृत्या चरणोनानि चोच्छ्रितौ ।
स्ववर्णवन्ति वृत्तानि रामणीयकवन्ति च ॥ ९४ ॥

[1]भङ्गपातविपर्या ( सा?स )सिद्धयः पिटकोद्भवाः ।
पीडार्त्तिमृत्यवेऽत्यर्थमेकैकस्य प्रकीर्तिताः ॥ ९५ ॥

शुद्धान्तामात्यचित्तानां बलस्य यशसोऽपि च ।
वसुमत्याश्च धाम्नां च नृपते राष्ट्र( म?प )स्य च ॥ ९६ ॥

केतुषड्भागविस्तारा रज्जवोऽष्टौ सुवर्तिताः ।
विधेयाः स्युर्ध्वजायामत्रिगुणायतयो दृढाः ॥ ९७ ॥

छादितं छ( वि?दि )भिः पूर्वं[2] कुट्टनीसहितं शुभम् ।
यत्नेनासन्नदिवसे विदध्यादमरध्वजम् ॥ ९८ ॥

अर्केन्दुग्रहताराङ्कं वेणुगुल्मेन्द्रशीर्षकम् ।
साष्टकण्ठगुणं दण्डसूत्रादर्शान्वितं शुभम् ॥ ९९ ॥

ससस्यफलपुष्पाढ्यं शुभवस्त्रमलङ्कृतम् ।
दृढमन्वितमष्टाभिः सन्तताभिश्च रज्जुभिः ॥ १०० ॥

[3]ध्वजपट्टं विदध्याच्च चित्रं सुरचितं तथा ।
निमित्तार्थं च लोकानां शोभाहेतोर्ध्वजस्य च ॥ १०१ ॥

सपत्तनपुरारामगन्धर्वत्रिदशासुरम् ।
निखिलं जगदालेख्यमस्मिन्नद्रिद्रुमाकुलम् ॥ १०२ ॥

ध्वजाग्रे रश्मिभिर्नद्धं ( स?सु )विन्यस्तं च भूतले ।
विन्यसेत् तमसम्मूढमधोभागसमाश्रितम् ॥ १०३ ॥

प्रमोदगीतवादित्रनटनर्तकै[4]संयुतः ।
तदग्रे जागरः कार्यः समस्तामेव तां निशाम् ॥ १०४ ॥

पुरोहितस्ततो भास्वत्युदिते प्रयतेन्द्रियः ।
अग्नेः परिग्रहं कुर्यान्मूलस्य प्रागुदग्दिशि ॥ १०५ ॥

---

१ द. भङ्गे पातं विपर्यासासिद्धयः; शा॰ विपर्यासात् । २ क. पूर्णं । ३ द. ध्वजपट्टे । ४ द. °नर्तन° ।

कृत्वोपलेपनं[1] तस्मिन्नुल्लेखाभ्युक्षणैस्ततः ।
संस्कृत्यास्तीर्य दर्भांश्च ज्वालयेत् तत्र पावकम् ॥ १०६ ॥
तत्राज्यपात्राण्याज्यं च गन्धांश्च कुसुमानि च ।
द्रव्याणि वाचनीयानि समिधश्च पलाशजाः ॥ १०७ ॥
सौवर्णौ स्रुक्स्रुवाविन्द्रभक्तं च बलयोऽपि च ।
इत्येतत्सर्वमाहृत्य जुहुयात् पावकं ततः ॥ १०८ ॥
पुत्रदारपशुद्रव्यसैन्ययुक्तस्य भूपतेः ।
विजयावाप्तिजनकैर्मन्त्रैः शान्तिविधायिभिः ॥ १०९ ॥
सुस्वनः सुमहार्चिश्च स्निग्धश्चेद्धोऽपि च स्वयम् ।
कान्तिमान् सुरभिर्जिघ्रन् होतारं शस्यतेऽनलः ॥ ११० ॥
तप्तकाञ्चनसच्छायो लाक्षाभः किंशुकच्छविः ।
प्रवालविद्रुमाशोकसुरगोपसमद्युतिः ॥ १११ ॥
ध्वजाङ्कुशगृहच्छत्रयूपप्राकारतोरणैः ।
सदृशार्चिः प्रशस्तोऽग्निर्माङ्गल्यैरपरैस्तथा ॥ ११२ ॥
स्निग्धः प्रदक्षिणशिखो विधूमो विपुलोऽनलः ।
सुभिक्षक्षेमदः प्रोक्तो दीप्यमानश्चिरं तथा ॥ ११३ ॥
धूम्रो विवर्णः परुषः पीतो वा नीलकोऽथवा ।
विच्छिन्नो भैरवरवो वामावर्त्तशिखोऽल्पकः ॥ ११४ ॥
मन्दार्चिर्द्युतिमुक्तोऽसृग्वसागन्धैः[2] स्फुलिङ्गवान् ।
धूमावृतः सफेनश्च हुतभुग् न जयावहः ॥ ११५ ॥
दर्भाणां संस्तरं वह्निर्होमाङ्गान्यपराणि वा ।
हूयमानो दहति चेद्धानिस्तदभिनिर्दिशेत् ॥ ११६ ॥
होमे वोत्सर्पयेत् पीठं दह्यमानो(?)यदाग्निना ।
भूम्येकदेशनाशः स्याल्लाभः स्यादुपकर्षणात् ॥ ११७ ॥
सर्वतो वाप्यगाधो यः स वर्धयति पार्थिवान् ।
यां दिशं यान्ति च ज्वालास्तस्यां विजयमादिशेत् ॥ ११८ ॥

---

१ द. कृत्वोप°, शा. कृतोपलेपनं । २ द. ख. वसागन्धिः ।

दुर्वर्णाशुचि दुर्गन्धि मक्षिकाखुविडम्बितम् ।
आज्यं राज्यच्छिदे प्राहुर्हूयते यच्च भस्मनि ॥ ११९ ॥
हीनाधिकप्रमाणाश्च विदीर्णा घुणभक्षिताः ।
वातरुग्णद्रुमोत्थाश्च समिधोऽर्थक्षयावहाः ॥ १२० ॥
सगर्भाश्च सपुष्पाश्च विच्छिन्नाग्रास्तृणान्विताः ।
कुर्वन्त्युपद्रवं दर्भा दुष्प्रलूनाश्च ये तथा ॥ १२१ ॥
दुष्टानि पांसुकीर्णानि कीटजर्जरितानि च ।
बीजानि बीजनाशाय स्युरपुष्टानि यानि च ॥ १२२ ॥
माल्यं विगन्धि प्रम्लानं न पीतं न सितं च यत् ।
कीटैः खण्डितपीतं च न जयाय न वृद्धये ॥ १२३ ॥
विस्रावीण्युद्धृतान्युग्रखण्डितस्फुटितानि च ।
दुर्भिक्षरोगकारीणि प्राहुः पात्राणि सर्पिषः ॥ १२४ ॥
अशुचौ पतिते च स्यान्मक्षिकाकीटदूषिते ।
बलौ च शक्रभक्ते च क्षुन्मारः[1] केशभाजि च ॥ १२५ ॥
यथोदितान्यरूपाणि सर्पिरादीन्यनुक्रमात् ।
भवन्ति राष्ट्रपुरयोर्भयाय निखिलान्यपि ॥ १२६ ॥
वितीर्य गन्धमाल्यादीन् देवताभ्यो यथादिशम् ।
पुरोधाः स्थपतिर्वाथ प्रीतचित्तः क्षिपेद् बलिम् ॥ १२७ ॥
ध्वजनैर्ऋतदिग्भागे द्विजमुख्यानुपस्थितान् ।
शीलवृत्तयुतान् भूरिगन्धमाल्यै[2]ः स्वलङ्कृतान् ॥ १२८ ॥
वृद्धान् षट्कर्मनिरतान् सुहृदो वेदपारगान् ।
मनःप्रियान् पूर्णगात्रान् समर्थान् सर्वतः शुचीन् ॥ १२९ ॥
शुक्लाम्बरान् दर्शनीयान् गौरप्रायान् बलान्वितान् ।
अमु[3]ण्डाजटि[4]लाक्लीबा(न्?)दीक्षितान् व्याधिताकृशान् ॥ १३० ॥
यथेष्टं दक्षिणाभिस्तान् संयोज्याष्टशतेन वा ।
साक्षतैः प्रीतमनसः कुसुमैः स्वस्ति वाचयेत् ॥ १३१ ॥

---

१ क. 'केशैश्चैव विदूषिते । २ क. 'ल्यैरल'। ३ 'ण्डान् ज', । ४ 'लान् क्ली', ।

शक्रं ते चाष्टभिः कुम्भैः सुदृढैर्वारिपूरितैः ।
स्वर्चितैरभिषिञ्चेयुर्मूले[1] चाकृष्टमण्डलैः ॥ १३२ ॥

स्तुतैर्वैजयिकैर्मन्त्रैः स्तुतिभिश्च द्विजोत्तमैः ।
राज्यमाघोषयेदेतैरात्मना च महीपतिः ॥ १३३ ॥

कुर्वीत सर्वबन्धानां मोक्षं हिंसां समुत्सृजेत् ।
दोषान् जनपदस्यापि दशाहं विषहेत वै ॥ १३४ ॥

सुवासा भूषितः स्नातः सदाचारप्रयत्नवान् ।
ध्वजोच्छ्रायं शुचिर्भूपः सबलः प्रतिपालयेत् ॥ १३५ ॥

सोपवासः शुचिः स्नातः प्रयतो विजितेन्द्रियः ।
कृताञ्जलिपुटश्चेमं मन्त्रं स्थपतिरुच्चरेत् ॥ १३६ ॥

ओं नमो भगवति वागुले सर्वविटप्रमर्दनि स्वाहा ।
सुरासुराणां सङ्ग्रामे प्रवृत्ते त्वं यथोत्थितः ।
तथा नृपस्य देवेन्द्र! जयायोत्तिष्ठ पूजितः ॥ १३७ ॥

स्तुत्वेति स्थपतिस्तस्य कृत्वा चानुप्रदक्षिणम् ।
कारयेद् देवराजस्य ध्वजदण्डसमुच्छ्रयम् ॥ १३८ ॥

[2]स्वलङ्कृतैः सितस्वच्छमाल्याम्बरविलेपनैः ।
पौरैर्जानपदैस्तद्वत् प्रयतैः परिचारकैः ॥ १३९ ॥

सालिङ्गझल्लरीशङ्खनन्दिडिण्डिमगोमुखैः ।
हृष्टैरन्यैश्च वादित्रैर्वाद्यमानैर्महास्वनैः ॥ १४० ॥

गायद्भिश्च नटद्भिश्च गायनैर्नटनर्तकैः ।
हृष्टोत्कृष्टोद्गतध्वानैर्गजस्यन्दनवाजिभिः ॥ १४१ ॥

तैश्च वादित्रनिनदैस्तैश्च पुण्याहनिस्वनैः ।
दृढरज्जुभिराकृष्टं श्रवणे ध्वजमुच्छ्रयेत् ॥ १४२ ॥

यत्नेनोत्थाप्यमानस्य तस्योच्छ्रायगतस्य च ।
नृपक्षिवाहनादीनां निमित्तान्यवलोकयत् ॥ १४३ ॥

---

१ 'वा', । २ 'अ' ख. पाठः ।

कुटनीनिहिताभोगं पताकादर्पणोज्ज्वलम् ।
चित्रपट्टस्फुटाटोपमर्केन्दुगुणभूषणम् ॥ १४४ ॥
अस्रस्तमाल्यालङ्कारमशीर्णच्छत्रमस्तकम् ।
अकम्पितमदीर्णाङ्गमदिग्भ्रष्टं सुरेश्वरम् ॥ १४५ ॥
सममूर्ध्वं[1]समश्लिष्टमनवक्षतमद्रुतम् ।
अविलम्बितविभ्रान्तं[2]मृजुमार्गसमुद्गतम् ॥ १४६ ॥
इत्थं शक्रध्वजोत्थानं कृतं राज्ञो जयावहम् ।
पौरजानपदानां च क्षेमारोग्यसुभिक्षकृत् ॥ १४७ ॥
यदा शक्रध्वजः प्राचीमुच्छ्रितः[3] प्रतिपद्यते ।
तदामन्त्रिगणक्षत्रनृपप्राग्वासिवृद्धिदः ॥ १४८ ॥
आग्नेयीं ककुभं याते वर्धन्ते वह्निजीविनः ।
प्रारब्धकार्यनिष्पत्तिरयत्नाच्चोपजायते ॥ १४९ ॥
दक्षिणां दिशमायाते केतने नमुचिद्विषः ।
तदा स्युर्वैश्यलोकस्य पूजाधान्यधनर्द्धयः ॥ १५० ॥
सर्वाशासंपदः श्रेष्ठा जायन्ते नैर्ऋताश्रिते ।
न स्याद् गर्भो वृथा तद्वद् वधबन्धभयं न च ॥ १५१ ॥
श्रिते प्राचेतसीमाशामस्मिञ् शूद्रजयो भवेत् ।
क्षुत्तृष्णाग्निभयं न स्याद् वृष्टिरिष्टा च जायते ॥ १५२ ॥
द्रुमसस्यफलर्द्धिः स्यात् केतौ वायोः श्रिते दिशम् ।
चतुष्पदविवृद्धिश्च रोगोच्छित्तिश्च जायते ॥ १५३ ॥
चतुर्णामपि वर्णानां सम्पत् स्यात् सौम्यदिग्गते ।
विशेषात् सा द्विजेन्द्राणां तथा सिध्यन्ति चाध्वराः ॥ १५४ ॥
ऐशीमाशां श्रिते धर्मपरो भवति पार्थिवः ।
वृद्धिर्जनपदस्य स्यात् तथा पाषण्डिनामपि ॥ १५५ ॥
यदि किञ्चिद् व्रजेत् पूर्वं रज्ज्वाकृष्टः शतक्रतुः ।
विजिगीषोर्नरेन्द्रस्य तदा यात्रा प्रसिध्यति ॥ १५६ ॥

---

१ 'सुमश्लिष्टमनवक्षतमद्भुतम्' ख. पाठः । २ 'न्तं नृपमा' क. पाठः । ३ द. मुत्थितः ।

प्रतिष्ठां लभते भूमौ भ्रमं भित्त्वा यदि ध्वजः ।
सशैलकाननामुर्वीं तदा जयति पार्थिवः ॥ १५७ ॥

दिक्सर्पणे फलं प्रोक्तमित्यव्यङ्गस्य वज्रिणः ।
विपरीतं तदेवोक्तं व्यङ्गस्य निखिलं पुनः ॥ १५८ ॥

यदि स्वलङ्कृतः पूर्वं योज्यमानः शतक्रतुः ।
उत्क्षिप्तो रज्जुयन्त्रेण [1]स्तोकमर्धे स्थितोऽपि वा ॥ १५९ ॥

शय्यायां यदि वा भूमावुत्सङ्गे वा पतत्यसौ ।
तदा नृपं राजदारान् कुमारं वा विनाशयेत् ॥ १६० ॥

उत्थितोऽर्धोत्थितो वापि यदि क्षुभ्यति कम्पते ।
स्थानान्तरं व्रजेद् वापि सञ्चरेद् वा कथञ्चन ॥ १६१ ॥

विगृह्यते तदा भूपो भ्र[2]श्यति स्थानतोऽपि वा ।
भयाज्जनपदो वास्य चलत्येव न संशयः ॥ १६२ ॥

आकृष्टासु यदाष्टासु च्छिद्यते कापि रज्जुषु ।
अमात्यमरणं तत् स्यादेकैकांशेन निश्चितम् ॥ १६३ ॥

मूलमध्याग्रभागे वा प्रोच्छ्रितो[3] यदि [4]भज्यते ।
पौरसेनापतिनृपान् क्रमशो हन्त्यसौ तदा ॥ १६४ ॥

छत्रार्कवेणुगुल्मेन्द्रशीर्षकण्ठगुणा यदि ।
पतन्ति भूमाविन्द्रो वा तदा हन्ति महीपतिम् ॥ १६५ ॥

नृपो वधमवाप्नोति तैर्भग्नैः पतितैर्धुतैः[5] ।
अभग्नैर्वि[6]धुतैरेतैः क्षयं व्रजति साधनम् ॥ १६६ ॥

क्रमशो हन्युरादर्शवैजयन्तीन्दुतारकाः ।
पतन्त्यो दृक्चमूनाथपुरोधःस्त्रीर्महीपतेः ॥ १६७ ॥

माल्यैर्विभूषणैर्यानैः शस्त्रवस्त्रफलाशनैः ।
यान्ति केतुच्युतैरेतै राज्ञस्तान्येव संक्षयम् ॥ १६८ ॥

१ द. स्तोकमर्धोत्थितोऽपि वा । २ क. भ्रश्यते । ३ द. प्रोत्थितो । ४ क. भिद्यते ।
५ क. द्रुतैः । ६ क. °द्रुतै° ।

शीर्यते शक्रपिटकं कूटेभ्यः शक्रवेश्म वा ।
यस्यां ककुभि तत्राहुर्हानिं पूर्वे विपश्चितः ॥ १६९ ॥

भङ्गे मृगालीलकटाक्षार्गलानामनुक्रमात् ।
पीडा सञ्जायते वेश्यानृपतिश्रेष्ठिरक्षिणाम् ॥ १७० ॥

भग्ना भ्रमाक्षपादैर्वा मल्लमातृकुमारिकाः ।
राष्ट्रं हन्युर्नरेन्द्रस्य प्रियामातृसुतान् क्रमात् ॥ १७१ ॥

निर्घातोऽशनिरुल्का वा ध्वजे यदि पतेत् तदा ।
अनावृष्टिभयं राज्ञः पराजयमथादिशेत् ॥ १७२ ॥

कुर्वन्ति मक्षिकाः शक्रे मधुच्छत्रं समुच्छ्रिते ।
यस्मिंस्तत्र द्विषद्रोधं षण्मासाच्चादिशेत् पुरे ॥ १७३ ॥

मक्षिका वा खगा वा चेद् भ्रमेयुः पार्श्वतो हरेः ।
प्रदक्षिणा बहिस्थानमासाद्याहुस्तदा मृतिम् ॥ १७४ ॥

गृध्रश्येनकपोताश्चेल्लीयन्ते शक्रमूर्धनि ।
तदा कुर्वन्ति दुर्भिक्षविग्रहक्षितिपक्षयान् ॥ १७५ ॥

यदि केतौ निलीयन्ते कुररोलूकवायसाः ।
राज्ञः क्रमात् तदा हन्युर्मन्त्रिपुत्रपुरोधसः ॥ १७६ ॥

मयूरो यदि वा हंसः समाश्रयति वासवम् ।
समस्तलक्षणोपेतस्तदा स्यान्नृपतेः सुतः ॥ १७७ ॥

चक्री बलाका हंसी वा यदि केतौ निलीयते ।
तदा नरपतिर्भार्यामवाप्नोत्यतिसुन्दरीम् ॥ १७८ ॥

खगैः सुवृष्टिर्जलजैः सुभिक्षं स्यात् फलाशिभिः ।
विष्ठाशिभिश्च दुर्भिक्षं भीतिः स्यात् पिशिताशिभिः ॥ १७९ ॥

यदि चित्रपटन्यस्ताः सुरयक्षोरगोत्तमाः ।
विचित्राकृतिभिर्युक्ता वाहनायुधभूषणैः ॥ १८० ॥

---

१. द. ख. ' नमासमाहुस्तदितिरा मृ ' (?) ।

अष्टौ च ककुभो मूर्ताः प्रनृत्ताश्चाप्सरोगणाः ।
सग्रहास्तारका मेघाः स्फीता नद्यस्तथाऽब्धयः ॥ १८१ ॥
वाप्यः पङ्केरुहच्छन्ना हंसवन्ति सरांसि च ।
फलपुष्पावतंसानि वनान्युपवनानि च ॥ १८२ ॥
देवतायतना(न्याद्य?न्यट्ट)गोपुराणि पुराणि च ।
भवनान्यतिशुभ्राणि शयनासनवन्ति च ॥ १८३ ॥
प्रहृष्टाः पार्थिवा भृत्या बलवाहनशालिनः ।
पौरा जानपदा लोकाः क्रीडाभाजः कुमारकाः ॥ १८४ ॥
चत्वारो मुदिता वर्णा नटनर्तकशिल्पिनः ।
सगोव्रजलतागुल्मद्रुमौषधिभृतो नगाः ॥ १८५ ॥
मृगपक्षिगणाः शस्ता मङ्गलान्यखिलानि च ।
विचित्रापानवसुधाः फलभक्षाश्च पक्षिणः ॥ १८६ ॥
यथानिवेशं शोभन्ते तदा देशे पुरेऽपि च ।
क्षेमारोग्यसुभिक्षाणि जयं [1]राज्ञश्च निर्दिशेत् ॥ १८७ ॥
एतेषां कुट्टने पाते छेदे नाशेऽथवा हृतौ ।
श्लेषे वाप्यशुभं वाच्यं यथायोनि यथादिशम् ॥ १८८ ॥
स्थिते वा पतिते वापि चित्रपट्टे भुवस्तले ।
उपप्लवो नरेन्द्रस्य भवेज्जनपदस्य च ॥ १८९ ॥
राजते यद्यलङ्कारः सकलो यावदुत्सवम् ।
अनस्तोऽविप्लुतश्चोर्वीं तदा कृत्स्नां जयेन्नृपः ॥ १९० ॥
नटनर्तकसङ्घेषु प्रनृत्यत्सु पठत्सु[2] च ।
शुभे शुभं समादेश्यमितरस्मिन्नशोभनम् ॥ १९१ ॥
ये वर्गाः सम्प्रहृष्यन्ति मङ्गल्या गजवाजिनः ।
सुवेषचेष्टालङ्काराः शुभं तेष्वादिशेद् ध्रुवम् ॥ १९२ ॥

---

१ क. राज्ये विनिर्दिशेत् । २. क. पठत्स्वपि ।

अमङ्गलै[1]षिणो ये स्युर्विकृता दीनचेतसः।
पुरुषा योषितो वापि निर्दिशेत् तेषु वैशसम् ॥ १९३ ॥

प्रभिन्नकरटा नागा बृहन्तस्तोयदा इव।
अदीनाश्च स्वतन्त्राश्च नृपतेर्विजयावहाः ॥ १९४ ॥

आलिखन्तः खुरैः क्षोणीं दक्षिणैर्हृष्टचेतसः।
हेषमाणा हयाश्चापि शंसन्ति नृपतेर्जयम् ॥ १९५ ॥

सतडिद्गर्जिताम्भोदा वृष्टिश्चेज्जायते तदा।
महीपतेर्जयं विद्यात् सुभिक्षं क्षेममेव च ॥ १९६ ॥

अथार्धरात्रे सम्प्राप्ते रोहिण्यां दशमेऽहनि।
शक्रस्य [2]पातमिच्छन्ति मुनयः प्रतिवत्सरम् ॥ १९७ ॥

ततः समाजे [3]निर्वृत्ते शक्रकेतौ प्रतिष्ठिते।
गन्धतोयैश्च पुष्पैश्च विदधीताम्बुं[4]सेवनम् ॥ १९८ ॥

अमेध्यैर्वस्त्रखण्डैर्वा भस्मकेशास्थिकर्दमैः।
यदा क्रीडन्ति मनुजा दुर्भिक्षं जायते तदा ॥ १९९ ॥

विप्राः प्रा[5]च्यां विल(म्पे?म्बे)युः पतन्तं वासवध्वजम्।
सुभिक्षं क्षेममारोग्यमन्यथा स्याद् विपर्ययः ॥ २०० ॥

अष्टाङ्गोक्तो ध्वजाङ्गे यो विशेषः सोऽथ कथ्यते।
पुरे ब्रह्मपुरात् प्राच्यामिन्द्रस्थानं विधीयते ॥ २०१ ॥

मात्राशयेन हस्तेन प्रमाणं तस्य कीर्तितम्।
चतुःषष्टिसमायामं चतुरश्रं समन्ततः ॥ २०२ ॥

एकाशीतिपदेनैव भजेत् क्षेत्रं विभागतः।
क्षेत्रस्यार्धेन कुर्वीत ध्वजायामं प्रमाणतः ॥ २०३ ॥

ततो वृद्धिर्विधातव्या हस्ते हस्तेऽङ्गुलं बुधैः
अर्धाङ्गुलं वा वृद्धिः स्याद् ध्वजस्येन्द्रस्य कुत्रचित् ॥ २०४ ॥

---

१ द. ख. अमङ्गल्यै° २ द. ख. शत°। ३ द. निवृत्ते। ४ ख. ताम्बुसेचनम्।
५ द. ख. प्राक्तैर्विलम्पेयुः; क. प्राच्यां विलुपे।

तावद् वृद्धिर्विधातव्या यावत् क्षेत्रसमोऽङ्गुलैः ।
ततः प्रमाणमाद्यं यत् तत् पुनर्विनियोजयेत् ॥ २०५ ॥
प्रमाणमङ्गुलैः केतोः स्याच्चत्वारिंशता मितम् ।
तस्य संवत्सरे वृद्धिः कर्तव्या द्व्यङ्गुलैर्बुधैः ॥ २०६ ॥
ब्रह्मस्थाने च कुर्वीत ब्रह्मावर्त्तं विचक्षणः ।
ब्रह्मणोऽनन्तरं प्राच्यां भवेद् दैवतमर्यमा ॥ २०७ ॥
तत्र यन्त्रस्य पादौ स्तः समुच्छ्रायेण षट्प[1](मौ?दौ) ।
तस्यैव पश्चिमे भागे मित्रो भवति देवता ॥ २०८ ॥
ततः प्रभृति यन्त्रस्य( वाम ? ) वेधो नतो भवेत् ।
पूर्वापरं च निम्नं स्यादेष यन्त्रविधिः स्मृतः ॥ २०९ ॥
यन्त्रस्य पश्चिमे भागे वरुणो दैवतं भवेत् ।
वरुणस्य पदान्ते च वंशस्थे द्वे कुमारिके ॥ २१० ॥
खानिले(?)चतुरो हस्तान् दशहस्तोच्छ्रिते च ते ।
रुद्रस्थाने च कर्तव्या कुमारी सुप्रतिष्ठिता ॥ २११ ॥
सोमयोगे चतुर्थी स्यादापभागे च पञ्चमी ।
षष्ठी च सवितुर्भागे यमभागे च सप्तमी[2] ॥ २१२ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
इन्द्र[3]ध्वजनिरूपणं नाम सप्तदशोऽध्यायः ॥

---

## अथ नगरादिसंज्ञा नामाष्टादशोऽध्यायः ।

---

नगरं मन्दिरं दुर्गं पुष्करं साम्परायिकम् ।
निवासः सदनं सद्म क्षयः क्षितिलयस्तथा ॥ १ ॥

---

१ द. ख. षट्यमौ । २ द. सप्तमीत्यनन्तरम् अष्टमीत्यधिकः पाठः ।
३ द. ख. इन्द्रसंपदाध्या° ।

यत्रास्ते नगरे राजा राजधानीं तु तां विदुः ।
शाखानगरसंज्ञानि ततोऽन्यानि प्रचक्षते ॥ २ ॥

शाखानगरमेवाहुः कर्वटं नगरोपमम् ।
ऊनं कर्वटमेवेह गुणैर्निगम उच्यते ॥ ३ ॥

ग्रामः स्यान्निगमादूनो ग्रामकल्पो[1] गृहस्त्वसौ ।
गोकुलावासमिच्छन्ति गोष्ठमल्पं तु गोष्ठकम् ॥ ४ ॥

उपस्थानं भवेद् राज्ञां यत्र तत् पत्तनं विदुः ।
बहुस्फीतवणिग्युक्तं तदुक्तं पुटभेदनम्[2] ॥ ५ ॥

विधाय कुटिका यत्र पत्रशाखातृणोपलैः ।
पुलिन्दाः कुर्वते वासं पल्ली स्वल्पा तु पल्लिका ॥ ६ ॥

नगरं वर्जयित्वान्यत् सर्वं जनपदः स्मृतः ।
नगरेण समं कृत्स्नं राष्ट्रं देशोऽथ मण्डलम् ॥ ७ ॥

आवासः सदनं सद्म निकेतो मन्दिरं मतम् ।
संस्थानं निधनं धिष्ण्यं भवनं वसतिः क्षयः ॥ ८ ॥

अगारं संश्रयो नीडं गेहं शरणमालयः ।
निलयो लयनं वेश्म गृहमोकः प्रतिश्रयः ॥ ९ ॥

गृहस्योपरिभूमिर्या हर्म्यं तत् परिकीर्तितम् ।
तस्यारोहणमार्गो यः सोपानं तत् प्रचक्षते ॥ १० ॥

[3]काष्ठकैर्यत्र रचितं स्थूणयोरधिरोहणम् ।
सा निःश्रेणिरिति प्रोक्ता सोपानैर्विपुलैः पदैः ॥ ११ ॥

स्मृतः काष्ठविटङ्कोऽसौ यत् काष्ठैः संवृतं गृहम् ।
सुधालिप्ततलं हर्म्यं सौधं स्यात् कुट्टिमं च तत् ॥ १२ ॥

वर्षाभयेन या छन्ना तालशा[4]कदलादिभिः ।
स्मृताभिगुप्तिरन्तस्था सर्वोपरि गृहस्य सा ॥ १३ ॥

---

१ द. ख. कल्पगृह° । २ क. पुटभेदकम् । ३ क. कोष्ठकै° । ४ क. शाल° ।

वातायनं तु भित्तीनामवलोकनमुच्यते ।
लघुर्वातयनो यः स्यादवलोकनकं हि तत् ॥ १४ ॥
हर्म्यस्य मध्ये यच्छिद्रं स उ लोक इति स्मृतः ।
[1]हर्म्यप्राकारकः स स्यात् कण्ठो[2] हर्म्यतलस्य या[3] ॥ १५ ॥
वितर्दिकाष्ठमाला स्यात् सर्वतश्छ[4]दमूलगा ।
तत्स्तम्भेषु मृगा ये तु ते स्युरीहामृगा इति ॥ १६ ॥
निर्यूहो हर्म्यदेशाद्[5] यः काष्ठानामुपनिर्गमः ।
वलीकमिति विज्ञेयं काष्ठं छेदाद् विनिर्गतम् ॥ १७ ॥
[6]छन्नैश्चतुर्भिः पार्श्वैर्यत् तच्चतुश्शालमुच्यते ।
त्रिभिस्त्रिशालं तत् प्राहुर्द्वाभ्यां तत् स्याद् द्विशालकम् ॥ १८ ॥
एकशालकमेकेन च्छन्नेन गृहमुच्यते ।
गृहमेकं तु यच्छन्नं स[7]र्वं शालेति सा स्मृता ॥ १९ ॥
शालानां यत् पुनर्मध्यं वापी पुष्करिणी च सा ।
संछन्ना ( चा ? सा )पि यस्य स्यात् तद् ग[8]र्भगृहमुच्यते ॥ २० ॥
गृहे महाजनस्थानं त्रिकुड्यं यत् प्रकल्पितम् ।
उपस्थानं तदत्राहुः स्याच्चोपस्थानकं लघु ॥ २१ ॥
प्रासादस्तु स एव स्यादल्पा प्रासादिका स्मृता ।
दीर्घप्रासादिका यासौ वलभीत्यभिधीयते ॥ २२ ॥
शालाग्रे वलभी या स्यादलिन्देति वदन्ति ताम् ।
शालां विना तु वलभी वलभेति[8] निगद्यते ॥ २३ ॥
अल्पाल्पास्तु चतुष्कुड्या ये तेऽपवरका मताः ।
गृहे चाभ्यन्तर[9]स्थानं शुद्धान्त इति कीर्त्यते ॥ २४ ॥
[10]प्रतोलीं तां विदुर्लोकः सुरङ्गामिव यां वसेत् ।
सा कक्षेत्युदिता तज्ज्ञैर्यदवस्थान्तरं गृहे ॥ २५ ॥

---

१ द. ख. हर्म्यः प्रा० । २ क. कण्ठो । ३ क. यः । ४ क. श्छद° । द. ख. शा. श्छेद° । ५ देशाग्रका° । ६ क. छिन्नै° । ७ क. सर्वशाले° । ८ द. ख. वलभ्येति विधीयते । ९ क. °न्तरे । १० द. प्रतोलीनां विदुर्लोके सुरंगमिव° ।

यदुपस्थानकं नाम ये चापवरकास्तथा ।
ते कोष्ठका या तु कण्ठा कुडयं[1] भित्तिश्चयश्च सा ॥ २६ ॥

[2]भक्तशाला भवेद् या तु तन्महानसमुच्यते ।
यच्छन्नं द्वारदेशे तु तमाहुर्द्वारकोष्ठकम् ॥ २७ ॥

प्रवेशनमिति प्राहुर्द्वारनिर्गमनं तथा ।
जलनिर्गमनस्थानं विज्ञेयमुदकभ्रमः ॥ २८ ॥

भवनस्याङ्गणं यत्तु तदाहुर्भवनाजिरम् ।
वनाजिरं वनमही त्वाश्रमाजिरमाश्रमे ॥ २९ ॥

उत्तरोदुम्बरस्याधः श्लिष्टां मध्ये च कु[3]ड्ययोः ।
तज्ज्ञास्तां देहलीत्याहुः कपाटाश्रयमेव च ॥ ३० ॥

कपाटं द्वारपक्षः स्यात् कपाटपुटमेव च ।
पक्षः पिधाना[4]वरणो द्वारसंवरणं तथा ॥ ३१ ॥

कपाटं संपुटस्ते द्वे(?) कपाटयुगलं च तत् ।
कलिका द्वारबन्धार्था या स्यात् तामर्गलां विदुः ॥ ३२ ॥

सा स्यादर्गलसूचीति यदि दीर्घा प्रमाणतः ।
पुराणां सा तु परिघः फलिहो गजवारणम् ॥ ३३ ॥

छिद्रैर्गवाक्षप्रतिमैश्छिद्रितं सर्वतस्तु यत् ।
फलकं तद् गवाक्षः स्याज्जालमित्यपि कथ्यते ॥ ३४ ॥

हर्म्यद्वारे गृहद्वारे तथा हर्म्यावलोकने ।
प्राकारान्तरपृष्ठे तु या च प्रासादिका भवेत् ॥ ३५ ॥

पार्श्वयोरुभयोरेषां फलकद्वयमुच्छ्रितम् ।
उपर्युपरि संक्षिप्तमर्धचन्द्रद्वयाकृति ॥ ३६ ॥

आनने द्वे यथा चास्मिन् श्लिष्टैरग्र्यैर्महाधरैः[5] ।
तयोरुपरि सन्धौ च तारकाकृति मण्डलम् ॥ ३७ ॥

---

१ द. कुड्यमित्ति° । २ क. भुक्तिशा° । ३ द. ख. पिंडयोः । ४ क. पिधानावरणो ।
५ द. °रिहाधरैः ।

तत् तोरणमिति प्रोक्तं यच्च तेन परिष्कृतम् ।
सुवर्णतोरणं च स्यान्मणितोरणमेव च ॥ ३८ ॥

पुष्पतोरणमप्येतत् क्रियते पुष्पकादिभिः ।
तोरणाग्रे ठकारो यः सिंहकर्णः स उच्यते[1] ॥ ३९ ॥

नाम्ना संयमनानीति गृहसञ्चरभूमयः[2] ।
गृहस्य पार्श्वे यद्यस्मिंस्तत् तत्संयमनं[3] विदुः ॥ ४० ॥

भित्तेर्यद्वाथ दारूणां तरङ्गाग्रवदानतम्[4] ।
मरालपाली[5] सा हर्म्या(त्) प्रणाली निर्गमोऽम्भसः ॥ ४१ ॥

स च प्राकार इत्युक्तः कण्ठः स्यादङ्गणस्य यः ।
द्वारस्य[6] तु समीपं यत् प्रद्वारं तदिहोच्यते ॥ ४२ ॥

यदिष्टकचितं मूले द्वारस्य भवति स्थलम् ।
दीर्घं वा ह्रस्वमथवा तदास्थलकमिष्यते ॥ ४३ ॥

मूत्रभूमिरमेध्येति वर्चस्कोऽवस्करस्तथा ।
गृहाच्च भित्तिसामान्यं बाह्यं परिसरो मतः ॥ ४४ ॥

विस्तीर्णमुच्छ्रितं यत् स्याद् वेश्म सोऽट्ट उदाहृतः ।
संक्षिप्तमेतदेवोक्तं तज्ज्ञैरट्टालकाख्यया ॥ ४५ ॥

तदेवात्यन्तसंक्षिप्तमट्टालीति निगद्यते ।
अट्टाली या तु नात्युच्चा तामत्राट्टालिकां विदुः ॥ ४६ ॥

एकनाडीगतच्छिद्रैः काष्ठनालैः परिश्रितम् ।
यत्र काष्ठप्रणालीति[7] छदपृष्ठेऽम्बु धावति ॥ ४७ ॥

स्तम्भशीर्षकरूपाणि काष्ठमूलाश्रितानि च ।
सुषिराणि प्रयत्नेन काष्ठनाडीमुखान्तरैः ॥ ४८ ॥

रूपाणामथ तेषां तु स्तननासामुखाक्षिभिः ।
नानास्थानस्थितानां च वृषवानरदंष्ट्रिणाम् ॥ ४९ ॥

---

१ द. कथ्यते । २ द. ख. गृहसंचारभूमयः । ३ संयावनं । ४ °दानवम् । ५ द. ख. मराल्या भित्तिसामान्यं बाह्यं परिसरो मतः । विस्तीर्णमुच्छ्रितांयली सा हर्म्या । ६ क. °स्य च समीपे । ७ क. °प्रणालीभिः ।

कृतसूक्ष्मान्तरच्छिद्रैः प्रवर्षति समन्ततः ।
तद् धारागृहमित्युक्तं धारागारादिनामभृत् ॥ ५० ॥
कांस्यैर्लोहैस्तथा पट्टैर्निर्मृष्टादर्शनिर्मलैः ।
निचिता यस्य भित्तिः स्यात् तद् दर्पणगृहं [1]विदुः ॥ ५१ ॥
पक्षद्वारं तदत्राहुर्यन्महाद्वारतोऽपरम् ।
यत् प्राकाराश्रितं द्वारं पुरे तद् गोपुरं विदुः ॥ ५२ ॥
निर्गताश्चोच्छ्रिताश्चैव प्राकारस्यान्तरान्तरा ।
[2]उपका(ल्या? र्या) इति प्रोक्ताः [3]क्षेमाश्चाट्टालका मताः ॥ ५३ ॥
चयप्रकारशालाः स्युः पुरीसंवरणाभिधाः ।
प्राकारादनुपालास्तु प्राकार उपनिष्कलाः(?) ॥ ५४ ॥
क्रीडागृहं यदारामे तदुद्यानं प्रचक्षते ।
तीरेऽम्भसो जलोद्यानं जलवेश्माम्बुमध्यगम् ॥ ५५ ॥
क्रीडागृहं यदत्रोक्तं क्रीडागारं तदुच्यते ।
विहारभूमिराक्रीडभूमिरित्यभिधीयते ॥ ५६ ॥
देवधिष्ण्यं सुरस्थानं चैत्यमर्चागृहं च तत् ।
देवतायतनं प्राहुर्विबुधागारमित्यपि ॥ ५७ ॥
छन्नं भवेद् यत्तु महाजनस्य स्थानं सभा सा कथिता च शाला ।
गवां पुनर्मन्दिरमत्र गोष्ठमाचक्षते वास्तुनिवेशविज्ञाः ॥ ५८ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे नगरकर्वटग्रामगृहायतनसंज्ञा नामाष्टादशोऽध्यायः ।

---

## अथ चतुःशालविधानं नामैकोनविंशोऽध्यायः ॥

---

ब्रूमो नृपचमूनाथवर्णिनां भवनान्यथ ।
प्रशस्तान्यप्रशस्तानि कृत्स्नान्यपि यथाक्रमम् ॥ १ ॥

---

१ द. ख. जगुः । २ क. उपकाम्या इति, द. ख. उपकाल्या इति । ३ क. द. ख. क्षेमाश्चा° । शा. क्षौमाश्चा° ।

वेश्मनामेकशालानां शतमष्टाधिकं स्मृतम् ।
द्वापञ्चाशद् द्विशालानां त्रिशालानां द्विसप्ततिः ॥ २ ॥
चतुःशालानि वेश्मानि यानि तेषां शतद्वयम् ।
पञ्चाशच्चाधिका षड्भिर्विज्ञातव्या मनीषिभिः ॥ ३ ॥
सहस्रं पञ्चशालानां स्यात् तथा पञ्चविंशतिः[1] ।
षट्शालानां षण्णवतिः स्यात् सहस्रचतुष्टयम् ॥ ४ ॥
अष्टाङ्गे त्वेकशालस्य भेदाः पञ्चाशदीरिताः ।
द्विशालानां तु सर्वेषां प्रभेदाः शतपञ्चकम् ॥ ५ ॥
शतं शतं च प्रत्येकं त्रिशालानामुदाहृतम् ।
द्विचत्वारिंशदधिकं चतुःशाल[2]शताष्टकम् ॥ ६ ॥
द्विनवत्युत्तराण्येवं शतानि दश सप्त च ।
षोडशैव सहस्राणि षोडशोना चतुःशती ॥ ७ ॥
वेश्मानि सप्तशालानि भवन्ति परिसङ्ख्यया ।
पञ्चषष्टिसहस्राणि तथा पञ्चशतानि च ॥ ८ ॥
गृहाणामष्टशालानां षट्त्रिंशदपरा भवेत् ।
लक्षद्वयं सहस्राणि द्विषष्टिः शतमेव च ॥ ९ ॥
गृहाणां नवशालानां चत्वारिंशच्चतुर्युता ।
दशलक्षसहस्राणि चत्वारिंशत् तथाष्ट च ॥ १० ॥
शतानि दशशालानां पञ्च षट्[3]सप्ततिस्तथा ।
गृहद्वितययोगेन संयुक्ताख्यानि विंशतिः ॥ ११ ॥
[4]गृहद्वितययोगेन द्वात्रिंशदिह वेश्मनाम् ।
दशपञ्च तथान्यानि भवन्ति हलकान्यपि ॥ १२ ॥
गृहमालाथ सङ्घाटो गृहनाभिर्गृहाङ्गणम् ।
उद्भिन्नं भिन्नकक्षं च निलीनं प्रतिपादितम् ॥ १३ ॥

---

१ द. चतुर्विंशतिः । २ क. प्रोक्तमष्टाधिकं शतम्, द. ख. चतुःशालाशताष्टकम् । ३ द. °षष्टि° ४ द. गृहत्रितय°

अन्यानि चाष्टभेदानि भवन्त्युत्तमवर्णिनाम्।
लक्षणं नाम संस्थानं चैतेषां प्रतिपाद्यते[1] ॥ १४॥

वर्णिनां स्याच्चतुःशालं मितं द्वात्रिंशता करैः।
सेनापतेश्चतुःषष्टिस्तद्वदेव पुरोधसः ॥ १५॥

श्रेष्ठमष्टशतं राज्ञामेतानि तु यथाक्रमम्।
चतुःषडष्टहान्या स्युः पञ्चमं च पृथक् पृथक् ॥ १६॥

विशोधयेत् कनीयोभिर्मध्यमानि यथाक्रमम्।
नरेन्द्रपुरुषाणां स्युर्वेश्मान्येतानि वृद्धये ॥ १७॥

गृहाणि शोधयेत् प्राग्वज्ज्यायांस्यपि च मध्यमैः।
भवन्त्येतानि भूपानां रतिकोशप्रतिश्रयाः ॥ १८॥

दशांशयुक्तो विस्तारा[2]दायामो विप्रवेश्मनाम्।
अष्टषट्चतुरंशाढ्यः क्षत्रादित्रयवेश्मनाम् ॥ १९॥

यो विस्तारः स एव स्यादायामोऽस्मिन् यथाक्रमम्।
विट्शूद्रयोः स्यादाधिक्यं[3] मध्ये ज्येष्ठे च सद्मनि ॥ २०॥

कर्णसूत्राद् बहिः स्तम्भान् न्यसेत् सर्वान् प्रयत्नतः।
धाम्नां षोडशहस्तानां पञ्चानां चतुरुत्तरा ॥ २१॥

वृद्धिः शालास्तु तेषां स्युश्चतुरंशेन विस्तृताः।
शालाव्यासार्धतोऽलिन्दः सर्वेषामपि वेश्मनाम् ॥ २२॥

तस्याः[4] षोडशहस्ते स्यात् पञ्चमांशद्वयेन वा।
सप्तमांशत्रयेण स्याद् द्वयोरपरवेश्मनोः ॥ २३॥

अन्त्ययोर्हस्तयोः स स्याच्चतुर्भिर्नवमांशकैः।
पञ्चभिः षड्भिरेभिश्च सार्धैः साङ्घ्रिनगैः करैः ॥ २४॥

दैर्घ्यं स्याद् दशभिः सार्धैः शालायाः षोडशादिषु।
निवेशदशमांशो यः स युतः सप्तभिः करैः ॥ २५॥

---

१ द. प्रतिपद्यते। २ द. विस्तार आयामो। ३ द. °धिकामथ ज्येष्ठेथ वेश्मनोः।
४ क. तस्यां।

शालाया विस्तरः प्रोक्तः श्रेष्ठानामिह वेश्मनाम् ।
अलिन्दमानं प्रागेव प्रोक्तं निखिलवेश्मनाम् ॥ २६ ॥

यच्छालालिन्दयोः शेषं भवेद् गर्भगृहं हि तत् ।
मू[1]षावच्छिन्नमिच्छन्ति शालादैर्घ्यं विपश्चितः ॥ २७ ॥

शालाव्यासप्रमाणा स्यात् सर्वेषामवकोसिमा ।
दिशासु भवने शाला विदिशाकर्णसामयः (?) ॥ २८ ॥

कर्णशा[2]ला (त?तु) या प्रोक्ता सा च ज्ञेयावकोसिमा ।
अलिन्दशालयोर्मध्ये या स्यान्मू[3]षेति सा स्मृता ॥ २९ ॥

*पूर्वद्वारं नियम्यादावादिमूषा तदुत्तरा ।
मूषा भद्रा इति प्राहुस्तत्संख्यामवधारयेत् ॥ ३० ॥

यावन्मू[4]षं भवेद् वेश्म तावद् भद्रं तदुच्यते ।
भद्राभद्रे शक्रदिक्स्थे सौम्यासौम्ये यमाश्रिते ॥ ३१ ॥

शान्ताशान्ते प्रतीचीस्थे सौम्यदिक्स्थे शिवाशिवे ।
अलिन्दा इति केऽप्याहुर्मूषा इत्यपरे विदुः ॥ ३२ ॥

भद्रा इति जगुः केचिदन्ये परिसरा इति ।
एकद्वित्रिचतुःपञ्चषट्सप्ता( ष्टौ?ष्ट )क्रमेण याः ॥ ३३ ॥

मूषास्तासां प्रवह[5]णासंज्ञाः स्युर्वेश्मनामिह ।
तासामाद्याः प्रशस्ताः स्युरप्रशस्तास्ततः पराः ॥ ३४ ॥

नामतो गुणतश्चैव शुभाशुभफलोद[6]यात् ।
अ[7]ष्टावादौ गुरून् न्यस्येत् ततश्चाद्यगुरोरधः ॥ ३५ ॥

लघुं न्यस्येत् ततः शेषान् विदधीत यथोपरि ।
गुरुभिः पूरयेदादिं यावत् स्युर्लघवोऽखिलाः ॥ ३६ ॥

---

१ क. मूषाविच्छिन्न° । २ क. कर्णमाला, द. कर्णशाला । ३ क. मूखेति । ४ द. ख. यावन्मूषां । ५ क. प्रवहणाः । ६ क. फलोदयः । ७ द. ख. अष्टधादौ ।

* 'पूर्वद्वारमियं यावदादिमूषा' इति पाठः स्यात् [ शास्त्रिणः ] ।

*आद्यपङ्क्तौ गुरुश्चैको लघुश्चैको यथाक्रमम् ।
अतः परं तु द्विगुणाः प्रतिपङ्क्ति भवन्त्यमी ॥ ३७ ॥

मूषाभेदाश्चतुःशाले षट्पञ्चाशच्छतद्वयम् ।
अलिन्दवीथीप्रग्रीवनिर्यूहकगवाक्षकैः ॥ ३८ ॥

तमङ्गभद्रविन्यासरचनाभिरनेकधा ।
अपरस्परसंबाधात् [1]संवृतैर्विवृतैरपि ॥ ३९ ॥

गृहभेदाः प्रसूयन्ते येषां संख्या न विद्यते ।
यत्सं[2]बद्धचतुश्शालममूषालिन्दकं हि तत् ॥ ४० ॥

एकभद्रादिगेहानां ब्रूमो नामान्यतः परम् ।
यान्येकलघुलक्षाणि प्रस्तारे तानि तद्विदः ॥ ४१ ॥

कथयन्त्येकभद्राणि क्रमसंख्याविभागतः ।
प्रागायतं प्राग्विलग्नं जयं संयमनप्रियम् ॥ ४२ ॥

प्रतीच्यं प्रासविन्यासं सुभद्रं कलहोत्तरम् ।
अष्टौ तान्येकभद्राणि द्विभद्राण्यभिदध्महे ॥ ४३ ॥

पूर्वोत्तरोत्तरं पूर्वाद् भद्रादिह विधानतः ।
स्यातां प्रा[3]ग्मेलकाद्यद्वत् पूर्वाद्या दक्षिणा परे(?) ॥ ४४ ॥

ईरं सुनीथ[4]माग्नेयं [5]द्वीपमाप्यं सुसंयमम् ।
अर्धचर्मैभं व्याक्रोशं नैर्ऋतं वृषभं विनम् ॥ ४५ ॥

का[6]व्यं विपासमानीरं कान्तं सौभं विपश्चि[7]मम् ।
गवयं श्रीवहं श्लिष्टं गणं भीममयोग[8]मम् ॥ ४६ ॥

---

१ द. संवृते विवृतेरपि । २ क. °बद्धं । ३ द. ख. प्राग्मेलिका । ४ क. °तमा° । ५ द. ख. दीप्यं वाप्यमु° । ६ द. ख. कव्यं तिपास । ७ द. ख. विपश्चितम् । ८ द. ख. भीमं मयोग° ।

* 'आद्यपङ्क्तौ प्रथमायामावलौ एको गुरुः, तस्याधस्तादपरो लघुः कर्तव्यः । एवं यथाक्रमं प्रस्तारसङ्ख्याकमित्यालिखेत् । तद्यथा—चतुर्गुरुप्रस्तारे षोडश गुरुलघवः । ततस्तदग्रतो द्वौ गुरू द्वौ लघू इति एकैकस्याधो न्यसेत् । तदग्रतोऽपि चत्वारो गुरवश्चत्वारो लघवः । ततोऽपि अष्टौ गुरवः अष्टौ लघवः । एवं प्रतिपङ्क्ति द्विगुणान् गुरुलघून् न्यसेत् । अयमपरः प्रस्तारः ।' इति टिप्पणमस्ति । [ शास्त्रिणः ]

वर्तं चलं शठं क्रान्तमित्यष्टाविंशको गणः ।
द्विभद्राणां समाख्यातस्त्रिभद्राणामतः परम् ॥ ४७ ॥
ऐन्द्रं विलोममायामं वधमेकाक्षम[1]न्तिकम् ।
प्रकाशं पैत्रमायस्तं भद्रं प्रान्तं प्रसाधकम् ॥ ४८ ॥
क्ष[2]मं विघातमायातं कान्तं चित्रं [3]द्विमन्दिरम् ।
सुदक्षिणं भयं श्लिष्टं प्रमोदं व्यायतं वियत् ॥ ४९ ॥
[4]आप्यं सुनागं नागेन्द्रमीरितं शोभनं घनम् ।
शस्तोत्तरं कर्कं कर्णं कुष्टं [5]कान्तं क्रमागतम् ॥ ५० ॥
द्विशस्तं द्विभयं प्रोक्तं चक्रं मलयमायतम् ।
वनं भारं सुगाराख्यमागारं वीरमेव च ॥ ५१ ॥
व्यायाममायुतं तद्वद् व्याहृतं च ततः परम् ।
दुर्गमं क्षो[6]भसंज्ञं च कृत्रिमं क्षोभणं तथा ॥ ५२ ॥
चारुरुच्याभिधानं च ध्रुवं कथमिति क्रमात् ।
षट्पञ्चाशत् त्रिभद्राणि चतु[7]र्भद्राण्यतः परम् ॥ ५३ ॥
कृतमर्चायनं पौष्णमुद्गतं मिश्रमुत्सुकम् ।
विघ्नं विपक्षमाहूतं रुचकं वर्धनं पृथु ॥ ५४ ॥
*कलहं छलमायास्यं त्रिनाभं स्वस्तिकं स्थिरम् ॥ ५५ ॥
शरलं द्विगुणं नाद्यं चित्रं भ्रान्तं विधारणम् ।
साधारणं नतं [8]त्र्यंशमृषं रोगं विशेषणम्§ ॥ ५६ ॥
[9]प्रतीच्यं त्रिसमं स्वैरं सुप्रतीकं नलं क्षपम् ।
व्याप्तमाक्रीडनं व्यर्थमीशानं सुखमव्ययम् ॥ ५७ ॥
मगधं क्षिप्रमागस्त्यमेकोजं द्विगतं लिहम् ।
पर्कं विलोममुद्दण्डं मुण्डं मातङ्गमाखिलम्‡ ॥ ५८ ॥

१ द. मन्तकं । २ द. क्षमं, ख. क्षेमं । ३ द. हि । ४ द. आद्यं, ख. अप्यं । ५ द. कान्तं । ६ ख. क्षोम° । ७ द. ख. चऊ° । ८ द. ततस्त्र्यंशं फरं । ९ प्रतीच्यमारभ्य ( श्लो० ५७ ) प्रभम् यावत् ( श्लो० ६२ ) अंशः द. प्रतौ नास्ति ।

* वक्ष्यमाणलक्षणश्लोके तु कलभमिति पठ्यते । § लक्षणे तु विशोषणमिति पठ्यते । ‡ ख. पुस्तकेऽर्धमिदं लुप्तम् ।

खर्वं पिनाकमुद्यन्तं विशिखं प्रसभं रजम्।
चुरु?(रुच)कं स?(सै)फलं वामं वर्धनं धावनं सहम् ॥ ५९ ॥
चयं सेव्यं कलं तीर्णं चतुर्भद्राणि सप्ततिः।
पञ्चभद्राण्यथोच्यन्ते षट्पञ्चाशदनुक्रमात् ॥ ६० ॥
कानलं लोलुपं जिह्मं प्रगालं सालिनं जिनम्।
सुजयं विजयं यामं जयं ज्ञातं जपं तपम् ॥ ६१ ॥
जमं वरं चरं वैरं † विशिषं सुप्रभं प्रभम्।
प्रतीक्षं [1]क्षमिणं युक्तं शान्तं त्रैतं विनोदनम् ॥ ६२ ॥
सन्दोहं विप्रदोहं च विद्रुतं सततं ततम्।
व्याकुलं लीनमालीनं विचित्रं लम्बनं खरम् ॥ ६३ ॥
शेखरं विबुधं चैत्रं व्यासक्तं संपदं पदम्।
त्रिशिखं चतुरं प्रातं सुस्थितं [2]दुःस्थितं स्थितम् ॥ ६४ ॥
चक्रं [3]वक्रं लघं लाभं संपर्कं मूलमव्ययम्।
अष्टाविंशतिरन्यानि षड्भद्राणि निबोधत ॥ ६५ ॥
किन्नरं कौस्तुभं हर्म्यं धार्मिकं [4]निषधं वसु।
[5]साटिकं वामनं गौरमस्थिरं क्रमिणं [6]खलम् ॥ ६६ ॥
[7]विवरं वालिशं धौमं त्रिपुष्टं मन्दिरं भवम्।
अशोकं भास्वरं चौष्यं लातव्यं [8]सुखनं मखम् ॥ ६७ ॥
वाजि नेत्रं भ्रमं घोषं सप्तभद्राण्यतः परम्।
भाण्डीरं * [9]वैसहं प्रस्थं प्रतानं वासुलं [10]कटम् ॥ ६८ ॥
लक्ष्मीवासं सुगन्धान्तमष्टधैतानि नामतः।
अन्यच्च सर्वतोभद्रमेकं भद्राभिरष्टभिः ॥ ६९ ॥
संप्रकल्प्यं चतुःशालं ब्रूमश्चैषां शुभाशुभम्।
प्रदक्षिणा शुभा मूषा विपरीता विपर्यये ॥ ७० ॥

---

१ क. क्षिमिणं। २ द. सुस्थितं। ३ द. ख. नक्रं। ४ क. निषिधं। ५ द. साकीटं।
६ द. ख. खरम्। ७ द. ख. विचवं वाभिसं। ८ द. सुध्वनं। ९ क. वैसमं। १० द. टकम्।
† ख. पुस्तकदृष्टलक्षणापाठरीत्या तु विरोधमिति पाठ्यम्। * लक्षणानुसाराद् वैसनमिति पाठ्यम्।

समवाये यथा भूयो जानीयात् साध्वसाधु च ।
तथाष्टावेकभद्राणि सप्तभद्राणि च क्रमात् ॥ ७१ ॥
द्विभद्राण्यष्टभिर्युक्ता षड्भद्राणि च विंशतिः ।
षट्पञ्चाशत् त्रिभद्राणि पञ्चभद्राणि चोन्नयेत् ॥ ७२ ॥
सप्ततिश्च चतुर्भद्राण्येकं भद्राभिरष्टभिः ।
एवं शतद्वयं पिण्डः षट्पञ्चाशच्च वेश्मनाम् ॥ ७३ ॥
भद्रैः पूर्वविधानेन चतुःशालाक्रियादिषु ।
मूषा स्यात् कुडयजैस्तेषु चतुश्शालेषु वेश्मसु ॥ ७४ ॥
अनुवंशाश्रिते मूषे स्वस्तिके स्तःपराङ्मुखे ।
मुखायते च पुरतो द्वे स्यातामवकोसिमे ॥ ७५ ॥
नोदङ्मुखः स कर्तव्यः कार्यः प्राग्जीवसंयुतः ।
वर्धमाने तथा कार्ये?(र्यो) यथा प्राग्ग्रीवसंयुतः ॥ ७६ ॥
वर्धमाने तथा कार्ये द्वारमूषे मुखायते ।
मूषाया दक्षिणे स्यातां दीर्घवामेऽवकोसिमे ॥ ७७ ॥
नन्द्यावर्तगृहे सर्वा नन्द्यावर्ता भवन्ति ताः ।
द्वे स्तरु?(मू)षे रुचके स्यातामायते त्ववकोसिमे ॥ ७८ ॥
सर्वद्वारवहा मूषाः सर्वतोभद्रवेश्मनि ।
आदिमूषा भवेदेका गृहं प्रागायतं हि तत् ॥ ७९ ॥
द्वितीयया प्राग्विलग्नमेकया तदनन्तरम् ।
प्रदक्षिणेन वेश्मानि जयादीन्येकयैकया ॥ ८० ॥
मूषया स्युः क्रमादेवं कथ्यन्ते तत्फलान्यथ ।
धनमर्थविनाशश्च जयश्चैवाशुभं सदा ॥ ८१ ॥
प्रीतिरुद्वेगकल्याणकलहाश्चाप्यनुक्रमात् ।
यत्र पूर्वे उभे मूषे तदीरं परिकीर्तितम् ॥ ८२ ॥
यत्र पूर्वा तृतीया च तत् [1]सुनीतं गृहं विदुः ।
आग्नेये द्वितृतीये स्तो द्वीपे चाद्यचतुर्थिके ॥ ८३ ॥

१ द. सुनीथं ।

द्विचतुर्थ्यौ तथा चाप्ये त्रिचतुर्थ्यौ सुसंयमे ।
अर्धचं त्वाद्यपञ्चम्यौ द्वितीयैभे सपञ्चमी ॥ ८४ ॥
व्याकोशे च त्रिपञ्चम्यौ नैर्ऋते द्विशराभिधे ।
वृषभे प्रथमाषष्ठ्यौ द्विषष्ठ्यौ च तथा विने ॥ ८५ ॥
काव्ये तृतीया षष्ठी च विपासेऽङ्घ्रिरसाभिधे ।
आनीरे पञ्चमीषष्ठ्यौ साद्या कान्ते च सप्तमी ॥ ८६ ॥
[1]सैभे द्वितीयासप्तम्यौ त्रिसप्तम्यौ विपश्चिमे[2] ।
गवये सप्तमीतुर्ये श्रीवहे पञ्चसप्तमी ॥ ८७ ॥
सषष्ठी सप्तमी श्लिष्टे गणे पूर्वाष्टमी तथा ।
भीमेऽष्टमी द्वितीया च व्यष्टम्यौ चाप्ययोगमे ॥ ८८ ॥
वर्ते चतुर्थ्यष्टमी च पञ्चमी चाष्टमी चले ।
षष्ठ्यष्टम्यौ शठे क्रान्ते सप्तमी चाष्टमीति च ॥ ८९ ॥
इत्यष्टाविंशतिः प्रोक्ता द्विभद्राणामिहौकसाम् ।
अथ ब्रूमस्त्रिभद्राणि तत्रैन्द्रं पुष्टिवर्धनम् ॥ ९० ॥
स्याद् याम्यपश्चिमद्वारमाद्यमूषात्रयान्वितम् ।
आद्या द्वितीया तुर्या च यस्य द्वारं विपश्चिमम् ॥ ९१ ॥
विलोमं नाम तद् वेश्म शूद्राणां पुष्टिवर्धनम् ।
आद्या तृतीया तुर्या स्यादायामे सर्वतोमुखे ॥ ९२ ॥
वधे द्वित्रिचतुर्थ्यः स्युर्द्वारं च स्यादुदग्दिशि ।
यत्र साद्ये द्विपञ्चम्यावेकाक्षं तदुदाहृतम् ॥ ९३ ॥
साद्ये यत्र द्विपञ्चम्यौ तत् प्रोक्तं गृहमन्तिकम् ।
यत्र स्युर्द्वित्रिपञ्चम्यः प्रकाशं सर्ववृद्धिकृत् ॥ ९४ ॥
पूर्वा चतुर्थीपञ्चम्यौ यत्र तत् पैत्रमुच्यते ।
पञ्चमी द्विचतुर्थ्यौ च यत्रायस्तं तदीरितम् ॥ ९५ ॥
त्रिचतुःपञ्चमीयुक्तं भद्रमाहुर्मनीषिणः ।
आद्या द्वि[3]तीया षष्ठी च यत्र तत् प्रान्तशब्दितम् ॥ ९६ ॥

आद्या तृतीया षष्ठी च स्यात् प्रसाधकवेश्मनि ।
तद् भवेत् सर्वतोद्वारं तथा सर्वार्थसाधकम् ॥ ९७ ॥
द्वितीया च तृतीया च षष्ठी च क्षमनामनि ।
तस्य प्रत्यग्दिशि द्वारं शूद्रवर्गस्य चेष्टदम् ॥ ९८ ॥
षष्ठी चतुर्थी चाद्या च स्युर्विघाताख्यवेश्मनि ।
षष्ठी द्वितुर्ये यस्मिंस्तदायातं दक्षिणामुखम् ॥ ९९ ॥
षट्चतुस्त्रियुतं कान्तं तत् स्यात् सर्वार्थसाधकम् ।
षट्पञ्चाद्यान्वितं चित्रं तच्च स्याद् याम्यदिङ्मुखम् ॥ १०० ॥
द्वितीयापञ्चमीषष्ठ्यो यस्मिन् स्युस्तद् द्विमन्दिरम् ।
यत्र त्रिपञ्चमीषष्ठ्यस्तद् वदन्ति सुदक्षिणम् ॥ १०१ ॥
चतुर्थीपञ्चमीषष्ठ्यो भये स्युस्तन्न वृद्धिकृत् ।
पूर्वाद्वितीयासप्तम्यो यत्र तच्छ्लिष्टसंज्ञितम् ॥ १०२ ॥
याम्यास्यमिदमिच्छन्ति शुभं सर्वार्थदं नृणाम् ।
साद्ये तृतीयासप्तम्यौ प्रमोदे परिकीर्तिते ॥ १०३ ॥
यत्र स्युर्द्वित्रिसप्तम्यस्तद् वेश्म व्यायतं स्मृतम् ।
यत्राद्या च चतुर्थी च सप्तम्यपि च तद् वियत् ॥ १०४ ॥
द्विचतुःसप्तमीमूषमाप्यं स्याद् दक्षिणामुखम् ।
त्रिचतुस्सप्तमीभिस्तु सुनागं वेश्म कीर्त्यते ॥ १०५ ॥
तच्च याम्यापरमुखं धनधान्यसुखप्रदम् ।
सप्तमी पञ्चमी पूर्वा मूषा नागेन्द्रसंज्ञिते ॥ १०६ ॥
मूषा द्विपञ्चसप्तम्यो याम्यं च मुखमीरिते ।
त्रिपञ्चसप्तमीमूषाशोभितं शोभनं भवेत् ॥ १०७ ॥
चतुर्थी पञ्चमी यत्र सप्तम्यपि च तद् घनम् ।
पूर्वा षष्ठी सप्तमी च स्मृता शस्तोत्तरे गृहे ॥ १०८ ॥
द्वितीयासप्तमीषष्ठ्यो यस्मिंस्तत् कफसंज्ञितम् ।
द्वारं वारुणमेतस्य हितं च स्याद् द्विजन्मनाम् ॥ १०९ ॥

१ द. ख. °द्योच्छ्रितं ।

कर्णं स्यात् पश्चिमद्वारं त्रिषष्ठीसप्तमीयुतम् ।
चतुर्थीसप्तमीषष्ठयो मूषाः स्युः क्रुष्टसंज्ञिते ॥ ११० ॥
सप्तमीपञ्चमीषष्ठीयुक्तं क्रान्तं यशस्करम् ।
आद्याष्टमी द्वितीया च मूषा प्रोक्ता क्रमागते ॥ १११ ॥
आद्याष्टमी तृतीया च द्विशस्ते भवने स्मृताः ।
यत्राष्टमी त्रिद्वितीये द्विभयं तदुदाहृतम् ॥ ११२ ॥
आद्याष्टमी चतुर्थी च यत्र तच्चक्रसंज्ञितं ।
तुर्याष्टमी द्वितीया च यत्र तन्मलयं विदुः ॥ ११३ ॥
तुर्याष्टमी तृतीया च यत्र तत् प्रोक्तमायतम् ।
आद्याष्टमी पञ्चमी च स्याद् यस्मिंस्तद् वनं स्मृतम् ॥ ११४ ॥
द्वितीया पञ्चमी मूषा यत्र स्यादष्टमी तथा ।
तद् [1]भाराख्यमुदग्वक्त्रं शुभं विघ्नकृदन्यथा ॥ ११५ ॥
[2]त्रिपञ्चम्यष्टमीभिस्तु सुगारं परिकीर्तितम् ।
यत्राष्टमी तदागारं चतुर्थी पञ्चमी तथा ॥ ११६ ॥
यस्मिन्नाद्याष्टमीषष्ठयो वीरं तदिह कीर्तितम् ।
षष्ठयष्टमी द्वितीया च गृहे व्यायामनामनि ॥ ११७ ॥
षष्ठयष्टमीतृतीयाभिर्मूषाभिः प्रोक्तमायुतम् ।
षष्ठयष्टमीचतुर्थ्यः स्युर्यत्र तद् व्याहृतं विदुः ॥ ११८ ॥
षष्ठयष्टमीपञ्चमीभिर्दुर्गमं व्याधिकृन्मतम् ।
आद्याष्टमीसप्तमीभिः संयुक्तं क्षोभमुच्यते ॥ ११९ ॥
द्विसप्तम्यष्टमीयुक्तं गृहं कृत्रिमसंज्ञितम् ।
त्रिसप्तम्यष्टमीभिस्तु मूषाभिः क्षोभणं भवेत् ॥ १२० ॥
चारुरुच्यं चतुःसप्तम्यष्टमीभिः समन्वितम् ।
सप्तपञ्चम्यष्टमीभिर्युक्तं ध्रुवमिति स्मृतम् ॥ १२१ ॥
षट्सप्तम्यष्टमीयुक्तं कथं सर्वार्थसिद्धिदम् ।
इत्युक्तानि त्रिभद्राणि शस्तान्येतेषु यानि च ॥ १२२ ॥

---

१ द. भावाक्ष॰ । २ द. प्रतौ श्लोकार्धं नास्ति ।

तानि नित्यं प्रयोज्यानि वर्णानां च मनीषिभिः ।
आद्याश्चतस्रो मूषाः स्युर्यत्र तत् कृतसंज्ञितम् ॥ १२३ ॥
सर्वद्विगुणकृत् पूर्वप्रत्यग्द्वारं नचान्यथा ।
आद्यास्तिस्रः पञ्चमी च यस्मिन्नर्चायनं हि तत् ॥ १२४ ॥
तद् भवेत् पश्चिमद्वारं गृहं सर्वगुणान्वितम् ।
यस्मिन्नाद्या द्वितीया च चतुर्थी पञ्चमी तथा ॥ १२५ ॥
तत् पौष्णं दक्षिणद्वारं सर्ववृद्धिकरं नृणाम् ।
आ?[1]( द्या )द्यास्तिस्रस्तथाद्या च यस्मिंस्तद् गृहमुद्गतम् ॥ १२६ ॥
द्वारेण पश्चिमेनैतच्छस्यते दक्षिणेन वा ।
द्वयाद्याश्चतस्रो यत्र स्युस्तन्मिश्रं प्रीतिवर्धनम् ॥ १२७ ॥
प्रशस्तं क्षत्रियादीनामस्य द्वाः प्राच्यपाचि वा ।
आद्यास्तिस्रस्तथा षष्ठी यस्मिन् मूषास्तदुत्सुकम् ॥ १२८ ॥
तच्छस्तं पश्चिमद्वारं विप्रादीनां जयावहम् ।
आद्या द्वितीया तुर्या च मूषा षष्ठी च यत्र तत् ॥ १२९ ॥
याम्या[2]प्रत्यङ्मुखं शस्तं विघ्नं नाम कुलर्द्धितम् ।
आद्या तृतीया तुर्या च यस्मिन् षष्ठी च तच्छुभम् ॥ १३० ॥
विपक्षं नाम धाम स्याद् द्वारमस्य च पश्चिमम् ।
द्व्याद्यास्तिस्रो गृहे यस्मिन् मूषा षष्ठी च तच्छुभम् ॥ १३१ ॥
स्याद् याम्यपश्चिमद्वारमाहूतं नाम तद् गृहम् ।
आद्याद्वितीयापञ्चम्यो यत्र षष्ठी च तद् भवेत् ॥ १३२ ॥
रुचकं नाम याम्यप्रागद्वारं सकलकामदम् ।
एकत्रिपञ्चषष्ठयः स्युर्यत्र तद्वर्धमानकम् ॥ १३३ ॥
प्राक्पश्चिमोत्तरद्वारं चातुवर्ण्यस्य वृद्धिदम् ।
यत्र स्युर्द्वित्रिपञ्चम्यो मूषाः षष्ठी च तद् गृहम् ॥ १३४ ॥
स्यात् पूर्वदक्षिणद्वारं प्रथितं पृथुसंज्ञया ।
यस्मिन्नाद्या[3]चतुःपञ्चषष्ठयस्तत् कलभं विदुः ॥ १३५ ॥

१ द. ?द्याद्या° । २ क. याम्यप्रत्य° । ३ 'द्य' क. पाठः ।

गुणैरुपेतं सकलैरुदग्द्वारं निकेतनम्।
द्विचतुःपञ्चमीषष्ठयो यस्मिंस्तच्छलमुच्यते ॥ १३६ ॥
दक्षिणं मुखमेतस्य पश्चिमं वा प्रशस्यते।
चतस्रस्त्र्यादयो यस्मिन्नायास्यं तदुदीरितम् ॥ १३७ ॥
अप्रशस्तं वदन्त्येतत् तद्विदो भवनाधमम्।
आद्यास्तिस्रः सप्तमी च भूषाः स्युर्यत्र तद् गृहम् ॥ १३८ ॥
त्रिनाभमुत्तरद्वारं शस्तं सर्वगुणान्वितम्।
आद्याद्वितुर्यासप्तम्यो यत्र तत् स्वस्तिकं स्मृतम् ॥ १३९ ॥
प्राक्पश्चिमोत्तरद्वारं चातुर्वर्ण्येऽपि शस्यते।
आद्याचतुर्थीसप्तम्यो भूषाः स्युर्यत्र वेश्मनि ॥ १४० ॥
तदिह स्थिरमित्युक्तं द्वारं चैतस्य दक्षिणम्।
द्याद्यास्तिस्रः सप्तमी च यत्र तत् सरलं विदुः ॥ १४१ ॥
तद् भवेत् पश्चिमद्वारं सर्वदोषोज्झितं गृहम्।
यत्राद्या च द्वितीया च पञ्चमी सप्तमी तथा ॥ १४२ ॥
द्विगुणं नाम तद् वेश्म द्वारं चास्य यथेप्सितम्।
आद्यातृतीयापञ्चम्यः सप्तम्यपि च यत्र तत् ॥ १४३ ॥
नाद्यं नामातिशीलाद्यं(?)प्रशस्तं सर्वदेहिनाम्।
द्वितीया च तृतीया च पञ्चमी सप्तमी गृहे ॥ १४४ ॥
यत्र तच्चित्रनामेष्टद्वारं चित्रगुणैर्वृतम्।
आद्याचतुर्थीपञ्चम्यो यत्र स्युः सप्तमी तथा ॥ १४५ ॥
तद् भ्रान्तं नाम पूर्वोदग्द्वारं भवनमृद्धिकृत्।
यत्र द्वितीया तुर्या च पञ्चमी[3] सप्तमी तथा ॥ १४६ ॥
विधारणं गृहं तत् स्यात् सर्वकामविवर्धनम्।
तृतीया यत्र तुर्या च पञ्चमी सप्तमी तथा ॥ १४७ ॥
तत् साधारणमित्याहुः सर्वद्वारं सुखावहम्।
आद्या द्वितीया षष्ठी च सप्तमी यत्र तन्नतम् ॥ १४८ ॥

१ 'चल', २ 'द्यात्रितुर्यास' ख. पाठः। ३ 'स्यात् षष्ठी' प्रथमप्रकाशनपाठः।

आद्या द्वितीया षष्ठी च[1] त्र्यंशे स्यात् सप्तमी तथा ।
द्वितीया च तृतीया च ऋषे षष्ठी च सप्तमी ॥ १४९ ॥
आद्या तुर्या च षष्ठी च रोगे स्यात् सप्तमी तथा ।
यत्र द्वितीया तुर्या च स्यात् षष्ठी सप्तमी च तत् ॥ १५० ॥
विशोषणं नाम गृहं दक्षिणोत्तरदिङ्मुखम् ।
तृतीया यत्र तुर्या च स्यात् षष्ठी सप्तमी गृहे ॥ १५१ ॥
प्रतीच्यमीप्सितद्वारं तद् गृहं सर्वकामदम् ।
यत्राद्यापञ्चमीषष्ठीसप्तम्यस्त्रिसमं हि तत् ॥ १५२ ॥
प्रभूतवृद्धिदं वेश्म समस्तैरन्वितं गुणैः ।
द्वितीयापञ्चमीषष्ठीसप्तम्यो यत्र वेश्मनि ॥ १५३ ॥
तदिह स्वैरमित्याहुर्धनधान्यसुखावहम् ।
तृतीयापञ्चमीषष्ठीसप्तम्यो द्वारमुत्तरम् ॥ १५४ ॥
पश्चिमं वा भवेद् यत्र सुप्रतीकं च वृद्धिकृत् ।
तुर्याद्याभिश्चतसृभिर्नलमुत्तरदिङ्मुखम् ॥ १५५ ॥
आद्याद्वित्र्यष्टमीभिः स्यात् सर्वरुग्भीतिकृत् क्षयम्† ।
व्याप्ते पूर्वा द्वितीया च स्याच्चतुर्थी तथाष्टमी ॥ १५६ ॥
आद्यातृतीयातुर्याः स्युराक्रीडे तद्वदष्टमी ।
द्व्याद्यास्तिस्रः क्रमाद् व्यर्थे मूषाः स्यादष्टमी तथा ॥ १५७ ॥
ईशानाख्ये स्युराद्याद्वित्रिपञ्चम्योऽष्टमी तथा ।
पूर्वाष्टमीत्रिपञ्चम्यो यस्मिंस्तत् सुखसंज्ञितम् ॥ १५८ ॥
तत् पूर्वोदङ्मुखं वृद्ध्यै जायते हानयेऽन्यथा ।
यत्र स्युरष्टमीद्वित्रिपञ्चम्यस्तदिहाव्ययम् ॥ १५९ ॥
द्वारं यथेष्टमेतस्य वास्तुविद्याविदो जगुः ।
यस्मिन् पूर्वाष्टमीतुर्यापञ्चम्यो मगधं हि तत् ॥ १६० ॥
प्रागुदक्पश्चिमद्वारमिदं शंसन्ति सूरयः ।
यत्र द्वितुर्यापञ्चम्यो मूषाः स्युस्तद्वदष्टमी ॥ १६१ ॥

---

१ 'च सप्तमी यत्र तन्नतम् ।' क. पाठः । † क्षपमिति लक्ष्ये पठितम् ।

तत् क्षिप्रं नाम सुखकृद् यथेष्टं द्वारमिष्यते।
त्रिपञ्चम्यष्टमीतुर्या आगस्त्ये पश्चिमामुखे॥ १६२॥
द्वितीयाद्याष्टमीषष्ठयो यत्रैकोजं तदुच्यते।
तृतीयाद्याष्टमीषष्ठयो यत्र तद् द्विगतं गृहम्॥ १६३॥
द्वित्रिषष्ठयोऽष्टमी चापि यस्मिंस्तल्लिहमुच्यते।
आद्यातुर्याष्टमीषष्ठयो यत्र तत् पर्कमुच्यते॥ १६४॥
षष्ठयष्टमीद्वितुर्याभिः(?) स्याद् विलोमाभिधं गृहम्।
षष्ठयष्टमीद्वितुर्याभिरुद्दण्डमिति कीर्तितम्॥ १६५॥
यस्मिन्नाद्याष्टमीषष्ठीपञ्चम्यो मुण्डमेव तत्।
द्विपञ्चम्यष्टमीषष्ठयो मूषा मातङ्गसंज्ञिते॥ १६६॥
त्रिपञ्चम्यष्टमीषष्ठयो भवन्त्यस्खलनामनि*।
तत् खर्वनाम तुर्याद्यास्तिस्रो यस्मिंस्तथाष्टमी॥ १६७॥
आद्याद्वितीयासप्तम्यः पिनाके स्युस्तथाष्टमी।
त्रिसप्तम्यष्टमीपूर्वा यत्रोद्यन्तं तदुच्यते॥ १६८॥
अष्टमीद्वित्रिपञ्चम्यो यस्मिंस्तद् विशिखं गृहम्।
आद्या चतुर्थीसप्तम्यः प्रसभे स्युस्तथाष्टमी॥ १६९॥
रजे द्वितुर्यासप्तम्यो मूषाः स्युस्तद्वदष्टमी।
त्रिसप्तम्यष्टमीतुर्या यत्र तद् रुचकं विदुः॥ १७०॥
प्राक्प्रत्यग्द्वारमेतस्य शूद्राणामतिवृद्धिदम्।
सप्तम्याद्याष्टमी मूषा पञ्चम्यपि च सैफले॥ १७१॥
वामे द्विपञ्चसप्तम्यो मूषा ज्ञेयास्तथाष्टमी।
त्रिपञ्चसप्तम्यष्टम्यो यस्मिंस्तद् वर्धमानकम्॥ १७२॥
विशेषतो वृद्धिकरं वैश्यानामिति तद्विदः।
चतुःपञ्चाष्टसप्तम्यो यस्मिंस्तद् धावनं भवेत्॥ १७३॥
सप्तम्याद्याष्टमीषष्ठयो यत्र तत् सद्मुच्यते।
द्विसप्तषष्ठयष्टमीभिर्मूषाभिश्चयनं भवेत्॥ १७४॥

---

* इदमर्ध क. पुस्तके लुप्तम्। लक्षणवाक्यपाठानुसारेण पूर्वत्र लक्ष्यनिर्देशे अस्खलमिति पाठ्यम्।

षष्ठ्यष्टमीद्विसप्तम्यो(?) यस्मिंस्तत् सेव्यमीरितम् ।
यत्र तुर्याष्टमी षष्ठी सप्तमी चेति तत् कलम् ॥ १७५ ॥
तीर्णे षष्ठ्यष्टमीपञ्चसप्तम्यः सर्वकामदे ।
यत्राद्याः पञ्च तत् प्रोक्तं कानलं सर्वकामदम् ॥ १७६ ॥
एकद्वित्रिचतुःषष्ठ्यो यत्र तल्लोलुपं स्मृतम् ।
आद्यास्तिस्रः पञ्चषष्ठ्यौ यस्मिंस्तज्जिह्मदुच्यते ॥ १७७ ॥
प्रगाले पञ्चमीषष्ठीतुर्यापूर्वाद्वितीयकाः ।
त्रितुर्यापञ्चमीषष्ठ्यः साद्याः स्युः सालिनाभिधे ॥ १७८ ॥
यत्र द्वित्रिचतुःपञ्चषष्ठ्यस्तज्जिनमुच्यते ।
एकद्वित्रिचतुर्थ्यः स्युः सुजये सप्तमीयुताः ॥ १७९ ॥
पञ्चमीसप्तमीद्वित्रिपूर्वाः स्युर्विजयाभिधे ।
यत्रैकद्विचतुःपञ्चसप्तम्यो यामनाम तत् ॥ १८० ॥
यत्रैकत्रिचतुःपञ्चसप्तम्यस्तज्जयं विदुः ।
मूषा द्वित्रिचतुःपञ्चसप्तम्यो (जा?ज्ञा)तसंज्ञिते ॥ १८१ ॥
आद्यास्तिस्रस्तथा षष्ठीसप्तम्यौ यत्र तज्जपम् ।
आद्याद्वितुर्याषष्ठीभिः सप्तम्या च तपं विदुः ॥ १८२ ॥
षष्ठीत्रितुर्यासप्तम्यो जये?(मे)पूर्वान्विता मताः ।
द्वित्रितुर्यास्तथा षष्ठीसप्तम्यौ वैरसंज्ञिते ॥ १८३ ॥
चरं तद् यत्र पूर्वे द्वे पञ्चषट्सप्तमीयुते ।
*चैत्ये स्यात् सप्तमी षष्ठी पञ्चम्याद्या तृतीयका ॥ १८४ ॥
विशिखे द्वित्रिपञ्चम्यः स्यात् षष्ठी सप्तमी तथा ।
चतुर्थी पञ्चमी षष्ठी सप्तम्याद्या च सुप्रभे ॥ १८५ ॥
प्रभाख्ये द्विचतुःपञ्चषष्ठ्यः स्युः सप्तमी तथा ।
त्रिचतुःपञ्चसप्तम्यः षष्ठी च स्यात् प्रतीक्षके ॥ १८६ ॥
आद्याश्चतस्रो यत्र स्युः साष्टम्यः क्षमिणं हि तत् ।
सप्त?पूर्वा द्वित्रिपञ्चम्यो युक्तनाम्नि तथाष्टमी ॥ १८७ ॥

१. 'लुभं', २ 'पंच' ख. पाठः । * क. पुस्तकदृष्टलक्ष्योद्देशरीत्या च 'वैरे' इति पाठ्यम् ।

शान्ते द्वितुर्यापञ्चम्यः पूर्वा स्यादष्टमी तथा।
पूर्वात्रितुर्यापञ्चम्यः साष्टम्यस्त्वैतसंज्ञिते ॥ १८८ ॥

विनोदे द्वित्रिपञ्चम्यश्चतुर्थी चाष्टमी तथा।
सन्दोहे त्वष्टमीषष्ठ्यौ तिस्रः पूर्वादिकास्तथा ॥ १८९ ॥

आद्याद्वितुर्याषष्ठीभिरष्टम्या विप्रदोहकम्।
षष्ठ्यष्टमीत्रितुर्याद्या यस्मिंस्तद् विद्रुतं विदुः ॥ १९० ॥

द्वित्रितुर्याष्टमीषष्ठ्यो यत्र तत् सततं मतम्।
आद्याद्विपञ्चमीषष्ठ्यस्ततनाम्नि तथाष्टमी ॥ १९१ ॥

आद्यात्रिपञ्चमीषष्ठ्यो व्याकुले स्युस्तथाष्टमी।
द्वित्रिपञ्चचतुष्षष्ठ्यो विज्ञेया लीनसंज्ञके ॥ १९२ ॥

तुर्याद्यापञ्चमीषष्ठ्य आलीने स्युस्तथाष्टमी।
द्वितुर्यापञ्चमीषष्ठ्यो विचित्रे तद्वदष्टमी ॥ १९३ ॥

आद्याश्चतस्रो मूषाः स्युः साष्टम्यो लम्बनाह्वये।
आद्यास्तिस्रोऽष्टमी तद्वत् सप्तम्यपि भवेत् खरे ॥ १९४ ॥

शेखरे सप्तमीतुर्याद्वितीयाद्यास्तथाष्टमी।
विबुधे त्वष्टमी तुर्या तृतीयाद्याथ सप्तमी ॥ १९५ ॥

चैत्राख्ये ह्यष्टमीतुर्यासप्तम्यः सतृतीयकाः।
आद्याद्विपञ्चसप्तम्यो व्यासक्ताख्ये तथाष्टमी ॥ १९६ ॥

आद्यात्रिपञ्चसप्तम्यः साष्टम्यः सम्पदाभिधे।
यत्र द्वित्र्यष्टमीपञ्चसप्तम्यस्तत् पदं विदुः ॥ १९७ ॥

तुर्याद्यापञ्चमी[षष्ठी]सप्तम्यस्त्रिशिखे तथा।
द्विपञ्चम्यष्टमीतुर्यासप्तम्यश्चतुराभिधे ॥ १९८ ॥

त्रिसप्तम्यष्टमीतुर्यापञ्चम्यः प्रान्तनामनि।
आद्याद्वितीयासप्तम्यः षष्ठ्यष्टम्यौ च सुस्थिते ॥ १९९ ॥

दुःस्थितं यत्र षष्ठ्याद्या चतुर्थी सप्तमी तथा।
स्थितेऽष्टमीद्विसप्तम्यस्त्रिषष्ठ्यावपि च स्मृते ॥ २०० ॥

चक्रे षष्ठ्यष्टमीतुर्यासप्तम्याद्याः प्रकीर्तिताः ।
वक्रे[1] द्वितीयासप्तम्यौ षष्ठ्यष्टम्यौ चतुर्थिका ॥ २०१ ॥
लयेऽष्टमीत्रिसप्तम्यस्तुर्याषष्ठ्यौ च कीर्तिते ।
पञ्चमीसप्तमीषष्ठ्यो लाभे पूर्वाष्टमी तथा ॥ २०२ ॥
द्विपञ्चसप्तम्यष्टम्यः षष्ठी संपर्कसंज्ञिते ।
त्रिपञ्चषष्ठीसप्तम्यो मूलनाम्नि तथाष्टमी ॥ २०३ ॥
स्युरष्टसप्तषट्पञ्चचतुर्थ्यस्त्वव्ययाभिधे ।
पूर्वाद्या यत्र षण्मूषाः किन्नरं नाम तद् गृहम् ॥ २०४ ॥
यत्राद्यापञ्चसप्तम्यो सह तत् कौस्तुभं विदुः ।
पूर्वाद्वित्रिचतुःषष्ठीसप्तम्यो हर्म्यसंज्ञिते ॥ २०५ ॥
सप्तमी पञ्चमी षष्ठी द्वित्रिपूर्वाश्च धार्मिके ।
निषधे द्विचतुःपञ्चषष्ठ्याद्याः सप्तमी तथा ॥ २०६ ॥
त्रिचतुःपञ्चषट्सप्तम्याद्याः स्युर्यत्र तद् वसु ।
साटीके त्रिचतुःपञ्चद्विषष्ठ्यः स्युस्तथाष्टमी ॥ २०७ ॥
यत्राद्यापञ्चसप्तम्यो वामनं नाम तद् विदुः ।
आद्याद्वित्रिचतुःषष्ठ्यः साष्टम्यो गौरनामनि ॥ २०८ ॥
आद्याद्वित्र्यष्टमीषष्ठ्यः पञ्चमी चास्थिराभिधे ।
क्रमिणे त्रिचतुःपञ्चपूर्वाः षष्ठ्यष्टमी तथा ॥ २०९ ॥
खले पूर्वाष्टमीषष्ठीत्रितुर्याः पञ्चमीयुता ।
विवरे त्रिचतुःपञ्चद्विषष्ठ्यः स्युस्तथाष्टमी ॥ २१० ॥
आद्याद्वित्रिचतुःसप्तम्यष्टम्यो बालिशाभिधे ।
पूर्वाष्टमीद्वित्रिसप्तपञ्चम्यो धौमनामनि ॥ २११ ॥
त्रिपुष्टे द्विचतुःपञ्चसप्तम्याद्यास्तथाष्टमी ।
मन्दिरे त्रिचतुःपञ्चसप्तम्याद्यास्तथाष्टमी ॥ २१२ ॥
भवे द्वित्रि[2]चतुःपञ्चम्यष्टम्यः सप्तमी तथा ।
अशोके द्वित्रि[2]षट्सप्तम्यष्टम्यः पूर्वया सह ॥ २१३ ॥

---

१ 'नक्रे' ख. पाठः ।　२ ख. द. द्वि° ।

भास्वरे द्विचतुःषष्ठयः सप्तम्याद्याष्टमीयुता [:] ।
त्रिसप्तम्यष्टमीषष्ठीतुर्याद्याश्चौष्यसंज्ञिते ॥ २१४ ॥
द्वित्रितुर्याष्टमिषष्ठयो लातव्ये सप्तमी तथा ।
द्विसप्तम्यष्टमीषष्ठीपञ्चम्याद्याश्च सुस्वने ॥ २१५ ॥
त्रिपञ्चम्यष्टमीषष्ठीसप्तम्याद्यास्तथा मखे ।
द्वित्रिसप्ताष्टमीषष्ठीपञ्चम्यो वाजिसंज्ञिते ॥ २१६ ॥
नेत्रे पूर्वाचतुःपञ्चषट्सप्तम्योऽष्टमी तथा ।
भ्रमे स्युर्द्विचतुःपञ्चषट्सप्तम्योऽष्टमी तथा ॥ २१७ ॥
घोषे च त्रिचतुःपञ्चषट्सप्तम्योऽष्टमी तथा ।
एकद्वित्रिचतुःपञ्चषट्सप्तम्यो भवन्ति चेत् ॥ २१८ ॥
मूषास्तदानीं भाण्डीरमिति प्राहुर्निवेशनम् ।
एकद्वित्रिचतुःपञ्चषष्ठयो यत्र तथाष्टमी ॥ २१९ ॥
तद् वैसनमिति प्राहुर्वास्तुविद्याविदो गृहम् ।
एकद्वित्रिचतुःपञ्चसप्ताष्टम्यो गृहे यदि ॥ २२० ॥
मूषा भवन्ति तद् विद्यात् प्रस्थमित्यभिधानतः ।
एकद्वित्रिचतुर्थ्यः स्युः षष्ठी सप्तम्यथाष्टमी ॥ २२१ ॥
यस्मिन् मूषास्तदत्राहुः प्रतानमिति मन्दिरम् ।
चतुर्थीवर्जिताभिः स्यान्मूषाभिर्वेश्म वासुलम् ॥ २२२ ॥
कटं तृतीयाहीनाभिर्विज्ञातव्यं निवेशनम् ।
मूषाभिरद्वितीयाभिर्लक्ष्मीवासमुदाहृतम् ॥ २२३ ॥
सुगन्धान्तमनाद्याभिरष्टाभिः सर्वभद्रकम् ।
इत्येकभद्रप्रभृतीनि वेश्मान्युक्तानि यावद्गृहमष्टभद्रम् ।
एतांश्चतुश्शालगृहप्रभेदान् यो वेत्ति पूजां स लभेत लोके ॥ २२४ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

चतुश्शालविधानं नाम एकोनविंशोऽध्यायः ।

# अथ निम्नोच्चादिफलानि नाम विंशोऽध्यायः ।

अग्रतःपृष्ठतःशब्दौ[1] द्वारेण नियतौ गृहे ।
यतो द्वारं तदग्रं स्यात् पृष्ठं पृष्ठमुदाहृतम् ॥ १ ॥

द्रव्यायामोदयव्यासैः शाला यत्राधिका भवेत् ।
वामा वा दक्षिणा वापि अग्रतः पृष्ठतोऽपि वा ॥ २ ॥

हन्ति द्रव्याधिका द्रव्यमायामाभ्यधिका कुलम् ।
उच्छ्रायाभ्यधिका पूजां सन्ततिं विस्तराधिका ॥ ३ ॥

यस्य निम्ना भवेद् भूमिर्वामा दक्षिणकास्थला ।
बहुदोषं हि तद् वास्तु पुत्रपौत्रविनाशकम् ॥ ४ ॥

यस्य दक्षिणका निम्ना भूमिर्वामास्थला भवेत् ।
यत्नेनापि कृतं तत् स्याद् भर्तुरल्पफलोदयम् ॥ ५ ॥

पश्चिमेन भवेन्निम्ना भूमिः स्थूलतराग्रतः ।
यत्र तत् सर्ववर्णेषु सर्वकामप्रदं गृहम् ॥ ६ ॥

अग्रतश्च यदा हीनं पृष्ठतश्चोच्छ्रितं भवेत् ।
भवनं स्वामिनो ह्याशु विरागव्यसनाय तत् ॥ ७ ॥

सच्छत्रं च सकक्षं च तथैव सपरिक्रमम् ।
सप्रभं च समाख्यातं गृहमत्र चतुर्विधम् ॥ ८ ॥

बाह्योदकं च सच्छत्रं सकक्षमुभयोदकम् ।
सावश्यायं तु यद् वेश्म तद् विद्यात् सपरिक्रमम् ॥ ९ ॥

एकेनाप्यत्र मुखतः पृष्ठतः पार्श्वतोऽपि वा ।
सप्रभं स्यादलिन्देन लक्षणं तु पृथक् पृथक् ॥ १० ॥

एकोऽलिन्दस्तु कर्तव्यो मुखतो दक्षिणेन वा ।
मुखे राजप्रसादाय दक्षिणेऽर्थविवर्धनः ॥ ११ ॥

१ द. ख. प्रायो ।

वामतस्तु न कर्तव्य एकोऽलिन्दो न पृष्ठतः ।
वामतोऽर्थविनाशाय पृष्ठतो म्रियते गृही ॥ १२ ॥
यस्य स्यातामलिन्दौ द्वौ गृहस्योभयपार्श्वयोः ।
धनलाभं विजानीयात् तत्प्रवेशे कुटुम्बिनः ॥ १३ ॥
यस्य स्यातामलिन्दौ द्वावग्रतः पृष्ठतस्तथा ।
धनधान्यमवाप्नोति सौभाग्यं चापि तद्गृही ॥ १४ ॥
यस्य वा हलकालिन्दो मुखतो दक्षिणेन वा ।
राजप्रसादैस्तत्स्वामी धनधान्यैश्च वर्धते ॥ १५ ॥
वामतो हलकालिन्दो मुखतश्च कृतो यदि ।
राजदण्डभयं विद्यात् पत्नी चास्य विनश्यति ॥ १६ ॥
दक्षिणो हलकालिन्दः पश्चिमश्च कृतो यदि ।
ततः परापि वृद्धिः स्यात् सौभाग्यं च परं भवेत् ॥ १७ ॥
पृष्ठतो हलकालिन्दो वामतश्च कृतो यदि ।
कलत्रमरणं तत्र भवेद् दुर्भगतापि च ॥ १८ ॥
पृष्ठतो वामतश्चैव पुरतो दक्षिणेन वा ।
अलिन्दस्य कृतस्याथ वक्ष्यामोऽनुक्रमात् फलम् ॥ १९ ॥
पृष्ठतो दारनाशाय धनला[1]भाय दक्षिणे ।
अग्रे राजप्रसादाय वामतोऽर्थविनाशनः ॥ २० ॥
समापितं तु यद् वास्तु सर्वतः परिशोधितम् ।
स्वामिनस्तद् भवेद् धन्यं स्थपतेश्च यशस्करम् ॥ २१ ॥
अ[2]र्जितं वर्धते तस्य वृद्धिश्च स्यान्नृपश्रिया ।
ध[3]र्मकामाश्च वर्धन्ते कीर्त्तिरायुर्यशो बलम् ॥ २२ ॥
नित्यं प्रक्रीडितजनं नि[4]त्यं सन्निहितश्रि तत् ।
नृत्यवादित्रगीतैश्च नित्यामोदं निरामयम् ॥ २३ ॥
तत्र नैकप्रकाराणि त्रिशालान्युपलक्षयेत् ।
प्रकारेषु च सर्वेषु निन्द्यौ याम्यापरोज्झितौ ॥ २४ ॥

---

१ द. ख. नाशाय । २ द. ख. अर्चितं । ३ द. ख. धन॰ । ४ द. ख. हितं ।

एकस्मिन् स्वामिनो मृत्युरपरस्मिन् धनक्षयः ।
पूर्वोत्तरोज्झितौ धन्यौ संज्ञाश्चैषां प्रकारतः ॥ २५ ॥

स्युरुदक्पूर्वयाम्याप्यशालाहीनान्यनुक्रमात् ।
हिरण्यनाभसुक्षेत्रचुल्लीपक्षघ्ननामभिः ॥ २६ ॥

विनियोगो यथालिन्दमलिन्दव्यूढिरिच्छया ।
वेश्मान्यथ द्विशालानि कीर्त्यन्ते षड् यथाक्रमम् ॥ २७ ॥

दिक्कर्णेषु द्विशालानि तत्कर्णान्येषु निर्दिशेत् ।
संमुखे द्वे समेतानि षडेतान्युपलक्षयेत् ॥ २८ ॥

सिद्धार्थं दक्षिणाप्रत्यग् भवन्त्यत्रार्थसिद्धयः ।
यमसूर्यमुदक्प्रत्यक् तत्र मृत्युभयं सदा ॥ २९ ॥

प्रागुदीच्योस्तु दण्डः स्याद् दण्डस्तत्र सदा भवेत् ।
प्राग्याम्ययोस्तु वाताख्यं वास्तु तत् कलहोत्तरम् ॥ ३० ॥

उदग्दक्षिणसाम्मुख्ये द्विशालं काचवास्त्विति ।
तत्र ज्ञातिविरोधः स्यान्न तत् कुर्यात् कदाचन ॥ ३१ ॥

प्राक्प्रतीच्योस्तु साम्मुख्ये चुल्लीवास्तु विनिर्दिशेत् ।
तत्र वित्तक्षयो घोरः कदाप्येतन्न कारयेत् ॥ ३२ ॥

चतुश्शालं त्रिशालेन प्रान्तं प्राकारवर्तिना ।
पूर्वेण सप्तशालेषु मणिच्छन्द इति स्मृतम् ॥ ३३ ॥

अन्यानि चैवं त्रीण्याहुः प्रान्तमेव प्रदक्षिणम् ।
अपरं परिधानं च सपक्षमिति तानि च ॥ ३४ ॥

एकभित्ती तु शाले द्वे गृहसंघट्ट उच्यते ।
न तं कुर्यात् स हि सदा बन्धदोषवधप्रदः ॥ ३५ ॥

इत्युच्चनीचगृहभागफलं प्रदिष्ट-
मस्मिन्नलिन्दफलमप्यशुभं शुभं च ।

---

१ द. ख. पूर्वोत्तरौ स्थितौ । २ द. ख. कर्तान्येषु । ३ द. दीनाख्यं ।

यद् द्वित्रिशालगृहलक्ष्म तदप्यमुष्मिन्
सामान्यतो द्वितययोगभवं च सम्यक् ॥ ३६ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
निम्नोच्चफलच्छत्रादिसंज्ञालिन्दफलसद्वास्तुफलद्विशालत्रिशाल-
गृहसङ्घट्टलक्षणफलानि नाम विंशोऽध्यायः ॥

---

## अथ द्वासप्ततित्रिशाललक्षणं नामैकविंशोऽध्यायः ।

अथ द्वासप्ततेर्ब्रूमस्त्रिशालानां यथाक्रमम् ।
अभिधानानि कार्त्स्न्येन लक्षणानि पृथक् पृथक् ॥ १ ॥
मुख्यानि तेषु चत्वारि कथ्यन्ते तानि नामतः ।
हिरण्यनाभं सुक्षेत्रं चुल्ली पक्षघ्नमेव च ॥ २ ॥
हिरण्यनाभमुत्कृष्टं हीनमुत्तरशालया ।
तत् स्याद् धनप्रदं भर्तुः सुक्षेत्रं पूर्वया विना ॥ ३ ॥
सुक्षेत्रं लक्षणोपेतमृद्धिवृद्धिप्रदं विभोः ।
चुल्ली दक्षिणया हीना शालया वित्तनाशिनी ॥ ४ ॥
पक्षघ्नं पश्चिमाहीनं वैरकृत् कुलनाशनम् ।
अलिन्दयोगादेतेषां लघुप्रस्तारयोगतः ॥ ५ ॥
मूषायोगाच्च भेदाः स्युरष्टादश पृथक् पृथक् ।
जाम्बूनदं हिरण्याख्यं रुक्माख्यं[1] हेमसंज्ञितम् ॥ ६ ॥
कनकं काञ्चनं स्वर्णं सुवर्णं च ततः परम् ।
सन्तापसंज्ञं सारं च तथा चामीकराह्वयम् ॥ ७ ॥
तपनं तापनीयं च शातकुम्भमथापि च ।
हिरण्यनाभं कल्याणं भूषणं भूतिभूषणम्[2] ॥ ८ ॥

---

१ द. ख. रुक्माभं। २ द. ख. भूमिभू॰।

भेदा हिरण्यनाभस्येत्यष्टादश भवन्त्यमी ।
नागं सूर्यप्रभाख्यं च मत्तवारणकं तथा ॥ ९ ॥
चतुर्थं केसरीत्युक्तं वासवं [1]चेन्द्रमेव च ।
हरिं हंसं [2]सारसाण्डं?(ख्यं) कुञ्जरं तोयदं तथा ॥ १० ॥
मेघमालाभिधानं च धारासारं महोदरम् ।
कर्दमं नामतश्चान्यत् सुक्षेत्रं प्रकरं तथा ॥ ११ ॥
सुक्षेत्रानुगतान्याहुस्तथान्यद् धान्यपूरकम् ।
चुल्लीभेदानथ ब्रूमस्तेषामाद्यं भुजङ्गमम् ॥ १२ ॥
निर्जीवाख्यं विहङ्गं च नकुलं पन्नगाह्वयम् ।
शत[3]च्छिद्रं च सर्पं च कोपसंज्ञं भगन्दरम् ॥ १३ ॥
उद्वेजनाख्यं [4]सन्न्यासं निस्तोषं करुणा[5]ननम् ।
वारणं [6]दारणं चुल्ली ककुदं [7]कन्दरं तथा ॥ १४ ॥
इति चुल्लीप्रभेदेषु मन्दिराणि दशाष्ट च ।
ब्रूमः पक्षघ्नसंबद्धगृहनामानि सम्प्रति ॥ १५ ॥
राक्षसं *ध्वान्तसंहारं देवारि सुरदारु[8]णम् ।
घोषणं व्याघ्रशार्दूले शोषणाख्यं विशोषणम् ॥ १६ ॥
मत्तदं च निरानन्दं शाकुनं विघ्ननिर्घृणे ।
रिपु[9]संहृदपक्षघ्ने सुत[10]घ्नं वैरिपूरणम् ॥ १७ ॥
इत्यष्टादश पक्षघ्नभेदाः प्रोक्ता यथाक्रमम् ।
हिरण्यनाभभेदेषु धन्यं जाम्बूनदं गृहम् ॥ १८ ॥
आद्याद्याभिश्चतसृभिर्भूषाभिरुपलक्षितम् ।
यत्राद्याद्द्वित्रिपञ्चभ्यो हिरण्यं नाम तच्छुभम् ॥ १९ ॥
पञ्चम्याद्याद्वितुर्याभिः स्याद् रुक्मं रुक्मदं गृहम् ।
आद्यात्रितुर्यापञ्चम्यो यत्र तद्धेमसंज्ञितम् ॥ २० ॥

१ ख. चन्द्रमेव च । २ द. ख. सारभांडं । ३ ख. शतच्छत्रं । ४ द. ख. सन्नासं । ५ द. ख. नतं । ६ द. दारुणं । ७ द. ख. कुन्दरं । ८ द. °दारणम् । ९ द. ख. °सहृदपक्षघ्न° । १० द. ख. सुतघ्नात्परि° । * लक्षणे तु ध्वान्तसंघातमिति ख. पुस्तके खदयोश्चान्नसंहारमिति लक्ष्ये पठ्यते ।

द्वित्रितुर्यापञ्चमीभिः कनकं कनकावहम् ।
साद्याभिर्द्वित्रिषष्ठीभिः काञ्चनं काञ्चनप्रदम् ॥ २१ ॥
आद्याद्वितुर्याषष्ठीभिः स्वर्णं स्वर्णविवृद्धये ।
सुवर्णमाद्यात्रिचतुःषष्ठीभिः स्यात् सुवर्णदम् ॥ २२ ॥
स्याद् द्वित्रितुर्याषष्ठीभिः सन्तापं तापशान्तिकृत् ।
आद्याद्विपञ्चमीषष्ठ्यो यत्र तत् सारमुत्तमम् ॥ २३ ॥
चामीकरं त्रिषष्ठ्याद्यापञ्चमीभिर्गृहोत्तमम् ।
द्वित्रिषट्पञ्चमीभिः स्यात् तपनं नाम मन्दिरम् ॥ २४ ॥
षट्तुर्याद्यापञ्चमीभिस्तापनीयमुदाहृतम् ।
शातकुम्भं द्विषट्पञ्चचतुर्थीभिर्भवेद् गृहम् ॥ २५ ॥
हिरण्यनाभं त्रिचतुःपञ्चषष्ठीभिरीरितम् ।
कल्याणमाद्यात्रिचतुःपञ्चषष्ठीभिरुच्यते ॥ २६ ॥
षट्पञ्चद्वित्रितुर्याभिर्भवेद् भूषणसंज्ञितम्[1] ।
आद्याद्वित्रिचतुःपञ्चषष्ठीभि र्भूतभूषणम्‡ ॥ २७ ॥
अथ सुक्षेत्रभेदानां लक्षणान्यभिदध्महे ।
यत्राद्याद्वित्रितुर्याभिस्तन्नागं नाम मन्दिरम् ॥ २८ ॥
यत्राद्याद्वित्रिपञ्चभ्यस्तत् सूर्यप्रभमुच्यते ।
आद्याद्वितुर्यापञ्चभ्यो यत्र तन्मत्तवारणम् ॥ २९ ॥
आद्यात्रितुर्यापञ्चभ्यो यत्र तत् केसरीं विदुः ।
वासवं पञ्चमीतुर्याद्वितीयाभिस्तदुच्यते ॥ ३० ॥
षष्ठ्याद्यात्रिद्वितीयाभिरिन्द्रमन्दिरमीरितम् ।
आद्याद्वितुर्याषष्ठीभिर्हरिसंज्ञमुदाहृतम् ॥ ३१ ॥
आद्यात्रितुर्याषष्ठीभिर्हंससंज्ञं निवेशनम् ।
षष्ठीद्वित्रिचतुर्थीभिः सारसं नामतो भवेत् ॥ ३२ ॥
आद्याद्विपञ्चषष्ठीभिः कथयन्तीह कुञ्जरम् ।
आद्यात्रिपञ्चषष्ठीभिर्विज्ञेयं तोयदं गृहम् ॥ ३३ ॥

---

1 द. °द्वि° । ‡ लक्ष्ये तु भूतिभूषणमिति पठ्यते ।

मेघमालं त्रिषट्पञ्चद्वितीयाभिरुदाहृतम् ।
धारासारं चतुःपञ्चषडाद्याभिर्भवेद् गृहम् ॥ ३४ ॥
द्विचतुःपञ्चषष्ठीभिर्महोदरमिति स्मृतम् ।
कर्दमं नाम षट्पञ्चत्रितुर्याभिर्जयावहम् ॥ ३५ ॥
षट्पञ्चतुर्यात्र्याद्याभिः सुक्षेत्रं स्याद् धनप्रदम् ।
द्वित्रिषट्पञ्चतुर्याभिर्भवेत् प्रकरमृद्धिदम् ॥ ३६ ॥
आद्याभिश्च षडेताभि(?)र्विज्ञेयं धान्यपूरकम् ।
अष्टादशैते सुक्षेत्रगृहभेदाः प्रकीर्तिताः ॥ ३७ ॥
आद्याद्वित्रिचतुर्थीभिर्मूषाभिः स्याद् भुजङ्गमम् ।
निर्जीवमाद्यापञ्चत्रि[1]द्वितीयाभिर्निवेशनम् ॥ ३८ ॥
आद्याद्विपञ्चतुर्याभिर्वहन्तीभिर्वि ?( दन्तीह वि )हङ्गमम् ।
पञ्चाद्यात्रिचतुर्थीभिर्मूषाभिर्नकुलं विदुः ॥ ३९ ॥
पञ्चद्वित्रिचतुर्थीभिः पन्नगं नामतो भवेत् ।
शतच्छिद्रं षडाद्यै[2]त्रिद्वितीयाभिर्भवेद् गृहम् ॥ ४० ॥
आद्याद्वितुर्याषष्ठीभिः सर्पमित्यभिधीयते ।
आद्यात्रिषट्चतुर्थीभिः कोपमित्यभिशब्दितम् ॥ ४१ ॥
षट्चतुस्त्रिद्वितीयाभिर्भवेद् वेश्म भगन्दरम् ।
आद्याद्विपञ्चषष्ठीभिरुद्वेजनमुदाहृतम् ॥ ४२ ॥
सन्न्या[3]समाद्यापञ्चत्रिषष्ठीभिर्भवनाधमम् ।
द्वित्रिषट्पञ्चमीभिस्तु §निस्तोयमभिधीयते ॥ ४३ ॥
तुर्याद्यापञ्चषष्ठीभिः करुणाननमुच्यते ।
द्विचतुःपञ्चषष्ठीभिर्वारणं मुखवारणम् ॥ ४४ ॥
त्रिचतुःपञ्चषष्ठीभिर्दारणं श्रीविदारणम् ।
चुल्ल्याद्यात्रिचतुःपञ्चषष्ठीभिर्वित्तनाशनम् ॥ ४५ ॥

---

१ खदयोर्लुप्तम् 'द्विती......पञ्चाद्यात्रि' श्लो. ३९ उत्तरार्धं । २ द. ख. षडाद्याभिर्द्विती° ।
३ द. ख. सन्नास° । § लक्ष्यपाठानुरोधेन निस्तोषमिति पाठ्यम् ।

षट्पञ्चद्वित्रितुर्याभिः ककुदं नाम मन्दिरम् ।
कन्दरं षट्चतुःपञ्चत्रिद्व्याद्याभिर्गृहाधमम् ॥ ४६ ॥
अथाष्टादश कथ्यन्ते भेदाः पक्षघ्नसंश्रयाः ।
तेषु राक्षसमाद्याद्द्वित्रिचतुर्थीभिरुच्यते ॥ ४७ ॥
पञ्चाद्याद्द्वितृतीयाभिर्ध्वान्तसंघातमीरितम् ।
पञ्चाद्याद्द्विचतुर्थीभिर्दैवारीति निगद्यते ॥ ४८ ॥
आद्यात्रिपञ्चतुर्याभिर्विज्ञेयं देवदारुणम् ।
पञ्चत्रिद्विचतुर्थीभिर्घोषणं दुःखघोषणम्[1] ॥ ४९ ॥
षडाद्याद्द्वितृतीयाभिर्व्याघ्रमित्यभिधीयते ।
आद्याद्द्वितुर्याषष्ठीभिः शार्दूलं स्यान्निवेशनम् ॥ ५० ॥
आद्यात्रितुर्याषष्ठीभिः शोषणं पुत्रशोषणम् ।
षट्तुर्याद्द्वितृतीयाभिर्विजानीयाद् विशोषणम् ॥ ५१ ॥
आद्याद्द्विपञ्चषष्ठीभिर्मत्तदं नाम मन्दिरम् ।
निरानन्दाख्यमाद्यात्रिपञ्चषष्ठीभिरुच्यते ॥ ५२ ॥
पञ्चषड्द्वितृतीयाभिः शाकुनं नामतो भवेत् ।
विघ्नमाद्याचतुःपञ्चषष्ठीभिर्विघ्नवर्धनम् ॥ ५३ ॥
निर्घृणं षट्चतुःपञ्चद्वितीयाभिरसौख्यकृत् ।
त्रिचतुःपञ्चषष्ठीभिर्वदन्ति रिपुसंहृदम् ॥ ५४ ॥
षट्पञ्चतुर्यात्र्या[द्या]भिः पक्षघ्नं सुतनाशनम् ।
षट्पञ्चद्वित्रितुर्याभिः सुतघ्नं सुतसूदनम् ॥ ५५ ॥
षट्पञ्चद्वित्रितुर्याद्या यत्र तद् वैरिपूरणम् ।
पक्षघ्नस्यानुगान्येवं गृहाण्यष्टादश क्रमात् ॥ ५६ ॥
चतुराद्यास्त्रिशालेषु मूषा बाह्या न चान्तरा ।
स्याद् विनाद्यां द्वितीयां च त्रिशालं पञ्चभद्रकम् ।
बाह्यतः क्रममुत्सृज्य त्रिशालविधिरीरितः ॥ ५७ ॥

---

१ क. पोषणम् ।

[1]हिरण्यनाभादिनिकेतनानां चतुष्टयस्यैवममी प्रकाराः ।
द्विसप्ततिः कृत्स्नतयोपदिष्टाः प्रत्येकमष्टादशभेदक्लृप्ताः ॥ ५८ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
द्वासप्ततित्रिशाललक्षणं नामैकविंशोऽध्यायः ॥

---

## अथ द्विशालगृहलक्षणं नाम द्वाविंशोऽध्यायः ॥

द्विशालानि द्विपञ्चाशत् स्युः शुभान्यशुभानि च ।
लक्षणानि क्रमात् तेषामिदानीं सम्प्रचक्ष्महे ॥ १ ॥
सिद्धार्थं यमसूर्यं च दण्डाख्यं वातसंज्ञितम् ।
चुल्ली काचं च मुख्यानि द्विशालानि षडेव हि ॥ २ ॥
अनेकभेदभिन्नानि लघुप्रस्तारयोगतः ।
मूषाभेदक्रमेण स्युर्भेदाभेदक्रमेण तु ॥ ३ ॥
तथा निलीनकरणाद् वीथिकालिन्दमार्गतः ।
प्राग्ग्रीवादिविधानेन द्वैशाल्यादिविपर्ययात् ॥ ४ ॥
यथासम्भवमेतानि कथयामः समासतः ।
निर्वाहतश्च मूषाणामनिर्वाहाच्च नामतः ॥ ५ ॥
छन्दतो गुणतो रूपादशुभानि शुभानि च ।
हितार्थाय नरेन्द्राणां वर्णिनां लिङ्गिनामपि ॥ ६ ॥
हस्तिनी महिषी चेति द्वे शाले यत्र वेश्मनि ।
तत् सिद्धार्थमिति ज्ञेयं वित्तसम्पत्तिकारकम् ॥ ७ ॥
मृत्युदं महिषीगावीभ्यां भवेद् यमसूर्यकम् ।
दण्डं स्याच्छगलीगावीशालाभ्यां दण्डभीतिदम् ॥ ८ ॥
वातं करेणुच्छगलीयुक्तमुद्वेगकारकम् ।
महिष्यजाभ्यामुद्वेगकरी चुल्ली धनापहा ॥ ९ ॥

---

१ द. हिरण्यतालादि° ।

काचं करेणुगावीभ्यां सुहृत्प्रीतिविनाशनम् ।
एकमूषममूषं च न द्विशालेषु कारयेत् ॥ १० ॥
व्यत्यासात् काचचुल्ल्योश्च सर्वाभिस्तिसृभिस्तथा ।
चत्वार्याद्यानि भिद्यन्ते लघुप्रस्तारयोगतः ॥ ११ ॥
प्रत्येकमेकादशधा मन्दिराण्यभिधानतः ।
अन्ये चतुर्धा भिद्येते प्रत्येकं द्वे निवेशने ॥ १२ ॥
एषां मूषा भिदाभेदात् तद्वाह्यावाहहेतुकाः ।
वसुधारं भवेत् तेषामाद्यं सिद्धार्थकं ततः ॥ १३ ॥
कल्याणकं [1]शाश्वतं च शिवं कामप्रदं तथा ।
स्त्रीदं शान्तं निष्कलङ्कं धनाधीशं कुबेरकम् ॥ १४ ॥
सिद्धार्थमनुजान्येवमेतान्येकादश क्रमात् ।
संहारं यमसूर्यं च कालं वैवस्वतं यमम् ॥ १५ ॥
करालं विकरालं च कबन्धं मृतकं [2]शवम् ।
यमसूर्यस्य भेदाः स्युः सद्मनो महिषं तथा ॥ १६ ॥
प्रचण्डचण्डे दण्डाख्यमुद्दण्डं काण्डकोटरे ।
विग्रहं निग्रहं [3]धूम्रं निर्धूमं दन्ति[4]दारुणम् ॥ १७ ॥
एकादशामी दण्डस्य भेदा दण्डभयप्रदाः ।
मरुत्पवनवाताख्यान्यनिलं सप्रभञ्जनम् ॥ १८ ॥
घना[5]र्यम्बुदविध्वंसि * प्रलयं कलहं कलिः ।
कलिचुल्ली च वातस्य भेदा उद्वेगदायकाः ॥ १९ ॥
रोगं चुल्ल्यनलं भस्म चुल्ल्या भेदचतुष्टयम् ।
काचस्य तु च्छलं काचं कुलघ्नं † च विरोधि च ॥ २० ॥
द्वापञ्चाशद् द्विशालानाममी भेदाः प्रकीर्तिताः ।
ब्रूमः साम्प्रतमेतेषां लक्षणानि पृथक् पृथक् ॥ २१ ॥

---

१ द. शाश्वतकं । २ क. द. शिवम् । ३ क. द. धूमं । ४ द. °दारणाम् । ५ क. घनार्या° ।

* लक्षणश्लोके एतत्स्थाने रोगमिति पठ्यते । † लक्षणपाठरीत्या तु कुलहमिति पठ्यम् ।

आद्याद्द्वितीये वहतो यत्र मूषे धनप्रदे ।
वसुधाराभिधानं तद् गृहं सर्वार्थकानुगम् ॥ २२ ॥
आद्यातृतीये वहतो यत्र सिद्धार्थकं[1] हि तत्[2] ।
सर्वोपद्रवनिर्मुक्तं सिद्धिकृच्चिन्तितार्थकृत् ॥ २३ ॥
द्वितृतीयं वहन्मूषं भवेत् कल्याणमृद्धिकृत् ।
वहदाद्यचतुर्थीकं शाश्वतं गृहमुत्तमम् ॥ २४ ॥
शिवं द्वितीया[3]तुर्याभ्यां वहन्तीभ्यां सुखप्रदम्[4] ।
कामदं त्रिचतुर्थीभ्यां भवेच्चिन्तितकामदम् ॥ २५ ॥
आद्याद्याभिसु(स्तु) तिसृभिः स्त्रीप्रदं संप्रदं(?) प्रभोः ।
आद्याद्द्वितीयातुर्याभिः शान्तं शान्तिप्रदायकम् ॥ २६ ॥
आद्यातृतीयातुर्याभिर्निष्कलङ्कं समृद्धिकृत् ।
द्वितृतीयाचतुर्थीभिर्धनेशं धनवर्द्धनम् ॥ २७ ॥
आद्याद्याभिश्चतसृभिः कुबेरं वित्तवृद्धिकृत् ।
यमसूर्यप्रभेदेषु ब्रूमो लक्ष्म फलानि च ॥ २८ ॥
आद्याद्द्वितीयामूषाभ्यां संहारं स्वामिनाशनम् ।
गृहमाद्यातृतीयाभ्यां मृत्युदं यमसूर्यकम् ॥ २९ ॥
द्वितृतीयं वहन्मूषं कालं योषिद्विनाशनम् ।
वैवस्वतं वहत्तुर्यप्रथमं रोगकारकम् ॥ ३० ॥
यमालयं द्वितुर्याभ्यां स्वामिनो यमदर्शनम्[5] ।
करालं त्रिचतुर्थीभ्यां भर्तुः प्राणविनाशनम्[6] ॥ ३१ ॥
आद्याभिस्तिसृभिः स्वामिनाशनं विकरालकम् ।
आद्याद्द्वितीयातुर्याभिः कबन्धं भर्तृनाशनम् ॥ ३२ ॥
आद्यां[7]तृतीयातुर्याभि भर्तृघ्नं मृतकालयम् ।
शवं द्वित्रिचतुर्थीभिः स्वामिनो मरणप्रदम् ॥ ३३ ॥

१ क. द. सिद्धार्थ° । २ द. सिद्धार्थदं । ३ द. द्वितीय° । ४ द. शुभं गृहम् ।
५ द. ख. °दर्शकम् । ६ द. °प्रणाशनम् । ७ क. द्वि° ।

आद्याद्याभिश्चतसृभिः स्वामिघ्नं महिषं विदुः ।
प्रचण्डं दण्डभेदेषु पूर्वया सद्वितीयया ॥ ३४ ॥

गृहमादौ विजानीयाद् भर्तुर्नृपभयप्रदम् ।
चण्डमाद्यातृतीयाभ्यां चण्डदण्डभयप्रदम् ॥ ३५ ॥

दण्डं स्याद् द्वितृतीयाभ्यां राजदण्डाय दारुणम् ।
उद्दण्डमाद्यातुर्याभ्यां स्वामिनो दण्डभीतिदम् ॥ ३६ ॥

काण्डं द्वितीयातुर्याभ्यां काण्डवच्छेदकारकम् ।
कोटरं त्रिचतुर्थीभ्यां स्वामिनो विग्रहावहम् ॥ ३७ ॥

प्रथमा(द्वि)तृतीयाभिर्विग्रहं वधबन्धकृत् ।
आद्याद्वितीयातुर्याभिर्निग्रहं विग्रहावहम् ॥ ३८ ॥

आद्यातृतीयातुर्याभिर्धूम्रं सर्वधनापहम् ।
द्वितृतीयाचतुर्थीभिर्निर्धूमं धननाशनम् ॥ ३९ ॥

आद्याद्याभिश्चतसृभिर्दन्तिदारुणमर्थहृत् ।
आद्याद्वितीयामूषाभ्यां[1] वातभेदेषु मन्दिरम् ॥ ४० ॥

मरुत्संज्ञं भवेत् तत्र वसतां कलहः सदा ।
उद्वेगकारि पवनं तृतीयाद्योपलक्षितम् ॥ ४१ ॥

वाताख्यं द्वितृतीयाभ्यां सदा सन्तापकारकम् ।
सन्तापोद्वासकार्याद्यातुर्याभ्यामनिलं भवेत् ॥ ४२ ॥

प्रभञ्जनं द्वितुर्याभ्यां शोकसन्तापकारकम् ।
तृतीयया चतुर्थ्या च घनार्युद्वेगकारकम् ॥ ४३ ॥

आद्यया द्वितृतीयाभ्यां रोगं कार्यार्थनाशनम् ।
आद्याद्वितीयातुर्याभिः प्रलयं चित्ततापकृत् ॥ ४४ ॥

आद्याद्वितीयातुर्याभिः कलहं कलहावहम् ।
द्वितृतीयाचतुर्थीभिः कलिः[2] सन्तापकारकम् ॥ ४५ ॥

---

१ द. ख. °मूषाभिः । २ क. द. कलिसं°

आद्याद्याभिश्चतसृभिः कलिचुल्ली धनापहा ।
रोगमाद्याद्द्वितीयाभ्यां चुल्लीभेदेषु शोकदम् ॥ ४६ ॥
स्याद् द्वितीयातृतीयाभ्यां चुल्ली वित्तविनाशनी ।
वसुघ्नमनलं[1] नाम त्रितुर्याभ्यां निवेशनम् ॥ ४७ ॥
वित्तघ्नमाद्यातुर्याभ्यां भस्माख्यं स्वामिनः सदा ।
उदङ्मुखाभ्यां[2] मूषाभ्यां काचभेदेषु मन्दिरम् ॥ ४८ ॥
छलं नाम भवेन्नित्यं बन्धुवर्गापमानकृत् ।
दक्षिणोत्तरमूषाणां पौरस्त्ये वहतो यदि ॥ ४९ ॥
† काश्चं नाम तदा वेश्म सज्जनानन्दकारकम् ।
मूषाभ्यां दक्षिणाभ्यां स्यात् कुलहं त्रिकुलक्षयम् ॥ ५० ॥
दक्षिणोत्तरमूषाणां पाश्चात्ये वहतो यदि ।
*विरोधं नाम तद्वेश्म सर्वलोकविरोधकृत् ॥ ५१ ॥
उक्तान्येवं द्विपञ्चाशद् द्विशालानां समासतः ।
एनानि[3] मूषावहनप्रभेदात् फलप्रभेदाच्च निदर्शितानि ।
द्विशालवेश्मान्यधुनैकशालान्युदाह्रियन्ते भवनानि सम्यक् ॥५२॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
द्विशालगृहलक्षणं नाम द्वाविंशोऽध्यायः ॥

---

## अथ एकशालालक्षणफलादि नाम त्रयोविंशोऽध्यायः ।

गृहाणामेकशालानां वक्ष्यामो लक्षणान्यथ ।
शस्तानां निन्दितानां च यथावदनुपूर्वशः ॥ १ ॥
विन्यसेच्चतुरः पूर्वं गुरून्[4] वर्णान् यथाविधि ।
एभ्य एव प्रसूयन्ते भेदाः षोडश वेश्मनाम् ॥ २ ॥

---

१ क. °नि°। २ क. °खौ°। ३ द. एतानि। ४ क. °रुव°।
† लक्ष्यपाठानुरोधात् काचमिति पाठ्यम्  * लक्ष्ये विरोधीति पठ्यते ।

गुरोरधो लघुं न्यस्येत् पूर्वं शेषं यथोपरि ।
गुरुभिः पूरयेत् पश्चाद् यावत् स्युर्लघवोऽखिलाः ॥ ३ ॥

विद्यादलिन्दान् सर्वेषु लघुस्थानेषु पण्डितः ।
सव्यावर्तं[1] गृहमुखादेतांश्च विनियोजयेत् ॥ ४ ॥

एषामलिन्दसंयोगाद्[2] भवनानां पृथक् पृथक् ।
नामानि गुणदोषाश्च वक्ष्यन्तेऽनुक्रमादतः ॥ ५ ॥

ध्रुवं धन्यं जयं नन्दं खरं कान्तं मनोरमम् ।
सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम् ॥ ६ ॥

आक्रन्दं विपुलं चैव विजयं गृहमुत्तमम् ।
ध्रुवे जयमवाप्नोति[3] धन्ये धान्यागमो भवेत् ॥ ७ ॥

जये सपत्नान् जयति नन्दे सर्वाः समृद्धयः ।
खरमायासदं वेश्म कान्ते च लभते श्रियम् ॥ ८ ॥

आयुरारोग्यमैश्वर्यं तथा वित्तस्य सम्पदः ।
मनोरमे मनस्तुष्टिर्गृहभर्तुः प्रकीर्तिता ॥ ९ ॥

सुमुखे राज्यसन्मानं दुर्मुखे कलहः सदा ।
क्रूरव्याधिभयं क्रूरे सुपक्षं गोत्रवृद्धिकृत् ॥ १० ॥

धनदे हेमरत्नादि गाश्चैव लभते पुमान् ।
क्षयं सर्वक्षयं गेहमाक्रन्दं ज्ञातिमृत्युदम् ॥ ११ ॥

आरोग्यं विपुले ख्यातिर्विजये सर्वसम्पदः ।
यदि धन्ये द्वितीयोऽपि मुखालिन्दः प्रयुज्यते ॥ १२ ॥

तद् गृहं रम्यनामेह भर्तुः सौभाग्यकारकम् ।
मुखालिन्देन नन्दाख्यं द्वितीयेन सुयोजितम् ॥ १३ ॥

तच्छ्रीधरमिति ख्यातं तस्मिन् श्रीर्नित्यमाविशेत् ।
अलिन्दश्चेद् द्वितीयोऽपि कान्तस्यास्ये निवेश्यते ॥ १४ ॥

---

१ द. सव्यावृत्तं । २ ख. °व° । ३ द. ख. ध्रुव° ।

मुदितं तद् भवेद् भर्तुर्भूतिकृद् भवनोत्तमम् ।
सुमुखस्य यदालिन्दो वक्त्रेऽन्यो विनिवेश्यते ॥ १५ ॥
वर्धमानं तदा तत् स्यात् स्वामिलक्ष्मीविवर्धनम् ।
क्रूरं युक्तं द्वितीयेन मुखालिन्देन मन्दिरम् ॥ १६ ॥
करालं तद् विजानीयाद् भर्ता तस्य विनश्यति ।
अलिन्देन द्वितीयेन धनदं योजितं पुनः ॥ १७ ॥
सुनाभं तद् भवेत् तस्मिन् पशून् पुत्रानवाप्नुयात् ।
आक्रन्दस्य पुरोभागे यद्यलिन्दः कृतोऽपरः ॥ १८ ॥
ध्वाङ्क्षसंज्ञं गृहं तज्ज्ञा निन्दितं प्रवदन्ति तत् ।
द्वितीयालिन्दघटना विजयस्य मुखे यदि ॥ १९ ॥
तत् समृद्धमिति[1] ख्यातं गृहं स्यात् पुण्यकर्मणाम् ।
यान्युक्तानि ध्रुवादीनि पूर्ववेश्मानि षोडश ॥ २० ॥
शालाविभागं ज्ञात्वैषां तिर्यक् षड्दारु विन्यसेत् ।
षोडशान्ये च भेदाः स्युः संज्ञाश्चैषामनुक्रमात् ॥ २१ ॥
सुन्दरं वरदं भद्रं प्रमोदं विमुखं शिवम् ।
सर्वलाभं विशालं च विलक्षमशुभं ध्वजम् ॥ २२ ॥
उद्द्योतं भीषणं शून्यमजितं कुलनन्दनम् ।
नामभिर्वेश्मनामेषां गुणदोषान् प्रकल्पयेत् ॥ २३ ॥
यथार्थनामान्येतानि यस्मात् प्रोक्तान्यविस्तरात् ।
एभ्य एवापराणि स्युर्वेश्मान्यन्यानि[2] षोडश ॥ २४ ॥
शालापुरोविनिर्युक्ततिर्यक्षड्दारुकारणात् ।
हंसं सुलक्षणं सौम्यं जयन्तं भव्यमुत्तमम् ॥ २५ ॥
रुचिरं सम्भृतं क्षेममाक्षेमं सुकृतं वृषम् ।
उच्छन्नं व्ययमानन्दं सुनन्दं चेति कीर्तितम् ॥ २६ ॥
एषामपि यथार्थत्वाद् गुणदोषान् निरूपयेत् ।
शालामध्ये च तिर्यक्स्थं षड्दारु विनिवेशयेत्[3] ॥ २७ ॥

---

१ क. ख. द. समृद्धि° । २ द. °न्येतानि । ३ द. भित्तिश्चैव निवेशयेत् ।

विहाय मर्मणां वेधानमीषामेव वेश्मनाम्।
षोडशैव परेऽपि स्युर्भेदास्तांश्च यथाक्रमम्॥ २८॥

कथयामः समासेन यथार्थैरेव नामभिः।
अलङ्कृतमलङ्कारं रमणं पूर्णमम्बरम्॥ २९॥

पुण्यं सुगर्भं कलशं दुर्गतं रिक्तमीप्सितम्।
सुभद्रं वन्दितं[1] दीनं विभवं सर्वकामदम्॥ ३०॥

शालान्तः स्थितषड्दारुपश्चादपवरैः कृतैः।
एभ्योऽपरेऽपि निर्दिष्टा भेदाः षोडश वेश्मनाम्॥ ३१॥

प्रभवं भाविकं क्रीडं तिलकं क्रीडनं सुखम्।
यशोदं कुमुदं कालं भासुरं सर्वभूषणम्॥ ३२॥

वसुधारं धनहरं कुपितं वित्तवृद्धिदम्[2]।
कुलोदयं च विज्ञेयं गुणदोषास्तु पूर्ववत्॥ ३३॥

अनन्तरमिहोक्तानि यानि वेश्मानि षोडश।
प्रत्येकं तान्यलिन्देन परिकु(ष्कु)र्याच्चतुर्दिशम्[3]॥ ३४॥

तद्भेदेभ्यः प्रसूतानि कथयामो विधानतः।
चूडामणिं प्रभद्रं च क्षेमं शेखरमद्भुतम्॥ ३५॥

विकाशं भूतिदं हृष्टं विरोधं कालपाशकम्।
निरामयं सुशालं च रौद्रं मोघं मनोरथम्॥ ३६॥

सुभद्रं चेति सदनं संज्ञाभिरुपलक्षयेत्।
वेश्मनामेकशालानां शतं स्याच्चतुरुत्तरम्॥ ३७॥

कथितं तच्च संस्थानैर्नामभिश्च यथाक्रमम्।
हस्तिनी महिषी गावी छागली च यथाक्रमम्॥ ३८॥

तद्द्वयेन द्विपूर्वाणि ब्रूमो नामानि वेश्मनाम्।
द्विहंसकं द्विचक्राह्वं द्विसारसमथापरम्॥ ३९॥

---

१ द. ख. वञ्चितं। २ द. वृत्ति°। ३ द. परिकुर्याच्च तिर्यकम्।

द्विकोकिलं बुधैः ख्यातं हस्तिन्यादेः क्रमाद् गृहम् ।
त्रीण्यायुःपशुधान्यानां क्रमादाद्यानि वृद्धये ॥ ४० ॥
एतेषामेव नाशाय भवेद् वेश्म द्विकोकिलम् ।
इत्येकशालभवनान्युदितान्यलिन्द-
षड्दारुकापवरकावरणादिभेदैः ।
संज्ञा च लक्षणफलैः करिणीमुखाभिः
शालाभिरेवमपराणि च युग्मजानि[1] ॥ ४१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
एकशाललक्षणफलद्विहंसकादिलक्षणफलानि नाम त्रयोविंशोऽध्यायः ।

---

## अथ द्वारपीठभित्तिमानादिकं नाम चतुर्विंशोऽध्यायः ।

कर्णशालानिबद्धानि मण्डपैरन्तरस्थितैः ।
असम्बाधाजिराणि स्युर्हलानि दश पञ्च च ॥ १ ॥
ईश्वरं वृषभं चन्द्रं रोगं पापं भयप्रदम् ।
नन्दनं खादकं ध्वाङ्क्षं विकृतं विलयं क्षयम्[2] ॥ २ ॥
याम्यं च विपरीतं च भद्रकं चेति नामतः ।
एतानि हलकाख्यानि विद्याद् गेहानि यत्नतः ॥ ३ ॥
अग्निरक्षोनिलेशानकोणगानां[3] यथाक्रमम् ।
एकद्वित्रिचतुर्थाख्या हलकानां प्रकल्पयेत् ॥ ४ ॥
अनेन क्रमयोगेन च्छन्दोभेदा भवन्ति च ।
तत्राद्येनेश्वरं नाम हलकेन गृहं भवेत् ॥ ५ ॥
सर्वलक्षणसंयुक्तं सर्ववृद्धिफलप्रदम् ।
वृषभं तु द्वितीयेन पुत्रदारविवर्धनम् ॥ ६ ॥

---

१ क. युग्मलाभिः, द. ख. युग्मितानि । २ द. क्षमम् । ३ द. ख. कोणे भागां ।

प्रथमं च द्वितीयं च गृहे तु हलकं यदि ।
चन्द्रं वृद्धिकरं नृणां सर्वलक्षणसंयुतम् ॥ ७ ॥
वायव्यं हलकं यत्र रोगं रोगविवर्धनम्[1] ।
प्रथमं च तृतीयं च गृहे तु हलकं यदि ॥ ८ ॥
पापं[2] तन्नामतो वास्तु सर्वपापप्रयोजकम् ।
पितृरोगोक्तकोणाभ्यां भयदं रोगमृत्यवे ॥ ९ ॥
पितृरोगाग्निकोणेषु नन्दनं गृहमादिशेत् ।
सुखमर्थप्रदं शान्तं हलकं परिकीर्तितम् ॥ १० ॥
ईशान्यां तु चतुर्थेन खादकं खादकं गृहम् ।
लाङ्गलाद्या यदा शाला ईशान्यां च यदापरा ॥ ११ ॥
ध्वाङ्क्षं तन्नामतो वास्तु दरिद्राणां विधीयते ।
द्वितीया च चतुर्थी च शाला लाङ्गलके यदि ॥ १२ ॥
विकृतं विकृतावासं प्रवासोऽत्र कुटुम्बिनः ।
आद्या शाला द्वितीया च चतुर्थी च यदा पुनः ॥ १३ ॥
विलयं हानिदं नित्यं गृहं तद् वित्तनाशनम् ।
वायव्यं हलकं यस्मिन्नैशान्यां[3] च यदा पुनः ॥ १४ ॥
क्षयं क्षयकरं नित्यं[4] हलकेषु गृहं भवेत् ।
अग्निवायुमहेशानां शाला लाङ्गलके यदि ॥ १५ ॥
याम्यं मृत्युकरं नृणां न तत् कुर्यात् कदाचन ।
मारुते नैर्ऋतैशान्योः शालाकर्णेषु लाङ्गलम् ॥ १६ ॥
विपरीतं व्याधिकरं नृणां नाशकरं तथा ।
चतस्रो हलके यत्र प्रादक्षिण्यमुखाः[5] स्थिताः ॥ १७ ॥
भद्रकं नाम तद् वास्तु सर्वभद्रप्रयोजकम् ।
द्वारोच्छ्रायं सविस्तारं तलोच्छ्रायं च वेश्मनाम् ॥ १८ ॥

१ ख. रोगभयप्रदम् । २ क. पापकं नामतो । ३ क. यस्मिन्नीशान्यां । ४ द. ख. ज्ञेयं । ५ द. ख. मुखास्तथा ।

पीठस्य च समुत्सेधं भित्तिविस्तारमेव च ।
तथा दारुकलां(ला) चैव या प्रोक्ता गृहकर्मणि ॥ १९ ॥
एकशालाविधानं च तेषां नामानि यानि च ।
तत् सम्प्रति प्रवक्ष्यामो यथावदनुपूर्वशः ॥ २० ॥
षोडशानां समुदयो[1] विंशतेरपि चापरः ।
विंशतेः[2] सचतुष्कायास्तथाष्टाविंशतेरपि ॥२१ ॥
द्वात्रिंशतोऽपरश्चेति † पञ्च वर्गाधिपा मताः ।
शालाचतुर्थभागेन भित्तिविस्तार इष्यते ॥ २२ ॥
वर्गेषु भित्तिलक्ष्मोक्तं षोडशादिषु पञ्चसु ।
मर्मपीडा भवेद् यत्र भित्तिस्तम्भतुलादिभिः ॥ २३ ॥
कुर्वीत ह्रासं[3] वृद्धिं वा तत्र मर्मव्यथां त्यजन्[4] ।
अतिसंवृत[5]विस्तारं कार्यमुद्दिश्य बुद्धिमान् ॥ २४ ॥
शालाप्रविष्टं कुर्वीत ‡ हीनवास्तुष्वलिन्दकम् ।
चतुरश्रीकृते क्षेत्रे भूमिभागे समीकृते ॥ २५ ॥
उपरिष्टाद् भवेत् पीठं * तलादर्धसमुच्छ्रितम् ।
नियुक्ते तु ततः पीठे वास्तुविस्तारतोऽङ्गुलम् ॥ २६ ॥
प्रतिहस्तं समुद्धृत्य सप्तत्या सह योजयेत् ।
द्वारोच्छ्रायाः समाख्याता वर्गेषूक्तेषु पञ्चसु ॥ २७ ॥
उच्छ्रायार्धेन वैपुल्यमष्टांशेन विवर्जितम् ।
द्वारविस्तारपादांशे पट्टविस्तार इष्यते ॥ २८ ॥
विस्तारार्धेन बाहल्यं सार्धं[6] वेद्या तलोपरि ।
[7]उत्तरोत्तरवैपुल्यं कुर्याच्छाखावशाद् बुधः ॥ २९ ॥

१ द. ख. समुदायो । २ द. ख. विंशतेरपि चतुष्कायां । ३ क. ह्रासवृद्धिं । ४ क. त्यजेत् । ५ क. °त्त° । ६ द. ख. विस्तरार्धेन बाहल्यं सार्धपेद्यातलोम्बरे ( द. reads वेद्या ) । ७ द. उत्तरोम्बर°

† 'पञ्चसमुदायाः विप्रादीनां व्युत्क्रमेण यथा ( यथं ) योज्याः । व्यासस्येदं चेष्टमानम्' इति, ‡ 'पञ्च++++हीनावास्तुप्रमाणं तद्गृहं शालाख्यं तदन्तर्गतं षड्दारुकं कुर्यात्' इति, * 'तलशब्देन प्रथमभूम्युच्छ्रायः' इति च टिप्पणानि सन्ति क पुस्तके ।

वेद्या विस्तार[1]बाहल्ये विधेये शाखयोरपि ।
द्वारविस्तारपादेन मूले स्तम्भस्य विस्तृतिः ॥ ३० ॥

दशभागविहीनाग्रे पट्टः स्तम्भेन सम्मितः ।
स्तम्भाग्रस्य त्रिभागेन[2] पट्टकोटिर्विधीयते ॥ ३१ ॥

हीरग्रहणमायामे स्तम्भाग्रात् तु चतुर्गुणम् ।
पट्टान्यान्युद्भवेत्(?) तत्र व्यासबाहल्ययोस्तथा ॥ ३२ ॥

पट्ट[3]कोट्यर्धमुत्सेधादुत्सेधार्धेन निर्गतम् ।
तन्त्रकस्य प्रमाणं स्यादिति शास्त्रविदो विदुः ॥ ३३ ॥

द्रव्याण्युपर्युपर्यस्य परापरविभागतः ।
पट्टकोट्याश्चतुर्थेन प्रविभागेन ह्रासयेत् ॥ ३४ ॥

पूर्वामुखं गृहं यत्तु द्वारं माहेन्द्रसं[4]युतम् ।
हस्तिनी च भवेच्छाला तद् गृहं भद्रसंज्ञितम् ॥ ३५ ॥

भद्रं भद्रकरं भर्तुर्यशोबलविवर्धनम् ।
सिध्यन्ति चास्य कार्याणि भद्राख्ये वसतो गृहे ॥ ३६ ॥

दक्षिणाभिमुखं वेश्म द्वारं चास्य गृहक्षतम् ।
महिषी च भवेच्छाला तद् गृहं नन्दपीठकम् ॥ ३७ ॥

नन्दपीठगृहं पुंसां नित्यानन्दकरं स्मृतम् ।
सर्वसम्पद्गुणोपेतं धनधान्यविवर्धनम् ॥ ३८ ॥

वारुण्यभिमुखं सद्म द्वारं च कुसुमाह्वयम् ।
गावी चैव भवेच्छाला सौरभं तद्विदुर्बुधाः ॥ ३९ ॥

सौरभे नित्यहृष्टत्वं वसतां गृहमेधिनाम् ।
सफलं कृषिवाणिज्यं पुत्राश्च वशवर्तिनः ॥ ४० ॥

उत्तराभिमुखं धिष्ण्यं द्वारं भल्लाटसंयुतम् ।
छागली च भवेच्छाला पुष्कराख्यं तदुच्यते ॥ ४१ ॥

---

१ द. बाहल्ये । २ द. ख. त्रिभागोनां ३ द. ख. पट्टान्नान्याद्भवेत् । ४ द. ख. संमुखम् ।

शीलवान् नित्य[1]सन्तुष्टः सुहृत्सुजनवत्सलः ।
सुभगः पुष्कराख्ये च बहुपुत्रधनान्वितः ॥ ४२ ॥
भद्रं च नन्दपीठं च सौरभं पुष्करं तथा ।
प्रथमार्धे तु वर्गस्य प्रथमस्य प्रयोजयेत् ॥ ४३ ॥
सर्वभद्रादिकाः सर्वे निवेशा ये प्रकीर्तिताः ।
उत्पन्नास्ते विमानेभ्यः पञ्चभ्यः पञ्चपञ्चके ॥ ४४ ॥
द्वारस्य पीठस्य च मन्दिरेषु भित्तेश्च मानं कथितं क्रमेण ।
तथोदिता दारुकलास्तु सम्यक् प्रहीणवास्तोः सकलं च लक्ष्म ॥ ४५ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
द्वारपीठभित्तिमानदारुकलाहीनवास्तुलक्षणं नाम चतुर्विंशोऽध्यायः ॥

---

## अथ समस्तगृहाणां सङ्ख्याकथनं नाम पञ्चविंशोऽध्यायः ॥

वेश्मनां पञ्चशालानां कथ्यन्ते लक्षणान्यथ ।
चतुर्विंशतिसंयुक्तं सहस्रं तानि सङ्ख्यया ॥ १ ॥
गु[3]रूणां दशसङ्ख्यानां प्रस्तारस्य च कल्पनात् ।
गृहाणां पञ्चशालानां भेदा लघुविभागतः ॥ २ ॥
पञ्चशालं भवेद् योगाद् गृहयोर्द्वित्रिशालयोः ।
यद्वा योगाद् भवेदेतच्चतुःशालैकशालयोः ॥ ३ ॥
चतुर्णामपि वर्णानामिदं सद्म प्रशस्यते ।
हिरण्यनाभप्रभृति व[4]र्णानामिह वेश्मनाम् ॥ ४ ॥
सिद्धार्थादिसमायोगान्निष्पद्येत गृहाष्टकम् ।
योगाद्धिरण्यनाभस्य सिद्धार्थेन गृहं भवेत् ॥ ५ ॥

---

१ ख. संहृष्टसुहृत्स्वजन°, द. संहृष्टसुहृत्स्वजन° । २ द. उत्पन्ना ये । ३ द. ख. अयंश्लोको नास्ति । ४ द. ख. चतुर्णामि° ।

हेमकूटाख्यमस्यैव वातेन स्वर्णशेखरम् ।
सुक्षेत्रस्य च[1] सिद्धार्थसंयोगेन श्रियावहम् ॥ ६ ॥
तस्यैव यमसूर्येण भवेद् वेश्म महानिधिः ।
चुल्ल्यास्तु यमसूर्येण सदादीप्तं प्रजायते ॥ ७ ॥
दण्डसंयोगतस्तस्य चित्रभान्वभिधं भवेत् ।
पक्षघ्नस्य तु दण्डेन सदादोषं[2] विनिर्दिशेत् ॥ ८ ॥
पक्षघ्नस्यैव वातेन योगान्निर्विघ्नमुच्यते ।
न काचचुल्लीसंयोगस्त्रिशालादिषु शस्यते ॥ ९ ॥
अन्योन्यवीक्ष्यमाणानां[3] भेदास्तेनेह नोदिताः ।
एकशालयुतै (ते) र्भेदाः स्युश्चतुश्शालवेश्मनि ॥ १० ॥
चत्वारः पञ्चशालानां ब्रूमस्तेषां च विंशतिः ।
यदा भवत्यजा शाला सर्वतोभद्रवेश्मनां[4] ॥ ११ ॥
सुदर्शनमिति प्राहुः पञ्चशालं तदा गृहम् ।
तदेव करिणीयोगात् सुरूपमिति कथ्यते ॥ १२ ॥
सुन्दरं महिषीयोगाद् गावीयोगात्तु शोभनम् ।
वर्धमानस्य चैतासां शालानां योगतः क्रमात् ॥ १३ ॥
सुनाभं सुप्रभं योग्यं विनोदं च भवेद् गृहम् ।
नन्द्यावर्तेऽप्येवमेव शालायोगेन जायते ॥ १४ ॥
सुखदं[5] नन्दनं नन्दं पुण्डरीकं च मन्दिरम् ।
रुचकस्याप्यजादीनां योगेन स्युरनुक्रमात् ॥ १५ ॥
नामतो भद्ररुचिररोचिष्णूनि प्रहर्षणम् ।
स्वस्तिकेऽप्यनया युक्त्या भवेद् गृहचतुष्टयम् ॥ १६ ॥
घोषं सुघोषणं नन्दिघोषं[6] श्रीपद्ममेव च ।
विंशतिः सर्वतोभद्रप्रभृत्यालययोगतः ॥ १७ ॥

---

१ द. ख. स्वक्षेत्रस्य तु । २ द. ख. सदातोषं । ३ द. वक्ष्यमाणानां । ४ ख. नाम् । ५ द. सुनंदं । ६ शा. निन्दि° ।

जातानि पञ्चशालानि योग्यानि पृथिवीभुजाम् ।
पूर्वोक्तैरष्टभिः सार्धं स्यादष्टाविंशतिर्गृहैः ॥१८॥
† कथ्यते पञ्चशालानां मूषाभेदक्रमोऽधुना ।
विभद्रमेकं तत्रैकं[1] भद्राणि दशसङ्ख्यया ॥ १९ ॥
द्विभद्राणि पुनः पञ्चचत्वारिंशत् प्रचक्षते ।
त्रिभद्राणां शतं विंशत्युत्तरं द्वे दशोत्तरे ॥ २० ॥
चतुर्भद्रगृहाणां तु द्विपञ्चाशच्छतद्वयम् ।
गृहाणां पञ्चभद्राणां षड्भद्राणां दशोत्तरे ॥२१ ॥
द्वे शते सप्तभद्राणां स्याद् विंशत्युत्तरं शतम् ।
गृहाणामष्टभद्राणां चत्वारिंशच्च पञ्च च ॥ २२ ॥
दश स्युर्नवभद्राणि तथैकं दशभद्रकम् ।
एवं सहस्रमेकं स्याद् विंशतिश्च चतुर्युता ॥ २३ ॥
गृहाणां पञ्चशालानां मूषावहनसङ्ख्यया ।
अथ लक्ष्म च संख्यां च ब्रूमः षट्शालवेश्मनाम् ॥ २४ ॥
एकद्वित्रिचतुश्शालगृहाणां योजनान्मिथः ।
द्विशालस्यैकशालस्य त्रिशालस्य च योगतः ॥ २५ ॥
षट्शालं जायते वेश्म भेदास्तस्य तु षोडश ।
पक्षघ्नवातयोर्योगादेकशालगृहस्य च ॥ २६ ॥
स्यात् पङ्कजाङ्कुरं नाम गृहं षट्शालमुत्तमम् ।
हिरण्यनाभं सिद्धार्थं चैकशालेन वेश्मना[2] ॥ २७॥
संयोज्यं तु यदा[3] गेहं तदा स्याच्छ्रीगृहं शुभम् ।
संयोगादेकशालेन सुक्षेत्रयमसूर्ययोः ॥ २८ ॥
धनेश्वरं नाम गृहं जायते धनवृद्धये ।
दण्डाख्यचुल्ल्योः संयोगादेकशालगृहस्य च ॥ २९ ॥

---

१ क. तत्रैव । २ क. शाले सुयोजितम् । ३ क. सदा ।

† 'अमीषामष्टाविंशतीनां (?) मध्ये एकतमस्य मूषाभेदे कृते एतावन्ति रूपाणि भवन्ति' इति टिप्पणमस्तिकपुस्तके ।

प्रभूतकाञ्चनकरं गृहं स्यात् काञ्चनप्रभम् ।
द्वादशान्यानि जानीयाद् भवनान्यनया दिशा ॥ ३० ॥
एतेषामेव भेदेषु शुभान्यखिलवर्णिनाम् ।
तुल्यात् त्रिशालद्वितयात् षट्शालकचतुष्टयम् ॥ ३१ ॥
स्याद् द्विशालचतुःशालयोगादन्यच्चतुष्टयम् ।
सिद्धार्थेन चतुःशालं वेश्मनां संयुतिर्य ? (र्य) दा ॥ ३२ ॥
गृहं तदा स्यात् षट्शालं त्रैलोक्यानन्दकं शुभम् ।
यमसूर्येण [2]संयुक्तं विलासचयमुच्यते ॥ ३३ ॥
दण्डयुक्तं चतुःशालं सुखदं नामतो भवेत् ।
वातेन च चतुःशालं संयुक्तं श्रीपदं भवेत् ॥ ३४ ॥
चतुर्विंशतिर[3]न्यानि षट्शालान्यन्ययोगतः ।
पञ्च यानि चतुश्शालान्युचितानि महीभृताम् ॥ ३५ ॥
तेषां द्विशालयोगेन षट्शालान्यभिदध्महे ।
सिद्धार्थे सर्वतोभद्रयुक्ते स्याच्छ्रीपुरं गृहम् ॥ ३६ ॥
[4]श्रीवासं सर्वतोभद्रे यमसूर्यान्विते भवेत् ।
दण्डाख्ये भद्रयुक्ते [5]श्रीभूषणं जायते गृहम् ॥ ३७ ॥
वाताख्यं सर्वतोभद्रयोगाच्छ्रीभाजनं विदुः ।
सिद्धार्थे वर्धमानेन [6]युक्ते स्याद् भूतिमण्डनम् । ३८ ॥
यमसूर्ये तु तेनैव संयुक्ते भूतिभाजनम् ।
भूतिमानं तु दण्डाख्ये वाताख्ये भूतिभूषणम् ॥ ३९ ॥
नन्द्यावर्तस्य योगेन सिद्धार्थादि चतुष्टयम् ।
श्रीमुखं श्रीधरं श्रीमूँच्छ्रीध(क)रं चेति जायते ॥ ४० ॥
सिद्धार्थादिचतुष्कस्य भवेद् रुचकयोगतः ।
श्रियाकारं श्रियोवासं श्रीयानं श्रीमुखं तथा ॥ ४१ ॥

---

१ द. ख. त । २ द. ख. युक्तं तु वि° । ३ द. ख. रेतानि । ४, ५ द. ख. श्री° ।
६ क. संयुक्ते भूति° । ७ क. ख. द. श्रीकृत् ।

सिद्धार्थादिचतुष्कस्य भवेत्[1] स्वस्तिकयोगतः ।
धनपालधनानन्तधनप्रदधनाह्वयम् ॥ ४२ ॥
भवन्त्येवं राजवेश्मयोगतो विंशतिर्गृहाः ।
प्राक् चतुर्विंशतिश्चेति चत्वारिंशच्चतुर्युता ॥ ४३ ॥
मूषाव्यूढिवशादेकभद्रादीन्यभिदध्महे ।
भिंदाभिरेकं[2](?)मूषाभिरभद्रं द्वादशैकया ॥ ४४ ॥
द्वाभ्यां षट्षष्टिरुद्दिष्टा विंशे द्वे तिसृभिः शते[3]ः(ते) ।
स्याद् व्यूढाभिश्चतसृभिः पञ्चोनं शतपञ्चकम् ॥ ४५ ॥
शतानि पञ्चभद्राणां सप्त द्वानवतिस्तथा ।
चतुर्विंशा नवशती षड्भद्राणामुदाहृता ॥ ४६ ॥
जानीयात् सप्तभद्राणि संख्यया पञ्चभद्रवत् ।
गृहाणामष्टभद्राणां पञ्चोनं शतपञ्चकम् ॥ ४७ ॥
द्वे विंशे नवभद्राणां भवनानां शते विदुः ।
षट्षष्टिर्दशभद्राणि तथा द्वादशसङ्ख्यया ॥ ४८ ॥
स्युरेकादशभद्राख्यान्येकं द्वादशभद्रकम् ।
एवं षट्शालगेहानां स्यात् साहस्रचतुष्टयम् ॥ ४९ ॥
षण्णवत्यधिकं ब्रूमः सप्तशालानि साम्प्रतम् ।
तुल्यं त्रिशालद्वितयमेकशालेन युज्यते ॥ ५० ॥
यदा स्युः सप्तशालानि तदा द्वादशसङ्ख्यया ।
एकशालं द्विशालं च[4] चतुःशालेन युज्यते ॥ ५१ ॥
यदा तदा सप्तशालमपरं वेश्म जायते ।
सैकशालं चतुःशालं यमसूर्येण संयुतम् ॥ ५२ ॥
तदा[5] भवेद् विभेदः (?) स्यात् तद्गृहं श्रीप्रदायकम् ।
वातेन श्रीपदं[6] तद्वद् दण्डेन श्रीप्रदं भवेत् ॥ ५३ ॥

१ द. ख. स्वस्तिकालययोगतः । २ द. ख. तुद्राभिरेकम् । ३ क. तैः । ४ क. वा । ५ द. ख. यदा । ६ द. ख. प्र°

सिद्धार्थकेन श्रीमालं तद्वदेव प्रजायते ।
पञ्चानां राजयोग्यानां स्युश्चतुश्शालवेश्मनाम् ॥ ५४ ॥

सप्तशालानि संयोगादेकशालद्विशालयोः ।
युज्यते सर्वतोभद्रं सिद्धार्थं च यदा गृहम् ॥ ५५ ॥

एकशालेन जायेत श्रीपदं[1] श्रीपदं[2] तथा ।
सर्वतोभद्रगेहस्य यमसूर्यैकशालयोः ॥ ५६ ॥

योगेन श्रीफलं नाम स्याद् गृहं श्रीफलावहम् ।
सर्वतोभद्रदण्डाभ्यामेकशालं युतं यदा ॥ ५७ ॥

श्रीस्थलं नाम भवनं तदा स्यादास्पदं श्रियः ।
स्यादेकशाले मिलिते सर्वतोभद्रवातयोः ॥ ५८ ॥

लक्ष्मीनिवासभवनं गृहं श्रीतनुसंज्ञितम् ।
यदैकशालं सिद्धार्थं वर्धमानं च युज्यते ॥ ५९ ॥

श्रीपर्वताभिधानं स्यात् तदानीं भवनोत्तमम् ।
यमसूर्यस्य योगेन वर्धमानैकशालयोः ॥ ६० ॥

श्रीवर्धनं नाम गृहं श्रियो वृद्धिकरं भवेत् ।
दण्डं च वर्धमानं च[3] सैकशालं यदा भवेत् ॥ ६१ ॥

तदा श्रीसङ्गमं[4] नाम भवेद् भवनमुत्तमम् ।
यदैकशालं वाताख्यं वर्धमानं च युज्यते ॥ ६२ ॥

भवनं श्रीप्रसङ्गाख्यं[5] नृपयोग्यं तदा भवेत् ।
सिद्धार्थमेकशालेन नन्द्यावर्तेन चान्वितम् ॥ ६३ ॥

श्रीभारं नाम भवनं भवेद् भूपालसेवितम् ।
नन्द्यावर्तस्य योगेन यमसूर्यैकशालयोः ॥ ६४ ॥

राज्ञां सुखावहं वेश्म श्रीभारमिति च स्मृतम् ।
श्रीशैलमेकशालेन स्यान्नन्द्यावर्तदण्डयोः ॥ ६५ ॥

---

१, २ द. ख. प्र.°, ३ द. ख. तु । ४, ५ द. ख. स्त्री ।

योगाद् भोगावहं राज्ञां सप्तशालं गृहोत्तमम् ।
एकशालस्य योगेन स्यान्नन्द्यावर्तवातयोः ॥ ६६ ॥
श्रीखण्डं नाम भवनं भूभृतां भूतिकृद् भवेत् ।
सिद्धार्थस्यैकशालेन संयोगाद् रुचकस्य च ॥ ६७ ॥
श्री[1]षण्डं नामतो वेश्म भवेद् योग्यं महीभृताम् ।
रुचकस्यैव योगेन यमसूर्यैकशालयोः ॥ ६८ ॥
स्याच्छ्रीनिधानं श्रीकुण्डं तस्य दण्डैकशालयोः ।
वातैकशालरुचकैर्युक्तैः श्री[2]नामसुच्यते ॥ ६९ ॥
भवनं भूमिपालानां तद् भवेद् भूतिदायकम् ।
एकशालेन युज्येते सिद्धार्थस्वस्तिके यदा ॥ ७० ॥
श्रीप्रियं स्यात् तदा वेश्म सन्ततं वल्लभं श्रियः ।
यमसूर्यैकशालाभ्यां स्वस्तिकं युज्यते यदा ॥ ७१ ॥
तदा श्रीकान्तमित्याहुर्भवनं भूभृतां हितम् ।
एकशालेन संयोगो दण्डस्वस्तिकयोर्यदा ॥ ७२ ॥
श्रीमतं नामतो वेश्म तदा स्याद् विजयावहम् ।
वातस्वस्तिकसंयोगमेकशालं यदा व्रजेत् ॥ ७३ ॥
श्रीप्रदत्तमिति प्राहुस्तदा वेश्म महीभृताम् ।
एकैकस्य द्विभेदत्वाचत्वारिंशदियं भवेत् ॥ ७४ ॥
एवमत्र प्रकाराः स्युश्चत्वारिंशद् युताष्टभिः ।
यदा त्रिशालं भवनं चतुश्शालेन युज्यते ॥ ७५ ॥
तदापि सप्तशालं स्याचतुर्धेदं समासतः ।
पञ्चानां राजगेहानां मिलत्येकतमस्य चेत् ॥ ७६ ॥
त्रिशालं स्यात् तदा सप्तशालं विंशतिभेदवत् ।
हिरण्यनाभभो[3](यो)गेन सर्वतोभद्रमन्दिरम् ॥ ७७ ॥

---

१ द. ख. श्रीघण्टं ना॰ । २ द. ख. स्त्री । ३ क. ख. द. भागेन ।

श्रीवत्सं जनयेद् वेश्म नरेन्द्राणां हितावहम् ।
श्रीवृक्षं सर्वतोभद्रे सुक्षेत्रे मिलिते भवेत् ॥ ७८ ॥

चुल्लीयुक्ते पुनस्तस्मिन् श्रीपालं नाम जायते ।
पक्षघ्ने सर्वतोभद्रयुक्ते श्रीकण्ठमुच्यते ॥ ७९ ॥

हिरण्यनाभे श्रीवासं वर्धमानयुते भवेत् ।
श्रीनिवासं तु सुक्षेत्रे वर्धमानेन मिश्रिते ॥ ८० ॥

वर्धमानेन चुल्ल्या च गृहं श्रीभूषणं विदुः ।
पक्षघ्नं वर्धमानेन यदा संयोगमृच्छति ॥ ८१ ॥

तदा श्रीमण्डनं नाम जायते भवनोत्तमम् ।
जाते हिरण्यनाभस्य नन्द्यावर्तेन सङ्गमे ॥ ८२ ॥

स्याद् वेश्म श्रीकुलं नाम श्रियः कुलनिकेतनम् ।
नन्द्यावर्तेन सुक्षेत्रे युक्ते श्रीगोकुलं भवेत् ॥ ८३ ॥

नन्द्यावर्तस्य चुल्ल्याश्च योगे श्रीस्थावरं गृहम् ।
नन्द्यावर्तस्य पक्षघ्नयोगे कुम्भं प्रजायते ॥ ८४ ॥

हिरण्यनाभरुचकयोगे स्याच्छ्रीसमुद्गकम् ।
श्रीनन्दं नाम सुक्षेत्रे रुचकाख्येन संयुते ॥ ८५ ॥

चुल्ल्यां रुचकयुक्तायां श्रीहृदं नाम जायते ।
श्रीधरं नाम पक्षघ्ने भवेद् रुचकसंयुते ॥ ८६ ॥

हिरण्यनाभेन युते स्वस्तिके श्रीकरण्डकम् ।
सुक्षेत्रेण युते तस्मिन् श्रीभाण्डागारसंज्ञितम् ॥ ८७ ॥

चुल्लीयुते श्रीनिलयं भवेन्नरपतिप्रियम् ।
स्वस्तिकस्य यदा योगः पक्षघ्नेन प्रजायते ॥ ८८ ॥

श्रीनिकेतनसंज्ञं स्यात् तदा नृपतिमन्दिरम् ।
उक्तानि सप्तशालानि नामलक्षणयोगतः ॥ ८९ ॥

सर्वाणि सार्वभौमानां नृपाणां मन्त्रिणामपि ।
भवन्ति च सतां वित्तयशोविजयवृद्धये ॥ ९० ॥

एकादिमूषावहनप्रभेदादथ वेश्मनाम् ।
एतेषां सप्तशालानां ब्रूमः संख्यामनुक्रमात् ॥ ९१ ॥
† वहत्येकापि नो यत्र मूषैकं तद् भवेद् गृहम् ।
विभद्रमेकभद्राणि विजानीयाच्चतुर्दश ॥ ९२ ॥
द्विभद्रवेश्मनां सैका नवतिः परिकीर्तिता ।
भवनानां त्रिभद्राणां चतुःषष्टिः शतत्रयम् ॥ ९३ ॥
सहस्रमेकाभ्यधिकं स्याच्चतुर्भद्रवेश्मनाम् ।
भवतः पञ्चभद्राणां द्वे सहस्रे द्विसंयुते ॥ ९४ ॥
षड्भद्राणां सहस्राणि त्रीणि त्रीणि गृहाणि च ।
द्वात्रिंशतां[1] चतुस्त्रिंशत् सप्तभद्रशतानि च ॥ ९५ ॥
अष्टभद्राणि षड्भद्रसङ्ख्यातुल्यानि जायते(?) ।
गृहाणां नवभद्राणां द्वे सहस्रे तथा द्वयम् ॥ ९६ ॥
सहस्रं [2]दशभद्राणामेकोत्तरमुदाहृतम् ।
तथैकादशभद्राणां चतुष्षष्ट्या शतत्रयम् ॥ ९७ ॥
सैका द्वादशभद्राणां नवतिर्वे[3]श्मनां भवेत् ।
स्युस्त्रयोदशभद्राणि गृहाणीह चतुर्दश ॥ ९८ ॥
यच्चतुर्दशभिर्भद्रैरेकमेव हि वेश्म तत् ।
इत्येषां सप्तशालानां सहस्राण्यत्र षोडश ॥ ९९ ॥
[4]एकोनत्रिंशती तद्वदशीतिश्चतुरुत्तरा ।
इदानीमष्टशालानि भवनान्यभिदध्महे ॥ १०० ॥
बहिरन्त[5]श्चतुःशालद्वयादेकं समासतः ।
अन्यानि सर्वभद्रादिद्वयसंयोगतो दश ॥ १०१ ॥
एकोनत्रिं[6]शता क्षेत्रं चतुरश्रं विभाजयेत् ।
भागद्वयेन मूषा स्याच्छाला भागचतुष्टयात् ॥ १०२ ॥

---

१ द. ख. द्वात्रिंशानि । २ द. ख. शतभ° । ३ द. ख. °भि° । ४ क. 'एकात्र त्रि' । ५ क. त्र चतु । ६ द. °विंशता ।

† 'यत्र यस्यां सप्तशालजातौ एकापि मूषा यद् गृहं न वहति न प्राप्नोति, तदेकं गृहं विभद्रं भवेत्' इति टिप्पणमस्ति क पुस्तके ।

कुर्वीत पञ्चभिर्भागैस्तन्मध्येऽङ्गणवापिकाम्।
चतस्रश्च प्रतिदिशं मूषाः स्युस्तत्र वास्तुनि ॥ १०३ ॥
शालयोनं सप्तशालं षट्शालं द्वितयोज्झितम्।
त्रिहीनं पञ्चशालं स्यादष्टशालमिदं क्वचित् ॥ १०४ ॥
तुल्यत्रिशालद्वितयं द्विशालेन युतं यदा।
अष्टौ तदाष्टशालानि गृहाण्यन्यानि निर्दिशेत् ॥ १०५ ॥
मूषाव्यूढिवशादष्टशालानामथ कथ्यते।
सङ्ख्या तत्र विभद्रं स्यादवहन्मूषसंज्ञितम् ॥ १०६ ॥
षोडशैवैकभद्राणि द्विभद्राणां शतं विदुः।
विंशं षष्ट्या त्रिभद्राणां विज्ञेयं शतपञ्चकम् ॥ १०७ ॥
अष्टादशाहुर्विंशानि चतुर्भद्रशतानि च।
पञ्चभद्रसहस्राणि चत्वारि स्युः शतत्र्[२]यम् ॥ १०८ ॥
अष्टषष्टिश्च गेहानि तानि सम्यग् विभावयेत्।
सहस्राष्टकमष्टौ च षड्भद्राणि प्रचक्षते ॥ १०९ ॥
एकादशसहस्राणि तथा शतचतुष्टयम्।
जानीयात् सप्तभद्राणि चत्वारिंशद् गृहाणि च ॥ ११० ॥
द्वादशैवाष्टभद्राणां सहस्राणि शताष्टकम्।
सप्तत्याभ्यधिकं प्राहुर्वास्तुविद्याविशारदाः ॥ १११ ॥
एकादशसहस्राणि तथा श[३]तचतुष्टयम्।
चत्वारिंशच्च गेहानि नवभद्राणि सङ्ख्यया ॥ ११२ ॥
अष्टौ स्युर्दशभद्राणां सहस्राण्यष्टभिः सह।
तथैकादशभद्राणां सङ्ख्या स्यात् पञ्चभद्रवत् ॥ ११३ ॥
अष्टादश[४]शतानि स्युर्विंशतिर्भवनानि च।
[५]इति द्वादशभद्राणां सङ्ख्या भवति वेश्मनाम् ॥ ११४ ॥

१ द. °न्वि°। २ द. ख. °द्व°। ३ द. दश°। ४ द. ख. °सहस्राणि विंश°।
५ द. इत्याख्या दश°।

स्यात् त्रयोदशभद्राणां षष्ट्यग्रं शतपञ्चकम् ।
स्याच्चतुर्दशभद्राणां विंशत्यभ्यधिकं शतम् ॥ ११५ ॥

वेश्मानि स्युस्तथा पञ्चदशभद्राणि षोडश ।
एकमेव हि विज्ञेयं गृहं षोडशभद्रकम् ॥ ११६ ॥

† पञ्चषष्टिसहस्राणि षट्त्रिंशं शतपञ्चकम् ।
गृहाणामष्टशा[1]लानां भवत्येकत्र सङ्ख्यया ॥ ११७ ॥

स्यात् समानचतुश्शालद्वययोगात् समासतः ।
एकैकशालयोगाच्च नवशालचतुष्टयम् ॥ ११८ ॥

सर्वतोभद्रमुख्यानां मिथो द्वितययोगतः ।
एकैकशालयोगाच्च चत्वारिंशत् तथापरा ॥ ११९ ॥

तुल्यत्रिशालत्रितययोगेन च चतुष्टयम् ।
गृहाणां नवशालानामन्यदुक्तं पुरातनैः ॥ १२० ॥

संस्थानमुक्तं गेहानां नवशालात्मनामिदम् ।
मूषावहनभेदेन तत्सङ्ख्या कथ्यतेऽधुना ॥ १२१ ॥

अवहन्मूषमेकं स्याद् वहन्त्या[2]ष्टादशैकया ।
द्वाभ्यां शतं त्रिपञ्चाशदधिकं वेश्मनां भवेत् ॥ १२२ ॥

तिसृभिः स्युः शतान्यष्टौ सह षोडशभिर्गृहैः ।
षष्ट्या सहस्रत्रितयं ताभिश्चतसृभिर्भवेत् ॥ १२३ ॥

पञ्चाशीतिशतान्यष्टषष्टियुक्तानि पञ्चभिः ।
वहन्तीभिः प्रजायन्ते मूषाभिरिह वेश्मनाम् ॥ १२४ ॥

---

१ द. भद्राणां भ° । २ द. ख. °न्त्यष्टा° ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| † अष्टशालगृहाणामैक्यं ६५५३६ षोडशगुरूणां प्रस्तारे | गृह १ | १६ | १२० | ५६० | १८२० | ४३६८ | ८००८ | ११४४० | १२८७० |
| | भद्र० | १ | २ | ३ | ४ | ५ | ६ | ७ भद्र | ८ |
| | भद्र १६ | १५ | १४ | १३ | १२ | ११ | १० | ९ भद्र | ० |

इति टिप्पणं दत्तमस्ति क पुस्तके ॥

अष्टादशसहस्राणि तथा पञ्चशतानि च ।
चतुःषष्टिं च गेहानि मूषाभिः षड्भिरादिशेत् ॥ १२५ ॥

एकत्रिंशत्सहस्राणि सहितान्यष्टभिः शतैः ।
चतुर्विंशतियुक्तानि मूषाभिः सप्तभिर्विदुः ॥ १२६ ॥

चत्वारिंशत्सहस्राणि त्रिसहस्री च वेश्मनाम् ।
शतानि चाष्टपञ्चाशत् सप्त मूषाभिरष्टभिः ॥ १२७ ॥

चत्वारिंशत्सहस्राणि सहस्राण्यष्ट षट्शती ।
विंशतिं चैव मूषाभिर्गृहाणां नवभिर्विदुः ॥ १२८ ॥

चत्वारिंशत्सहस्राणि सहस्रत्रयमोकसाम् ।
मूषाभिर्दशभिः साष्टपञ्चाशच्छतसप्तकम् ॥ १२९ ॥

एकत्रिंशत्सहस्राणि चतुर्विंशच्छताष्टकम् ।
मूषाभिरेकादशभिर्गृहाणां मुनयो जगुः ॥ १३० ॥

अष्टादशसहस्राणि तथा पञ्चशतानि च ।
धाम्नां द्वादशमूषाणां चतुःषष्टिश्च जायते ॥ १३१ ॥

भवन्त्यष्टौ सहस्राणि तथा पञ्चशतानि च ।
स्यात् त्रयोदशमूषाणामष्टषष्टिश्च वेश्मनाम् ॥ १३२ ॥

स्याच्चतुर्दशमूषाणां त्रिसहस्री सषष्टिका ।
मूषाभिः पञ्चदशभिः षोडशाष्टशती तथा ॥ १३३ ॥

धाम्नां षोडशमूषाणां त्रिपञ्चाशच्छतं भवेत् ।
स्युः सप्तदशमूषाणि वेश्मान्यष्टादश स्फुटम् ॥ १३४ ॥

मूषाभिरष्टादशभिर्वेश्मैकं तद्विदो विदुः ।
लक्षद्वयं सहस्राणि द्वाषष्टिश्च शतान्विता ॥ १३५ ॥

वेश्मनां नवशालानां चत्वारिंशच्चतुर्युता ।
स्यात् समानचतुःशालद्वययोगात् समासतः ॥ १३६ ॥

---

१ द. नवति° । २ द. °णां ।

एकेन च द्विशालेन दशशालचतुष्टयम् ।
सर्वतोभद्रमुख्यानां मिथो द्वितययोगतः ॥ १३७ ॥

एकद्विशालयोगाच्च चत्वारिंशत् तथापरा ।
तुल्यत्रिशाल[1]त्रितयमेकशालयुतं यदा ॥ १३८ ॥

साधारणं तदान्यत् स्याद् दशशालचतुष्टयम् ।
तुल्ये त्रिशाले युज्येते सर्वभद्रादिभिर्यदा ॥ १३९ ॥

तदान्या दशशालानां समुत्पद्येत विंशतिः ।
तेष्वेकमवहन्मूषं विंशतिर्मूषयैकया ॥ १४० ॥

वहन्त्या स्यादुभाभ्यां तु नवत्यभ्यधिकं शतम् ।
चत्वारिंशानि तिसृभिः शतान्येकादश ध्रुवम् ॥ १४१ ॥

चत्वारि[2] स्युश्चतसृभिः सहस्राणि शताष्टकम् ।
चत्वारिंशच्च गेहानि जायन्ते पञ्चभिः सह ॥ १४२ ॥

पञ्चभिस्तु सहस्राणि मूषाभिर्दशपञ्च च ।
जायन्ते सचतुष्काणि तथा पञ्चशतानि च ॥ १४३ ॥

अष्टात्रिंशत्सहस्राणि षड्भिः सप्त शतानि च ।
षष्ट्युत्तराणि जायन्ते वेश्मनां परिसङ्ख्यया ॥ १४४ ॥

गृहाणां स्युः सहस्राणि सप्तभिः सप्तसप्ततिः ।
शतपञ्चकमन्यच्च भवेद् विंशतिसंयुतम् ॥ १४५ ॥

लक्षमेकं सहस्राणि पञ्चविंशतिरष्टभिः ।
शतानि नव जायन्ते सप्तत्यभ्यधिकानि च ॥ १४६ ॥

लक्षमेकं सहस्राणि सप्तषष्टिः शतानि च ।
नव स्युः षष्टियुक्तानि नवमूषाप्रचारतः ॥ १४७ ॥

लक्षं चतुरशीतिश्च सहस्राणि शतानि च ।
सप्त स्युर्दशभिस्तद्वत् पञ्चाशच्च षडुत्तरा ॥ १४८ ॥

---

१ द. °लद्वितयं त्रिशालेन युतं । २ द. °रिंश° ।

लक्षमेकं सहस्राणि सप्तषष्टिश्च वेश्मनाम् ।
शतानि चैकादशभिः षष्ठ्यानि नव निर्दिशेत् ॥ १४९ ॥
लक्षं तथा सहस्राणि जायन्ते पञ्चविंशतिः ।
शतानि च द्वादशभिर्नव तद्वच्च सप्ततिः ॥ १५० ॥
सहस्राणि निकेतानां सङ्ख्यया सप्तसप्ततिः ।
सविंशतिः पञ्चशती त्रयोदशभिरीरिता ॥ १५१ ॥
अष्टात्रिंशत्सहस्राणि तथा सप्तशतानि च ।
स्युश्चतुर्दशभिः षष्ठ्या वेश्मनामन्वितानि च ॥ १५२ ॥
स्यात् पञ्चदशसाहस्री शतैः पञ्चभिरन्विता ।
मूषाभिः पञ्चदशभिश्चत्वारि भवनानि च ॥ १५३ ॥
स्युः सहस्राणि चत्वारि तद्वदष्टौ शतानि च ।
तथा षोडशमूषाणां चत्वारिंशच्च पञ्च च ॥ १५४ ॥
सहस्रं सप्तदशभिः शतमेकं च वेश्मनाम् ।
चत्वारिंशच्च वेश्मानि भवन्ति परिसङ्ख्यया ॥ १५५ ॥
शतं नवत्यभ्यधिकमष्टादशभिरुच्यते ।
भवत्येकोनविंशत्या मूषाणां वेश्मविंशतिः ॥ १५६ ॥
एकमेव गृहं मूषाविंशतेर्वहनाद् भवेत् ।
सङ्ख्येयं दशशालानां मूषाभेदप्रचारतः ॥ १५७ ॥
प्रयुतं चत्वार्ययुतान्यष्टसहस्राणि पञ्च शतानि च ।
षट्सप्ततिर्गृहाणि च दशशालेष्वेकसङ्ख्येयम् ॥ १५८ ॥
चतुःशालादिगेहानि यावन्त्यादशशालतः ।
चतुर्गुणानि प्रत्याशं तान्यलिन्देन निर्दिशेत् ॥ १५९ ॥
एकद्वित्रिचतुःशालवेश्मनां सङ्गमान्मिथः ।
गृहाणि दशशालान्तान्येवमुक्तानि विस्तरात् ॥ १६० ॥
समारभ्य चतुःशाल( लं) दशशालान्तवेश्मनाम् ।
सङ्ख्यामिदानीमैक्येन सर्वेषामभिदध्महे ॥ १६१ ॥

मूषाभेदेन लक्षाणि स्युस्त्रयोदश वेश्मनाम् ।
सहस्राण्यष्टनवतिस्तथा वेश्मानि षोडश ॥ १६२ ॥
मूषासंस्थानभेदेन भिन्नानां वेश्मनां पुनः ।
जायन्ते कोटिशो भेदा यस्मान्नोक्तानि तान्यतः ॥ १६३ ॥
इत्थं चतुः[1]शालमुखानि वेश्मान्युक्तानि यावद्दशशालमत्र ।
शालाप्रभेदेन मिथोऽभिषङ्गात् सङ्ख्या च तेषामुदिता यथावत्॥१६४॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
समस्तगृहाणां सङ्ख्याकथनं नाम पञ्चविंशोऽध्यायः ॥

## अथ आयादिनिर्णयो नाम षड्विंशोऽध्यायः ।

इदानीमभिधास्यामः सूत्रपात[2]विधेः क्रमम् ।
शस्ते मासि सिते पक्षे विदध्यात् तं शुभेऽहनि ॥ १ ॥
चैत्रे शोकाकुलो भ[3]र्ता वैशाखे च धनान्वितः ।
ज्येष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥ २ ॥
श्रावणे धनवृद्धिः स्यान्नभस्ये न वसेद् गृहे ।
कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥३ ॥
मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः ।
माघे वह्नि[4]भयं चैव फाल्गुने श्रीरनुत्तमा ॥ ४ ॥
द्वितीया पञ्चमी मुख्या सप्तमी नवमी तथा ।
एकादशीत्रयोदश्यस्ति(श्यौ ति)थयः स्युः शुभावहाः ॥ ५ ॥
चन्द्रताराबलं भर्तुरनुकूलं च शस्यते ।
इयं हि सूत्रपाताख्या क्रिया प्रासादकर्मणि ॥ ६ ॥
कार्या पुरनिवेशे च प्रारम्भे भवनस्य च ।
शिलानिवेशने द्वारस्तम्भोच्छ्रायादिकेषु च ॥ ७ ॥

---

१ द. °शालजयुक्त° । २ द. ख. 'विधिं । ३ द. ख. 'र्ता स्याद् वैशाखे ध' । ४ ख. भयं विद्यात् फा° ।

आद्रियेत सिते पक्षे शोभने लग्न एव हि ।
रवौ कन्यातुलालिस्थे गृहं वरुणदिङ्मुखम् ॥ ८ ॥
न कुर्यात् तद्धि शून्यं स्यान्न च वृद्धिर्भवेत् प्रभोः ।
न[1] दक्षिणमुखं कुम्भमृगधन्वि[2]स्थिते रवौ ॥ ९ ॥
कुर्वीत निष्फलं तत् स्यान्नृपदण्डवधादिकृत् ।
न मीनवृषमेषस्थे कुर्वीत प्राङ्मुखं रवौ ॥ १० ॥
तद् धनघ्नं कलिक्षुद्रराजचौ[3]रार्तिकृद् यतः ।
रवौ मिथुनसिंहस्थे न कर्किस्थेऽप्युदङ्मुखम् ॥ ११ ॥
कुर्यात् तद्धि दरिद्रत्वं दद्याचरणदासताम् ।
आयव्ययांशकर्क्षाणि प्रवक्ष्यामोऽथ वेश्मनाम् ॥ १२ ॥
गृहमानवशात् सम्यक् कर्तुः स्थानबलाबलम् ।
नगरे वा पुरादौ वा दण्डैर्मानं विधीयते ॥ १३ ॥
तदलाभे करैः कार्यं सम्यगायविशुद्धये ।
यत्र हस्तैर्मिति[4]ः क्षेत्रे तत्रायो हस्तसंश्रितः ॥ १४ ॥
क्षेत्रा[5]लाभे तु तत्रैव ग्राह्यः स स्यादिहाङ्गुलैः ।
अङ्गुलैस्तु मिते क्षेत्रे सोऽङ्गुलैस्तदलाभतः ॥ १५ ॥
पादैर्वाथ यवैर्वापि ग्राह्यः क्षेत्रानुसारतः ।
गृहेषु कर्महस्तेन मानं स्वामिकरेण वा ॥ १६ ॥
देवतानां तु धिष्ण्येषु कर्महस्तेन केवलम् ।
दैर्घ्यं हन्यात् पृथुत्वेन हरेद् भागं ततोऽष्टभिः ॥ १७ ॥
यच्छेषमायं तं विद्याच्छास्त्रदृष्टं ध्वजादिकम् ।
ध्वजो धूमोऽथ सिंहश्च श्वा वृषः खरकुञ्जरौ ॥ १८ ॥
ध्वाङ्क्षश्चेति त उद्दिष्टाः प्राच्याद्यासु प्रदक्षिणम् ।
अन्योन्याभिमुखास्ते च कामं स्वच्छन्दचारिणः ॥ १९ ॥

---

१ द. ख. 'दक्षिणाभिमु'। २ ख. चापस्थि। ३ क. 'राग्निकृ'। ४ द. °र्मितैः। ५ द. क्षेत्रला°।

पूर्वाचार्यैः समुद्दिष्टा आयवृद्धिविधायकाः ।
वृषसिंहगजाः शस्ताः प्रासादपुरवेश्मसु ॥ २० ॥
ध्वजेऽर्थलाभः सन्तापो धूमे भोगो मृगाधिपे ।
कलिः शुनि धनं धान्यं वृषे स्त्रीदूषणं खरे ॥ २१ ॥
गजे भद्राणि दृश्यन्ते ध्वाङ्क्षे तु मरणं ध्रुवम् ।
वृषस्थाने गजं कुर्यात् सिंहं वृषभहस्तिनोः ॥ २२ ॥
न कुर्याद् वृषमन्यत्र शस्यते सर्वतो ध्वजः ।
कल्याणं कुरुते सिंहो ब्राह्मणस्य विशेषतः ॥ २३ ॥
क्षत्त्रियस्य गजः शस्तो वृषभः शस्यते विशः ।
शूद्रस्य ध्वज एवैकः शस्यतेऽर्थप्रदः सदा ॥ २४ ॥
एवमेते गृहादीनामायाः सर्वे प्रकीर्तिताः ।
प्रदद्यादासने सिंहमातपत्रेषु तु ध्वजम् ॥ २५ ॥
चिह्नेष्वपि च सर्वेषु चामरव्यजनादिषु ।
सिंहं गजं वा शस्त्रेषु रथेषु कवचेषु च ॥ २६ ॥
सार्यश्वगजपर्याणेष्विभं वृषभमेव च ।
अर्थधारणपात्रेषु शयनेषु मतङ्गजम् ॥ २७ ॥
याने च वाहने चैव मतिमान् योजयेद् गजम् ।
प्रासादप्रतिमालिङ्गपीठमण्डपवेदिषु ॥ २८ ॥
कुण्डेषु च ध्वजं दद्याद् देवोपकरणेषु च ।
आयो गृहवदुद्वाहवेदीमण्डपयोर्भवेत् ॥ २९ ॥
महानसे वृषं दद्याज्जलाधारे जलाशये ।
स्थाल्यां भोजनपात्रे च कोष्ठागारेऽन्नधारणे ॥ ३० ॥
एतद्गृहे तथा दद्याद् गृहोपकरणेषु च ।
वृषभं गजशालायां प्रदद्याद् गजमेव वा ॥ ३१ ॥
वृषं तुरगशालासु गोशालागोकुलेषु च ।
गजाश्ववृषशालासु सिंहं यत्नेन वर्जयेत् ॥ ३२ ॥

अधमानां खरध्वाङ्क्षधूमश्वानः शुभावहाः ।
धूमोऽग्निजीविनां शस्तो ध्वाङ्क्षः सन्न्यासिनां हितः ॥ ३३ ॥

स्वर्ग[1]णानां श्वपाकानां स्ववेश्मानां खरः शुभः ।
नटनर्तकवेश्मेषु पण्यस्त्रीणां खरः शुभः ॥ ३४ ॥

कुलालरजकादीनां तथा गर्दभजीविनाम् ।
गृहादिषु क्षेत्रफलं ग[2]णयेदष्टभिर्भजेत् ॥ ३५ ॥

त्रिघनेन भजेच्छेषं न[3]क्षत्रेऽष्टहृते व्ययः ।
पिशाचो राक्षसो यक्ष इति त्रेधा व्ययो मतः ॥ ३६ ॥

साम्याधिक्यन्यूनताभिरायतः स्याद् यथाक्रमम् ।
व्ययं क्षेत्रफले क्षिप्त्वा गृहनामाक्षराणि च ॥ ३७ ॥

भागं त्रिभिर्हरेत् तत्र यच्छेषं सोंऽशको भवेत् ।
चतुरङ्गो यथा मन्त्रो मुख्यो लग्ने नवांशकः ॥ ३८ ॥

तथा गृहादिषु प्रोक्तं मुख्यत्वेनांशकत्रयम् ।
इन्द्रो यमश्च राजा च त्रयो नामाभिरंशकाः ॥ ३९ ॥

स्वनामतुल्यफलदा विज्ञातव्यास्त्रयोऽपि च ।
गणयेत् स्वामिनक्षत्राद् यावत् स्याद् भवनस्य भम् ॥ ४० ॥

नवभिर्भाजिते तस्मिञ् शेषं तारा प्रकीर्तिता ।
जन्मसम्पद्विपत्क्षेमपापसाधकनैधनीः ॥ ४१ ॥

मैत्रीपरममैत्र्यौ च प्राहुः संज्ञाः समाः फले ।
त्रिसप्तपञ्चमीर्भर्तुर्गृहतारा विवर्जयेत् ॥ ४२ ॥

आद्याद्वितीयाष्टम्यस्तु ताराः स्युरिह मध्यमाः ।
तथा ऋक्षेऽपि चानिष्टे चन्द्रेऽष्टमगतेऽपि च ॥ ४३ ॥

नयते दुरितं तारा चतुःषण्णवती(?) नृणाम् ।
सुरराक्षसमर्त्याख्या ऋक्षाणां स्युर्गणास्त्रयः ॥ ४४ ॥

---

१ द. °गणी° । २ द. ख. गुण° । ३ द. नक्षत्रेषु हते । ४ द. ख. °स्माच्छेषं ।

यद्गणर्क्षो[1] भवेद् भर्ता तद्गणर्क्षं गृहं शुभम् ।
मृगाश्विरेवतीस्वात्यो मैत्रं पुष्यपुनर्वसू ॥ ४५ ॥
हस्तः श्रवण इत्येष देवाख्यो नवको गणः ।
विशाखा कृत्तिकाश्लेषा नैरृतं वारुणं मघा ॥ ४६ ॥
चित्रा ज्येष्ठा धनिष्ठेति नवको राक्षसो गणः ।
आर्द्राभरण्यौ रोहिण्यौ[2](ण्या) तिस्रः पूर्वास्तथोत्तराः ॥ ४७ ॥
इति नक्षत्रनवकं विज्ञेयं मानुषे गणे ।
गणसाम्यं शुभा तारा यस्यायात्(च) व्ययोऽल्पकः ॥ ४८ ॥
हितोंऽशकश्च[3] तद्वेश्म भर्तुः शुभफलप्रदम् ।
आयो व्ययश्च योनित्वं ताराश्च भवनांशकाः ॥ ४९ ॥
गृहनामेति चिन्त्यानि करणानि गृहस्य षट् ।
त्रिभिः शुभैः शुभं वेश्म द्वाभ्यामेकेन चाशुभम् ॥ ५० ॥
करणैश्चतुराद्यैस्तु शुभैरतिशुभं भवेत् ।
न समायव्ययं वेश्म नाव्ययं नाधिकव्ययम् ॥ ५१ ॥
न [4]द्वितीयांशमसदृग्योनिभं च न कारयेत् ।
भर्तृतुल्याभिधानं च गृहं दूरात् परित्यजेत् ॥ ५२ ॥
समसप्तकमेकर्क्षं[5] तृतीयैकादशं[6] तथा ।
चतुर्थदशकं चेति कर्तव्यं मन्दिरं सदा ॥ ५३ ॥
षट्कोष्ठकं त्रिकोणं च वर्ज्यं द्विर्द्वादशं तथा ।
षट्कोष्ठके मृतिर्दैन्यं वियोगश्च भवेद् गृहे ॥ ५४ ॥
त्रिकोणे वसतां दुःखं वैधव्यं च प्रजायते ।
द्विर्द्वादशे पुत्रपौत्रगुरुबन्धुधनक्षयः ॥ ५५ ॥
हृते[7]ऽष्टभिः क्षेत्रफले खनेत्रशशिभाजिते ।
शेषं जीवितमेतस्मिन् पञ्चभक्ते भवेन्मृतिः ॥ ५६ ॥

१ द. यद्गुणाक्षि...गुणर्क्ष्यं...। २ द. ख. °ण्यस्तिस्रः। ३ द. ख. °नव्यांश°। ४ द. ख. °तृ°। ५ द. °कर्क्षा। ६ द. ख. °दशे। ७ द. हते।

सभुजं सहषड्दारु मुखमण्डपसंयुतम् ।
आयामतः पृथुत्वाच्च मानं कृत्वा विभाजयेत् ॥ ५७ ॥

सर्वतः शोधितं वास्तु यच्च सम्यङ्मितं भवेत् ।
स्वामिनस्तद् भवेद् धन्यं स्थपतेश्च यशस्करम् ॥ ५८ ॥

अर्चितं वर्धते वास्तु नारीभिः पशुभिर्नरैः ।
कीर्त्यायुर्धनधान्यैश्च प्रमोदैस्तु[1] महोत्सवैः ॥ ५९ ॥

मेरुश्च खण्डमेरुश्च पताका सूचिका तथा ।
उद्दिष्टं नष्टमिति षट् छन्दांसीह प्रचक्षते ॥ ६० ॥

एकाद्येकोत्तरान् कोष्ठान् विन्यसेदिच्छयात्मनः ।
आद्यादारभ्य तद्वृद्धिर्यथा स्यात् पार्श्वयोः समम् ॥ ६१ ॥

मेरोरेकाधिका सङ्ख्या शरावस्येव चाकृतिः ।
प्रथमे कोष्ठके रूपमन्तं यावच्च पार्श्वयोः ॥ ६२ ॥

आसन्नो[2]र्ध्वस्थयोर्न्यस्येन्मध्ये सङ्कलितं पृथक् ।
तस्मिन्निष्टविकल्पानां सङ्ख्या स्यादन्त्यपङ्क्तिगा ॥ ६३ ॥

खण्डमेरुं तु विन्यस्येत् तद्वदेवैकपार्श्वतः ।
प्रवृद्धैः कोष्ठकैस्तत्राप्यङ्काः प्राग्वत् फलं तथा ॥ ६४ ॥

अथापरः खण्डमेरुः कोष्ठांस्तत्रेष्टसङ्ख्यया ।
कृत्वैकापचितान् वामविभागापचितानधः ॥ ६५ ॥

एकाद्येकोत्तरानङ्कानाद्यपङ्क्तौ निवेशयेत् ।
अन्यासु पङ्क्तिष्वाप्रान्तं शून्यान्या(ना)द्येषु कल्पयेत् ॥ ६६ ॥

द्वितीयेषु च कोष्ठेषु तासामेकैकमावयेत्(?) ।
द्वितीयायां तृतीयादिकोष्ठकेषु यथाक्रमम् ॥ ६७ ॥

विकर्णयोगजानन्यानूर्ध्वाधोयोगसंभवान् ।
फलं विकर्णयोगोत्थमेक[3]स्मिन् परिकल्पयेत् ॥ ६८ ॥

---

१ द. ख. र्यशसोत्स° । २ द. °न्न° । ३ द. °त° ।

एकाधिकानभीष्टायाः[1] सङ्ख्यायास्तिर्यगालिखेत् ।
कोष्ठानेकांच(तांश्च) रूपादींस्तन्मध्ये द्विगुणोत्तरान् ॥ ६९ ॥
एकोनं पृष्ठतस्तेषामेकं द्विगुणमग्रतः ।
नातिक्रामेत् परां सङ्ख्यां पताकाछन्द उच्यते ॥ ७० ॥
तद्विनेष्टाद्यगा सङ्ख्येत्येकाद्यैस्तैस्ततो गृहे ।
न्यस्ताङ्कसङ्ख्याः सङ्ख्याः स्युरलिन्दाद्यैः प्रकल्पिताः ॥ ७१ ॥
एकैकमिष्टस्थानेषु लिखेत् सैकेश्वतः परम् ।
अन्त्यादं[2](इ)ते पूर्वपूर्वयुक्तेनायोजयेत् परम् ॥ ७२ ॥
अन्त्यादारभ्य तद्वदेकादिषु(?) च पर्ययात् ।
अलिन्दादिषु यत्र स्यात् सङ्ख्या सूचीं तु तां विदुः ॥ ७३ ॥
उद्दिष्टे स्थापयेत् सङ्ख्यामुद्दिष्टां समभजे(जे)च ताम् ।
दलयेद् रूपयुक्तां तु दलयेन्नाम समभजेत्(?) ॥ ७४ ॥
लघुस्वरूपदलने सैकार्धे करणे गुरुः ।
यावदिष्टपदाप्तिः स्याल्लघवोऽलिन्दकोदयः ॥ ७५ ॥
कृत्वा छन्दः समुद्दिष्टं तदन्ते लघुनि द्विकम् ।
न्यसेदेकं गुरूणां च द्विगुणं द्विगुणं ततः ॥ ७६ ॥
व्यत्ययाल्लघुनः स्थाने द्विगुणादेककं गुरोः ।
कुर्यात् तमाद्यस्थानाङ्कसङ्ख्यं नष्टं गृहं भवेत् ॥ ७७ ॥
प्राप्तस्यैकं कोष्ठमेकैकवृद्ध्या न्यस्येदूर्ध्वं पङ्क्तयो यावदिष्टाः ।
इष्टानेकादींल्लिखेदानुपूर्व्या कर्णेनाधः शून्यरूपे च दद्यात् ॥ ७८ ॥
कर्णस्थाङ्कश्लेषतोऽङ्के भवेद् यस्तं विन्यस्येत् कोष्ठकेषु क्रमेण ।
उद्दिष्टाङ्को भद्रसङ्ख्यानि मध्ये याभ्यः कर्णश्लेषतो मूषिकास्ताः ॥ ७९ ॥
एकादिषु द्विगुणितेष्विह यावदिष्टमूषाक्रमे[3]व्युपहितेष्वथ तेषु विद्यात् ।
उद्दिष्टवेश्मकृतनिर्गममार्गमूषासत्काङ्क[4]सैकयुतिनिर्मितसङ्ख्यमोकः ॥ ८० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
आयव्ययनक्षत्रराशिफलतद्योगताराङ्कयोनितच्छन्दोगनिर्णयो नाम षड्विंशोऽध्यायः ।

---

१ द. °को° । २ द. ख. °द्वातपूर्वं पू° । ३ द. क्रमेत्युपहि° । ४ द. 'स्तथासत्काकारो' टिप्पणामिवाभाति ।

# अथ सभाष्टकं नाम सप्तविंशोऽध्यायः ।

नन्दा भद्रा जया पूर्णा सभा स्याद् भाविता तथा ।
दक्षा च प्रवरा तद्वद् विदुरा चाष्टमी मता ॥ १ ॥

चतुरश्रीकृते क्षेत्रे ततः षोढा विभाजिते ।
मध्ये पदचतुष्कं स्यात् सीमालिन्दस्तु भागिकः ॥ २ ॥

तद्बाह्योऽलिन्दकस्तद्वद् भवेत् प्रतिसराभिधः ।
प्राग्ग्रीवाख्यस्तृतीयश्च बहिः क्षेत्राच्चतुर्दिशम् ॥ ३ ॥

निसृष्टसौर्ध(धे)यैर्वा(?) स्यादेकस्यां वा यदा दिशि ।
नन्दा भद्रा जया पूर्णा क्रमेण स्युः सभास्तदा ॥ ४ ॥

षड्भागभाजिते क्षेत्रे कर्णभित्तिं निवेशयेत् ।
सभा स्याद् भाविता नाम सप्राग्ग्रीवात्र पञ्चमी ॥ ५ ॥

स्तम्भान् षट्त्रिंशदेतासु पञ्चस्वपि निवेशयेत् ।
स्तम्भान् प्राग्ग्रीवसंबद्धान् पृथगेभ्यो विनिर्दिशेत् ॥ ६ ॥

दक्षेति षष्ठी परितस्तृतीयालिन्दवेष्टिता ।
प्रवरा सप्तमी द्वारैर्युक्तैषा परिकीर्तिता ॥ ७ ॥

प्राग्ग्रीवद्वारसंयुक्ता विदुरेत्यष्टमी सभा ।
सभानामिदमष्टानां लक्षणं समुदाहृतम् ॥ ८ ॥

इत्यष्टानां लक्ष्म सम्यक् सभाना-
मेतत् प्रोक्तं दिग्भवालिन्दभेदात् ।
तद्वद् द्वारालिन्दसंयोगतश्च
ज्ञातेऽत्र स्याद् भूभृतां स्थानयोगः ॥ ९ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
सभाष्टकं नाम सप्तविंशोऽध्यायः ॥

# अथ गृहद्रव्यप्रमाणानि नामाष्टाविंशोऽध्यायः ।

उपादेयानि यान्यत्र परित्याज्यानि यानि च ।
गृहद्रव्यप्रमाणानि तानीदानीं प्रचक्ष्महे ॥ १ ॥
द्वारस्य गृहविस्तारैर्हस्ततुल्याङ्गुलैर्भवेत् ।
उच्छ्रायः सप्तभिर्युक्तैर्विस्तृतिस्तु तदर्धतः ॥ २ ॥
प्रकल्पयेद् गृहद्वारं क्रमेणैव कनीयसा(म्) ।
त्रैराशिकेन मध्यानां द्वादशांशं परित्यजेत् ॥ ३ ॥
इत्युच्छ्रितिस्तदर्धेन सर्वेषामपि विस्तरः ।
उच्छ्रायमुत्तमानां तु कुर्यादष्टांशवर्जितम् ॥ ४ ॥
विस्ताराङ्गुलसंयुक्तां(क्तं)कुर्यादतिकनियसाम् ।
चतुःषष्टिगृहद्वारमुदयेनार्धविस्तृतम् ॥ ५ ॥
विस्तारहस्ततुल्यानि[1] षष्ट्या पञ्चशताथवा ।
संयुतान्यङ्गुलानि स्यादुच्छ्रायोऽर्धेन विस्तृतिः ॥ ६ ॥
गृहोत्सेधेन वा त्र्यंशहीनेन स्यात् समुच्छ्रितिः ।
तदर्धेन तु विस्तारो द्वारस्येत्यपरो विधिः ॥ ७ ॥
द्वारोच्छ्रायकरैस्तुल्येष्वङ्गुलेषु विनिक्षिपेत् ।
चत्वारि पेद्यापिण्डः स्यात् सपादं विदधीत तम् ॥ ८ ॥
सार्धं वा सत्रिभागं वा द्विगुणं चाधिकं न तु ।
एवं कृते भवेद् द्वारपेद्याया विस्तृतिः स्फुटा ॥ ९ ॥
सार्धेन पेद्यापिण्डेन [2]पिण्डं स्या(ण्डस्यो)दम्बरो भवेत् ।
सार्धस्तु पेद्याविस्तारः स्यादुदुम्बरविस्तृतिः ॥ १० ॥
पेद्यापिण्डेन तुल्या स्याच्छाखाया विस्तृतिः शुभा ।
सार्धया वैतया रूपशाखाया अपि विस्तृतिः ॥ ११ ॥
विस्तारार्धेन पेद्यायाः खल्वशाखा विधीयते ।
रूपशाखासमा वा स्यात् सार्धा वा बाह्यमण्डला ॥ १२ ॥

१ द. विस्तारतस्ततुल्यानि । २ द. पिण्डमौदुंबरो ।

पादोना त्र्यंशहीना वा विस्तारादर्धमेव वा ।
प्रासादेषु च[1] तुल्यः स्याद् [2]भारशाखाविनिर्गमः ॥ १३ ॥
आद्या शाखा भवेद् देवी द्वितीया नन्दिनीति च ।
तृतीया सुन्दरी नाम चतुर्थी स्यात् प्रियानना ॥ १४ ॥
भद्रेति पञ्चमी शाखा प्रशस्ताः पञ्च वेश्मनि ।
अतोऽधिकास्तु याः शाखा गृहद्वारि न ताः शुभाः ॥ १५ ॥
विस्तारात् षोडशो भागश्चतुर्हस्तसमन्वितः ।
तलोच्छ्रयः [3]प्रशस्तोऽयं भवेद् विदितवेश्मनाम् ॥ १६ ॥
सप्तहस्तो भवेज्ज्येष्ठे मध्यमे षट्करोन्मितैः[4] ।
पञ्चहस्तः कनिष्ठे तु विधातव्यस्तथोदयः ॥ १७ ॥
ज्येष्ठे भवेत् सप्तदशहस्ताच्छाला प्रविस्तृता ।
मध्यमे दशहस्तात् तु पञ्चहस्तात् कनीयसि[5] ॥ १८ ॥
उदुम्बरार्धे[6] बाहुल्यं तलन्यासं तु कारयेत् ।
तलन्याससमं पट्टमलिन्दस्य परिग्रहे ॥ १९ ॥
द्वारविस्तारपादेन स्तम्भकोटिर्विधीयते ।
साष्टांशेनाधिकेनाथ सत्रिभागे वा पुनः ॥ २० ॥
कुर्यादेकादशांशेन तथास्यैव प्रपालकम्[7] ।
स्तम्भान् कुर्याद्दतेऽष्टांशान्नव द्वादशधाथवा ॥ २१ ॥
भागैस्ततः स्वार्धसमैरर्धभागसमन्वितैः ।
अधस्तादष्टभागा[8] स्यात् स्तम्भस्य प्रतिपालना ॥ २२ ॥
स्तम्भमूलस्य विस्तारादर्धेन स्थलनिर्गमः ।
तदर्धेन विधातव्यो मसूरकविनिर्गमः ॥ २३ ॥
उत्कालकसमुच्छ्रायः स्तम्भपिण्डसमः शुभः ।
कुम्भिकोत्कालवत् पिण्डे विस्तारेऽष्टांशसम्मिता ॥ २४ ॥

---

१ द. ख. तु । २ द. द्वार° । ३. द. प्रमाणेयं तेषां कनिष्ठवेश्मना । ४ द. °न्वितः । ५ द. °हस्तावमेयसि । ६ द. ख. उदुम्च...वाहर्म्यं तल° । ७ क. उपरि क प्रतेः पाठः गृहीतः, द. ख. प्रतिद्वये 'प्रमालिनी', शास्त्रिभिस्तु प्रणालिनीति संशोधितः । ८ द. °गस्य स्तंभस्यात् प्रति ।

प्राग्युक्तस्तम्भभागेन सपादेन विधीयते ।
दीर्घत्वमाद्यपत्राणां[1] शेषाणां पादहानितः ॥ २५ ॥
पादः पादो भवेन्न्यूनः[2] पात्राणां रसनोच्छ्रयात् ।
सार्धभागोच्छ्रिता कार्या रसना कण्टकोपमा ॥ २६ ॥
सार्धपादोच्छ्रिता यद्वा जङ्घा शेषं यथोदितम् ।
इत्थं स्यात् पद्मकस्तम्भो युक्त्या युक्तस्वरूपकैः ॥ २७ ॥
अष्टाश्रो वा विधातव्यः स्तम्भसूत्रपरिक्रमात् ।
तद्विस्तारसमं त्यक्त्वोत्सेधं भागान् विभाजयेत् ॥ २८ ॥
अष्टाश्रच्छेदमानेन बाह्यसूत्रानुपल्लवान् ।
विदध्यान्मध्यभागे तु कोणांश्च(प)ल्लविकाकुलान् ॥ २९ ॥
घटिका पुष्पमालाभिः पल्लवैश्चोपशोभिता ।
छेदभागः समः कार्यो बहिर्भाग[3]विवर्जितः ॥ ३० ॥
घटपल्लवको नाम स्तम्भोऽयं परिकीर्तितः ।
विहितो वेश्मनामेष स्वामिनः श्रेयसे भवेत् ॥ ३१ ॥
कुबेरो वा विधातव्यः षोडशाश्रक्रियान्वितः ।
ऊर्ध्वतः पल्लवाकीर्णो जङ्घास्य चतुरश्रिका[4] ॥ ३२ ॥
श्रीधरश्च भवेद् वृत्तः कल्पनास्य कुबेरवत् ।
एवं गृहाणां चत्वारः स्तम्भा लक्ष्मभिरीरिताः ॥ ३३ ॥
स्तम्भमूलस्य विस्तृत्या तलपद(ट्ट)स्य[5] विस्तृतिः ।
सपादया विधातव्या बाहुल्यं पादहीनया ॥ ३४ ॥
स्तम्भेन तुल्यं विस्तारे बाहल्ये पदसम्मितम्[6] ।
हीरग्रहणमायामे स्तम्भाग्रात् त्रिगुणं भवेत् ॥ ३५ ॥
हीरग्रहणविस्तारं भागात् सप्त प्रकल्पयेत्(?) ।
तत् स्यात् सृष्टोत्तरं भागं भागेनेष्टं प्रवेशनम् ॥ ३६ ॥

१ द. °माययंत्राणां । २ द. ख. °न्यूनप° । ३ द. °भोग° । ४ द. चतुरंशिका । ५ द. पट्टस्य । ६ द. °ल्यो पट्टसंम्मितं ।

तस्याधस्तात् त्रिकण्टेन त्रिभागं लम्बितेन च ।
लिखेदुभावर्धचन्द्रौ पार्श्वयोरुभयोरपि ॥ ३७ ॥

खल्वं कृत्वा ततो मध्यं भागद्वयमधोगतम् ।
कुर्यात् त्रिकण्टकं कान्तं तुम्बिकामथ लम्बिकाम् ॥ ३८ ॥

द्वयोर्मध्येऽपरं भूयो द्विभागस्थं च कण्टकम् ।
तुम्बिकां[1] लम्बमानां वा पत्रजातिविभूषिताम् ॥ ३९ ॥

तस्याश्चापरतीरं स्यात् पद्मपत्त्या विभूषितम् ।
तलपट्टसमः पेद्रो विस्तारात् पिण्डतोऽपि च ॥ ४० ॥

पट्टत्र्यंशेन तीरे स्यात् [2]पट्टपिण्डार्धनिर्गमः ।
स्तम्भाग्रेण समा कार्या विस्तारस्थौल्यतस्तुला ॥ ४१ ॥

तदर्धेन जयन्तीनां कर्तव्ये पिण्डविस्तृती ।
ताभ्यो विधेयाः पादोनाः सन्धिपाला यदृच्छया ॥ ४२ ॥

निर्यूहेषु च ये पट्टाः पादोनांस्तांस्तु कारयेत् ।
तुलापट्टाश्च पादोनास्तदर्धेन जयन्तिकाः ॥ ४३ ॥

तुलार्धेन विधातव्या प्रतिमोकस्य विस्तृतिः ।
पट्टस्योपरि कण्ठः स्याद् भूषितो रूपकर्मणा ॥ ४४ ॥

वेदिका[3]जालरूपाद्यो निर्यूहः संप्रशस्यते ।
विधातव्या च सच्छत्रा निबद्धाङ्ग[4]णवापिका ॥ ४५ ॥

स्तम्भपट्टांश्च[5] विस्तीर्णान् सपादांस्तत्र कल्पयेत् ।
तुलापिण्डा[6]ः समाः कार्याः सङ्ग्रहैः सुदृढैर्युताः ॥ ४६ ॥

वेदिकाजालसम्पन्नं तलं कार्यं मनोरमम् ।
भूमौ भूमौ भवेत् तच्च द्वादशांशविवर्जितम् ॥ ४७ ॥

प्रणाल्यः सर्वतः कार्या मूलं[7]ग्राहाग्रनिर्गमाः ।
दण्डच्छा[8]द्यं गृहेषु स्याज्ज्ञेयं तच्च चतुर्विधम् ॥ ४८ ॥

---

१ द. °का लंबना तं वा पत्र° । २ द. पट्टापिण्डार्धनिर्गमं । ३ द. ख. ग. °कालरू° । ४ द. ग. °णकवा° । ५ द. ख. °ट्टांशु° । ६ द. तुल्यपिंडः । ७ ख. ग. °ला° । ८ ग. °च्छाद्यगृ ।

भूताख्यं तिलकं तद्वन्मण्डलं कुमुदं तथा ।
गृहच्छाद्येषु तेषु स्यादुच्छ्रायोऽपि चतुर्विधः ॥ ४९ ॥

क्षेत्रतुर्यांशतः कार्यो दैर्घ्याच्छाद्यदण्डकः ।
तदर्धं मुष्टिकायामो दण्डं[1]त्र्यंशेन लम्बना ॥ ५० ॥

चतुरश्रं समं कान्तं मधुरं सुदृढं घनम् ।
वेश्[2]मनां छाद्यकं कार्यं भूतं नाम्ना सुपूजितम् ॥ ५१ ॥

तस्यैवाष्टादशो भागो यदा स्यादुच्छ्रयेऽधिकः ।
उदयस्तिलको नाम शस्तः स गृहकर्मणि ॥ ५२ ॥

द्वाभ्यामु[3]च्चतरः पूर्वो मण्डलः कुमुदस्त्रिभिः ।
अभित्तिस्थे(स्थं) भवेच्छाद्ये(द्यं) चन्द्रे[4]रेखाविभूषितम् ॥ ५३ ॥

[5]गुणरागान्विता भित्तिर्यद्वा घनचयात्मिका ।
तत्रच्छाद्यं भवेच्चान्यदवधारणसंज्ञितम् ॥ ५४ ॥

सिंहकर्ण[6]कपोतालीघण्टाकर्णार्धपक्षगाः ।
ध्वजच्छत्रकुमारांश्च गृहेषु परिवर्जयेत् ॥ ५५ ॥

न पक्षराजिध्वजसिंहकर्णकुमारघण्टाः समरालपल्लीः ।
न प्रस्खला[7]र्धानि [8]नचैव पत्राण्यायोजयेद् वेश्मसु मङ्गलार्थी[9] ॥५६॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

गृहद्रव्यप्रमाणानि नामाष्टाविंशोऽध्यायः ।[10]

---

## अथ शयनासनलक्षणं नाम एकोनत्रिंशोऽध्यायः ।

इदानीमभिधास्यामः शयनासनलक्षणम् ।
शुभाशुभपरिज्ञानं येन सम्यक् प्रजायते ॥ १ ॥

---

१ ख. ग. दण्डं । २ ख. ग. °श्मसुच्छा°, द. °श्मासु° । ३ द. ख. ग. °च्चरतः° ।
४ ख. ग. °न्द्रे° । ५ द. ख. ग. अ° । ६ द. °कर्णहर्यंशाली° । ७ द. ख. ग. रार्धानि ।
८ द. ख. ग. नरैव । ९ द. °र्थम् । १० द. °प्रमाणाध्यायो नामाष्टाविंशः ॥ छ ॥ ।

मैत्रे[1] मुहूर्ते पुष्यस्थे शीतरश्मौ शुभेऽहनि[2] ।
सम्पूज्य देवताः सम्यक् कर्मारम्भं समाचरेत् ॥ २ ॥

वृक्षास्तत्र प्रशस्यन्ते चन्दनस्तिनिशोऽर्जुनः ।
तिन्दुकः सा[3]लशाकौ च शिरीषासनधन्वनाः ॥ ३ ॥

हरिद्रु[5]र्देवदारुश्च स्यन्दनोऽर्कौ सपद्मकौ ।
श्रीपर्णी दधिपर्णश्च शिंशपान्येऽपि ये शुभाः[4] ॥ ४ ॥

गृहकर्मणि ये नेष्टा वृक्षास्तेऽत्रापि निन्दिताः ।
हेम्ना रूप्येण चानद्धा गजदन्तेन वा शुभा ॥ ५ ॥

आरकूटेन वा नद्धा शय्या कार्या विचक्षणैः ।
पूर्वच्छिन्नं यदा दारु शयनासनहेतवे ॥ ६ ॥

आदीयते तदारम्भे निमित्तान्युपलक्षयेत् ।
दध्यक्षतान् पूर्णकुम्भं रत्नानि कुसुमानि वा ॥ ७ ॥

सुगन्धद्रव्यवस्त्राद्यान् मत्स्याश्वयुगलं तथा ।
मत्तवारणमन्यांश्च शुभान् वीक्ष्यादिशेच्छुभम् ॥ ८ ॥

कर्माङ्गुलं समुद्दिष्टं वितुषैरष्टभिर्यवैः ।
अष्टोत्तरशतं तेषां शय्या ज्येष्ठा महीभुजाम् ॥ ९ ॥

म[6]ध्या महीभुजां शय्या शतं स्याच्चतुरुत्तरम् ।
शतं कनीयसी प्रोक्ता नृपाणां विजयावहा ॥ १० ॥

नवतिर्नृपपुत्रस्य मन्त्रिणः सा षडु[7]ज्झिता ।
द्वादशोना बलपतेस्त्रिषट्कोना पुरोधसः ॥ ११ ॥

आयामार्धेन विस्तारं सर्वं शय्यासु कल्पयेत् ।
यद्वा निजाष्टभागेन षड्भागेनाथवाधिकम् ॥ १२ ॥

विप्राणां शस्यते शय्या दैर्घ्येणाङ्गुलसप्ततिः ।
द्वाभ्यां द्वाभ्यामङ्गुलाभ्यां हीना स्याच्छेषवर्णिनाम् ॥ १३ ॥

---

१ द. °त्र्ये । २ द. °रश्मौ स्थितेऽहनि । ३ क. शा° । द. सालसाकैव । ४ क. ग. द. ख. °भाः । सर्वदन्तमयी शय्या हेमरत्नान्विता शुभा । गृ° । ५ द. प्रतौ इयं पंक्तिर्नास्ति । ६ ग. द, ख. °ध्यमा नृपतेः श° । ७ द. म्र. °ग्नि° ।

बाहल्यमुत्पलस्य स्यादुत्तमस्याङ्गुलत्रयम् ।
अङ्गुलद्वितयं सार्धं मध्यस्य द्वे कनीयसः ॥ १४ ॥
बाहल्यमीशादण्डस्य कुर्यादुत्पलसम्मितम् ।
सार्धं सपादं सत्र्यंशं तस्य विस्तार[1]मुत्पलात् ॥ १५ ॥
विस्तारार्धेन शय्यायाः सकुष्यस्य विधीयते ।
तत्पादस्योदयो(या)[2]मध्यहीनौ [3]द्विचतुरुज्झितौ ॥ १६ ॥
अर्धेन मध्यविस्तारान्मध्ये बाहल्यमिष्यते ।
त्रिभागहीन[4]मिच्छन्ति पादोन[5]मपि केचन ॥ १७ ॥
स्थौल्येन पादोऽधः शीर्षादुत्पलेन समो भवेत् ।
मध्ये सपादः सार्धश्च तले [6]वृद्धिः क्रमेण सा ॥ १८ ॥
[7]षड्भागोऽस्याधिको यद्वा मध्ये त्र्यंशाधिकस्तले ।
तत्कुष्यमुत्पलत्र्यंशो मूले तस्या[8]र्धमग्रतः ॥ १९ ॥
उत्सेधतुल्यो विस्तारः कार्यो वा द्व्यङ्गुलाधिकः ।
सपत्रकलिकापत्रपुटग्रासविभूषितः ॥ २० ॥
कुर्यात् प्रदक्षिणाग्राणि शय्याङ्गानि समन्ततः ।
ऊर्ध्वाग्रा निखिलाः पादाः स्वामिनो वृद्धिहेतवे ॥ २१ ॥
श्रेष्ठैकद्रव्यजा शय्या मिश्रद्रव्या न शस्यते ।
एकदारुं प्रशंसन्ति द्विदारुर्भयमावहेत् ॥ २२ ॥
त्रिदारुघटितायां तु स्वामिनो नियतो वधः ।
शय्यायां जायते यस्मात् तस्मात् तां परिवर्जयेत् ॥ २३ ॥
मूलमग्रेण संयुक्तमपसव्यं विगर्हितम् ।
मूलं मूलेन वा विद्धमेकाग्रे द्वे च दारुणी ॥ २४ ॥
मध्ये व्रणो मृत्युकरस्त्रिभागे व्याधिकारकः ।
क्लेशावहश्चतुर्भागे शिरस्थो द्रव्यहानिकृत् ॥ २५ ॥

१ द. °त्र्यंशं शतस्य विस्तरमु°। २ द. °स्योदयो म°। ३ द. °नौ च द्वि°। ४ क. द. °ना°। ५ क. °ना°। ६ द. वृद्धिक्रमेण सा। ७ द. यद्वामोस्या°। ८ द. °का°।

निर्दोषगात्रे[1] पर्यङ्के पापस्वप्नो न दृश्यते ।
ग्रन्थिकोटरवत् कुर्यात् तस्मान्न शयनासनम् ॥ २६ ॥

आसनं शयनीयं च[2] ग्रन्थिकोटरवर्जितम् ।
बहुपुत्रकरं प्राहुर्धर्मकामार्थसाधनम्[3] ॥ २७ ॥

आरोहणे प्रचलति शयने[4] कम्पते तथा ।
विदेशयानकलहौ ते क्रमेण प्रयच्छतः ॥ २८ ॥

सुश्लिष्टां तामतः[5] कुर्यान्निर्दोषां वर्णशालिनीम् ।
दृढां स्थिरां च स्थपतिः पत्युः कामविवृद्धये ॥ २९ ॥

निष्कुटं कोलदृक् क्रोडनयनं वत्सनाभकम् ।
कालकं बन्धकं[6] चेति छिद्रसंक्षेप ईरितः ॥ ३० ॥

घटवत् सुषिरं मध्ये सङ्कटास्यं च निष्कुटम् ।
कोलाक्षं नीडमि[7]च्छन्ति माषनिष्पावमात्रकम् ॥ ३१ ॥

अध्यर्धपर्वदीर्घं च विवर्णं विषमं तथा ।
तदिह क्रोडनयनं छिद्रमाहुर्महर्षयः ॥ ३२ ॥

भिन्नं पर्वमितं वामावर्तं स्याद् वत्सनाभकम् ।
कालकं कृष्णकान्ति स्याद् विनिर्भिन्नं तु बन्धकम्[8] ॥ ३३ ॥

छिद्रं दारुसवर्णं यत् तन्नो शुभकरं तथा ।
निष्कुटेऽर्थक्षयः कोललोचने कुलविद्रवः ॥ ३४ ॥

शस्त्राद् भीः क्रोडनयने वत्सनाभे रुजो भयम् ।
कालके बन्धकाख्ये[9] च कीटविद्धे च नो शुभम् ॥ ३५ ॥

सर्वत्र प्रचुरग्रन्थि दारु सर्वमनिष्टदम् ।
शय्यार्थे कथितैः क्लृप्तं दारुभिः शस्तमासनम् ॥ ३६ ॥

उपवेशसुखं मानं प्रशस्ताय प्रकल्पितम् ।
पुष्करः सूदहस्तश्च[10] वृत्तोऽङ्गुलचतुष्टयात् ॥ ३७ ॥

---

१ क. °मा° । २ द. वा । ३ द. ख. °क° । ४ द. ख. °य्यायां कम्पतेऽथवा । ५ द. °ष्टानामतः । ६ द. ख. °न्धु° । ७ द. °ख्यं नीलमि° । ८ द. °न्धु° । ९ द. °के धुंधु° । १० द. °स्तस्य ।

आरभ्य विस्तरात् कार्यस्तावद् यावन्नवाङ्गुलम् ।
पुष्करव्यासतो दण्डस्तस्य कार्यश्चतुर्गुणः ॥ ३८ ॥
फलकः पुष्करार्धेन तत्तुल्यश्चास्य मूलकः ।
स्थूलः स्याच्चतुरंशेन दण्डपुष्करविस्तरात्[1] ॥ ३९ ॥
खातं च पुष्करस्यान्तस्तावद्[2] गाम्भीर्यमिष्यते ।
प्रशस्तसारदारूत्थः कर्तव्योऽस्य प्रयोजनम् (?) ॥ ४० ॥
परिवेषणमन्यच्च पच्यमानानां[3]घट्टकम् (?) ।
कार्यः कङ्कतकः[4] श्लक्ष्णः प्रशस्तमृदुदारुजः ॥ ४१ ॥
आरभ्य दैर्घ्येणाष्टभ्यः स्याद् यावद् द्वादशाङ्गुलम् ।
सार्धाङ्गुलं[5] चतुर्भागं विस्तारेण च दैर्घ्यतः[6] ॥ ४२ ॥
मध्ये च तस्य बाहल्यं विस्ताराष्टांशतो भवेत् ।
एकतः स्थूलविस्तारा भवेयुस्तस्य दन्तकाः ॥ ४३ ॥
अन्यतस्तु[7] घनाः सूक्ष्मास्तीक्ष्णाः कार्यास्तथाग्रतः ।
मध्ये त्रिभागमुत्सृज्य दन्तका भागयोर्द्वयोः ॥ ४४ ॥
त्रिभिर्भागे हृते तेषां न शेषस्तान् विवर्जयेत् (?) ।
गजदन्तमयः श्रेष्ठस्तथा शाखोटवृक्षजः ॥ ४५ ॥
मध्यमो दारुभिः शेषैर्जघन्योऽसारदारुजः ।
रूपकैः स्वस्तिकाद्यैर्वा स मध्ये स्यादलङ्कृतः ॥ ४६ ॥
यूकाद्यपनये[8] केशविवेके चोपयुज्यते ।
अङ्गुलेनाधिके पादात् कार्ये दैर्घ्येण पादुके[9] ॥ ४७ ॥
कृतायां पञ्चधा तस्यां कुर्याद् भागत्रयं पुरः ।
पश्चाद् भागद्वयं तत्र सङ्ग्रहोऽस्या विधीयते ॥ ४८ ॥
अङ्गुलत्रयमुत्सेधो विस्तारोऽङ्घ्र्यनुसारतः[10] ।
अङ्गुल्यङ्गुष्ठयोर्मध्य[11]भागे मत्स्याद्यलङ्कृतौ ॥ ४९ ॥

१ द. ख. °रः । २ क. °स्य यावद् गा° । ३ क. °न्नघण्ट° । ४ द. ख. °ङ्के° । ५ द. ख. सद्व्यङ्गुलं । ६ ख. °ताम् । ७ द. प्रभातस्तु । ८ द. °द्युगनये । ९ द. पाण्डुके । १० क. °ह्न° । ११ द. ख. °ध्ये° ।

कर्तव्यौ कीलकौ काष्ठदन्तशृङ्गादिसम्भवौ ।
गजेन्द्रदन्तः श्रीखण्डश्रीपर्ण्यौ[1] मेषशृङ्गिका ॥ ५० ॥
शस्ताः पादुकयोः शाकक्षीरिणीचिरबिल्विकाः[2] ।
इदमिह शयनानामासनानां च लक्ष्म
प्रकटितमनु दर्व्याः[3] कङ्कतस्यापि सम्यक् ।
शुभमथ विपरीतं पादुकानां च विद्वान्
सकलमिति विदित्वा पूज्यतामेति लोके ॥ ५१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
शयनासनलक्षणं नाम एकोनत्रिंशोऽध्यायः ॥

---

## अथ राजगृहं नाम त्रिंशोऽध्यायः ।

अष्टोत्तरशतं ज्येष्ठं मध्यं स्यान्नवतिं[4] करान् ।
जघन्यं सप्ततिकरान् राजवेश्म प्रशस्यते ॥ १ ॥
अतो हीनं न कर्तव्यं महतीं श्रियमिच्छता ।
चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ॥ २ ॥
भागार्धं शस्यते भित्तिरादिकोणसमाश्रिता ।
चतुष्को[5] भागिको मध्ये चतुःस्तम्भसमन्वितः ॥ ३ ॥
[6]अलिन्दस्तद्बहिः कार्यः स्तम्भैर्द्वादशभिर्वृतः ।
विंशत्या स्याद् वरैर्युक्तो द्वितीयोऽलिन्दकस्ततः ॥ ४ ॥
स्यादष्टाविंशतिस्तम्भस्तृतीयश्चाप्यलिन्दकः ।
षट्त्रिंशता चतुर्थश्च स्तम्भानां परिकीर्तितः ॥ ५ ॥
एवं स्तम्भशतं मध्ये प्रोक्तं पृथ्वीजये बुधैः ।
द्वाराणि चास्य चत्वारि पञ्चशाखानि जायते(?) ॥ ६ ॥

---

१ द. ख. °र्णी । २ द. विल्लकाः । ३ द. दर्पा । ४ द. °तिः । ५ क. °ष्के ।
६ द. ख. आ° ।

चत्वारो निर्गमास्तस्य प्रोक्ताः सर्वे विभागिकाः[1] ।
दिक्षु सर्वासु कर्तव्यमेवं भद्रनिवेशनम् ॥ ७ ॥
अर्धेन मध्यभित्तेस्तु[2] भित्तिर्भद्रे[3]स्त्र(त्र)ये[4] भवेत् ।
भद्रे भद्रे[5] धराणां स्याद् विंशतिश्चाष्टभिर्युता ॥ ८ ॥
मुखभद्रं भवेद् युक्तं वेदिकामत्तवारणैः ।
क्षेत्रभागोदयाद्या भूराभूमिफलकान्तरम् ॥ ९ ॥
आदिभूम्युदयार्धेन पीठं चास्य प्रकल्पयेत् ।
भागान् नवोदयं[6] कृत्वा भागेनैकेन[7] कुम्भिका ॥ १० ॥
कर्तव्याष्टांशयुक्तेन स्तम्भो भागचतुष्टये[8] ।
पादयुक्तं विधातव्यो भागेनोत्कलकं[9] तथा ॥ ११ ॥
हीरग्रहणकं कार्यं भागं[10] पादविवर्जितः(तम्)[11] ।
सपादभागिकः पट्टः स्तम्भकेन समन्वितः ॥ १२ ॥
पट्टार्धेन जयन्त्यः स्युर्भूमौ भूमावयं क्रमः ।
कलशभागोदयादर्धं भूमिष्वन्यासु हीयते ॥ १३ ॥
पञ्चभागप्रमाणं तु सच्छाद्यं नवमं तलम् ।
वेदिकाया अधश्छाद्यं[12] सार्धं[13]भागत्रयोन्मितम् ॥ १४ ॥
कण्ठेन युक्तं कर्तव्यं वेदिका पिहिता यथा[14] ।
तस्याः कण्ठे(ण्ठो) विधातव्यस्तन्मध्ये सार्धभागिकः ॥ १५ ॥
वेदिकाविस्तरः कार्यो भागांस्तत्रा[15]र्धसप्तमान् ।
वेदिकोपरि घण्टा च सार्धभागां[16]श्चतुर्दश ॥ १६ ॥
भागद्वयं सपादं तु कण्ठः पट्टं तु पञ्चभिः ।
चतुर्भिश्च[17] द्वितीयं च तृतीयं च त्रिभिस्ततः ॥ १७ ॥

---

१ द. सर्वेऽपि भागिकाः । २ क. °त्ति° । ३ क. °भ° । ४ क. °यो । ५ द. भद्रभद्रे । ६ क. यो । ७ क. °गो° । ८ द. ख. °यं । ९ द. ख. °त्का° १० क. ग । ११ द. ख. भागः पादविवर्जितः । १२ क. स्थाप्यं सा° । १३ क. °र्ध° । १४ द. ख. °था शोभं उदयार्द्धवती । १५ द. ख. भागानत्रा° । १६ द. ख. °ग° । १७ द. °स्तु ।

सम्रशीर्षश्च[1] दातव्यो यथाशोभं यथारुचि ।
क्षेत्रभागसमः कार्यः कलशश्चूलिकावधेः ॥ १८ ॥
उदयार्धेन भूमेः स्युरन्तराणि तलानि च ।
यथाशोभं तु कर्तव्यं पीठं तस्य सुशोभितम् ॥ १९ ॥
सार्धभागद्वयं चास्य कार्या खुरघरण्डिका[2] ।
जङ्घा भागचतुष्कं च ततश्छाद्यं प्रयोजयेत् ॥ २० ॥
भागद्वयं च पादोनं छाद्यपिण्डः प्रकीर्तितः ।
निर्गमोऽस्य चतुर्[3]भागो हंसाख्यस्तस्य चोपरि ॥ २१ ॥
पादोनभागं[4] कर्तव्यं ततश्छाद्यं द्वितीयकम् ।
जङ्घा भूमिचतुष्केण प्रासादस्य प्रकल्पयेत् ॥ २२ ॥
चतुर्थभूमिकामूर्ध्नि ततो मुण्डा[5]( न् ) निवेशयेत् ।
क्षण[6]क्षणप्रवेशेन कार्याः शेषास्तु भूमिकाः ॥ २३ ॥
वेदिका च यथोक्ता स्यात् सघण्टा कलशान्विता ।
रेखाशुद्ध्य[7]ाँ च कर्तव्या मुण्डा[8]ः सर्वे यथायथम् ॥ २४ ॥
अ[9]र्धोदयं त्रिधा कृत्वा तृतीयं दशधा भजेत् ।
वामनश्चातपत्रश्च कुबेरो भ्रमरावली ॥ २५ ॥
हंसपृष्ठो महाभोगी नारदः शम्बुको जयः ।
अनन्तो दशमस्तेषां विधायकवशादमी ॥ २६ ॥
विधातव्याः स्थपतिभिर्मु[10]ण्डरेखाप्रसिद्धये ।
तमङ्गवेदिकाजालमत्तवारणशोभितम् ॥ २७ ॥
वितर्दिनिर्यू[11]हयुतं चन्द्रशालाविभूषितम् ।
कर्माढ्यं बहुचित्रं च कुर्वीत पृथिवीजयम् ॥ २८ ॥
प्रासादाश्च महान्तो ये विधेयास्ते समोदयाः ।
अर्धोदयेन लघवो ह्यवाको( क्रो )णादयं[12] क्रमः ॥ २९ ॥

---

१ क. °म्र° । २ द. ख. खुखरंडिका । ३. द. ख. निर्गमो स्याचतु° । ४ द. ख. पादोन नाग क° । ५ द. ख. मंड्डा नि° । ६ क. णं । ७ द. ख. °शुच्या । ८ द. ख. मदाः । ९ द. ख. अर्थो° । १० द. ख. °र्मं° । ११ द. ख. °र्व्यू । १२ द. ख. घटवो ह्यवाकाणादयं ।

भूम्यष्टकादभ्युदयः क्षेत्रविस्तारसम्मितः ।
यतस्तव वधे प्रोक्तः प्रासादोऽन्यद् विभूषणम् (?) ॥ ३० ॥
बह्वो निकरा येषु प्राङ्गणं तेषु दीयते ।
रेखायां प्रथमायां वा द्वितीयायामथापि वा ॥ ३१ ॥
तृतीयायां वा रेखायां तत्र संवरणाः स्मृताः ।
अयं भूम्युदयः कार्यः क्षेत्रे दशविभागिके ॥ ३२ ॥
न्यूनाधिकविभक्ते तु कार्यः स्यादनुसारतः ।
मुक्तकोणस्य लक्ष्माथ प्रक्रमागतमुच्यते ॥ ३३ ॥
चतुरश्रीकृते क्षेत्रे भागद्वादशकाङ्किते ।
भागश्चतुष्टो(ष्को)[1] मध्येऽस्य चतुर्द्वा(र्ध्वे)रवि[2]भूषितः ॥ ३४ ॥
भागेन च ततोऽलिन्दो धरद्वादशकान्वितः ।
तद्वद् द्वितीयालिन्दोऽपि विंशत्या धारितो धरैः ॥ ३५ ॥
तृतीयश्च धरैरष्टाविंशत्यालिन्दको भवेत् ।
षट्त्रिंशता धरैर्युक्तः कार्योऽलिन्दश्चतुर्थकः ॥ ३६ ॥
चतुश्चत्वारिंशता स्याद् धरैर्युक्तश्च पञ्चमः ।
भागार्धं कारयेद् भित्तिं सार्धं भागं विमुच्य तु ॥ ३७ ॥
भागत्रयं ततः कुर्यात् प्राग्ग्रीवं दैर्घ्यविस्तृतौ ।
विस्तृतौ निर्गमे चैषां भद्रं भागेन कल्पयेत् ॥ ३८ ॥
भागिकं निर्गतं तस्मान्मध्येऽन्यद् भद्रमस्य हि ।
भागनिर्गमविस्तारं दिक्षु सर्वास्वयं विधिः ॥ ३९ ॥
चतुःपञ्चाशता स्तम्भैरेकैकं भद्रमन्वितम् ।
मध्ये वास्य चतुश्चत्वारिंशं स्तम्भशतं भवेत् ॥ ४० ॥
षोडशाभ्यधिका च स्याद् भद्रस्तम्भशतद्वयी ।
एवं धराणां सर्वेषां भवेत् षष्ठं शतत्रयम् ॥ ४१ ॥
पृथ्वीजयवदत्रापि शेषनिर्माणमिष्यते ।
तृतीयभूमिकामूर्ध्नि निर्गमेष्वखिलेष्वपि ॥ ४२ ॥

१ द. ख. भागं चतुष्टो म°। २ द. ख. चतुर्द्वारवि°।

प्राङ्गणानि विधेयानि विशेषोऽत्रैष कीर्तितः ।
सर्वतोभद्रसंज्ञोऽथ शत्रुमर्दननामपि(नि)[1] ॥ ४३ ॥
अयमेव विधिः कार्यो[2] मुण्डरेखाग्रसिद्धये ।
श्रीवत्सस्यापि मध्ये स्यात् स्तम्भाद्यं मुक्तकोणवत् ॥ ४४ ॥
सार्धं भागं परित्यज्य भागत्रितयविस्तृतम् ।
कर्णप्राग्ग्रीवमेतस्य भागेन च विनिर्गतम् ॥ ४५ ॥
भद्रं तस्यापि कर्तव्यं भागविस्तारनिर्गमम् ।
मुक्तकोणवदस्यापि मध्यभद्रं विधीयते ॥ ४६ ॥
अयं विधिः समग्रासु दिक्षु शेषं तु पूर्ववत् ।
प्रतिभद्रं धरास्त्रिंशद् भवन्त्यस्य दृढाः शुभाः ॥ ४७ ॥
शतं विंशमिदं (सर्व)धराणामिह कीर्तितम् ।
एवं समस्तस्तम्भानां चतुःषष्टं शतद्वयम् ॥ ४८ ॥
सर्वतोभद्रसंज्ञस्य लक्ष्मेदानीं प्रचक्ष्महे ।
चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते ॥ ४९ ॥
भागिकः स्याच्चतुष्कोऽस्य चतुःस्तम्भविभूषितः ।
स्तम्भैर्द्वादशभिर्युक्तः प्रथमः स्यादलिन्दकः ॥ ५० ॥
स्तम्भविंशतिसंयुक्तो द्वितीयः स्यादलिन्दकः ।
[3]स्यादष्टाविंशतिस्तम्भस्तृतीयः स्याप्य(द)लिन्दकः ॥ ५१ ॥
षट्त्रिंशता चतुर्थः स्यादलिन्दो भूषितो धरैः ।
पञ्चमः स्याच्चतुश्चत्वारिंशता भूषितो धरैः ॥ ५२ ॥
द्वापञ्चाशद्धरैः[4] षष्ठः सर्वेऽप्येतेऽस्य[5] भागिकाः ।
भागार्धं शस्यते भित्तिः सर्वतः सुदृढा घना ॥ ५३ ॥
सार्धभागं परित्यज्य भागत्रितयविस्तृतः ।
कर्णप्राग्ग्रीवकश्च स्याद् भागमेकं च निर्गमः ॥ ५४ ॥

१ द. ख. °नामपि । २ द. ख. म° । ३ द. ख. स्तंभविंशति संयुक्त स्या° । द. ख. °यस्या° । ४ द. ख. °शद्धरः । ५ द. ख. °प्येतस्य ।

भद्रमस्यापि कर्तव्यं भागनिर्गमविस्तृतम् ।
मध्ये[1] भद्रं विधातव्यं भागद्वयविनिर्गतम् ॥ ५५ ॥
अस्यापि भद्रं[2] मध्ये स्याद् भागत्रितयविस्तृतम् ।
भागिको निर्गमश्चास्य तदन्तर्भागनिर्गतम् ॥ ५६ ॥
भागविस्ता[3]रसंयुक्तं भद्रमन्यत् प्रकल्पयेत् ।
दिक्षु सर्वा[4]स्वियं प्रोक्तो विधिर्भद्रप्रकल्पने[5] ॥ ५७ ॥
स्तम्भानामस्य कर्तव्यं मध्ये षण्णवतं शतम् ।
भद्रेष्वेषु च[6] सर्वेषु भवेत् षष्ट्यधिकं शतम् ॥ ५८ ॥
समेन प्रविभागेन स्तम्भानामेकसङ्ख्यया ।
इत्थं समस्तस्तम्भानां षट्पञ्चाशं शतत्रयम् ॥ ५९ ॥
किन्तु जङ्घा भवेदस्य भूमिकात्रितयोन्मिता ।
शत्रुमर्दनसंज्ञस्य धाम्नो लक्ष्माथ कथ्यते ॥ ६० ॥
पृथ्वी[7]जयसमं मध्ये भित्तिश्चापि तथाविधा ।
सार्धं[8] भागं परित्यज्य भागेनायतविस्तृतम् ॥ ६१ ॥
भद्रं विदध्यात् तन्मध्ये भागत्रितयविस्तृतम् ।
भद्रमेवं[9] विधातव्यं भागत्रितयनिर्गतम्[10] ॥ ६२ ॥
पार्श्वयोर्भागिकं भद्रमायत्यां(त्या) विस्तरेण च ।
भागत्रितयविस्तारं भागेनैकेन निर्गमम् ॥ ६३ ॥
मध्यभद्रं[11] ततोऽपि स्याद् भागेनायतविस्तृतम् ।
क्रमोऽयं दिक्षु सर्वासु विधातव्योऽस्य सिद्धये ॥ ६४ ॥
ऊर्ध्वं पृथ्वीजयस्येव कार्यमस्यापरं पुनः ।
प्रतिभद्रं चतुश्चत्वारिंशत्स्तम्भसमन्वितम् ॥ ६५ ॥
मध्ये स्तम्भशतं[12] चास्य[13] विधेयं सुदृढं शुभम् ।
षट्सप्ततिस्तम्भशतद्वयमस्य भवेदिति ॥ ६६ ॥

---

१ द. ख. कर्णमध्ये । २ द. ख. क. भद्र° । ३ द. ख. °स्त° । ४ द. ख. °स्वि° । ५ द. ख. °द्रं प्रकल्पते । ६ द. ख. भद्रेष्वेतस्य स° । ७ द. ख. पृष्ठं । ८ इयं पंक्ति द. ख. प्रतिद्वये नास्ति । ९ द. ख. क. °वं । १० द. ख. निर्गमं । ११ द. ख. भद्रं भद्रं त° । १२ द. ख, प्रतिद्वये शतं इति पदं नास्ति । १३ द. ख. भाग्य ।

पञ्चानामपि चैतेषां हस्ताष्टशतमुत्तमम्।
मानतुल्येन विस्तारात् कर्तव्यं श्रियमिच्छता ॥ ६७ ॥
मध्यमाधमयोर्मानं[2] कीर्तितं पृथिवीजये।
राज्ञः क्रीडार्थमन्यच्च कथ्यते गृहपञ्चकम् ॥ ६८ ॥
क्षोणीविभूषणं त्वाद्यं पृथिवीतिलकं परम्।
प्रतापवर्धनं चान्यच्छ्रीनिवासं ततोऽपि च ॥ ६९ ॥
लक्ष्मीविलाससंज्ञं च पञ्चमं परिकीर्तितम्।
चतुरश्रीकृते क्षेत्रे दशभागैर्विभाजिते[3] ॥ ७० ॥
चतुष्को भागविस्तीर्णो मध्ये कार्यश्चतुर्धरः।
बहिश्च भागिकोऽलिन्दस्तदन्योंऽशार्धयार्धतः[4] ॥ ७१ ॥
कर्णप्रासादकाः कार्या भागत्रितयविस्तृताः।
तेषां षड्दारुकं मध्ये भित्तिर्भागार्धसम्मितौ[5] ॥ ७२ ॥
तद्बहिर्भागनिष्क्रान्तो भद्रं भागं च विस्तृतः।
प्राग्ग्रीवत्रयसंयुक्तो भागिकालिन्दवेष्टितः ॥ ७३ ॥
अर्धभागिकभित्त्या च चतुष्को वेष्टितो भवेत्।
प्रासादोऽयं मनोहारी स्वदेवनिवेश्वरः ॥ ७४ ॥
चतुरश्रीकृते क्षेत्रे भागद्वादशभाजिते।
चतुष्को भागिको मध्ये बाह्यालिन्दौ च भागिकौ ॥ ७५ ॥
नवकोष्ठांश्च कर्णेषु प्रासादान् विनिवेशयेत्।
षड्दारुकं[6] च कर्तव्यं तेषामन्तरसंश्रयम्[7] ॥ ७६ ॥
ततोऽर्धभागिकी भित्तिः कर्तव्या सर्वतो बहिः[8]।
भद्रे भागायतो भागविनिष्क्रान्तश्चतुर्दिशाम्[9] ॥ ७७ ॥
चतुष्को भागिकोऽलिन्दवेष्टितश्च[10] विधीयते।
अस्य भद्रत्रयं कार्यं भागविस्तारनिर्गमम् ॥ ७८ ॥

१ द. ख. मानस्तुबोधवि°। २ द. ख. मध्यासाधनयोगानि। ३ द. ख. °गवि°। ४ क. वृ°। ५ द. ख. °ताः। ६ द. ख. यद्दा°। ७ द. ख. °श्रि°। ८ द. ख. °तोऽपि हि। ९ द. ख. भो°। १० क. °को°।

अर्धभागिकभित्त्या च वेष्टितं तद् विधीयते ।
कर्णे कर्णेस(ऽस्य) विस्तीर्णे द्वे भद्रे भागनिर्गते ॥ ७९ ॥
प्रासादमेवं भुवनतिलकं परिचक्षते ।
चतुरश्रीकृते क्षेत्रे भागद्वादशभाजिते ॥ ८० ॥
चतुष्को भागिको मध्ये चतुःस्तम्भो विधीयते ।
तद्बहिर्भागिकोऽलिन्दो द्वितीयोऽपि च भागिकः ॥ ८१ ॥
नवकोष्ठांश्च[1] कर्णेषु प्रासादान् विनिवेशयेत् ।
षड्दारुकं[2] च कर्तव्यं तेषामन्तरसंश्रयम् ॥ ८२ ॥
ततोऽर्धभागिकी भित्तिः कर्तव्या सर्वतो बहिः ।
भद्रे भागायतो भद्रविनिष्क्रान्तश्चतुर्धरः ॥ ८३ ॥
चतुष्को[3] भागिकालिन्दद्वयेन परिवेष्टितः ।
त्रिभागविस्तृतं भद्रं तद्बहिर्भागनिर्गतम् ॥ ८४ ॥
भागिकं प्रतिभद्रं च कुर्यादुभयतः समम् ।
भागार्धं बाह्यतो भित्तिर्भद्रस्य परितो भवेत् ॥ ८५ ॥
विधिरेष विधातव्यो दिक्ष्वेवं चतसृष्वपि ।
विलासस्तबको नाम प्रासादोऽयं प्रकीर्तितः ॥ ८६ ॥
कर्णप्राग्ग्रीवकौ द्वौ द्वौ शालाप्राग्ग्रीवकौ यदा ।
स्यातामस्य तदा कीर्त्तिपताकः[4] परिकीर्तितः[5] ॥ ८७ ॥
अस्यैव पीठे निर्मुक्तशा[6]लाभिः परितोऽष्टभिः[7] ।
अन्योन्यशाला[8]संबद्धे यदासावेव दीयते[9] ॥ ८८ ॥
कर्णप्रा[10]सादकोपेतः कोणैः शालोज्झि[11]तैर्युतः ।
प्रासादसुन्दरो ज्ञेयस्तदा भुवनमण्डनः ॥ ८९ ॥
एते प्रोक्ता[12]स्तलच्छन्दा जङ्घासंवरणादिकम् ।
भूमिमाना[13]दिकं यच्च तत् पृथ्वीजयव[14]द् भवेत् ॥ ९० ॥

१ द. ख. °ष्ठश्च । २ द. ख. यद्दा° । ३ द. ख. °ष्के । ४ द. ख. °र्त्तिः । ५ द. ख. °तः ॥ कीर्तिपताकः ॥ ६ द. ख. °मा° । ७ द. ख. °तोवृते । ८ द. ख. °ल° । ९ द. ख. °द्धे षटासावेतदीयते । १० द. ख. °र्णः । ११ द. ख. °ष्टि° । १२ द. ख. °क्तावल° । १६ द. ख. °नामा° । १४ द ख. पृष्टिज°; क. स्तम्भे ज° ।

इदानीं कथ्यते लक्ष्म क्षोणीभूषणवेश्मनः ।
पञ्चपञ्चाशता हस्तैः कल्पिते चतुरश्रके ॥ ९१ ॥

विभक्ते चाष्टभिर्भागैश्चतुष्को भागिकः स्मृतः ।
चतुर्भिरन्वितः स्तम्भैरलिन्दश्चास्य भागिकः ॥ ९२ ॥

युक्तो द्वादशभिः स्तम्भैर्विंशत्या च द्वितीयकः ।
स्यादष्टाविंशतिधरस्तृतीयश्चाप्यलिन्दकः ॥ ९३ ॥

भित्तेरप्यर्धभागेन[1] सार्धं भागं विमुच्यते ।
भागपञ्चकविस्तीर्णं भद्रं भागेन निर्गतम् ॥ ९४ ॥

तन्मध्यभद्रमन्यच्च भागत्रितयविस्तृतम् ।
भागेन निर्गतं कार्यं भद्रमन्यत् ततोऽपि च ॥ ९५ ॥

भागेन विस्तृतं कार्यं भागेनापि च निर्गतम् ।
दिक्षु सर्वासु कर्तव्यो विधिरेषोऽस्य सिद्धये ॥ ९६ ॥

मध्यस्तम्भैश्चतुःषष्ट्या संयुक्तं सारदारुजैः ।
प्रतिभद्रं धरैः कार्यमष्टादशभिरन्वितम् ॥ ९७ ॥

षट्त्रिंशं शतमेवं स्यात् स्तम्भानामिह सर्वतः ।
चतुर्द्वारमिदं कार्यं यशः[2]श्रीकीर्तिवर्धनम् ॥ ९८ ॥

पृ[3]थिवीतिलकस्याथ लक्षणं परिकीर्त्यते ।
चत्वारिंशत्करे क्षेत्रे भागैर्भक्तेऽर्धषष्ठकैः ॥ ९९ ॥

भागिकः स्याच्चतुष्कोऽन्तश्चतुःस्तम्भविभूषितः ।
अलिन्दोऽपि च भागेन स्तम्भैर्द्वादशभिर्युतः ॥ १०० ॥

विंशत्या च[4] द्वितीयोऽपि भित्तिः स्यादस्य पादिका ।
कर्णे प्रासादको भागैस्त्रिभिः स्यान्निर्गतायतः ॥ १०१ ॥

अस्य भद्रद्व[5]यं कार्यं[6] भागनिर्गतविस्तृतम् ।
कर्णप्रासादयोर्मध्ये भागपञ्चकविस्तृतम् ॥ १०२ ॥

१ द. ख. °त्ति° । २ क. शः कीत्तिविव । ३ द. ख. क्षोणी भूषणः पृथि° । ४ क. °र्द्वि°
५ द. ख. थ । ६ द. ख. °द्रं च यत्कार्यं भागं नि° ।

भागेन निर्गतं कार्यं भद्रं तस्यापि मध्यतः ।
भागत्रितयविस्तीर्णं भागेनैकेन निर्गतम् ॥ १०३ ॥

भद्रमस्यापि मध्येऽन्यद् भागेनायतनिर्गतम् ।
स्तम्भाः षट्त्रिंशदन्तः स्युर्[1]भद्रेष्वष्टौ शतद्वयम् ॥ १०४ ॥

अथातः श्रीनिवासस्य लक्षणं सम्प्रचक्ष्महे ।
पृथ्वीतिलकवन्मध्यमेतस्य परिकीर्त्यते[2] ॥ १०५ ॥

सपादं भागमुत्सृज्य[3] भागत्रितयविस्तृतम् ।
भागेन निर्गतं चास्य भद्रमाद्यं प्रकल्पयेत् ॥ १०६ ॥

तस्यापि मध्यवर्तिन्यद्[4] भागनिर्गतविस्तृतम् ।
अन्वितं दशभिः स्तम्भैः सुदृढैस्तद् विधीयते ॥ १०७ ॥

सर्वास्वपि च दिक्ष्वेवं विधेया भद्रकल्पना ।
अस्य षट्सप्ततिः स्तम्भाः भवन्त्येकत्र सङ्ख्यया ॥ १०८ ॥

प्रतापवर्धनस्याथ लक्ष्म साम्प्रतमुच्यते ।
पञ्चविंशतिहस्ताङ्के सार्धभागकभाङ्किते ॥ १०९ ॥

मध्ये चतुष्को भागेन चतुर्भिः सम्भृतो[5] धरैः ।
[6]अलिन्दो भागिकश्चास्य स्तम्भद्वादशकान्वितः ॥ ११० ॥

पादिका भित्तिरेतस्य भद्रं चास्य प्रकल्पयेत् ।
भागनिर्गमविस्तारं चतुःस्तम्भविभूषितम् ॥ १११ ॥

विधिरेष समग्रासु दिक्षु कार्योऽस्य[7] सिद्धये ।
स्तम्भैर्द्वात्रिंशता युक्तो बहिरन्तरयं भवेत् ॥ ११२ ॥

धराणां चैव सर्वेषां चतुःषष्टिः प्रकल्पना[8] ।
अथ लक्ष्मीविलासस्य सम्यग् लक्ष्माधुनोच्यते ॥ ११३ ॥

प्रतापवर्धनस्येव मध्यमस्य प्रकल्पयेत् ।
प्रतापवर्धनसमं सर्वतोऽप्येतदीरितम् ॥ ११४ ॥

---

१ द. ख. 'दन्तस्य भ°। २ क. कल्पते। ३ क. °ष्ट। ४ द. ख. °र्त्य°। ५ द. ख. संस्तृतो। ६ द. ख. आ°। ७ द. ख. कार्यस्य। ८ द. ख. इयं पंक्तिर्नास्ति। ९ क. तो।

किन्त्वस्य पार्श्वभद्राणि भद्राग्रेष्वेव कारयेत् ।
कोणेष्वपि च भद्राणि पार्श्वयोरुभयोस्तथा[1] ॥ ११५ ॥
भागस्य(श्च)[2] निर्गमोऽप्येषां विशेषोऽस्मादयं मतः ।
भद्रमस्य दशास्तम्भैर्मध्यं[3] षोडशभिर्धरैः ॥ ११६ ॥
चतुर्द्वारं भवेदेतदिच्छया क्षणमध्यगम् ।
द्वारमन्यद् विधातव्यं स्वपदे स्यात् सुशोभितम् ॥ ११७ ॥
भूमिभिः सार्धषष्ठीभिर्विधेयः[4] क्षोणिभूषणः ।
अर्धाष्टमीभिश्च भवेत् पृथ्वीतिलकसंज्ञकः ॥ ११८ ॥
स्यात् सार्धपञ्चमीभिस्तु श्रीनिवासोऽत्र भूमिभिः ।
लक्ष्मीविलाससंज्ञोऽर्धपञ्चमीभिर्विधीयते ॥ ११९ ॥
प्रतापवर्धनाख्योऽर्धचतुर्थीभिर्विधीयते ।
राज्ञां पृथ्वीजयादीनि निवासभवनानि च ॥ १२० ॥
क्षोणीविभूषणादीनि विलासभवनानि च ।
यान्युक्तानि निवासाय विलासाय च भूभृताम् ॥ १२१ ॥
तेषां पृथ्वीजयादीनां[5] द्वारमानमथोच्यते ।
चतुःपञ्चाशदंशो यो विस्तृतः सकरत्रयः ॥ १२२ ॥
स द्वारस्योदयः प्रोक्तस्तदर्धेनास्य विस्तृतिः ।
स्वोदयस्य त्रिभागेन पिण्डः स्तम्भेषु शस्यते ॥ १२३ ॥
स्यात् सप्तविंशतितमः[6] सपादः सचतुष्करः ।
गृहभागो भवेद् भूमिः प्रथमा राजवेश्मनाम् ॥ १२४ ॥
भूच्छ्राये नवधा भक्ते तदंशकचतुष्टयम् ।
निर्गमश्छाद्यकस्यांशद्वयं पादोनमुच्छ्रयः ॥ १२५ ॥
तथान्तरावणी कार्या छाद्यकोच्छ्रायनिर्गमा ।
हीरग्रहणपिण्डार्धबाहल्या सा प्रशस्यते ॥ १२६ ॥

---

१ द. ख. इयं पंक्ति र्नास्ति । २ द. ख. भागास्यान्नि° । ३ द. ख. °म्भं म° । ४ द. ख. °र्धमष्टाभि° । ५ द. ख. °थ्विं° । ६ द. ख. °तिमतः ।

तस्याः स्वमेव बाहल्यं[1] पादोनं विस्तृतिः स्मृता ।
अन्तरावणिकातुल्यो मदला[2]या विनिर्गमः ॥ १२७ ॥
स्वनिर्गमात् तथा चास्याः सपादः स्यात् समुच्छ्रयः ।
भूम्युच्छ्रयनवांशस्य पादोऽस्याः[3] पिण्डमिष्यते ॥ १२८ ॥
भूनवांशस्त्रिभागोनो मदलायाश्च विस्तृतिः ।
†लुमामूलस्य स्तम्भार्धं विस्तारः परिकीर्तितः ॥ १२९ ॥
तत्त्र्यंशादग्रविस्तीर्णा मूले साष्टांशयुग् भवेत् ।
तुम्बिनी लम्बिनी हेला शान्ता कोला मनोरमा ॥ १३० ॥
आध्माता चेत्यमूः प्रोक्ता लुमाः सप्त मनीषिभिः ।
ऋजुः सा[4] लम्बिनी तासामाध्माता कर्णगा स्मृता ॥ १३१ ॥
अन्तराले क्रमेण स्युः पञ्चान्याः[5] परिकीर्तिताः ।
स्तम्भे निदध्यान्मदलां[6] छाद्यं धर्तुं दृढां शुभाम् ॥ १३२ ॥
स्तम्भाभावे पुनर्न्यस्येत् कुड्यपट्टेऽपि तां सुधीः ।
सप्त पञ्चाथवा तिस्रो मल्लच्छाद्ये लुमाः[7] स्मृताः ॥ १३३ ॥
कोणेष्वेता इमाभ्योऽन्याः[8] कर्तव्याः प्राञ्जलाः समाः ।
छाद्ये[9] कर्णात् क्वचित् कार्या मकराननभूषिताः ॥ १३४ ॥
तेऽपि विद्याधरोपेताः क्वचित् सगजतुण्डकाः ।
सकुम्भिकस्य स्तम्भस्य प्रविभज्योदयं त्रिधा ॥ १३५ ॥
तत्र भागद्वयं कुर्याद् भागानर्धचतुर्थकान् ।
तत्र पादोनभागेन राजितासनकं भवेत् ॥ १३६ ॥
ततः सोल्कलका वेदी साङ्घ्रि[10]भागा विधीयते ।
कूटागारसमांशार्धं कार्योऽत्रा[11]सनपट्टकः ॥ १३७ ॥
स स्यादभीष्टो(ष्ट)विस्तारो[12] भागोच्चं मत्तवारणम् ।
स्वोदयस्य त्रिभागेन तिर्यक् कार्योऽस्य निर्गमः ॥ १३८ ॥

---

१ द. ख. °ल्यां । २ द. ख. °ना° । ३ द. ख. °यमयां सस्या पादोष्या° । ४ द. ख. स्या । ५ द. ख. °न्या यः प्र° । ६ द. ख. °लं । ७ द. ख. सुना । ८ द. ख. °न्यो° । ९ द. ख. °द्य । १० द. ख. तातः सोत्कालका वेदी सांहि । ११ द. ख. कूटाकार समो सार्द्ध कार्यो प्रा° । १२ द. ख. °भीष्टे विस्तारा° ।

† 'लुपा' इति शिल्पशास्त्रे प्रसिद्धिः ।

रूपकैः करणायाभिः(?)सुपुत्रैरपि[1] शोभितम्।
वेदिकादिकमप्यस्य रूपपत्राचितं[2] शुभम्॥ १३९॥
आयसीभिः शलाकाभिः कीलकैश्च दृढीकृतम्।
एतानि पञ्चदशराजनिवेशनानि
पृथ्वीजय[3]प्रभृति यानि निरूपितानि।
यो लक्षणेन सहितं परिमाणमेषां
जानाति तस्य नृपतिः परितोषमेति॥ १४०॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

राजगृहं नाम त्रिंशोऽध्यायः।

---

## अथ यन्त्रविधानं नामैकत्रिंशोऽध्यायः।

भ्राम्यद्दिनेशशशिमण्डलचक्रशत्सं[4](स्त)-
मेतज्जगत्त्रितययन्त्रमलक्ष्यमध्यम्।
भूतानि बीजमखिलान्यपि सम्प्रकल्प्य
यः सन्ततं भ्रमयति स्मरजित् स वोऽव्यात्[5]॥ १॥
यन्त्राध्यायमथ ब्रूमो यथावत् प्रक्रमागतम्।
धर्मार्थकाममोक्षाणां यदेकमिह कारणम्॥ २॥
यदृच्छया प्रवृत्तानि भूतानि स्वेन वर्त्मना।
नियम्यास्मिन् नयति यत् तद् यन्त्रमिति कीर्तितम्॥ ३॥
स्वरसेन प्रवृत्तानि भूतानि स्वमनीषया।
कृतं यस्माद् यमयति तद्वा यन्त्रमिति स्मृतम्॥ ४॥
तस्य बीजं चतुर्धा[6] स्यात् क्षितिरापोऽनलोऽनिलः।
आश्रयत्वेन चैतेषां वियदप्युपयुज्यते॥ ५॥

---

१ द. ख. °णैरपि च शो°। २ द. ख. पात्रान्वितं। ३ °थ्वि°। ४ क, क्र। ५ द, ख, °ध्यात्। ६ द. ख. °र्थो।

भिन्नः सूत[1]श्च[2]कै(यै)रुक्तस्ते च सम्यङ् न जान[3]ते ।
*प्रकृत्या पार्थिव[4]ः सूतस्ता(त्र)यात् †तत्र क्रिया भवेत् ॥ ६ ॥
पार्थिवत्वादयमतो न कदाचिद् विभिद्यते[5] ।
द्रव्यत्वादग्निजत्वं[6] हि यद्यस्य परिकल्प्यते ॥ ७ ॥
तदा विरोधो नैवास्य पावकेनोपपद्यते ।
गन्धाद् व[7]ह्नेर्विरोधाच्च स्थिता पार्थिवता बलात् ॥ ८ ॥
आत्मैव बीजं सर्वेषां प्रत्येकमपराण्यपि ।
एवं भेदा भवन्त्येषां भूयांसः सङ्करान्मिथः ॥ ९ ॥
स्वयंवाहकमेकं स्यात्[8] सकृत्प्रेर्यं तथापरम् ।
अन्यदन्तरितं[9] वा[10]ह्यं वा[11]ह्यमन्यत्तु[12] त्वदूरतः ॥ १० ॥
स्वयंवाह्यमिहोत्कृष्टं हीनं स्यादितरत् त्रयम् ।
तेषु शंसन्ति दूरस्थमलक्ष्यं निकटस्थितम् ॥ ११ ॥
यद्यु(दु)त्पन्नमलक्ष्यं[13] यदेकं[14] बहुषु साधकम् ।
तदन्यदपि शंसन्ति यस्माद् विस्मयकृन्नृणाम् ॥ १२ ॥
एका स्वीया गतिश्चित्रे[15] वाह्येऽन्या वा[16]हकाश्रिता ।
अरघट्टाश्रिते कीटे दृश्यते द्वयमप्यदः ॥ १३ ॥
इत्थं गतिद्वयवशाद् वैचित्र्यं कल्पयेत् स्वयम् ।
अलक्षता विचित्रत्वं यस्माद् यन्त्रेषु शस्यते ॥ १४ ॥
अन्यत् स्यादन्तरा[17]त्प्रे(प्रे)र्यं द्वितीयं मध्यमं त्विदम् ।
द्वयत्रयादियोगेन चतुर्णामपि योगतः ॥ १५ ॥
अंशांशिभावाद् भूतानां सङ्ख्यै[18]षामतिरिच्यते ।
यः सम्यगेतज्जानाति स पुमान् भवति प्रियः ॥ १६ ॥

---

१ क. °तै° । २ क. ग. °श्व । ३ द. ख. °य । ४ क. °वस्तत्रापां च तत्र । ५ क. °भज्यते । ६ द. ख. द्रवत्वादग्नजात्वं । ७ द. ख. द्वहिवि° । ८ द. ख. वयवाहकमेतस्या° । ९ द. ख. अभ्यदत्त चित्तं । १० ख. ग. बा° । ११ ख. ग. बा° । १२ द. ख. ग. °त्रदू° । १३ क. °क्षं । १४ द. ख. °षं । १५ द. ख. °यंत्रे । १६ द. ख. °ह्य° । १७ ख. °रात्प्रेर्यं । १८ द. ख. °का° ।

* ‘प्रकृत्या स्वभावेन पार्थिवो भागः बहुलः’ इति, † ‘तत्र उदकतेजोवायूनां क्रिया कार्यं भवेत्’ इति च टिप्पणमस्ति क. पुस्तके ।

प्रमदानां नृपाणां च प्रज्ञानां च मतस्य च ।
लाभं ख्यातिं च पूजां च यशो मानं धनानि च ॥ १७ ॥
प्राप्नोति किं किं न पुमान् य इदं वेत्ति तत्त्वतः ।
गृहमेकं विलासानामा[1]श्चर्यस्य परं पदम् ॥ १८ ॥
[2]रतेरावासभवनं विस्मयस्यैकमास्पदम् ।
यथावद् देवतादीनां रूपचेष्टादिदर्शनात् ॥ १९ ॥
तास्तुष्यन्त्यथ तत्तुष्टि[3]ः पूर्वैर्धर्मः प्रकीर्तितः ।
नृपादितोषादर्थः स्यादर्थे कामः प्रतिष्ठितः ॥ २० ॥
वित्तैक्यादस्य निष्पत्तिर्मोक्षश्चास्मान्न दुर्लभः ।
पार्थिवं पार्थिवैर्बीजैः पार्थिवं जलजन्मभिः ॥ २१ ॥
तदेव तेजोजनितैस्त[4]देव म[5]रुदुद्भवैः ।
आप्यमाप्यैस्तथा बीजैरान[6]लैरानिलैरपि ॥ २२ ॥
वह्निजैश्च मरुज्जातैः पार्थिवैर्वारुणैरपि ।
मारुतं मारुतैराप्यैः पार्थिवैरानलैस्तथा ॥ २३ ॥
वह्निजातेऽपि[7] बीजं स्यात् सूतः सोऽपि च वान(नि)ले[8] ।
पार्थिवानां भवेद् बीजमाप्यानामपि वा[9]रणे(रुणम्) ॥ २४ ॥
इति बीजानि सर्वेषां कीर्तितान्यखिलान्यपि ।
[10]कुड्यंकरणसूत्राणि भारगोलकपीडनम् ॥ २५ ॥
लम्बनं लम्बकारे च चक्राणि विविधान्यपि ।
[11]अर्यस्ताम्रं च तारं च त्रपु संवित्प्रमर्दने ॥ २६ ॥
काष्ठं च चर्म वस्त्रं च स्वबीजेषु प्रयुज्यते ।
उर्दकः कर्तरो यष्टिश्चक्रं भ्रमरकस्तथा ॥ २७ ॥
शृङ्गावली च नाराचः स्वबीजान्यौ[12]र्वरे विदुः ।
ताप उत्तेजनं स्तोभः क्षोभश्च जलसङ्गजः ॥ २८ ॥

---

१ द. ख. विशालामा° । २ द. ख. ए° । ३ क. °ष्टेः । ४ द. ख. °स्तवैष त सद्भवैः । ५ क. मारुतोंद्भ° । ६ क. °नि° ७ द. ख. ग. °षु । ८ द. ख. वालने । ९ द. ख. ग. भा° । १० द. ख. कुरुंव्यरकसू° । ग. उरुंव्यक । ११ द. ख. आप° । १२ क. °र्धे° ।

एवमाद्यग्निबीजानि पार्थिवस्य प्रचक्षते ।
धारा च जलभारश्च पयसो[1] भ्रमणं तथा ॥ २९ ॥
एवमादीनि भूजस्य जलजानि प्रचक्षते ।
यथोच्छ्रायो यथाधिक्यं यथा नीरन्ध्रतापि च ॥ ३० ॥
अत्यन्तमूर्ध्वगामित्वं स्वबीजान्ययसस्तथा[2] ।
मरुत् स्वभावजो गाढैर्ग्राहकैश्च प्रतीप्सितः ॥ ३१ ॥
इत्याद्यैर्बीजनाद्यैश्च[3] गजकर्णादिभिः कृतः ।
(छा)चाणितो गालितश्चायं बीजं भवति भूर्भवे[4] ॥ ३२ ॥
काष्ठंभू[5](कृ)त्तिश्च लोहं च जलजे[6] पार्थिवं भवेत् ।
अन्यदम्भ[7]स्तदप्यस्तु तिर्यगूर्ध्वमधस्तथा ॥ ३३ ॥
बीजं स्वकीयं भवति यन्त्रेषु जलजन्मसु ।
तापाद्यं पूर्वकथितं वह्निजं जलजे भवेत् ॥ ३४ ॥
सङ्गृहीतश्च दत्तश्च पूरितः प्रतिनो[8]दितः ।
मरुद् बीजत्वमायाति यन्त्रेषु जलजन्मसु ॥ ३५ ॥
वह्निजातेषु मृत्ताम्रलोहरुक्मादि तद्ग्रहे[9] ।
पार्थिवं कथयन्तीह बीजं बीजविचक्षणाः ॥ ३६ ॥
वह्नेर्वह्निर्भवेद् बीजमाप आपस्तथा भवेत् ।
आद्यैरित्यादिभिः प्रोक्तैर्मरुद् गच्छति बीजताम् ॥ ३७ ॥
प्रत्येषकं[10] च जनकं प्रेरकं ग्राहकं तथा ।
सङ्ग्राहकं च[11] भूजातं बीजं स्यादनिलोद्भवैः ॥ ३८ ॥
प्रेरणं चाभिघातश्च विवर्तो भ्रमणं तथा ।
जलजं मारुतोत्थेषु बीजं स्यादिति सम्मतम् ॥ ३९ ॥
सङ्गृहीतस्य तापाद्यैर्यानि पावकजन्मनि ।
प्रकीर्तितानि तान्येव भवन्ति पवनोद्भवैः ॥ ४० ॥

---

१ द. ख. पा॰ । २ क. ॰स्थिता । ३ द. ख. इत्याद्यैर्जननाभैश्च । ४ द. ख. ॰तले । ५ द. ख. त्रृ॰ । ६ द. ख. ॰ले । ७ द. ख. ॰दंतंस्तदपाच्च ति॰ । ८ ख. ॰ना॰ । ९ क. ॰द्गृ॰ । १० द. ख. प्रत्येकं । ११ द. ख. ॰हकत्वं ।

प्रेरितः सङ्गृहीतश्च जनितश्च समीरणः ।
आत्मनो बीजतां गच्छत्येवमन्यत् प्रकल्पयेत् ॥ ४१ ॥
भूतमेकमिहोद्रिक्तमन्यद्धीनं[1] ततोऽधिकम् ।
अन्यद्धीनतरं चान्यदेवंप्रायै[2]र्विकल्पितैः ॥ ४२ ॥
नाना भेदा भवन्त्येषां कस्तान् कार्त्स्न्येन वक्ष्यति ।
निष्क्रिया भूः क्रिया त्वंशे शेषेषु सहजा[3] त्रिषु ॥ ४३ ॥
अतः प्रायेण सा [4]जन्या[5] क्षितावेव[6] प्रयत्नतः ।
साध्यस्य रूपवशतः सन्निवेशो यतो भवेत् ॥ ४४ ॥
यन्त्राणामाकृतिस्तेन निर्णेतुं नैव शक्यते ।
यथावद्बीजसंयोगः सौश्लिष्ट्यं श्लक्ष्णतापि च ॥ ४५ ॥
अलक्षता निर्वहणं लघुत्वं शब्दहीनता ।
शब्दे साध्ये तदाधिक्यमशैथिल्यमगाढता ॥ ४६ ॥
वहनीषु समस्तासु सौश्लिष्ट्यं चास्खलद्गति ।
यथाभीष्टार्थकारित्वं लयता[7]लानु[8]गामिता ॥ ४७ ॥
इष्टकालेऽर्थदर्शित्वं पुनः सम्यक्त्वसंवृतिः ।
अनुल्बणत्वं [9]ताद्रूप्यं दार्ढ्यं मसृणता तथा ॥ ४८ ॥
चिरकाल[10]सहत्वं च यन्त्रस्यैते गुणाः स्मृताः ।
एकं बहूनि चलयेद् बहुभिश्चाल्यतेऽपरम् ॥ ४९ ॥
सुश्लिष्टत्वमलक्षत्वं यन्त्राणां परमो गुणः ।
अथ कर्माणि [11]यन्त्राणां विचित्राणि [12]यथाविधि ॥ ५० ॥
न विस्तरान्न सङ्क्षेपात् साम्प्रतं संप्रचक्ष्महे ।
कस्यचित् सा क्रिया साध्या कालः कस्यापि कस्यचित् ॥ ५१ ॥
शब्दः कस्यापि चोच्छ्रायो रूपस्पर्शौ च कस्यचित् ।
क्रियास्तु[13] कार्यस्य वशादनन्ताः परिकीर्तिताः ॥ ५२ ॥

---

१ द. ख. °मन्यब्दीजं । २ क. °यो विक° । ३ द. ख. °यं° । ४ द. ख. जान्याक्षिण चेव । ५ ग. °त्या । ६ ग. °तत् । ७ द. ख. °न्चा° । ८ क. °न° । ९ द. ख. च तद्रूपं दार्ढ्यं । १० द. ख. विकराल° । ११ द. ग° । १२ द. ख. ग. तथाविधिः । १३ द. ख. °नु ।

तीर्यगूर्ध्वमधः पृष्ठे पुरतः पार्श्वयोरपि ।
गमनं सरणं पात इति भेदाः क्रियोद्भवाः ॥ ५३ ॥
कालो मुहूर्तकाष्ठाद्यैर्भिन्नो भेदैरनेकधा ।
शब्दो विचित्रः सुखदो रतिकृद् भीषणस्तथा ॥ ५४ ॥
उच्छ्रायस्तु जलस्य स्यात् क्वचिद् भूजेऽपि शस्यते ।
गीतं नृत्यं च वाद्यं च पटहो वंश एवं च ॥ ५५ ॥
वीणा च कांस्यतालश्च तृमिला करटापि च ।
यत्किञ्चिदन्यदप्यत्र वादित्रादि विभाव्यते ॥ ५६ ॥
समस्तमपि तद् यन्त्राज्जायते कल्पनावशात् ।
नृत्ये तु नाटकं चोक्षस्ताण्डवं लास्यमेव च ॥ ५७ ॥
राजमार्गश्च देशी च यन्त्रात् सर्वं प्रसिध्यति ।
तथा जात्यनुगाश्चेष्टा विरुद्धा यास्तु जातितः ॥ ५८ ॥
ताः सर्वा अपि सिध्यन्ति सम्यग्यन्त्रस्य साधनात् ।
भूचराणां गतिर्व्योम्नि भूमौ व्योमचरागमः ॥ ५९ ॥
चेष्टितान्यपि मर्त्यानां तथा भूमिस्पृशामिव ।
जायन्ते यन्त्रनिर्माणाद् विविधानीप्सितानि च ॥ ६० ॥
यथासुरा जिता देवैर्यथा निर्मथितोऽम्बुधिः ।
हिरण्यकशिपुर्दैत्यो नृसिंहेन हतो यथा ॥ ६१ ॥
धावनं हस्तियुद्धं च गजानामगडोऽपि च ।
नानाप्रकार(रा) या चेष्टा नानाधारागृहाणि च ॥ ६२ ॥
दोलाकेल्यो विचित्राश्च तथा रतिगृहाणि च ।
चित्रा सेन(ना) च कुड्यश्च स्वयंवाहकसेवकाः ॥ ६३ ॥
सभाश्च विविधाकाराः सत्या मायाः प्रकल्पिताः ।
एवंप्रायाणि चान्यानि यन्त्रात् सिध्यन्ति कल्पनात् ॥ ६४ ॥

---

१ क. °क्ष्य° । २ द. ख. या° । ३ द. ख. ग. °श्च । ४ द. ख. कृतो । ५ द. ख. राजना° । ६ क. त्रासने च ।

विधाय भूमिकाः पञ्च शय्यां[1] त्वा दिभुवि स्थितां[2] ।
प्रतिप्रहरमन्यासु सर्पन्ती याति पञ्चमीम् ॥ ६५ ॥
एवंप्रायाणि चित्राणि सम्यक् सिध्यन्ति यन्त्रतः ।
क्रमेण त्रिंशतावर्तं[3] स्थाले दन्ता भ्रमन्त्यसौ ॥ ६६ ॥
तन्मध्ये पुत्रिका क्लृप्ता प्रति नाडिं प्रबोधयेत् ।
वह्नेश्च दर्शनं तोये वह्निमध्याज्जलोद्गतिः ॥ ६७ ॥
अवस्तुतोऽपि वस्तुत्वं वस्तुतोऽपि तथान्यथा ।
निःश्वासेन वियद् याति श्वासेनायाति मेदिनीम् ॥ ६८ ॥
क्षीरोदमध्यगा शय्या प्रती[4]ष्टाधः फणाभृता ।
गोलश्च सूति(चि)विहितः सूर्यादीनां प्रदक्षिणम् ॥ ६९ ॥
परिभ्राम्य[5]त्यहोरात्रं ग्रहाणां दर्शयन् गतिम् ।
गजादिरूपे रथिकरूपतां गमितः पुमान् ॥ ७० ॥
भ्रान्त्वा नाडिकया तस्याः पर्यन्ते[6] हन्ति भो(यो)जनम् ।
दीपिकापुत्रिका क्लृप्ता क्षीणं क्षीणं प्रयच्छति ॥ ७१ ॥
दीपे तैलं प्रनृत्यन्ती[7] तालगत्या प्रदक्षिणम्[8] ।
यावत् प्रदीयते वारि तावत् पिबति सन्ततम् ॥ ७२ ॥
यन्त्रेण कल्पितो हस्ती न तद् गच्छत् प्रतीयते ।
शुकाद्याः पक्षिणः क्लृप्तास्तालस्यानुगमान्मुहुः ॥ ७३ ॥
जनस्य विस्मयकृतो नृत्यन्ति च पठन्ति च ।
पुत्रिका वा गजेन्द्रो वा तुरगो मर्कटोऽपि वा ॥ ७४ ॥
वलनै[9]र्वर्तनैर्नृत्यं[10]स्तालेन हरते मनः ।
येनैव वर्त्मना क्षेत्रं ध्रियते तेन तत्पयः ॥ ७५ ॥
यात्यायाति पुनस्तद्वद् गतात्[11] पुष्करिणीष्वपि ।
फलके कानि(?)तिष्ठन्ति धावन्त्यनुमतानि च ॥ ७६ ॥

---

१ क. °ध्याकृत्वा° । २ क. °ता एवं° । ३ द. त्रिंशतोवर्त्तीं; ख. ग. त्रिंशते वर्तीं । ४ क. °ति° । ५ क. °ति° । ६ द. ख. ग. °ल्ले । ७ क. °मृज्यन्ती । ८ द. ख. प्रतिक्षणं । ९ क. °र्नै° । १० द. ख. वलवैर्वर्तनेनृत्यंता° । ११ द. ख. °र्ता पु° ।

घातां(तं) ददति युध्यन्ते निर्यान्त्यश्रमनावृतम् ।
नृत्यन्ति[1] गायन्ति तथा वंशादीन्[2] वादयन्ति च ॥ ७७ ॥

निरुद्धमुक्तस्य वशान्मरु[3]तो यन्त्रभङ्गिभिः ।
याश्चे[4]ष्टा दिव्यमानुष्यस्ता एवात्र न केवलम् ॥ ७८ ॥

दुष्करं यद्यदन्यच्च तत्तद् यन्त्रात् प्रसिध्यति ।
यन्त्राणां घटना नोक्ता गुप्त्यर्थं[5] नाज्ञतावशात् ॥ ७९ ॥

तत्र हेतुरयं ज्ञेयो व्यक्ता नैते फलप्रदाः ।
कथितान्यत्र बीजानि यन्त्राणां घटना[6] न यत् ॥ ८० ॥

तस्माद् व्यक्तीकृतेष्वेषु न स्यात् स्वार्थो न कौतुकम् ।
वस्तुतः कथितं सर्वं बीजानामिह कीर्तनात् ॥ ८१ ॥

अभ्यूह्यं स्वधिया प्राज्ञैर्यन्त्राणां कर्म यद् यथा ।
यन्त्राणि यानि दृष्टानि कीर्तितान्यत्र[6] तान्यपि[7] ॥ ८२ ॥

नन्यानि यस्मात् तान्य[8]तो विज्ञेयान्युपदेशतः ।
एतत् स्वबुद्ध्यै[9]वास्माभिः समग्रमपि कल्पितम् ॥ ८३ ॥

अग्रतश्च[10] पुनर्ब्रूमः कथितं यत् पुरातनैः ।

बीजं चतुर्विधमिह प्रवदन्ति यन्त्रे-
ष्वम्भोग्नि[11]भूमिपवनैर्निहि[12]तैर्यथावत् ।
प्रत्येकतो बहुविधं हि विभागतः स्या-
न्मिश्रैर्गुणैः पुनरिदं गणनामपास्येत् ॥ ८४ ॥

किमेतस्मादन्यद् भवति भुवने चित्रमपरं
किमन्यद् वा तुष्ट्यै भवति किमु वा कौतुककरम् ।
किमन्यद् वा कीर्त्तेर्भवनमपरं कामसदनं
किमस्मात् पुण्यं वा किमिव च परीतापशमनम् ॥ ८५ ॥

---

१ द. ख. वृदाभि । २ द. ख. °दीच्छाद° । ३ द. ख. °त्मा° । ४ द. ख. °चे° । ५ द. ख. टनेनत् । ६ क. ख. °नु । ७ द. ख. तानि च । ८ द. ख. तन्यतो । ९ क. °द्वितोऽस्मा° । १० द. ख. °तः परं । ११ द. ख. °ग्निसूर्य° । १२ क. °ह° ।

एतेऽत्यर्थं प्रीतिदा बीजयोगाः संजायन्ते योजिताः सूत्रधारैः ।
भ्रान्त्या नान्यश्चित्र[1]कृद् दारुक्लृप्तं चक्रं दोलाद्यं पुनः पञ्चमं तत् ॥८६॥

पारम्पर्यं कौशलं सोपदेशं शास्त्राभ्यासो वास्तुकर्मोद्यमो धीः ।
सामग्रीयं निर्मला यस्य सोऽस्मिंश्चित्राण्येवं वेत्ति यन्त्राणि कर्तुम् ॥८७॥

विचित्रैर्युक्तं ये गुणैः पञ्चरूपं जानन्त्येनं यन्त्रशास्त्राधिकारम् ।
ये वा कृत्स्नं योजयन्तेऽत्र सम्यक् तेषां कीर्त्तिर्द्यां भुवं चावृणोति ॥८८॥

अङ्गुलेन मितमङ्गुलपादेनोच्छ्रितं द्विपुटकं तनुवृत्तम् ।
संविधेयमृजु मध्यगरन्ध्रं श्लिष्टसन्धि दृढताम्रमयं तत् ॥ ८९ ॥

दारवेषु विहं[3]गेषु तदन्तः क्षिप्तं[4]मुद्गतसमीरवशेन ।
आतनोति विचलन्मृदुशब्दं शृण्वतां भवति चित्रकरं च ॥ ९० ॥

सुश्लिष्टखण्ड[5]द्वितयेन कृत्वा सरन्ध्रमन्तर्मुरजानुकारम् ।
ग्रस्तं तथा कुण्डलयोर्युगेन मध्ये पुटं[6] तस्य मृदु प्रदेयम्[7] ॥ ९१ ॥

पूर्वोक्तयन्त्रे विधिनोदरेऽस्य क्षिप्तेऽथ शय्यातलसंस्थमेतत् ।
ध्वनिं ततः सञ्चलनादनङ्गक्रीडारसोल्लासकरं करोति ॥ ९२ ॥

अस्मिञ् शय्यातलविनिहिते मुञ्चति व्यक्तरागं
चित्राञ् शब्दान् मृगशिशुदृशां यान्ति(ति) भीत्येव मानः ।
किञ्चैतासां दयितमभितो निर्भरप्रेमभाजां
प्रौढिं गच्छन्त्यधिकमधिकं मन्मथक्रीडितानि ॥ ९३ ॥

पटहमुरजे वेणुः शङ्खो विपञ्च्यथ काहला
डमरुटिविले वाद्यातोद्यान्यमून्यखिलान्यपि ।
मधुरमधिकं यच्चित्रं च ध्वनिं विदधात्यलं
तदिह विधिना रुद्धोन्मुक्तानिलस्य विजृम्भितम् ॥ ९४ ॥

लघुदारुमयं महाविहङ्गं दृढसुश्लिष्टतनुं विधाय तस्य ।
उदरे रसयन्त्रमादधीत[9] ज्वलनाधारमधोऽस्य चाति(ग्नि)पूर्णम् ॥९५॥

---

१ क. °कृ° । २ द. ख. °मे° । ३ द. ख. °हं° । ४ द. ख. ग. °प्र° । ५ द. ख. ग. °खेडद्वि° । ६ क. स्फु° । ७ क. मे° । ८ द. ख. °न° । ९ द. ख. रसायंत्र दधीत ।

तत्रारूढः पूरुषस्तस्य पक्षद्वन्द्वोच्चालप्रोज्झि[1]तेनानिलेन ।
सुप्त[2]स्वान्तः पारदस्यास्य[3] शक्त्या चित्रं कुर्वन्नम्बरे याति दूरम् ॥९६॥

इत्थमेव सुरमन्दिरतुल्यं सञ्चलत्य[4]लघु दारुविमानम् ।
आदधीत[5] विधिना चतुरोऽन्तस्तस्य पारदभृतान् दृढकुम्भान् ॥९७॥

अयःकपालाहितमन्दवह्निप्रतप्ततत्कुम्भभुवा गु[6]णेन ।
व्योम्नो झगित्याभरणत्वमेति सन्तप्तगर्जद्रसराजशक्त्या ॥ ९८ ॥

वृत्त[7]सन्धितमथायसयन्त्रं तद् विधाय रसपूरितमन्तः ।
उच्चदेशविनिधापिततप्तं सिंहनादमुरजं विदधाति ॥ ९९ ॥

स कोऽप्यस्य स्फारः स्फुरति नरसिंहस्य महिमा
पुरस्ताद् यस्यैता मदजलमुचोऽपि द्विपघटाः ।
मुहुः श्रुत्वा श्रुत्वा निनदमपि गम्भीरविषमं
पलायन्ते भीतास्त्वरितमवधूयाङ्कुशमपि ॥ १०० ॥

दृग्[10]ग्रीवातलहस्तप्रको[11]ष्ठबाहूरुहस्तशाखादि ।
सच्छिद्रं वपुरखिलं तत्सन्धिषु खण्डशो[12] घटयेत् ॥ १०१ ॥

श्लिष्टं कीलकविधिना[13] दारुमयं सृष्टचर्मणा गुप्तम् ।
पुंसोऽथवा युवत्या रूपं कृत्वा[14]तिरमणीयम् ॥ १०२ ॥

रन्ध्रगतैः प्रत्यङ्गं विधिना नाराचसङ्गतैः सूत्रैः ।
ग्रीवाचलन[15]प्रसरणविकुञ्चनादीनि विदधाति ॥ १०३ ॥

करग्रहणताम्बूलप्रदानजलसेचनप्रमाणा(णामा)दि[16] ।
आदर्शप्रतिलोकनवीणावाद्यादि च करोति ॥ १०४ ॥

एवमन्यदपि चेदृशमेतत् कर्म विस्मयविधायि विधत्ते ।
जृम्भितेन विधिना निजबुद्धेः[17] कृष्टमुक्तगुणचक्रवशेन ॥ १०५ ॥

---

१ द. ख. °क्षि° । २ द. ख. सप्त° । ३ द. ख. दः सास्य । ४ द. ख. संवरयं ल° । ५ द. ख. °तं । ६ द. ख. ग° । ७ द. ख. ग. °म° । ८ क. °प° । ९ द. ख. °नवमति° । १० द. ख. दृढग्री° । ११ द. ख. °बाहुबा° । १२ क. शोऽय घ° । १३ द. ख. कीलकीलकपिधाना । १४ द. ख. °त्वे° । १५ द. ख. °वावलय° । १६ क. °नि । १७ क. °ध ।

पुंसो दारुजमूर्ध्वं[1] रूपं कृत्वा निकेतनद्वारि ।
तत्करयोजितदण्डं निरुणद्धि प्रविशतां वर्त्म ॥ १०६ ॥
खड्गहस्तमथ मुद्गरहस्तं कुन्तहस्त[2]मथवा यदि तत् स्यात् ।
तन्निहन्ति विशतो निशि चौरान् द्वारि संवृतमुखं प्रसभेन ॥ १०७ ॥
ये चापाद्या ये शतघ्न्यादयोऽस्मिन्नुष्ट्रग्रीवाद्याश्च दुर्गस्य गुप्त्यै ।
ये क्रीडाद्याः क्रीडनार्थं च राज्ञां सर्वेऽपि स्युर्योगतस्ते गुणानाम् ॥ १०८ ॥
इदानीं प्रक्रमायातं वारियन्त्रं प्रचक्ष्महे ।
क्रीडार्थं कार्यसिद्ध्यै च चतुर्धा तद्गतिं विदुः ॥ १०९ ॥
निम्नगं भवति द्रोणी[3]देशादूर्ध्वस्थिताज्जलम् ।
यत्र तत् पात[4]यन्त्रः स्याद् वा[5]टिकादिप्रयोजनम् ॥ ११० ॥
उच्छ्रायसमपाताख्यं यत्रोर्ध्वा नाडिका पयः ।
जलाधारगुणान्मुञ्चेदधस्तात् समनाडिका(कम्) ॥ १११ ॥
यत्र[6] पातसमुच्छ्रायं प[7]तित्वोच्छ्रायतो जलम् ।
तिर्यग् गत्वा प्रयात्यूर्ध्वं सच्छिद्रस्तम्भयोगतः ॥ ११२ ॥
पतित्वोच्छ्रायतस्तोयं तिर्यगूर्ध्वोर्ध्वमेत्यथ ।
सच्छिद्रस्तम्भयोगेन तत् स्यात् पातसमोच्छ्रयम् ॥ ११३ ॥
वाप्यां वापि च कूपे विधानतो दीर्घिकादि[8]का विहिता ।
यत्रोर्ध्वमम्बु गमयति तदिहोच्छ्रयसंज्ञितं कथितम् ॥ ११४ ॥
दारुजमिभस्य रूपं यत् सलिलं पात्रसंस्थितं पिबति[10] ।
तन्माहात्म्यं निगदितमेतस्योच्छ्रायतुल्यस्य ॥ ११५ ॥
सलिलं सुरङ्ग[11]देशानीतं निम्नेन[12] वर्त्मना दूरे ।
अद्भुतमम्भस्थानं तदिह समोच्छ्रायतः[13] कुरुते ॥ ११६ ॥
धारागृहमेकं[14] स्यात् प्रवर्षणाख्यं ततो द्वितीयं च ।
प्राणालं जल[15]मग्नं नन्द्यावर्तं तथा[16]न्यदपि ॥ ११७ ॥

---

१ क. मूर्धं । २ द. ख. कुम्भह° । ३ द. ख. °ण्या° । ४ क. °द° । ५ ग. घा° । ६ द. ख. ग. °न्त्र । ७ द. ख. पतितोच्छ्रयतोज्वलं । ८ द. ख. °प्यां वा कूपे वा पिधानतो दीर्घका । ९. द. ख. य° । १० द. ख. म्रियति । ११ द. ख. मुरुंग° । १२ द. ख. °व । १३ क. °तं । १४ क. °वं । १५ क. °लनिमग्नं । १६ द. ख. ग. °यथान्य° ।

प्राकृतजनार्थमेतन्न विधेयं योग्यमेतदवनिभुजाम् ।
मङ्गल्यानां सदनं दिव्यमिदं तुष्टिपुष्टिकरम् ॥ ११८ ॥

सलिलाशयस्य सविधे कस्याप्याश्रित्य शोभनं[1] देशम् ।
यन्त्रोत्सेधाद् द्विगुणा त्रिगुणा वा नाडिका कार्या ॥ ११९ ॥

जलनिर्वाहसहासावन्तर्मसृणा बहिश्च नीरन्ध्रा ।
निर्व्यू[2]ढाम्भसि तस्यां शुभे मुहूर्ते गृहं कार्यम् ॥ १२० ॥

सर्वाभिरोषधीभिर्युक्तं सहिरण्यपूर्णकुम्भैश्च ।
सुविचित्रगन्धमाल्यं विनादितं ब्रह्मघोषेण ॥ १२१ ॥

रत्नोद्भवैर्विचित्रैः स्तम्भैर्युक्तं हिरण्यघटितै[3]र्वा ।
रजतोद्भवैः कदाचित् सु[4]रदारुसमुद्भवैरथवा ॥ १२२ ॥

श्रीखण्डोत्थैरथवा सालकमुख्यप्रशस्तवृक्षोत्थैः ।
शतसङ्ख्यैर्द्वात्रिंशत्सङ्ख्यैर्यदि वापि षोडशभिः ॥ १२३ ॥

अथवा चतुस्समन्वितविंशतिसङ्ख्यैर्दिनेशसङ्ख्यैर्वा ।
भूषितमतिरमणीयैश्चतुर्भिरपि वा विधातव्यम् ॥ १२४ ॥

प्राग्ग्रीवै[5]रतिचित्रैः शालैर्जालैर्विभूषितं विविधैः ।
वेदीभिः परिकरितं क[6]पोतपालीभिरभिरामम् ॥ १२५ ॥

रमणीयसालभञ्जिकमनेकविधयन्त्रशाकुनिकृतशोभम् ।
मिथुनैश्च वानराणां जम्भकनिवहैश्च नैकविधैः ॥ १२६ ॥

विद्याधरसिद्धभुजङ्गकिन्नरैश्चारणैश्च रमणीयम् ।
नृत्यद्भिः परमग(गु)णैः शिखण्डिभिर्मण्डितोद्देशम् ॥ १२७ ॥

कल्पतरुभिर्विचित्रैश्चित्रलतावल्लिगुल्मसंछन्नम् ।
परपुष्टषट्पदालीमरालमालामनोहारि ॥ १२८ ॥

प्रवह[7]त्सँकलस्रोतःसुश्लिष्टनिविष्टनाडिकं मध्ये ।
सच्छिद्रनाडिकयुतं नानाविधरूपरमणीयम् ॥ १२९ ॥

---

१ द. ख. शासनं । २ क. °गू° । ३ द. ख. °गदितै° । ४ द. ख. स्व° ।
५ द. ख. प्रागजीवै° । ६ द. ख. ग. मरालयाली° । ७ द. ख. °हृदाक° ।

सुश्लिष्टनाडिकाग्रे स्तम्भतुलाभित्तिसंश्रिते परितः।
सम्यक् कृत्वा दृढतरविलेपनं[1] वज्रलेपाद्यैः॥ १३०॥
लाक्षासर्जरसदृषन्मेषविषाणोत्थचूर्णसंमिश्रम्।
अतसीकरञ्जतैलप्रविगाढो वज्रलेपः स्यात्॥ १३१॥
दृढसन्धिबन्धहेतोः स तत्र देयो द्विशः[2] कदाचिद् वा।
शणवल्कश्लेष्मातकसिक्थकतैलैः प्रलेपश्च॥ १३२॥
उच्छ्रययन्त्रेणैतद्[3] भ्रान्तजलेनाथ तदभितः कृत्वा।
चित्रानुपातयुक्तं प्रदर्शयेन्नृपतये स्थपतिः॥ १३३॥
कार्याण्यस्मिन् करिणां मिथुनान्यभितोऽम्बुकेलियुक्तानि।
अन्योन्यपुष्करोज्झितसीकरभयपिहितनयनानि[4]॥ १३४॥
वर्षानुकृतं चास्मिन् प्रीतिमति प्रतिमङ्गजो वीक्ष्य।
दृक्कटमेहनहस्तैर्मदमिव मुञ्चञ् जलं कार्यः॥ १३५॥
स्तनयोर्युगेन सृजती जलधारे तत्र कापि कार्या स्त्री।
आनन्दाश्रुलवानिव सलिलकणान् पक्ष्मभिः काचित्॥ १३६॥
नाभिहृदनदिकामिव विनिर्गतां कापि बिभ्रती धाराम्।
काप्यङ्गुलीनखांशुभिरिव योषित् सिञ्चती कार्या॥ १३७॥
एवम्प्रायांश्चित्रान्[5] स्वभावचेष्टान्[6] बहूंश्च रमणीयान्[7]।
क्षोभान् विधाय कुर्यादाश्चर्यं[8] नरपतेः स्थपतिः॥ १३८॥
मध्ये तस्य विधेयं सिंहासनममलहेममणिघटितम्।
तत्रासीदेन्नरपतिरवनिपतिः श्रीपतिर्देवः॥ १३९॥
स्नायात् कदाचिदस्मिन् मङ्गलगीतैर्विवर्धितानन्दः।
वादित्रनाट्यनिपुणैर्निषेव्यमाणः सुरेन्द्र इव॥ १४०॥
य एतस्मिन् गाढग्लपितघनघर्म[9]व्यतिकरे
शुचौ[10] धाराधाम्नि स्फुटसलिलधारे नरपतिः।

---

१ द. सम्यग्दृढतर सवि°; ख. सम्यग्दृढतरतस्यरसवि°। २ द. ख. क. ग. ष्टकः। ३ द. ख. एतदुच्छ्रयंत्रेण; क. यतदुच्छ्रयसतत्रयन्त्रिण। ४ द. ख. ग. °ष्टि°; क. °च्छ्रि°। ५ द. ख. यश्चित्तान्; क. °यश्चित्रात्। ६ क. °ष्टा बहूश्च। ७ क. °त्। ८ द. ख. °दाचार्यं। ९ द. ख. °मर्म°। १० सुरैः।

सुखेनास्ते पश्यन् विविधजल[1]शिल्पानि स भवे-
न्न मर्[2]त्यः किन्त्वेष क्षितिकृतनिवासः सुरपतिः ॥ १४१ ॥

जलदकुलाष्टकयुक्तं पूर्ववदन्यद् गृहं समारचयेत् ।
व[3]र्षद्धारानिकरैः प्रवर्षणाख्यां तदाप्नोति ॥ १४२ ॥

प्रतिकुलमस्मिन् कार्या दिव्यालङ्कारधारिणः पुरुषाः ।
विधिना त्रयः सु[4]रूपाश्चत्वारः सप्त वा सुदृढाः ॥ १४३ ॥

य[5]न्त्रेण समोच्छ्रायेण तांश्चतुर्थेन वा ततः पुरुषान् ।
कृत्वा सवक्रनालानम्भोभिः पूरयेद् विमलैः ॥ १४४ ॥

सलिलप्रवेशरन्ध्राण्यखिलानि पिधाय तत्र पुरुषाणाम् ।
अङ्गानि वारिमोक्षाण्यखिलान्यथ मोचयेत् तेषाम् ॥ १४५ ॥

सलिलं सवक्रनालं द्वारप्रतिरोधमोचनैः पुरुषाः ।
मुञ्चन्ति स्वेच्छममी विचित्रपातेन चित्रकरम् ॥ १४६ ॥

इत्थमिमान् वारिधरान् सामस्या(स्त्या)द् द्व्यन्तरेण वा सलिलम् ।
त्र्यन्तरतो वा स्वेच्छं प्रवर्षयेदतिमहच्चि[6]त्रम् ॥ १४७ ॥

इदं नानाकारं कुलभवनमाद्यं रतिपते-
र्निवास[7]श्चित्राणामनुकरणमेकं जलमुचाम् ।
पयःपातैर्ग्रीष्मे रवि[8]करपरीतापशमनं
न केषामत्यर्थं भवति नयनानन्दजननम् ॥ १४८ ॥

एकेनाथ चतुर्भिः स्तम्भैरष्टभिरथार्कसङ्ख्यैर्वा ।
षोडशभिर्वा कुर्यान्मनोहरं गृहमिह द्वितलम् ॥ १४९ ॥

भद्रैर्यु[9]तं चतुर्भिश्चतुरश्रं सर्वभित्तिसंयुक्तम् ।
ईलीतोरणयुक्तं कर्तव्यं पुष्पकाकारम् ॥ १५० ॥

तस्योपरि मध्यगता प्राङ्गणवापी दृढा विधातव्या ।
शतपत्रविहितभूषा तन्मध्ये कर्णिका कार्या ॥ १५१ ॥

---

१ क. °न° । २ द. ख. मत्यर्थः । ३ क. °र्षाधा° ४ द. ख. स्व° । ५ द. ख. मंत्रेण । ६ द. ख. °च्चिरं° । ७ द. ख. निर्वास्य । ८ द. ख. पयः पाते ग्रीष्मं रति° । ९ द. ख. °त्ति निर्युक्तं ।

तत्कोणेषु चतुर्ष्वपि रमणीया दारुदारिकाः कार्याः।
मध्याम्बुजनिहितदृशः सालङ्काराः सश्रृङ्गाराः ॥ १५२ ॥

पूर्वोक्तयन्त्रयोगात् पद्मासीने वसुन्धराधिपतौ।
भृङ्गारामल[1]वारिभिरङ्गणवापीं[2] भ्रियाच्च ततः ॥ १५३ ॥

ता[3]मिति भृत्वा वापीं तत्सलिलं तदनुपट्टगर्भगतम्।
छायस्तु गन्धरोध्रेष्वति रोहति(?)सर्वतो नियतम् ॥ १५४ ॥

मुखपट्टसमुत्कीर्णै रूपैश्चित्रैर्मनोरमैरखिलैः।
अङ्गैर्वारि विमुञ्चति नासास्यश्रवणनेत्राद्यैः ॥ १५५ ॥

प्रणालाख्यं धाराभवनमिदमत्यद्भुततरं
स्थितिं धत्ते यस्य क्षितिपतिलकस्याङ्गणभुवि।
करोत्येतद् वेत्थं स्थपतिरपि बुध्या चतुरया
जगत्येतौ द्वावप्यधिकमहनीयौ कृतधियाम् ॥ १५६ ॥

चतुरश्रातिगभीरा वापी कार्या मनोरमा सुदृढा।
गर्भगतं गृहमस्याः कर्तव्यं लिप्तसन्धि ततः ॥ १५७ ॥

विहितप्रवेशनिर्गति सुरङ्गयाधो निवेशितद्वारम्।
विदधीत चारुरूपैः प्रवर्षकैर्व्याप्तमुपरिष्टात् ॥ १५८ ॥

चित्राध्यायोदितवर्त्मना ततोऽलङ्कृतं च चित्रेण।
तस्य विधेयं मध्यं सलिलाधिपवाससङ्काशम् ॥ १५९ ॥

ऊर्ध्वविनिर्गमिताब्जैर्नी[4]लैस्तत्पट्टकन्दकोद्भूतैः।
सच्छिद्रकर्णिकागतदिनै[5]करकरनिर्मितोद्द्योतम् ॥ १६० ॥

आपूरयेत् ततोऽनु च पाताम्बुभिरमलकमलपर्यन्तम्।
विधिनामुनैव सम्यक् प्रविधाय मनोरमं भवनम् ॥ १६१ ॥

नानारूपकयु[6]क्त्याउ(व्यु)परचिततमङ्गतोरणद्वारम्।
शालाभिरायताभिश्चतसृष्वपि दिक्षु कृतशोभम् ॥ १६२ ॥

---

१ द. ख. °रमाल°। २ द. ख. °पी भृयेच्च। ३ क. °म°। ४ द. ख. °नी°।
५ °दिनिकरविनि°। ६ द. ख. °युक्तासु।

कृत्रिमशफरीमकरीपक्षिभिरपि चाम्बुसम्भवैर्युक्ताम् ।
कुर्यादम्भोजवतीं वापीमाहार्ययोगेन ॥ १६३ ॥

सामन्तमुख्यपुरुषा राजाज्ञालब्धसंश्रयास्तत्र ।
परराष्ट्रागतदूतास्तिष्ठेयुर्नि[1]हितमिह निभृताः ॥ १६४ ॥

अथ स यथाविधि सलिलक्रीडां पूर्वोक्तमार्गरूपाणाम् ।
दृष्ट्वा मुदितः कुर्यात् पर्यङ्कारोहणं नृपतिः ॥ १६५ ॥

तत्र स्थितस्य नृपतेः परिवारितस्य
वाराङ्गनाभिरभितो जलमग्नधाम्नि ।
पातालसद्मनि यथा भुजगेश्वरस्य
निस्सीमसम्भृतरतिर्भवति प्रमोदः ॥ १६६ ॥

पूर्वोक्तवापिकायां मध्ये स्तम्भैश्चतुर्भिरुप[2]रचितम् ।
मुक्ताप्रवालयुक्तं पुष्पकमथ कारयेल्लटभम् ॥ १६७ ॥

वापीं परितः पुष्पकमापूर्य सुनिर्गमाभिरथ सुदृढम् ।
गर्भस्वस्तिकभित्ति[3]भिरुपहितशोभं समन्ततः कुर्यात्[4] ॥ १६८ ॥

पूर्वोक्तवारियोगात्[5] पूर्णामाकर्णतो विधायैताम् ।
जलकेलिषु सोत्कण्ठो महीपतिः पुष्पकं यायात् ॥ १६९ ॥

कुर्वीत नर्मसचिवैर्विलासिनीभिश्च सार्धमवनिपतिः ।
तद्भित्त्यन्तरवर्ती निमज्जनोन्मज्जनैः क्रीडाम् ॥ १७० ॥

एकत्र मग्नैरपत्र[6] दृष्टैरन्यत्र हत्वा सलिलेन नष्टैः ।
क्रीडँत्यलं केलिकरैः सहायैर्नृपः सुखं मज्जनपुष्करिण्याम् ॥ १७१ ॥

वापीतलस्थितमथ त्रपयावनम्र-
माच्छादितस्तनभरं करपल्लवेन ।
गाढावसक्तवसनं जलरोधमुक्ता-
वालोकते प्रणयिनीजनमत्र धन्यः ॥ १७२ ॥

---

१ ग. °हं° । २ द. ख. °पचरितं । ३ द. ख. °त्तिरूप° । ४ द. ख. समन्तात् । ५ द. ख. °योगा । ६ द. ख. °रपरत्र । ७ द. ख. °डे° । ८ द. ख. स° ।

रथदोलादिविधानं दारवमभिदध्महे वयं सम्यक् ।
यन्त्रभ्रमणककर्म प्रकीर्तितं पञ्चमं यत् तत् ॥ १७३ ॥
तत्र वसन्तः प्रथमो मदननिवासो वसन्ततिलकश्च ।
विभ्रमकस्त्रिपुराख्यः पञ्चैते दोलकाः कथिताः ॥ १७४ ॥
निखनेच्चतुरः स्तम्भान् समैकसूत्रोपगान् ऋजून् सुदृढान् ।
सदृशान्तरान् धरित्रीवशतः सुश्लिक्ष्ण(ष्ट)पीठगतान् ॥ १७५ ॥
प्रासादस्योक्तदिशि प्रविदध्याद् विरचिताष्टकरदैर्घ्यम् ।
भूमिगृहं रमणीयं तदर्धतो विहितगाम्भीर्यम् ॥ १७६ ॥
तद्गर्भतले स्तम्भो लोहमयाधारसंस्थितः कार्यः ।
भ्रमसहितः पीठयुतो ग्रस्तश्चच्छादकतुलाभिः ॥ १७७ ॥
संस्थाप्योपरि पीठस्य कुम्भिकामतिदृढां विभक्तां च ।
धनुरुच्छ्रि[1]तैस्ततोऽमू[2]मष्टभिरावेष्टयेद् भद्रैः ॥ १७८ ॥
स्वेच्छ[3]मथ भूमिकोच्छ्रयमस्योर्ध्वं कल्पयेन्नितान्तमृजुम् ।
निदधीत वेष्टनोर्ध्वं पट्टयुतं स्तम्भशीर्षं च ॥ १७९ ॥
हीरग्र[4]ह(ण ?)पर्यन्तं म[5]दला गजशीर्षि[6]का विधातव्या ।
सुदृढा प्रयत्नर[7]चिता मनोभिरामा यथाशोभम् ॥ १८० ॥
पट्टस्योपरि कार्या चतुष्किका क्षेत्रमानतोऽभीष्टात् ।
तस्यामुपरि विधेयस्तलबन्धो दृढतर[8]न्यासः ॥ १८१ ॥
स्तम्भैर्द्वादशभिरथ क्षेत्रे युक्त्या समुच्छ्रितैर्भव्यैः ।
रूपवतीकोणस्थितिरधि[9]का भू[10]ः प्रथमिका कार्या ॥ १८२ ॥
मध्ये भ्रमश्च तस्या गर्भस्तम्भ[11]प्रतिष्ठितः कार्यः ।
क्षेत्रप्रमाणवशतस्तां पश्चाच्छादयेत् पट्टैः ॥ १८३ ॥
रथिकाशिखाग्रकेषु च फलका[12]म(व)रणस्य तद्वदुपरिष्टात् ।
भ्रमचक्राणि न्यस्ये[13]न्मध्ये स्तम्भे च पञ्चैव ॥ १८४ ॥

---

१ द. °ष्टि° । २ द. ख. °प्यमुमष्टश°; क. °थ मुष्टिभिरा° । ३ द. ख. °च्छा° । ४ द. ख. °रग्रहण । ५ क. ख. द. स° । ६ द. ख. °र्षे° । ७ क. °चरिता । ८ द. ख. °ल° । ९ क. ख. द. °थि° । १० द. ख. भूद्भूमि°; ग. तद्भूमि° । ११ द. र्भस्तंप्र°; क. °र्भस्तम्भः प्र° । १२ क. °कांतर° । १३ °से° ।

अत उपरि यथाशोभं हि भूमिका पुष्पकाकृतिः कार्या ।
मध्यस्तम्भाधारा कृतकलशविभूषणा शिरसि ॥ १८५ ॥

स्तम्भेऽव(ध)स्ताद् भ्रमि[1]तो भृशं भ्रमत्यर्थभूमिका तत्र ।
रथिकाभ्रमरकयुक्ता परस्परं चक्रयन्त्रेण ॥ १८६ ॥

वसन्तरथिकाभ्रमे समधिरूढवाराङ्गना-
परिभ्रमणसम्भृताभ्यधिकविभ्रमं भूपतिः ।
करोति नयनोत्सवस्त्रि(वं त्रि)दशधाम्नि यत्कीर्तनं
वसन्तसमये भवत्यमलकीर्त्तिधामैव सः ॥ १८७ ॥

आरोप्य स्थिरमेकं स्तम्भं भूमीगृहादिरहितम[2]थ ।
हस्तचतुष्कोच्छ्राया कार्योपरि भूमिका चास्य ॥ १८८ ॥

मध्ये भ्रमरकयुक्तं शेषं पूर्ववदिहाचरेदखिलम् ।
पुष्पकमपि च स्तम्भे शिथिलं कलशोच्छ्रितं कुर्यात् ॥ १८९ ॥

तस्योपरि च ग्रीवा चतुरासनसंयुता विधातव्या ।
घण्टास्तम्भौ कार्यौ स्तम्भेन महाबलौ तत्र ॥ १९० ॥

एवं पुष्पकभूमिकान्तरलस्थायी निगूढो जनो
यावद् भ्रामकयन्त्रचक्रनिकरं सम्यक् क्रमाच्चालयेत् ।
तावत् ता रथिकास[3]ना मृगदृशस्तत्र स्थिताः पुष्पके
कामावासकुतूहलार्पितदृशो भ्राम्यन्ति सर्वा अपि ॥ १९१ ॥

अथ कोणगतान् स्तम्भांश्चतुरो विनिवेशयद ऋजून् सुदृढान् ।
सुश्लि[4]ष्टपीठसंस्थान् समान्त[5]रान् मेदिनीवशर्त[6]ः ॥ १९२ ॥

तेषामुपरि लता(तला)न्तरसंयुक्ता भूमिका विधातव्या ।
रथिकास्तत्र चतस्रो जायन्ते पूर्वव[7]द् दिक्स्थाः ॥ १९३ ॥

तदुपरि तथार्धभूमिः कार्या सुश्लिष्टदारुसन्धाना ।
मध्यभ्रमरकयुक्ता सरूपका मत्तवारणयुता च ॥ १९४ ॥

---

१ द. °वस्ताम्रमि°; ख. °वस्ताम्रभि° । २ ग. °मयं च । ३ द. ख. °कासमा. .राडिशस्तत्र । ४ द. ख. °म्लक्ष्ण°; क. °श्लक्ष्ण° । ५ द. ख. °न्तरो° । ६ द. ख. °ता । ७ द. ख. ग. वद्दिक्संस्था ।; क. पूर्वयुक्ताभिः ।

†नानाविधकर्मवती वसन्ततो बाह्यरेखा[1] स्यात्।

अन्योन्ययन्त्रपरिघट्टनदोल्यमान-
निश्शेषचक्ररथिकाभ्रमणाभिरामम्।
दृष्ट्वा वसन्ततिलकं सुरमन्दिराणां
भूषायमाणमुपयाति न विस्मयत्वं(यं कः)॥ १९५॥

प्रविधाय रङ्गभूमिं प्रथमां शास्त्रान्तराधरस्यार्थे(?)।
चतुरश्रा रूपवती सचतुर्भद्रा विधेया भूः॥ १९६॥

प्रतिकोणमागत(ता)स्या भद्रेषु भवन्ति संयता भ्रमराः।
अत उपरि[2]ष्टाद् भूम्या भ्रमराश्चाष्टासनाः कार्याः॥ १९७॥

रेखाः शुद्धाः कार्या बहिरन्तश्चित्रिताश्चान्याः।
पीठेषु मध्यग(सं)स्थास्ततोऽपरा भूमिकाः कार्याः॥ १९८॥

पीठस्य मध्यसंस्थैरन्योन्यारालियोजितैश्चक्रैः।
सर्वे वेगाद् भ्राम्यन्ति सा[3]न्तना[4](रा) विभ्रमे भ्रमराः॥ १९९॥

दोलासनो विहि[5]तवारवधू[6]कृ(भृ)तानि-
चित्रेण यस्त्रिदशधामसु विभ्रमेण।
पृथ्वीपतिर्मुदमुपैति समुल्लसन्ती
कीर्त्तिर्न माति भुवनत्रितयेऽपि तस्य॥ २००॥

चतुरश्रमथ क्षेत्रं कृत्वांशैर्भाजितं ततोऽष्टाभिः।
को[7]णैः शेषैस्तस्मिंश्चतुरश्रं कल्पयेद् भद्रम्॥ २०१॥

तद्द्विगुणमूर्ध्वमेतस्य भूमिकाभागसङ्ख्यया कार्यम्।
तत्राद्यंशचतुष्केण भूमिका स्यात् समुच्छ्रयतः॥ २०२॥

तत्राष्टषट्चतुर्भागवर्जिता भूमिका उपर्युपरि।
क्रमशो भवन्त्यथैवं ताः स्युस्तिस्रोऽर्धसंयुक्ताः॥ २०३॥

† इह किञ्चिदर्धं मातृकासु गलितमिव भाति।

१ द. ख. °खा वा स्या°। २ क. रिभ्य भू°। ३ द. ख. सातनावितमे भ्र°। ४ ग. °नाविवमे भ्र°। ५ द. ख. °हि°। ६ क. धू+तानि चि। ७ द. ख. क्षो°।

शेषांशोच्छ्रययुक्ता घण्टा चतुरश्रकायता कार्या ।
त्रिचतुर्भूम्यौ कार्ये सषट्चतुर्भागविस्तारे ॥ २०४ ॥

रङ्गः स्यादाद्यभुवि द्वितीयभुवि कोणगास्तथा रथिकाः ।
स्युर्भद्राकृतियुक्ता दोला अपि तत्र रमणीयाः ॥ २०५ ॥

रथिकास्तृतीयभूमौ कार्या भद्रेषु चातिरमणीयाः ।
कोणेष्वथासनान्यर्धवास्तुकेऽपि भ्रमः कार्यः ॥ २०६ ॥

दोलारथिके चतुरासने भ्रमोऽष्टासनो भवेत् तत्र ।
आसनमिह तत् कथितं युवतेः स्थानं यदेकं स्यात् ॥ २०७ ॥

निखिलान्यपि भ्रमणसंमुखं तानि बिभ्रति भ्रमणम्( ? ) ।
यत्रासनानि स इह भ्रम इत्युक्तोऽपराधिका( ? ) ॥ २०८ ॥

यष्टेरूर्ध्वमधस्ताद् भ्रमस्य चक्रं (नि)योजयेदेकम् ।
लघुचक्राणि च तद्वन्नियोजयेदासनेष्वत्र ॥ २०९ ॥

लघुचक्रारकवृत्ते संलग्नाः कीलका दृढाः कार्याः ।
तुल्यान्तराः समस्ताः प्रलघु(क)चक्रारवृन्तगताः ॥ २१० ॥

रथिकाशिखाग्र[2]चक्रं भ्रमचक्रारक(वि ?)नियोजितं कार्यम् ।
यष्टिचतुष्टयमस्मिंस्तिर्यक् चक्रद्वयोपेतम् ॥ २११ ॥

ऊर्ध्वं द्वितीयभूमेस्तृतीयभूमेरथान्तरे कुर्यात् ।
नियतं रथिकायष्टि[3]र्भ्रमसंलग्नानि यन्त्राणि ॥ २१२ ॥

आसनाधारयष्टीनां रथिकाचक्रयोजितान् ।
अधः सम[4]न्तरान् कुर्याच्चतुरः परिवर्तकान् ॥ २१३ ॥

त(द्व)द् द्वितीयभूमीदोलागर्भे समान्तरे यष्टी ।
लग्ने तथैकचक्रे याम्योत्तरचक्रयोर्न्यस्येत् ॥ २१४ ॥

तद्वदधो भूकोणगरथिकाचू[5]डाग्रचक्रसंसक्ताः ।
यष्टीस्ततश्चतस्रो द्विचक्र[6]का इतरच[7]क्रयोर्न्यस्येत् ॥ २१५ ॥

---

१ ग. °यु° । २ द. ख. चक्रभ्रमरचक्रारक विनि° । ३ ग. °क्रम° । ४ द. ख. ग. °म° । ५ ग. °ला°; द. ख. °लायचक्र° । ६ द. ख. °कः । ७ द. ख. °श्च° ।

प्रान्तचक्रद्वये कोणरथिकाचक्रयोजिता ।
दोलागर्भगता यष्टिस्तिर्यक् कार्यापरापरा ॥ २१६ ॥

पूर्वे भद्रे द्वारं कुर्यात् सोपानराजितमधस्तात् ।
गर्भात् पश्चिमभागे निवेशयेद् देवतादोलाम् ॥ २१७ ॥

अन्योन्यं चक्रभ्रममिच्छामुक्तिं विधानतः सम्यक् ।
ज्ञात्वा प्रयोजनीयं शीघ्रवहं मन्दवहनं वा ॥ २१८ ॥

एष समासेन यथा भ्रममार्गः कीर्तितः स्फुटोऽस्माभिः ।
अन्येष्वपि कर्तव्यः सम्यग् भ्रमहेतवे तद्वत् ॥ २१९ ॥

स्तम्भादिद्रव्याणां विन्यासैः कल्पितं दृढैः श्लक्ष्णैः ।
सुश्लिष्टसन्धिबन्धं धृतं तथा दीर्घमुख्यधरैः ॥ २२० ॥

परिवारितमथ तिलकैः समन्ततः सिंहकर्णसंयुक्तम् ।
त्रिपुरं सम्यक् कुर्याद् विचित्र[1]रूपं (स्व)कैश्चित्रैः ॥ २२१ ॥

बुद्ध्या कल्पैः पूर्वयन्त्रैश्च युक्तं यन्त्राध्यायं वेत्ति यः सम्यगेतम् ।
प्राप्नोत्यर्थान् वाञ्छितान् कीर्तियुक्तान् स क्षमापालैरन्वहं पूज्यते च ॥

एतद् द्वादशराजचक्रमखिलं क्ष्मापालचूडामणे-
र्दोःस्तम्भप्रतिबद्धवृत्ति परितो यस्येच्छया भ्राम्यति ।
स श्रीमान् भुवनैकरामनृपतिर्दे[2]वो व्यधत्त द्रुतं
यन्त्राध्यायमिमं स्वबुद्धिरचितैर्यन्त्र[3]प्रपञ्चैः सह ॥ २२३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
यन्त्रविधानं नामैकत्रिंशोऽध्यायः ॥

---

## अथ गजशाला नाम द्वात्रिंशोऽध्यायः ।

लक्षणं गजशालानामिदानीमभिदध्महे ।
चतुरश्रीकृते क्षेत्रे भागैर्भक्ते ततोऽष्टभिः ॥ १ ॥

---

१ द. ख. °त्रं चित्ररूपकैश्चिल्लैः । २ द. ख. °दिवा । ३ द. ख. °न्त्रं; क. न्त्रैः ।

मध्ये द्विभागविस्तारं स्थानं कुर्वीत हस्तिनः ।
कल्प्याः प्रासादवद् भागा ज्येष्ठमध्याधमाः क्रमात् ॥ २ ॥

तद्बहिर्भागिकोऽलिन्दो बहिस्तस्यापि चापरः ।
भागेनैकेन भित्तिः स्याद् द्वितीयालिन्दकाद् बहिः ॥ ३ ॥

तस्या द्वारप्रदेशे तु[1] कर्तव्यौ कूर्परावुभौ ।
कर्णप्रासादिका कार्या द्वितीयालिन्दसंश्रिता ॥ ४ ॥

द्वे द्वे वातायने कुर्याद् भित्तौ दिक्षु तिसृष्वपि ।
†प्राग्ग्रीवोऽग्रे भवेच्छाला सुभद्रेयमुदाहृता ॥ ५ ॥

अस्या एव यदा पक्षे[2]प्राग्ग्रीवौ भवतो[3] मुखे ।
नन्दिनी नामतः शाला तदा स्याद् गजवृद्धये ॥ ६ ॥

अस्या एव यदा स्यातां प्राग्ग्रीवौ पार्श्वयोर्द्वयोः
तदा सुभोगदा नाम तृतीया परिकीर्तिता ॥ ७ ॥

अस्या एव यदा पृष्ठे प्राग्ग्रीवः क्रियतेऽपरः ।
भद्रिका नाम शाला स्यात् तदा द्विरदपुष्टिदा ॥ ८ ॥

पञ्चमी चतुरश्रा स्याद् वर्षणी नाम पूजिता ।
प्राग्ग्रीवालिन्दनिर्यूहहीना षष्ठी तथापरा ॥ ९ ॥

शाला प्रमारिका धान्यधनजीवितहारिणी ।
तदेतां वर्जयेत् कुर्यादन्याः सर्वार्थसिद्धये ॥ १० ॥

प्रमारिकेति प्रथितेह शाला सा प्राणसस्यद्रविणच्छिदे स्यात् ।
कुर्यादतस्तां न यथोदितास्तु कार्याः परा जीवितवित्तवृद्धयै ॥ ११ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
गजशाला नाम द्वात्रिंशोऽध्यायः ।

---

† इह सर्वत्र 'प्रग्रीव' इति पाठयं भाति ।

१ क. षु । २ क. क्षः । ३ द. ख. °ते ।

# अथाश्वशाला नाम त्रयस्त्रिंशोऽध्यायः ।

अथ लक्ष्माश्वशालायाः प्रोच्यते विस्तरादिह ।
स्ववेश्मवास्तोः कर्तव्यं पदे[1] गन्धर्वसंज्ञके[2] ॥ १ ॥
अथवा पुष्पदन्ताख्ये स्थानं वासाय वाजिनाम् ।
अरत्निशतमात्रं यज्ज्येष्ठं तत् परिकीर्तितम् ॥ २ ॥
अशीत्यरत्निकं मध्यं षष्ठ्यरत्न्यधमं[3] भवेत् ।
स्थलप्रदेशे विपुले गुप्ते रम्ये शुचौ तथा ॥ ३ ॥
समे च चतुरश्रे च स्थिते(रे) मङ्गल्यमेव च ।
स्थानं हयानां कर्तव्यं प्रदेशे सुपरिक्रमे[4] ॥ ४ ॥
निम्नगुल्मद्रुम[5]स्थाणुचैत्यायतनवेश्मभिः ।
वल्मीकशर्कराभिश्च वर्जिते तत् समाचरेत् ॥ ५ ॥
निःसङ्गे शल्यहीने च प्रागुदक्प्रवणे तथा ।
प्रदेशे तद् विधातव्यमालोक्य सुसमाहितैः ॥ ६ ॥
ब्राह्मणानुमते शस्ते[6] दिने स्थपतिभिः सह ।
भूमेर्विभागमालोक्य सुभगानानयेद्[7] द्रुमान् ॥ ७ ॥
न जाता ये श्मशानेषु देवतायनेषु वा ।
अन्येष्वपि निषिद्धेषु जातान् वृक्षान् विवर्जयेत् ॥ ८ ॥
वृक्षान् प्रशस्तानानीय समीपे भर्तृवेश्मनः ।
ततो भूमिं परीक्षेत प्रशस्तामथ[8] निन्दिताम् ॥ ९ ॥
चितायतनवल्मीकग्रामधान्य[9]खलेषु च ।
विहारेषु च कर्तव्यमश्वानां न निवेशनम् ॥ १० ॥
भवन्ति स्वामिनः पीडा ग्रामधान्य[10]खलेषु च ।
श्मशाने वेश्मकरणा[11]न्नराणां मृत्युमादिशेत् ॥ ११ ॥

---

१ द. ख. पढे । २ द. ख. °ज्ञि° । ३ द. षष्ठ्यारत्नाध° । ४ द. ख. स्व° । ५ द. ख. भिन्नकल्दद्रु° । ६ क. स्त । ७ द. स्तुभागानामये द्रु°; ख. स्तुभागानामयेत् द्रु°; क. शुभानानीय सद्रु° । ८ द. स्तां चाथ; ख. स्तां वाथ । ९ द. ख. °नाख° । १० द. ख. °ने खले तथा; क. °न° । ११ क. °णात् तुरगाणां ।

स्थानं विहारवल्मीकविहितं स्यादनर्थकम् ।
तन्नित्यसन्तापकरं क्षयकृच्च तपस्विनाम् ॥ १२ ॥
दैवोपघातजननं स्त्रीणां च क्षयकारकम् ।
विहितं पादपैश्चैत्यैर्गृहं स्याद् भूतभीतिदम् ॥ १३ ॥
भवेद् रोगकरं भर्तु[1]र्विहितं कण्टकि[2]द्रुमैः ।
दीर्णायामुन्नतायां[3] च कृतं भूमौ क्षयावहम् ॥ १४ ॥
नतायां क्षुद्भयकरं कृतं भवति [4]मन्दिरम् ।
तस्मात् कार्यं[5] प्रशस्तायां भूमौ तद् वाजिवृद्धये ॥ १५ ॥
मङ्गल्यरमणीये च चतुरश्रे मनोनुगे ।
शुभे च विहितं सद्म भवेत् कल्याणकारकम् ॥ १६ ॥
निर्गच्छतो यथा वामे पार्श्वे भर्तृस्तुरङ्गमाः ।
भवन्ति कुर्यात् स्थपतिस्तथा वाजिनिवेशनम् ॥ १७ ॥
अन्तः[6]पुरप्रदे[7]शस्य कार्यं दक्षिणतश्च तत् ।
प्रवे[8]शे दक्षिणं तेषां हेषितं जायते यथा ॥ १८ ॥
तथा भर्तुर्हितार्थाय कर्तव्यं सद्म वाजिनाम् ।
प्रागुदग् वा मुखं तस्य विधातव्यं स[9]तोरणम् ॥ १९ ॥
प्राग्ग्रीवकेण संयुक्तं चतुःशालमसङ्कटम् ।
दशारत्निसमुच्छ्राय[10]मष्टारत्निप्रविस्तृतम् ॥ २० ॥
नागदन्तकसंशोभि पुरः कुड्यार्धसंयुतम् ।
पृष्ठे समग्रकुड्यं वा तत्र स्थानानि कल्पयेत् ॥ २१ ॥
तानि तु प्राङ्मुखानि स्युस्तथैवोदङ्मुखानि च[11] ।
आयामे किष्कुमात्राणि त्रिकिष्कूणि च विस्तरात् ॥ २२ ॥
प्रांशून्नतोर्ध्वभागानि चतुरश्राणि कारयेत् ।
अग्रोच्चां सुखसञ्चारां तेषु भूमिं प्रकल्पयेत् ॥ २३ ॥

१ द. ख. शत्रुर्वि° । २ द. ख. क. °ष्टक° । ३ द. ख. °तानां । ४ द. ख. °ति विम° । ५ द. ख. °श्म° । ६ द. ख. अतः । ७ क. °वे° । ८ द. ख. °दे° । ९ क. सु° । १० द. ख. °मष्टौदश च वि° । ११ द. ख. प्राङ्मुखानि च ।

स्थानं सूत्रस्य मध्ये तु हस्तमात्रं समन्ततः ।
आस्तीर्णं च समश्लक्ष्णनीरन्ध्रैः[1] फलकैर्दृढैः ॥ २४ ॥

धातक्यर्जुनपुन्नागककुभादिविनिर्मितैः ।
अष्टाङ्गुलसमुच्छ्रायैरध्यर्धारत्निविस्तृतैः[2] ॥ २५ ॥

अच्छिद्रैः [3]संहतैर्बद्धैरयसा[4] पार्श्वयोर्द्वयोः ।
अजन्तुसङ्कुलैः काष्ठै रुचकाभि(?)र्भि[5]षङ्मतैः ॥ २६ ॥

यवसस्य[6] भवेत्[7] स्थानं निर्यूहैः[8] स्वास्तृतं शुभैः[9] ।
किष्कुत्रयोच्छ्रितं तत् स्यादेकान्ते सुसमाहितम् ॥ २७ ॥

हस्तद्वयप्रमाणं च कुर्यात्[10] खादनकोष्ठकम् ।
सूपलिप्तमदुर्गन्धि विस्तारोच्छ्राययोः समम् ॥ २८ ॥

स्थाने स्थाने त्रयः[11] कीलाः सुदृढाः कपिशीर्षकाः ।
पश्चाङ्घ्रीनिग्रहार्थं तौ पुरतः[12] कल्पयेदुभौ ॥ २९ ॥

पश्चाद् बन्धार्थमेकं च सुगुप्तं परिकल्पयेत् ।
चतुर्हस्तायतं त्यक्त्वा शालाकोणचतुष्टयम् ॥ ३० ॥

स्थानेष्वेतेषु तुरगान् सर्वेष्वपि निवेशयेत् ।
तत्र कुर्याद् बलिं होमं स्वस्तिवाचनकं जपम् ॥ ३१ ॥

ग्रीष्मे कार्यं सुसंमृष्टं सिक्तं तत्र महीतलम् ।
वर्षास्वनम्बुपङ्कं च शिशिरे संवृतं शुभम् ॥ ३२ ॥

तिष्ठेयुस्तत्र तुरगा नातिसङ्कीर्णशङ्किनः ।
अस्पृशन्तो मिथः कार्याः सर्वाबाधविवर्जिताः ॥ ३३ ॥

स्थानं दक्षिणपूर्वस्यां दिशि वह्नेः प्रकल्पयेत् ।
निदध्यादुदकुम्भं च किञ्चिदैन्द्रीसमाश्रितम् ॥ ३४ ॥

---

१ द. ख. °रंस्त्रैः । २ द. ख. °विस्तरैः । ३ द. ख. सहितै° । ४ क. °ज° । ५ द. ख. °र्नि° । ६ द. ख. यवस्य । ७ द. ख. भर्तु । ८ द. ख. °हे । ९ द. ख. °चिः । १० द. ख. °र्यात् वा°; क. °र्याच्छा° । ११ द. ख. श्र° । १२ द. ख. युवतः ।

ब्राह्म्यां दिशि प्रकर्तव्यं[1] स्थानकं यवसस्य च ।
वायव्यां तु प्रकर्तव्यं[2] स्थानमौदूखलं दिशि ॥ ३५ ॥
निःश्रेणयः कुशाः कूपाः कार्याश्च फलकावृताः ।
कुद्दालोद्दालगुडकाः शुक्तयोगाः खुरे[3]स्तथा ॥ ३६ ॥
कचग्रहण्यः शृङ्गं च तथा परशवो[4]ऽपि च ।
नाद्याः[5](?) प्रदीपा[6]श्च भवन्त्यश्वागारोपयोगिनः ॥ ३७ ॥
सङ्ग्रहः सुखसञ्चारवस्तूनां नैर्ऋते भवेत् ।
अग्न्युपद्रवरक्षार्थं[7] बन्धच्छेदोपयोगिनः ॥ ३८ ॥
पदार्थान् सन्निधौ कुर्याज्[8]र्जलदीपादिकान् बुधः ।
भाण्डानि कुर्याच्च पृथग् जन्द्रा(लो)पनयनेच्छया[9] ॥ ३९ ॥
हस्तवासीं शिलां दीपं दर्वीं फालमुपानहौ ।
पिट[10]कानि विचित्राणि वस्तीन् नानाविधानपि ॥ ४० ॥
एवंविधानि चान्यानि संनिदध्यात् प्रयत्नतः ।
पुरःस्तम्भाश्रितं भाण्डं सन्नाहादेर्विधीयते ॥ ४१ ॥
प्राङ्मुखे तुरगं गेहे वारुण्यां स्थापयेद् दिशि ।
पूर्वामुखे पदे वापि मित्रस्य वरुणस्य च ॥ ४२ ॥
भवन्ति तेन बहवः पुष्टिं च प्राप्नुवन्ति ते ।
सा हि दिक् पूजनीया च स्तोतव्या[11] च प्रकीर्तिता[12] ॥ ४३ ॥
होमशान्तिक[13]दानेषु धर्म्या याश्च पराः क्रियाः ।
तासु प्रशस्यते पूर्वा शक्रेणाधिष्ठिता स्वयम् ॥ ४४ ॥
तस्यामुदेति दिनकृदनुलोमं ततः पुनः ।
अश्वानां पृष्ठतो याति स प्रतीचीम[14]नुक्रमात् ॥ ४५ ॥
स्नानाधिवासने पूजा माङ्गल्यानि[15] पराणि च ।
प्राङ्मुखानां तुरङ्गाणां कर्तव्यानि शुभार्थिभिः ॥ ४६ ॥

---

१ द. ख. विज्ञातव्य । २ द. ख. न कर्त° । ३ क. ख° । ४ द. ख. °सतो° । ५ क. °द्याप्र° । ६ क. °प° । ७ द. ख. °क्षार्था रंध्र° । ८ द. ख. क. °ज्ज्व° । ९ द. ख. °ग्लेन्द्रायन° । १० क. वि° । ११ द. ख. व्यास्तत्प्र० । १२ द. ख. क. °ताः । १३ क. षु । १४ द. ख. °न° । १५ द. ख. °न्य° ।

एवं कृते भूमिबलमित्राणां यशसोऽपि च।
वृद्धिर्भवति भूपस्य तस्मात्[1] प्राची प्रशस्यते ॥ ४७ ॥
भर्तृवृद्धिप्रदं स्थानमग्र[2]ग्रासस्य तद् भवेत्।
दक्षिणाभिमुखायां तु शालायां वाञ्छितार्थदम् ॥ ४८ ॥
स्थानं भवति वाहानां पदे क्लृप्तं विभावसोः।
वह्निनाध्यासिता सा दिग्[3] आत्मा वह्निश्च वाजिनाम् ॥ ४९ ॥
अजरो बहुभोक्ता च तत्र बद्धो भवेद्धयः।
उदङ्मुखेऽपि भवने प्राप्नुवन्ति शुभं हयाः ॥ ५० ॥
तथास्थितानामश्वानां दक्षिणेन दिवाकरः।
उदेत्यनन्तरं याति तान्[4] विधाय प्रदक्षिणम् ॥ ५१ ॥
प्रयाति वाम[5]तोऽश्वं च( श्वानां ) स्थाप्यास्तेनोत्तरामुखाः।
चन्द्रार्कौ प्रतिहर्ष( हेष )न्ते तथा बध्नीत[6] वाजिनः ॥ ५२ ॥
नृपतिश्च जयं सिद्धिं पुत्रानायुश्च विन्दति।
[7]अरोगाश्च भवन्त्यश्वा वर्धयन्ति च सन्ततिम् ॥ ५३ ॥
दक्षिणाभिमुखान्[8] कुर्यान्न सन्नाह्यान् न चाग्रगान्।
पितृकार्या[9]द्यतोऽन्यत्र दक्षिणा वर्जितैव दिक् ॥ ५४ ॥
अस्यामेव दिशि प्रेता यतः सर्वे प्रतिष्ठिताः।
उदेति वामतो याति चास्तं दक्षिणतो रविः ॥ ५५ ॥
सोमश्च पृष्ठे भवति तेनाश्वा दैवपीडिताः।
ग्रहैर्विकारैर्विविधैः पीड्यन्तेऽरातिविह्वलाः ॥ ५६ ॥
भयेन व्याधिभिश्चार्ता ग्रासं नेच्छन्ति खादितुम्।
पराजयमतुष्टिं च स्वामिनोऽनर्थसङ्गतिम् ॥ ५७ ॥
कुर्वन्त्यतो न बध्नीयात् कथञ्चिद् दक्षिणामुखान्।
पश्चिमाभिमुखानां च[10] बद्धानां वाजिनां सदा ॥ ५८ ॥

---

१ द. ख. तस्य। २ क. म्यगोकस्य। ३ द. ख. दिगात्मवह्निस्तु; क. गद्दीप्तो वह्निस्तु वा। ४ द. ख. नि°। ५ द. ख. °तोवस्था°। ६ द. ख. बद्धाभन। ७ द. आरोगाश्चा; क. आरोग्याश्च। ८ द. ख. °खं। ९ क. °व्य°। १० द. ख. तु।

उदेति पृष्ठतो भानुः पुरतोऽस्तं प्रयाति च ।
न भवेद् विजयस्तेन भर्तुस्तत्पृष्ठवर्तिनः ॥ ५९ ॥
शक्रस्य पृष्ठवर्तित्वात् प्रातिलोम्याच्च भास्वतः ।
कुप्यन्ति व्याधयस्तेषां तूर्णं देहविनाशनाः ॥ ६० ॥
तैस्ते ध्यायन्ति वेपन्ते जले त्रासं प्रयान्ति च ।
यवसं नाभिनन्दन्ति क्षमां मुञ्चन्ति सर्वथा ॥ ६१ ॥
दिशोऽभिमुखमाग्नेय्या बध्यन्ते यदि वाजिनः ।
व्यथन्ते[1] रक्तपित्तोत्थैस्तदा रोगैरनेकधा ॥ ६२ ॥
जायन्ते स्वामिनो बन्धवधहृच्छोषं[2]दायिनः ।
वाजिनां च भवेत् तत्र वह्निदाहकृतं भयम् ॥ ६३ ॥
भर्तुः पराजयो विघ्नैः[3] स्याच्च देहस्य संशयः ।
नैर्ऋत्याः ककुभो वाहा बध्यन्ते संमुखं यदि ॥ ६४ ॥
तदा न तेऽभिन[4]न्दन्ति खादनं पानभोजने ।
यथा यथा क्षितिं पादैर्दारयन्ति[5] पुनः पुनः ॥ ६५ ॥
हेषन्ते वीक्ष्य बहुशो मनुष्यान् पक्षिणः पशून् ।
भ्रमयन्ति च गात्राणि नैर्ऋतीं चाभितः[6] स्थिताः ॥ ६६ ॥
तथा तथैषां कुपिता नाशं कुर्वन्ति राक्षसाः ।
बध्यन्ते यदि वाज्ञानाद् वायव्याभिमुखं हयाः ॥ ६७ ॥
तदा ते वातिकै[7] रोगैः पीड्यन्ते प्रतिवासरम् ।
चलः कायो भवेद् भर्तुः क्लेशश्चाश्वोपजीविनाम् ॥ ६८ ॥
नराणां च भवेन्मृत्युर्दुर्भिक्षप्रभवं भयम् ।
ऐशान्यभिमुखं बद्धाः प्रणश्यन्ति तुरङ्गमाः ॥ ६९ ॥
सूर्योदयस्याभिमुखं बद्धानां चेदमादिशेत् ।
निबध्यन्ते यदा वाहा ब्राह्मीं दिशमुपाश्रिताः ॥ ७० ॥

---

१ द. ख. ताप्यन्ते । २ द. ग. °क° । ३ द. ख. °घ्नं । ४ द. ख. °नि° । ५ द. ख. °न्तः । ६ द. ख. °तीमभितः° । ७ द. ख. °चि° ।

बध्यन्ते ते ग्रहैर्दिव्यैर्व्याधिभिश्च विचिन्तनाः।
कव्यहव्यक्रियास्तत्र भर्तुर्न विजयावहाः॥ ७१॥

द्विजानामुपतापाय जायन्ते तत्र वाजिनः।
अनुवं[1]शं च शालायां स्थानमश्वस्य नेष्यते॥ ७२॥

स्वामिनस्तदजीर्णाय स्यान्नाशाय च वाजिनाम्।
स्थाने प्रशस्ते तुरगान् सर्वथा वासयेदतः॥ ७३॥

न च धार्याः क्षणमपि रोगिणः कल्य[2]सन्निधौ।
कल्या[3]नामपि रोगाः स्युर्यतो रोगि[4]समाश्रयात्॥ ७४॥

हयागारस्य पूर्वेण कार्यं भेषज[5]मन्दिरम्।
तस्यैव वामतः सर्वसंभारान्[6] परिकल्पयेत्॥ ७५॥

वाजिनां भेषजार्था[7]यं भाण्डानि च विनिक्षिपेत्।
अगदानो[8]षधीः स्नेहान् वर्तींश्च लवणानि च॥ ७६॥

भेषजागारसविधे कुर्याच्चारिष्टमन्दिरम्।
भवनं व्याधितानां च कार्यं वासाय वाजिनाम्॥ ७७॥

सुगुप्तं तच्च कर्तव्यं पूर्वनिर्दिष्टवेश्मवत्।
संबद्धं च विधातव्यमेतद् वेश्मचतुष्टयम्॥ ७८॥

सुधाबन्धदृढैः कुड्यैः सप्रा[9]ंग्ग्रीवोच्चतोरणम्।
चत्वार्यपि विशालानि सुगमानि च कारयेत्

वेश्मस्वेवंविधेष्वश्वान् स्थापितान् परिपालयेत्॥ ७९॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

**अश्वशाला नाम त्रयस्त्रिंशोऽध्यायः॥**

---

१ क. °नां। २ द. ख. °ल्प°। ३ द. ख. °ल्पा°। ४ द. ख. ग. °गे°। ५ द. ख. तेयज। ६ द. ख. °ग्यान्। ७ द. ख. ग. °नि। ८ द. ख. °न्नौ°। ९ द. ख. °प्ता°।

## अथाप्रयोज्यप्रयोज्यं नाम चतुस्त्रिंशोऽध्यायः ।

राज्ञां सेनापतीनां च वर्णिनामपि वेश्मसु ।
यदि वा वा[1]स्तुकक्षासु सभादेवकुलेषु च ॥ १ ॥

शयनासनयानेषु भाजनाभरणेषु च ।
छत्रध्वजपताकासु सर्वोपकरणेषु च ॥ २ ॥

अप्रयोज्यानि यानि स्युः प्रयोक्तव्यानि यानि च ।
विस्तरात् तानि कथ्यन्ते हितार्थमथ देहिनाम् ॥ ३ ॥

पूर्वोक्तानां नृपादीनां यानि वेश्मसु केवलम् ।
अप्रयोज्यानि तान्येव पूर्वमत्राभिदध्महे ॥ ४ ॥

तेषु नै[2]व प्रयोक्तव्याः समस्ता अपि देवताः ।
दैत्या ग्रहास्तथा तारा यक्षगन्धर्वराक्षसाः ॥ ५ ॥

पिशाचाः पितरः प्रेताः सिद्धविद्याधरोरगाः ।
चारणा भूतसङ्घाश्च तेषां योषाः सुतास्तथा ॥ ६ ॥

प्रतीहाराः प्रतीहार्यस्तेषामधिकृताश्च ये ।
आयुधानि तदीयानि सर्वे चाप्सरसां गणा[3]ः ॥ ७ ॥

दीक्षितव्रति[4]पाषण्डिनास्तिकाः क्षुत्प्रपीडिताः ।
व्याधिबन्धनशस्त्राग्नितैलासृक्पङ्कपांसुभिः ॥ ८ ॥

शूलज्वरादिभिश्चार्ता येऽन्येऽप्येवंविधा नराः ।
मत्तोन्मत्तजडक्लीबनग्नान्धबधिरादयः ॥ ९ ॥

दोलाक्रीडाश्च नेष्यन्ते ग्रहणानि च दन्तिनाम् ।
देवासुराद्याः सङ्ग्रामा विग्रहाश्च महीक्षिताम् ॥ १० ॥

प्राणियुद्धविमर्दाश्च मृगया च न शस्यते ।
रौद्र[5]दीनाद्भुतत्रासबीभत्सकरुणा रसाः ॥ ११ ॥

---

१ द. ख. ग. बाह्यक° । २ द. ख. तेनैव प्र° । ३ द. ख. गतः । ४ द. ख. क. °ब्रतपा° ।
५ द. ख. लोद्र° ।

न प्राणिषु प्रयोक्तव्या हास्यशृङ्गारवर्जिताः।
हस्त्यश्वरथयानानि विमानायतनानि च ॥ १२ ॥
चण्डानलप्रदीप्तानि भवनानि वनानि च।
वृक्षाः पुष्पफलैर्हीना विहङ्गावासदूषिताः ॥ १३ ॥
एकद्विशाखा रूक्षाश्च भग्नाः शुष्काः सकोटराः।
कदम्बशाल्मलीशेलुतारे[1]क्षारलुकादयः(?) ॥ १४ ॥
भूतालयत्वान्नेष्यन्ते[2] कटुकण्टकिनश्च ये।
गृध्रोलूका विहङ्गेषु कपोतश्येनवायसाः ॥ १५ ॥
कङ्क[3]श्चेति न शस्यन्ते खगा रात्रिचराश्च ये।
गजाश्वमहिषाश्चोष्ट्रा मार्जारखरवानराः ॥ १६ ॥
सिंहो व्याघ्रस्तरक्षुश्च वराहमृगजम्बुकाः।
तथा वनचरा ये च क्रव्यादा मृगपक्षिणः ॥ १७ ॥
गृहेष्वेते न कर्तव्याः शैलाटव्याश्रितश्च ये।
अमीषां करणादर्थै[4]राचार्यो विप्रमुच्यते ॥ १८ ॥
व्याधिं घोरमवाप्नोति व्यसनं बन्धमेव च।
यत्र तत्र गृहस्वामी धनहानिं पराजयम्[5] ॥ १९ ॥
प्रवासं बन्धनं नाशं मृत्युं वा क्षिप्रमाप्नु[6]यात्।
इत्युक्ता[7]न्यप्रशस्तानि गृहेषु गृहमेधिनाम् ॥ २० ॥
तत्र यानि प्रयोज्यानि कथ्यन्ते तान्यतः परम्।
यस्य यत्र भवेद् भक्तिर्या चास्य कुलदेवता ॥ २१ ॥
हस्तक्लृप्तप्रमाणेन तान् कुर्वन् स्यान्न दोषभाक्।
तद्द्वारपार्श्वयोः कार्यौ प्रतीहारौ स्वलङ्कृतौ ॥ २२ ॥
वेत्रदण्डव्यग्रकरौ खड्गकोशपरिच्छदौ।
रूपयौवनसम्पन्नौ विचित्राम्बरभूषणौ ॥ २३ ॥

---

१ क. °रा°। २ द. ख. °नेष्यंति°। ३ क. °श्येना न°। ४ द. ख. °र्थि°। ५ द. ख. ग. °भवम्। ६ द. ख. °मवाप्नु°। ७ द. ख. °क्तानां°।

धात्री वामनिका कुब्जा सखीभिः परिवारिता ।
विदूषकैः कञ्चुकिभिस्तुष्टैरनुगतास्तथा ॥ २४ ॥
द्वारस्योभयतः कार्याः प्रतीहार्यो मनोरमाः ।
निधयश्चानुरूपाश्च शङ्खाब्जोज्ज्वललक्षणाः ॥ २५ ॥
रत्नदीनारराशींश्च वहन्तो वदनोद्गतान् ।
पद्मस्था(ः) पूर्णकुम्भा वा रत्नवस्त्रविभूषिता(ः) ॥ २६ ॥
वक्रै[1]रूर्ध्वस्थितैः पुष्पफलपल्लवसम्भृतैः ।
पूर्णकुम्भाङ्कुशच्छत्रश्रीवृक्षादर्शचामरैः ॥ २७ ॥
कार्याष्टमङ्गला द्वारे[2] दामभिः[3] शङ्खमत्स्ययोः ।
द्वारमण्डलमध्यस्था स्नाप्यमाना[4] गजोत्तमैः ॥ २८ ॥
पद्मासना पद्महस्ता[5] श्रीश्च कार्या स्वलङ्कृता ।
वृषः सवत्सा धेनुर्वा सच्छत्रस्रग्विभूषणा ॥ २९ ॥
फलभक्तैर्बहुविधैराहारार्थं निवेदितैः[6] ।
नानापुष्पफलैर्नम्रैः शालै[7]स्तिर्यगवस्थितैः ॥ ३० ॥
चित्रा पत्रलता[8] लेख्या बाह्याभ्यन्तरभित्तिषु ।
हंसकारण्ड[9]चक्राह्वैर्बिसिनीपत्रवर्तिभिः ॥ ३१ ॥
कुमारकैश्च क्रीडद्भिर्युक्ता ललितबाहुभिः ।
वासधाम्नि निवेश्यन्ते विचित्राभरणाम्बराः ॥ ३२ ॥
रतिक्रीडापरा नार्यो नायकस्तु यदृच्छया ।
आपाण्डुदेहच्छवयः स्वल्पचारुविभूषणाः ॥ ३३ ॥
किञ्चित्प्रतनुभिर्गात्रैः कार्याः सुरतलालसाः ।
प्रवृद्धशाखाविटपैः प्रचलारुणपल्लवैः ॥ ३४ ॥
चम्पकाशोकपुन्नागनानाम्र[10]तिलकादिभिः ।
छायापुष्पफलोपेतैः वृक्षैरन्यैश्च भूषिताः ॥ ३५ ॥

---

१ द. ख. वक्त्रै° । २ द. ख. ग. °द्वारैर्दा° । ३ क. वसुभिः । ४ क. °स्था° ।
५ द. ख. °सनस्था पद्मस्था० । ६ द. ख. °तं । ७ द. ख. °लैतिर्यगवस्थिता । ८ द. ख. पल्लवता ।
९ द. ख. °सकादम्बच° । १० द. ख. °नागाम्र° ।

उद्यानभूमयः कार्याः कूजत्पिकमधुव्रताः।
ऋतवः फलपुष्पाद्यैः स्वैः स्वैश्चिह्नैरलङ्कृताः॥ ३६॥
मनोरमैर्विशेषैश्च खगैश्च समयोचितैः।
कादम्बकुररक्रौञ्चहंससारसमेखलाः॥ ३७॥
[1]तीरान्तोद्गतवानीरकेतकीषण्डमण्डिताः।
जलान्तलीनमत्स्यैश्च सञ्छन्ना नलिनीवनैः॥ ३८॥
लेख्याश्च गृहभित्तीनामधोभागेषु दीर्घिकाः।
[2]फलैः समं [3]सभक्ष्यैक्षु[4]मणिकाञ्चनभाजनाः॥ ३९॥
विन्यस्तपद्मिनीपत्राः सोत्पलाः पानभूमयः।
विचित्रातोद्यहस्ताश्च नृत्यगीतविचक्षणाः॥ ४०॥
मुदिता ललना लेख्याः प्रेक्षासङ्गीतभूमिषु।
प्रकल्प्याः पञ्जरस्थाश्च चकोरशुकसारिकाः॥ ४१॥
प्रहृष्टाः परपुष्टाश्च मयूराश्च सकुक्कु[5]टाः।
इति यानि प्रदिष्टानि प्रयोक्तव्यानि वेश्मनि॥ ४२॥
तानि सर्वाणि शस्तानि सर्वोपकरणेष्वपि।
देवयोनिगणास्तद्वत् पुरुषाश्च विनिन्दिताः॥ ४३॥
साक्रन्दाश्च न शस्यन्ते पीठशय्यासनादिषु।
पुरस्तात् कीर्तितान्यत्र प्रयोक्तव्यानि यानि च॥ ४४॥
तानि शस्तानि कक्षासु सभादेवकुलेषु च।
दिव्यमानुषसम्बद्धा[6]न्याख्यानाख्यायिकादिषु॥ ४५॥
प्रोक्तानि तानि तावन्ति शुभान्यालेख्यकादिषु।
इति कथितमयोज्यं योजनीयं च बुध्वा[7]
भवनशयनकक्षादेवधिष्ण्यादिकेषु।
विरचयति यथोक्तं निन्दितं वर्जयेद् यः

१ क. नी°। २ क. त°। ३ ख. ग. सु°। ४ क. °षु°। ५ ख. ग. °कु°।
६ द. ख. ग. °न्धानाख्या°। ७ द. ख. नुध्वा।

स भवति नृपतीनां शिल्पिनां चार्चनीयः[1] ॥ ४६ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
अप्रयोज्यप्रयोज्यं नाम चतुस्त्रिंशोऽध्यायः ॥

---

## अथ शिलान्यासविधिर्नाम पञ्चत्रिंशोऽध्यायः ।

अथ ब्रूमः शिलान्यासविधिमत्र यथागमम् ।
तत्रोदगयने पुण्ये शुक्लपक्षे शुभेऽहनि ॥ १ ॥
स्थिरग्रहस्य दिवसे करणे च गुणान्विते ।
तिष्येऽश्विनीषु रोहिण्यामुत्तरेष्वपि च त्रिषु ॥ २ ॥
रेवत्यां श्रवणे हस्ते शिलाविन्यासमाचरेत् ।
स्थिरस्य राशेरुदये सौम्यमित्रावलोकिते ॥ ३ ॥
सम्यङ्निमित्तशकुनस्वस्तिपुण्याहवाचिते ।
हर्षोदये च मनसः कुर्याद् वास्तोर्निवेशनम् ॥ ४ ॥
भद्रः प्रकृत्या शास्त्रज्ञः शुचिः स्नातः समाहितः ।
कर्मारभेत स्थपतिः कृतदेवार्चनक्रियः ॥ ५ ॥
पूर्णां समामविकलां चतुरश्रामनिन्दिताम्[2] ।
शिलामाद्यां चये साध्वीं परीक्षेत[3] विचक्षणः ॥ ६ ॥
कुम्भाङ्कुशध्वजच्छत्रमत्स्यचामरतोरणैः ।
दूर्वानार्ग[4]फलोष्णीषपुष्पस्वस्तिकवेदिभिः ॥ ७ ॥
नन्द्यावर्तैः सचमरैः कूर्मपद्मनिशाकरैः ।
वज्रैः[5] प्रशस्तैः प्राकारैर्भूषिताः कर्मणो हिताः ॥ ८ ॥
दीर्घा ह्रस्वाल्पविषमाछा[6]भाध्मातापरीक्षिता[7] ।
दिङ्मूढा चाङ्गहीना च सास्थ्यङ्गारा सशर्करा[8] ॥ ९ ॥

---

१ द. ख. चार्थनीयाः । २ द. ख. °स्रामलंकिताम् । ३ द. ख. °क्ष्ये° । ४ द. ख. पूर्वभाग° । ५ द. ख. °ज्रि° । ६ क. °स्थापनाध्मा°; ग, °छालाध्मा° । ७ द, ख. ग. °ताः । ८ क, °राः ।

खण्डा दुःपंक्तनिर्भिन्ना कृष्णा दोषभयावहा।
नृणां पशुतुरङ्गाणां पदाङ्काः स्वस्तिवृद्धये ॥ १० ॥
क्रव्यान्मृगविहङ्गानां पादैः स्पृष्टास्तु वर्जयेत्।
नन्दाभद्राजयापूर्णाश्चतस्रः स्युरिमाः शिलाः ॥ ११ ॥
वासिष्ठी काश्यपी तद्वद् भार्गव्याङ्गिरसीति ताः।
तत्र प्रागुत्तरे देशे संनिवेशस्य वास्तुनः ॥ १२ ॥
नैर्ऋत्यां वा सकुसुमां समां गोचर्मसम्मिताम्।
वेदीं सगन्धकलशां चतुरश्रां प्रकल्पयेत् ॥ १३ ॥
आग्नेय्यामादितो नन्दां स्थापयेत् क्रमशः शिलाम्।
अकालमूलैरव्यङ्गैः सपद्मोत्पलपल्लवैः ॥ १४ ॥
सर्वौषधिहिरण्याद्यैर्हेमराजतमृन्मयैः।
कुम्भैस्ताम्रमयैश्चापि मन्त्रैस्तामभिषेचयेत् ॥ १५ ॥
तीर्थप्रस्रवणाम्भोभिः सरत्नाक्षतपङ्कजैः।
सुगन्धिभिः सुपुण्याहमभिषेकं प्रयोजयेत् ॥ १६ ॥
जाह्नवीयमुनारेवासरस्वत्यादिसम्भवैः(वम्)।
महानदीजलं शस्तं शुभतीर्थभवं तथा ॥ १७ ॥
तथाद्रिवनवेशान्तदेवायतनजानि च।
अभिषेकार्थमम्भांसि यथालाभमुपाहरेत् ॥ १८ ॥
मन्त्रेणानेन चैतासामभिषेकं समाचरेत्।
हिरण्यवर्णाः पावन्यः शुचयो दुरितच्छिदः ॥ १९ ॥
पुनन्तु शान्ताः श्रीमत्य आपो युष्मान्मधुच्युतः।
मन्त्रपूतेन पयसा स्नापयित्वा ततः शिलाम् ॥ २० ॥
स्थपतिर्गन्धकल्केन मङ्गल्येनानुलेपयेत्।
हिमचन्दनपूर्णेन व्यवकीर्य सुगन्धिना ॥ २१ ॥

---

१ क. °क्षपनि°; ग. °पक्षनि°। २ द. ख. °हाः। ३ ग. सु°। ४ क. °वमान्यः°। ५ ख. ग. °चन्द्रेण पू°।

तरसा छादयेदेनां सलाजैः पुष्पदामभिः ।
धूपमाल्योपह[1]रैश्च दधिमांसाक्षतादिभिः ॥ २२ ॥

पूजयेदिष्टकां देवीं वस्त्रपुष्पैश्च पुष्कलैः ।
निवेशनान्ते नैर्ऋत्यां तदा विप्रानवस्थितान् ॥ २३ ॥

समसङ्ख्यान् शुचीन् प्राज्ञानर्चयेद् दक्षिणाफलैः ।
ओङ्कारस्वस्तिपुण्याहगीतवादित्रनिस्वनैः ॥ २४ ॥

कर्ता जनितरोमाञ्चस्तेभ्यः कुर्यात्समरिक्रियाम् ।
निवेद्य वास्तोष्पतये भूतेभ्यश्च ततो बलिम् ॥ २५ ॥

तासां चतसृणामन्याः कुर्यादुपशिलाः पृथक् ।
प्राका[2]रैस्वरितकाङ्के द्वे त[3]था श्रीवत्सलक्षणा ॥ २६ ॥

नन्द्यावर्तस्तु पूर्णायां भवेदेको(दङ्को) यथाक्रमम् ।
कर्णे प्रागुदक्षिणे नन्दां वास्तुनः स्थापयेदर्धः ॥ २७ ॥

अन्याः क्रमेण भद्राद्याः कोणेष्वन्येषु च त्रिषु ।
प्रतिष्ठापनमन्त्राश्च तासां चतसृणामपि ॥ २८ ॥

चत्वार ऋषिभिर्गीताः शाश्वतारम्भदर्शनाः ।
वीर्येणादिवराहस्य वेदार्थैस्त्वभिमन्त्रिताः(ताम्) ॥ २९ ॥

वसिष्ठनन्दिनीं नन्दां प्राक् प्रतिष्ठापयाम्यहम् ।
सुमुहूर्ते सुदिवसे सा त्वं नन्दे ! निवेशिता ॥ ३० ॥

आयुः कारयितुर्दीर्घं श्रियं चाग्र्यामिहावह ।
भद्रासि सर्वतोभद्रा भद्रे ! भद्रं विधीयताम् ॥ ३१ ॥

[6]काश्यपस्य प्रियसुते ! श्रीरस्तु गृहमेधिनः ।
जये ! विजयतां स्वामी गृहस्यास्य महात्मनः ॥ ३२ ॥

आचन्द्रार्कं यशश्चास्य भूम्यामिह विरोहतु ।
त्वयि सम्पूर्णचन्द्राभे ! न्यस्तायां वास्तुनस्तले ॥ ३३ ॥

---

१ क. °र°। २ ग. °रं च स्व°। ३ ग. ज्ञेया श्री°। ४ ग. °थ। ५ द. ख. °ते। ६ द. ख. का°। ७ द. ख. °ते। ८ क. °स्यां।

भवत्येष गृहस्वामी पूर्णे ! पूर्णमनोरथः ।
इति[1] मूलचये[2]यो(यं) मन्त्रैः कुर्यात् स्वस्तिकवाचनैः ॥ ३४ ॥
ताभिर्हिरण्यवर्णाभि[3]ः शिलाभिः सममद्भुतम् ।
प्रागुदक्प्लवना धन्या न प्रत्यगुदक्षिणाप्लवा ॥ ३५ ॥
इष्टकाश्चैत्यभवनप्राकारपुरकर्मसु ।
विताने[4] चितिविन्यासे चतुर्मुखनिकेतने[5] ॥ ३६ ॥
पुरोर्धा[6]ः शान्तिवेदीषु प्रतिमास्थापनेषु च ।
याज्ञिकेन विधानेन क्रमशः स्थापयेच्छिलाः ॥ ३७ ॥
† त्रैशो[7]कौर्णासं[8]भासै(च्यै)स्ताः सामभिः स[9] महाव्रतैः ।
गायत्र्युष्णिगनुष्टुब्भिर्बृहत्या च यथाक्रमम् ॥ ३८ ॥
चयान् समस्तांश्चिनुयाच्चतुरो विरमेत् ततः ।
ज्ञात्वा भित्तिप्रमाणं च चितेश्चयचतुष्टयम् ॥ ३९ ॥
समाप्यमादिकमेवं कनिष्ठं च यथोत्तरम् ।
प्रतिष्ठितास्ताः प्रथमं भूतले सुस्थिताः समाः ॥ ४० ॥
न[10] चालयेच्चालने स्याद् गृहभर्तुर्महद् भयम् ।
कम्पने च भ[11]यं विद्यादेतासां स्थिरतां पुनः ॥ ४१ ॥
स्थपतेर्गृहभर्तुश्च मङ्गलं परमं विदुः ।
प्राग्दक्षिणा[12]यां चलने गृह[13]भर्तुर्महद् भयम् ॥ ४२ ॥
भार्याविनाशो नैर्ऋत्यां शू[14]न्यं(?) भीतिर्मरुद्दिशि ।
गुरोश्च भयमैशान्यामपरे[15]ऽपि तद् भवेत् ॥ ४३ ॥
प्रथमं स्थापितेनै(ताने)वं स्तम्भानपि न चालयेत् ।
नोद्धरेत प्रणु[16]द्याच्च विधिस्तुल्यो यतोऽन्य[17]योः ॥ ४४ ॥

† 'त्रैश्लो इति मातृकासु दृश्यते ।

१ क. °मं । २ द. ख. ग. °भ° । ३ क. °भिः सशिलाभिः समं द्रुतम् । ४ द. विभामे । ५ क. °के । ६ द. °ध शा° । ७ द. ख. °श्लो° । ८ द. ख. ग. °सु° । ९ क. स्स । १० द. ख. भवालये चालमे स्या° । ११ द. ख. सहां । १२ द. ख. णायाश्चालने; क. णयोश्चालने । १३ द. ख. गृहिनस्यान्त° । १४ क. °न्यां । १५ द. ख. °रो° । १६ द. ख. °तु° । १७ द. ख. थोतयोः ।

विन्यासं प्रथमं तस्मात् कुर्यात् सम्यक् समाहितः ।
शिलानां स्थपतिस्तद्वत् स्तम्भानामपि सर्वथा ॥ ४५ ॥

द्वारप्राकारशालानां नगराणां च वेश्मनाम्[1] ।
[2]तत्प्रमाणो [3]विधिर्यस्मात् [4]तस्मात् तत्राहतो भवेत् ॥ ४६ ॥

एवं शिलान्यासविधानमेतद् यथावदस्माभिरिहोपदिष्टम् ।
अस्मिन् कृते वेश्मसुरालया[5]दि निष्पत्तिमभ्येति विनैव विघ्नम् ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
शिलान्यासविधिर्नाम पञ्चत्रिंशोऽध्यायः ॥

---

## अथ बलिदानविधिर्नाम षट्त्रिंशोऽध्यायः ।

इदानीमभिधास्यामो बलिरूपविधेः क्रमम् ।
येन [6]यैर्नार्चिता देवास्तुष्यन्ति समहेश्वराः ॥ १ ॥

मण्डलं वास्तुनो मध्ये गोमयेन प्रकल्पयेत् ।
कलशं तत्र विन्यस्येत् सप्रसूनं सकाञ्चनम् ॥ २ ॥

वास्तुदेवास्ततः कल्प्या यथास्थाननियोगतः ।
[7]सधुपैर्विविधैर्माल्यैरर्घ्यं पश्चान्निवेदयेत् ॥ ३ ॥

अर्चयेद् विश्वकर्माणं माल्यैर्धूपैर्विलेपनैः ।
भक्ष्यैः फलैर्बहुविधैः पूजयेत् सुसमाहितः ॥ ४ ॥

आज्येन पयसा [8]दध्ना पूजयेच्[9]छिखिनं पुनः ।
शालिगोधूममुद्गाद्यैर्धान्यैः पर्जन्यमर्चयेत् ॥ ५ ॥

जयन्तं पूजयेदाम्रद्राक्षाखर्जू[10]रिकादिभिः ।
मालतीमल्लिकाभिश्च पूजयेत् त्रिदशाधिपम् ॥ ६ ॥

पुष्पै रक्तैस्तथा धूपै रक्तचन्दनलेपनैः ।
ततः सूर्यं जगन्नाथं पूजयेल्लोकचक्षुषम् ॥ ७ ॥

---

१ द. ख. वेश्यते । २ द. ख. तां त° । ३ द. ख. त्रिधे° । ४ क. तत्रास्मात्तत्रा । ५ द. ख. °याथि त्रिशेत्तिमनोनि विनैव विघ्नैः । ६ द. येभार्विता; ख. ग. यैर्भाविता । ७ द. ख. सपयो । ८ द. दध्मा । ९ द. ख. च्छिषितं द्रुमः । १० द. ख. °र° ।

जम्बीरैर्बीजपूरैश्च नारङ्गैः पीतकैः फलैः।
पूजयेत् सत्यनामानं [1]देवं तेन स तुष्यति ॥ ८ ॥
मत्स्यमांसैश्च तुष्यन्ति [2]सर्वे रक्षःपुरोगमाः।
सितैः फलैर्नारिकेलै[3]र्भृशाश्च परितुष्यति ॥ ९ ॥
गन्धधूपप्रयोगैश्च नभोनामानमर्चयेत्।
पुष्पैः सुगन्धिभिः शुक्लैर्मारुतः परितुष्यति ॥ १० ॥
कृसरं मधुसंयुक्तं [4]पूषणे भक्त्या निवेदयेत्।
वितथं तु शुभैरन्यैर्मद्यमांसविवर्जितैः ॥ ११ ॥
पूजितस्तुष्टिमायाति [5]विवस्वांश्च महामुनिः।
पुष्पैः सपुष्पकैस्तुष्टिमवाप्नोति गृहक्षतः ॥ १२ ॥
मत्स्यमांसयुतैर्भक्ष्यैर्यमतुष्टिः सदा भवेत्।
पुन्नागा[6]गरुधूपेन गन्धर्वानर्चयेद् बुधः ॥ १३ ॥
मृगमांसयुतैर्भ[7]क्षैर्भृङ्गराजं च तर्पयेत्।
राजजम्बूफलैर्बिल्वैर्देवमभ्यर्चयेन्मृगम् ॥ १४ ॥
पायसैर्मधुसंयुक्तैर्मांसैर्भक्तैश्च शोभनैः।
कर्पूरसुरभिद्रव्यगर्भैः संपूजयेत् पितॄन् ॥ १५ ॥
सपुष्पैर्मोदकैर्लाजैः पललैश्च विमिश्रितैः।
दौवारिकं प्रयत्नेन पूजयेद् विघ्नकारकम् ॥ १६ ॥
अपूर्वैः शोभनैर्गन्धैर्धूपैर्माल्यैरनुत्तमैः।
पुष्पैः कण्टकजातीनां सुग्रीवं पूजयेत् सदा ॥ १७ ॥
स[8]पुष्पैर्लाप(ज)कैर्भक्ष्यैर्दधियुक्तान्नपायसैः।
अर्चयेत् पुष्पदन्तं तु यशोवीर्यान्वितं सुरम् ॥ १८ ॥
मांसैश्च सूकरादीनां वैनतेयं सदार्चयेत्।
वरुणं [11]च महासत्त्वं पूजयेद् धूपचन्दनैः ॥ १९ ॥

---

१ द. ख. नदेवं वेहि समुष्यति। २ द. ख. ग. सर्व। ३ द. ख. °रेःभृ°। ४ द. ख. पृष्टे; क. घष्णे। ५ द. ख. विवष्टायांश्च। ६ द. ख. °गमुनुधू°। ७ द. ख. °क्षैः°। ८ द. ख. ग. °पुष्पैर्लोप°। ९ क. °घ°। १० द. ख. अवये। ११ द. वर्तुणं तु; ख. चर्तुणं तु।

राहुं च मांससंयुक्तैस्तर्पयेद् भक्ष्यभोजनैः ।
रुधिरेण प्रदत्तेन तुष्टिमेति शनैश्चरः ॥ २० ॥

मांसेन तु क्षयस्तुष्टिं रोगाणामधिपो व्रजेत् ।
मेदसा पूजयेद् रोगं सर्वलोकभयङ्करम् ॥ २१ ॥

वासुकिं क्षीरदानेन पूजयेत् सततं नरः ।
पूर्ववत् पूजयेद् देवं विश्वकर्माणमीश्वरम् ॥ २२ ॥

सितप्रसूनविन्यासैर्भल्लाटं पूजयेद् बुधः ।
दधियुक्तेन चान्नेन सोमं सर्वत्र पूजयेत् ॥ २३ ॥

कुवेरं धूपदानेन पूजयेत् सततं नरः ।
अदितिं च सुवर्णेन पद्मैरपि च पूजयेत् ॥ २४ ॥

अर्कमन्दारमालाभिर्वृषभं च समर्चयेत् ।
अन्येषामपि देवानामर्चनं[1] धूपसाम्प्रतैः(?) ॥ २५ ॥

सर्वपुष्पफलैश्चैषां कार्यं बुद्धिमता सदा ।
इत्येते बलयः सर्वे शान्त्यर्थं परिकल्पिताः ॥ २६ ॥

शोधने कर्षणे भूमेः साधने रूपकल्पने ।
गृहे प्रवेशने रम्ये तिथिमभ्युदयेषु च(?) ॥ २७ ॥

स्कन्धावारनिवेशेषु पुरग्रामनिवेशने ।
देवालयक्षितिपवेश्मनिवेशनेषु
प्रोक्तान् बलीन् प्रवितरेत् प्रयतः सुरेभ्यः ।
प्रारम्भमन्यमपि वास्तुगतं चिकीर्षुः
कुर्वन्निमं विधिमभीप्सितभाजनं स्यात् ॥ २८ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
बलिदानविधिर्नाम षट्त्रिंशोऽध्यायः ॥

---

१ द. °स्तु° । २ द. ख. °ने ।

## अथ कीलकसूत्रपातो नाम सप्तत्रिंशोऽध्यायः।

वर्णानां यानि दारूणि कीलकार्थं नियोजयेत्।
इदानीं तानि वक्ष्यामि श्रेयःकीर्त्तिहिताय च ॥ १ ॥
खदिरोदुम्बराश्वत्थ[1]शालशाकधवार्जुनाः।
अञ्जनः कदराशोकतिनि[2]शारुणचन्दनाः ॥ २ ॥
[3]शिरीषसर्जन्यग्रोधवेणवः कीलकर्मणि।
पुन्नामानो[4] द्रुमाः शस्ताः स्त्रीनामा[5]नो विगर्हिताः ॥ ३ ॥
अश्वत्थः खदिर[6]श्चैतौ विप्राणां वृद्धिकारकौ।
रक्तचन्दनवेणूत्थकीलौ[7] क्षत्रस्य पूर्जितौ[8] ॥ ४ ॥
शाकश्च खदिर[9]श्चेति सामन्तानां हिताविमौ।
कीलौ[10] शालशिरीषोत्थौ वैश्यानां कीर्तितौ[11] शुभौ ॥ ५ ॥
शूद्रजातेस्तु तिनिशधवार्जुनसमुद्भवाः।
वैश्यवेश्मसु सौभाग्यकार्ये च स्युरशोकजाः ॥ ६ ॥
न्यग्रोधो[12] वणिजां धाम्नि भूमिकर्मण्युदुम्बर[13]ः।
महामात्र(त्रा)[14]श्ववैद्यानां कीलाः सर्जार्जुना गृहे ॥ ७ ॥
विप्राणां सर्ववर्णास्तथाः क्षत्रियाणां त्रिवर्णजाः।
वर्णद्वयोक्ता वैश्यानां शूद्राणां स्वानु[15]लोमतः ॥ ८ ॥
प्रतिलोमा न कर्तव्याः कीलका भूति[16]मिच्छता।
प्रमाणान्यथ कीलानां निगद्यन्ते पृथक् पृथक् ॥ ९ ॥
द्वात्रिंशदङ्गुलाः कीला विप्राणां स्युः शुभावहाः।
क्षत्रियाणां पुनश्चाष्टाविंशत्यङ्गुलसम्मिताः ॥ १० ॥
चतुर्विंशत्यङ्गुलाश्च वैश्यानां शुभदायिनः।
विंशत्याद्यङ्गुलैः कीलाः शूद्रजातेस्तु ते हिताः ॥ ११ ॥

---

१ द. °क्ष। २ क. °न°। ३ द. ख. °विस्रवर्जन्यस्तोध°। ४ द. ख. °नामो। ५ द. ख. °मो खिविरा गर्हिताः। ६ द. ख. °राश्च ते। ७ द. ख. °ल। ८ द. ख. °तः। ९ द. ख. °द°। १० द. ख. °ल। ११ द. ख. °तः शुभः। १२ द. ख. °धा। १३ द. ख. °रा। १४ द. ख. °त्वस्वविनियानां; ग. °स्ववैविद्यानां। १५ द. ख. स्वेन। १६ द. ख. °मि°।

षडङ्गुलपरीणाहाः सर्वेष्वेते शुभावहाः ।
ब्राह्मणक्षत्रियविशां वेद[1]ष्टाश्रषडश्रयः ॥ १२ ॥

षडश्रयस्तु शूद्रस्य प्रकृ[2]तेस्तु यदृच्छया ।
दार्भमौञ्जौ[3]र्णकार्पासं विप्रादीनां यथाक्र[4]मम् ॥ १३ ॥

अर्धपर्वपरीणाहं[5] दृढं सूत्रं तु वर्तितम् ।
अलाभे[6] स्वस्य सूत्रस्य प्रोक्तादन्यतमं बुधः ॥ १४ ॥

गृह्णीयात् सूत्रमन्ये तु गृह्णीयुः स्वेच्छयैव ते[7] ।
इत्थं संभृत्य सम्भारान् गृहभर्ता शुभेऽहनि ॥ १५ ॥

शुक्लपक्षे शुचिः स्नातः स्थपतिश्च सिताम्बरः ।
गृहस्था[8]ननिमि[9]त्तात् तु देवस्थानानि[10] लक्षयेत् ॥ १६ ॥

कुसुमाक्षतमर्घ्यै[11]श्च कर्तव्या गृहदेवताः ।
आदौ स्थानानि शङ्कूनां परीक्षेत समन्ततः ॥ १७ ॥

तेषु सर्वेषु कर्तव्यमर्चनं तु[12] यथाविधि ।
गृहस्य मध्ये सिक्त्वा तु निरूप्य ब्रह्मणः[13] पदे ॥ १८ ॥

गोमयेन समालिप्तां कुर्याद् वेदीं सुलक्षणाम् ।
चतुर[14]स्रां चतुर्द्वारामक्षतैः सुप्रतिष्ठिताम् ॥ १९ ॥

तस्या मध्ये प्रतिष्ठाप्यः कुम्भो हैमोऽथ राजतः ।
ताम्रको मृन्मयो वापि पूर्वालाभे परः परः ॥ २० ॥

अकालमूलः सोऽव्यङ्गो जलपूर्णः स्वलङ्कृतः ।
मणिरत्नप्रवालैश्च स्वर्णरूप्येण गर्भितैः[15] ॥ २१ ॥

प्रतिष्ठाप्या(प्योऽ)क्षतैः पुष्पफलबीजसमन्वितः ।
श्वेतेन चन्दनेनैनं चर्चयित्वा समन्ततः ॥ २२ ॥

---

१ द. ख. ग. °दशास्रष° । २ द. ख. °क्षियेस्तु; ग. °क्षिपेस्तु । ३ द ख. सौजसां चोर्णका° । ४ द. ख. °द्रुमं । ५ द. ख. हां । ६ द. ख. आलमे । ७ द. ख. तौ । ८ द. ख. ग. °ना° । ९ द. ख. ग. °त्ता तु । १० द. ख. °नाभिल° । ११ ख. ग. °प्यस्वक° । १२ द. ख. च । १३ द. ख. ब्राह्मणः पदैः । १४ द. ख. °स्यां° । १५ द. ख. गर्हिताः ।

तस्योपरिष्टाद् विन्यस्येत् क्षीरवृक्षस्य पल्लवम् ।
सुगन्धिनार्थं[1] धूपेन धूपयित्वा चतुर्दिशम् ॥ २३ ॥
वेष्टयेदहतेनैनं शुक्लवस्त्रेण सर्वतः ।
वास्तुमध्ये यतो ब्रह्मा कुम्भरूपं(पः) स तिष्ठति ॥ २४ ॥
कुम्भस्योत्तरभागे तु कीलकान् स्थापयेद् बुधः ।
कीलानष्टौ परीक्षेत[2] स्थापयेच्च[3] यथाविधि ॥ २५ ॥
श्वेतचन्दनलिप्तांस्ताञ्[4] श्वेतपुष्पैर्विभूषयेत् ।
सालक्तकान्[5] सुरभिणा धूपेन च सुधूपितान्[6] ॥ २६ ॥
ऊर्णामयेन[7] सूत्रेण[8] त्रिवर्णेनाभिवेष्टयेत् ।
मधुसर्पिर्दधिक्षीरैर्मूलभागेषु[9] लेपयेत् ॥ २७ ॥
अर्चयेत् परशुं सूत्रमष्टीलादीनि[10] सर्वतः ।
अथोपकरणान्यत्र धूपपुष्पाक्षतादिभिः ॥ २८ ॥
ततः पूर्वोत्तरे वास्तोर्भागे सप्तार्चिषः पदे ।
गोमयेन समालिप्ते कुशास्तरण[11]मास्थितः ॥ २९ ॥
अग्निकार्यं प्रकुर्वीत पुरोधाः[12] शान्तिमेव च ।
सांवत्सरः[13] शुचिः स्नातः कृतस्नानः[14](?) समाहितः ॥ ३० ॥
शङ्कुना[15] साधयेल्लग्नं सम्यक् तद्धटिकाथवा[16] (?) ।
रात्रिलग्नं तु नक्षत्रैर्मध्यास्तोदयसंश्रितैः ॥ ३१ ॥
एवं संसाधयेल्लग्नं यदीच्छेत् सिद्धिमात्मनः[17] ।
पूजया[18] तुष्टिकारिण्या पूजयेच्च पुरोहितम् ॥ ३२ ॥
अभ्यर्चिते यतस्तस्मिन् ब्रह्मा भवति पूजितः ।
सांवत्सरस्य कर्तव्या ततः[19] पूजा यथाविधि[20] ॥ ३३ ॥

---

१ द. ख. ग. च । २ द. पवीन्स्वेत; ख. ग. यवीश्वेत । ३ द. स्ना° । ४ द. ख. °प्तास्ता श्वे°; क. °प्तास्ते श्वे° । ५ क. काः । ६ द. ख. °पिता; क. °पिताः । ७ द. ख. ऊर्वास° । ८ द. ख. स° । ९ द. ख. °मूल्यस्य° । १० द. ख. ग. °ष्टीलावानि । ११ द. °रिण° । १२ द. ख. °वा । १३ द. ख. रो सु°; ग. °रशुचिः° । १४ द. ख. °न । १५ द. ख. ग. शंकुंत । १६ द. ख. ग. तं खाटि° । १७ द. ख. माप्नुयात् । १८ द. ख. पूजा वा । १९ द. ख. °व्यास्त° । २० द. ख. °धिः ।

सांवत्सरेऽर्चिते यस्मात् पूजितः स्याद् बृहस्पतिः ।
स्थपतिं पूजयेत् पश्चात् त्वष्टृतुष्टिचिकीर्षया ॥ ३४ ॥
तदधीनं यतः कर्म शुभं वा यदि वाशुभम् ।
श्वेतचन्दनदिग्धांस्तान् श्वेतपुष्पैश्च पूजितान् ॥ ३५ ॥
सदशैरहतैर्वस्त्रैर्[1]रङ्गुलीयैः[2] प्रपूजयेत् ।
परिकर्मकरा ये च तान् यथाशक्ति पूजयेत् ॥ ३६ ॥
हेम्ना वस्त्रादिदानैश्च वाग्मिर्[3]वा परितोषयेत् ।
यथा सुमनसस्ते स्युस्तथा कर्तव्यमादरात् ॥ ३७ ॥
ततः स्थपतिराचम्य बलिकर्म समाचरेत् ।
सूत्रपाते बलिं धीमान् सार्वभौतिकमाचरेत् ॥ ३८ ॥
तस्यालाभे बलिः कार्यो[4] यो भवेत् सोऽभिधीयते ।
विदधीत[5] चरून् श्वेतरक्तपीतासितान् पृथक् ॥ ३९ ॥
पायसं कृसरं क्षीरं निष्पावान् श्वेतमोदनम् ।
पाविकादधि[6][7]रूपांश्च पललोल्ला[8]पिका[9]घृतम् ॥ ४० ॥
दध्योदनं च संमिश्रं देवताभ्यो निवेदयेत् ।
तिलैर्घृतेन सहितैर्देवमग्निं च पूजयेत् ॥ ४१ ॥
ततश्च पायसं दध्ना ब्रह्मस्थाने निवेदयेत् ।
ततश्चानुक्रमेणैव देवता[10]भ्यो बलिं हरेत् ॥ ४२ ॥
बलिकर्म यथान्यायं कृत्वा च द्विजवाचनम्[11] ।
स्वशाखीयान् शुचीन् प्राज्ञान् पूजयेद् दक्षिणाफलैः ॥ ४३ ॥
ओङ्कारस्वस्तिपुण्याहैर्गीतवादित्रनिस्वनैः ।
ततो विप्रैः सह स्वामी कुर्यात् तस्य प्रदक्षिणम् ॥ ४४ ॥
अक्षतान्[12] प्रथमं कुम्भे दापयित्वा द्विजोत्तमैः[13] ।
ततो दक्षिणपूर्वेण गत्वा पुण्याहवाचकैः ॥ ४५ ॥

---

१ द. वसु°; ख. वस्तु°। २ द. ख. °लैश्च। ३ द. ख. वाग्भिर्वा। ४ द. ख. ग. °र्ये। ५ द. ख. °तेरक्तश्वेतभक्तपी°। ६ द. ख. °त्रि°। ७ द. ख. ग. °दध्यरू° ८ द. ख. °ल्लो°। ९ क. °मृ°। १० द. ख. दैवते°। ११ द. °चतां; ख. °चनां। १२ द. ख. °ता प्र°। १३ द. ख. °मा।

अ[1]हताम्बरसंवीतः शुचिः स्थपतिरासने।
निषे[2]द्य प्राङ्मुखः शं[3]कुं धृत्वा दक्षिणपाणिना ॥ ४६ ॥
पश्चादादाय वामेन प्रतिष्ठाप्य च भूतले।
मन्त्रानमून् जपन् वीरो हन्यात् परशुना ततः ॥ ४७ ॥
विशन्तु ते तलं नागा लोकपालास्तथैव च।
प्रतिष्ठन्तु गृहे चास्मिन्नायुर्बलकरं भवेत् ॥ ४८ ॥
प्रहारान् सुस्थिरानष्टौ दद्यात् कीलस्य मूर्धनि।
हन्यमाने ततः कीले निमित्तान्युपलक्षयेत् ॥ ४९ ॥
गोविप्र[4]रथनागाढ्याः कन्या नृपवरै[5]स्त्रियः।
शङ्खदुन्दु[6]भिवंशानां तथा गीतस्य च ध्वनिः ॥ ५० ॥
आविर्भवति यद्यस्मिन् हन्यमाने प्रभुस्तदा।
सततं सुखमाप्नोति शाँ[7]न्त्यैश्वर्यैश्च वर्धते ॥ ५१ ॥
हृतं क्षु[8]तं विपन्नं वा निषेधः सूत्रकीलयोः।
पाषण्डिनां च सर्वेषां दर्शनं न सुखावहम् ॥ ५२ ॥
दृष्ट्वा शुभनिमित्तानि ततः शङ्कुं निवेशयेत्।
हन्यमानो यदा कीलो विशेद् भूमौ शनैः शनैः ॥ ५३ ॥
कर्मसिद्धिर्भवेत् तत्र गृहं रत्नपरिच्छदम्।
हन्यमानोऽपि न विशेद् धरित्रीं कीलको यदा ॥ ५४ ॥
न तत्र कर्मसिद्धिः स्यादनिमित्तं च लक्षयेत्।
एकेनापि प्रहारेण यत्र कीलो विशेन्महीम् ॥ ५५ ॥
न[9] सिद्धिं याति तत्रैकः कृतं वा नोपभुज्यते।
आयस्याष्ठीलया हन्यान्न काष्ठेन कथञ्चन ॥ ५६ ॥
काष्ठेन ताडितः कीलो वह्निदोषकरो भवेत्।
अश्मना यदि ताडयेत तदा व्याधिं प्रयच्छति ॥ ५७ ॥

---

१ द. ख. °र्हतांबरः। २ द. ख. °ष्पा°। ३ क. कुम्भं। ४ द. प्रवरमनागांश्च। ५ क. °रः°। ६ द. ख. °भिवासानां। ७ द. ख. ग. शान्त्यर्थैश्च; क. शान्तैश्व°। ८ द. ख. ज्व°; ग. ज्ञ°। ९ द. ख. ग. स।

ऐन्द्रीं प्रति नतः कीलो धनसम्मानकारकः ।
आग्नेय्यां प्रणते[1] कीले भवत्यग्निभयं महत् ॥ ५८ ॥

याम्यायां मरणं राज्ञां दिशि राक्षसतो भयम् ।
धननाशस्तु वारुण्यां वायव्यां रोगतो भयम् ॥ ५९ ॥

सौम्यं सौम्यानते[2] राजप्रसादायेशतो गतः ।
कीलके कूर्चके जाते पुत्रपौत्रान्वयैर्गृहे[3] ॥ ६० ॥

परमामृद्धिमाप्नोति धनधान्यैश्च वर्धते ।
हन्यमानो[4] यदा यत्नात् कीलः कश्चिदपि स्फुटेत् ॥ ६१ ॥

नाशं[5] विद्यात् तस्य पत्न्या ज्येष्ठस्य तनयस्य वा[6] ।
यदि भज्येत कीलः[7] स्यात् स्वामिनो जायते वधः ॥ ६२ ॥

यदा कीलः पतेद्धस्ताद् भ्रंशः स्यात् स्थपतेस्तदा ।
हस्तभ्रष्टश्च(?) स भवेदष्ठीले हस्तविच्युते[9] ॥ ६३ ॥

सुखेन हन्यमानश्चेत् कीलः[10] स्वस्थो न जायते ।
अष्टौ प्रहारानपरांस्तस्य दद्यात् तदा पुनः ॥ ६४ ॥

स्रग्गन्धधूपोपहारैः कुर्याच्च[11] परिषेचनम् ।
[12]इदं साम महापुण्यं परिचिन्त्य[13] समासतः ॥ ६५ ॥

[14]त्रैशोकं तु जपेद् विद्वान् यावच्छङ्कभिषेचनम् ।
गत्वाथ नैर्ऋतीमाशां ततः शङ्कुं निवेशयेत् ॥ ६६ ॥

[15]ऊर्णा[16]यवेन साम्नास्य [17]सम्यक् स्नपनमाचरेत् ।
वायोर्दिशं ततो गत्वा तत्र शङ्कुं निवेशयेत्[18] ॥ ६७ ॥

---

१ ख. ग. च गते; द. °गते कीले । २ द. °म्यागतो राज्ञप्र° । ३ द. हैः । ४ द. °नं यदा मत्तात् । ५ द. भासं विंद्या त° ६ ख. च । ७ क. लस्यात् । ८ क. स्य । ९ द. °विद्युते । १० क. लतुस्थो; द. कीलतुस्था न जा° । ११ द. °च्च कतिषे° । १२ द. इदं मास महापुण्यं परिवर्त्त्य । १३ क. वर्त्य स । १४ द. वै श्लोकं तज्जपेद्वि° । १५ द. औत्तार्य वेनशाम्नासम्यक् । १६ क. यवेशन; ख. र्यवेन । १७ क. प्रागवत् (स्नानं स) मोच । १८ द. निवेश्य च ।

अभिषेकं महारत्नसाम्ना तस्य समाचरेत् ।
अथैशानीं दिशं गत्वा शङ्कुं तस्यां निवेशयेत् ॥ ६८ ॥

भाग्रेण[1] साम्ना कुर्वीत प्राग्वत् तस्याभिषेचनम् ।
ततोऽनु सूत्रं बध्नीयात् सव्यं[2] द्विगुणवेष्टितम् ॥ ६९ ॥

प्रदक्षिणं प्रसार्यैतदुक्तः शङ्कुक्रमो यथा ।
म(बँ[3])ध्यमानं यदा सूत्रं शङ्कुः[4] किमपि[5] मुञ्चति ॥ ७० ॥

तदा पुत्रवधं विंद्याच्छिन्नं[6] स्वस्वामिमृत्यवे ।
तस्माद् यत्नः प्रकर्तव्यो यावत् सूत्रं प्रसार्यते[7] ॥ ७१ ॥

चतुर्णामपि बाहूनां पोषं(?)छिन्नं न दुष्यति ।
सूत्रं प्रसार्य वितरेच्चरून्[8] पूर्वं प्रकल्पितान् ॥ ७२ ॥

स्वेषु स्वेषु ततः स्थानेष्वनेन विधिना बुधः ।
शङ्कुस्थानेषु दातव्याः सिताद्याश्चरवः क्रमात् ॥ ७३ ॥

प्राग्दक्षिणस्या विदिशो[9] मन्त्रं चेमं हृदा जपेत्[10] ।
मारुतानां च सर्वेषां मानवानां[11] तथैव च ॥ ७४ ॥

बलिं तेषु प्रयच्छामि मन्त्रेण परिमन्त्रितम् ।
रक्तं बलिमुपादाय नैर्ऋत्यभिमुखस्तथा ॥ ७५ ॥

नैर्ऋत्यधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ।
बलिं तेषु प्रयच्छामि रक्तमोदनमुत्तमम् ॥ ७६ ॥

कृष्णं[12] बलिमुपादाय गत्वा च दिशमानिलीम्[13] ।
नमस्ते नागराजाय ये चान्ये तं समाश्रिताः ॥ ७७ ॥

बलिं तेषु प्रयच्छामि कृष्णमोदनमुत्तमम् ।
बलिमुद्धृत्य हारिद्रमैशानीमाश्रयन्[14] दिशम् ॥ ७८ ॥

---

१ द. भागेण । २ द. सत्यं । ३ द. म° । ४ ख. ग. कुः । ५ द. कमपि । ६ द. विंद्याच्छिन्नसुस्वामि° ७ क. रयेत् । ८ द. च्चनून् । ख. ग. नू । ९ क. विं १० द. जयेत् । ११ द. मरुतानां त° । १२ द. कृष्णां १३ द. °लिन् । १४ ख. ग. येत् दि; द. °येंद्दिशम् ।

नमो रुद्रेषु सर्वेषु ये चान्ये तान् समाश्रिताः ।
प्रयच्छामि बलिं तेषां हारिद्रौदनमुत्तमम्[1] ॥ ७९ ॥

एवमेतान् बलीन् सर्वान् यथावत् प्रतिपादयेत् ।
ततः कुम्भोदकं पुण्यं साम्ना दिव्येन मन्त्रयेत् ॥ ८० ॥

वामदेव्येन[2] कुर्वीत प्रोक्षणं तेन वास्तुनः ।

द्रुमा विप्रादीनामिति निगदिताः शङ्कुघटने
फलं यच्छङ्को[3]श्च स्फुटमिह निमित्तानि[4] बहुशः ।
तथा सूत्राताने विधिरनु च मन्त्रैः प्रतिदिशं
बलिः कीलेषूक्तस्त्रिदशपरितोषाय विधिवत् ॥ ८१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
कीलकसूत्रपातो[5] नाम सप्तत्रिंशोऽध्यायः ॥

---

## अथ वास्तुसंस्थानमातृका नामाष्टात्रिंशोऽध्यायः ।

इदानीमभिधास्यामो वास्तुसंस्थानमातृकाम् ।
निवासहेतवे सम्यक् सर्वकर्मोपजीविनाम् ॥ १ ॥

चतुरश्रं समं †साचि दीर्घं वृत्तं च शम्बुकम्[6] ।
शकटाक्षभगादर्शवज्रकन्थाकृतीनि च(?) ॥ २ ॥

छिन्नकर्णं विकर्णं च शङ्खाभं[7] क्षुरसन्निभम् ।
शक्त्याननं[8] कूर्मपृष्ठं सदंशं व्यजनाकृति ॥ ३ ॥

शरावस्वस्तिकाकारं[9] मृदङ्गपणवोपमम् ।
विशर्करं कबन्धाभं यवमध्यसमाकृति[10] ॥ ४ ॥

---

१ द. ह° । २ द. 'देवेन । ३ द. यत्स° । ४ द. नितांतं । ५ द. पातोध्यायो सप्तत्रिंशः ॥ छ ॥ ६ द. संबुकं । ७ द. च संयातं । ख. ग. संयातं । ८ ख. ग. द. 'संक्षामनं' । ९ द. °रे । १० द. तिः ।

† पूर्वाध्यायोपान्तिमश्लोकादारभ्या चत्वारिंशाध्यायावसानात् क. पाठो लुप्तः, ख. गयोस्तु विनियोगे 'शेष्य 'ति पठ्यते।

उत्सङ्गरा(ग)जदन्ताभे तथा परशुसन्निभम्[1]।
विस्राविनं च श्वभ्रं च ‡प्रलम्बं च विवाहिकम् ॥ ५ ॥
त्रिकुष्टं पञ्चकुष्टं च परिच्छिन्नं तथापरम्।
दिक्स्वस्तिकाभं श्रीवृक्षं वर्धमानसमाननम् ॥ ६ ॥
एणीपदं नरपदं[2] चत्वारिंशत् समासतः।
क्षेत्राण्युक्तान्यथामीषां विनियोगो विधीयते ॥ ७ ॥
चतुरश्रे[3] समे राजा शय्याकारे पुरोहिताः।
दीर्घे कुमारकाः सेनापतिर्वृत्तायते[4] वसेत् ॥ ८ ॥
वसेयुः[5] शम्बुकाकारे सर्वे वाहाः सुखार्थिनः।
अन्तःपुरं सद्म समे वाणिजाः शकटाकृतौ ॥ ९ ॥
वेश्यास्तु भगसंस्थाने दर्पणाभे सुवर्णकृत्।
संस्थानतो वज्रसमे जना नगरगोष्ठिकाः ॥ १० ॥
वसेयुः §शङ्खसंस्थाने क्षेत्रे पुत्राभिलाषिणः।
छिन्नकर्णे महामात्रा विकर्णे मृगलुब्धकाः[6] ॥ ११ ॥
शङ्खाभे चैकदृश्वानो गणाचार्याः क्षुरोपमे।
व्रता(जा)ध्यक्षः शक्तिमुखे कूर्मपृष्ठे तु मालिकाः[7] ॥ १२ ॥
सदंशे[8] सौचिका वाजिपोषिका व्यंजनोपमे[9]।
तक्षाणश्च[10] शरावाभे स्वस्तिके वन्दिमागधाः ॥ १३ ॥
पणवाभे मृदङ्गाभे वेणुतूर्यादि[11]वादकाः।
विशार्करे[12] तु रथिनः कबन्धप्रतिमे पुनः ॥ १४ ॥
नीचाः श्वपाकाश्च यवप्रतिमे धान्यजीविनः।
उत्सङ्गे श्रमणा[13] हस्त्यारोहिणो रा(ग)जदन्तके[14] ॥ १५ ॥

---

१ द. न्निभां। २ द. नवपदं। ख. ग. व। ३ द. रस्रे। ४ द. वि°। ५ द. वसेच्च। ६ द. ल°। ७ द. का। ८ द. °शे सूचि। ९ द. वि°। १० द. तक्षणां ख सरावाने। ख. ग. 'क्षणाश्च'। ११ द. र्या च वादिकाः। १२ द. °र्कमे; ख. ग. 'मे'। १३ द. श्रवणा। १४ द. राजदन्तिके।

‡ विनियोगे पुनरिदं न वक्ष्यते। § उपर्थपीदं विनियुक्तम्।

परशुप्रतिमे क्षेत्रे बन्धनागारिणो जनाः ।
विस्राविणि सुराकाराः श्वभ्राभे कर्मकारिणः ॥ १६ ॥
युगले नापिताः स्वा[1]विवाहव्ये( ? )कोशरक्षिणः ।
त्रिकुष्टे पञ्चकुष्टे च [2]वसेयुर्वह्निजीविनः ॥ १७ ॥
समन्ततः *परिच्छन्ने सर्वे मानोपजीविनः ।
दिक्स्वस्तिके तु चैत्यानि कुर्याद् वासांश्च सर्वशः ॥ १८ ॥
श्रीवृक्षप्रतिमे[3] वृक्षान् यज्ञवाटांश्च कारयेत् ।
वर्धमाना[4]कृतिमुखेऽप्येतानेव प्रकल्पयेत् ॥ १९ ॥
एणीपदे तु गणिकां[5]श्चौरान् नरपदोपमे ।
इत्युक्ताः शुभदा[6] वासाः सर्वकर्मोपजीविनाम् ॥ २० ॥
कर्मोपजीविजनवासनिमित्तमेताः
क्षेत्राकृतीरभिहिता[7]ः प्रविमृश्य तेषाम् ।
वेश्मानि कारयति यः स्थपति[9]र्यथाव-
न्मान्यः स कस्य न भवेदिह भूमिपृष्ठे ॥ २१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
वास्तुसंस्था[8](प?)नमातृकानामाष्टात्रिंशोऽध्यायः ॥

---

## अथ द्वारगुणदोषो नामैकोनचत्वारिंशोऽध्यायः ।

गृहाण्युक्तानि सर्वेषामेवं कर्मोपजीविनाम् ।
वर्णिनां च गृहस्थानां कथ्यन्तेऽतः परं यथा ॥ १ ॥
भल्लाटे धनदे यद्वा चरके पृथिवीधरे ।
ब्राह्मणस्य भवेद् वेश्म माहेन्द्रद्वारमुत्तमम् ॥ २ ॥

---

१ ग. स्वाधि वा; द. °धि° । २ द. वसेत्पूर्वाह्नि° । ३ द. मा । ४ द. कृतिर्मुख्येप्ये-तान्येव । ५ द. °काचोरोत्तरपदोपमाः । ६ द. °टा । ७ द. विरचिताः । ८ द. °स्थापन° । ९ द. °मिव ।

* ‘परिच्छिन्नमि’ति लक्ष्ये पठितम् ।

माहेन्द्रेऽर्केऽथ सत्ये वा आर्यके[1] वा निकेतनम् ।
कार्यं गृहक्षतद्वारं क्षत्रियस्य शुभावहम् ॥ ३ ॥

याम्ये वैवस्वते वापि गान्धर्वेऽथ गृहक्षते ।
वैश्यस्य भवनं कार्यं द्वारं पुष्पाह्वये शुभम् ॥ ४ ॥

वारुणे पौष्पदन्ते वा यद्वा मैत्रेऽथवासुरे ।
शूद्रस्य सदनं कार्यं भल्लाटद्वारमुत्तमम् ॥ ५ ॥

विप्राणां प्राङ्मुखं वास्तु गृहं स्याद् दक्षिणामुखम् ।
वर्धते धनधान्येन पुत्रपौत्रैश्च नित्यशः ॥ ६ ॥

दक्षिणाभिमुखं वास्तु भवनं पश्चिमामुखम् ।
क्षत्रियस्य धनं धान्यं विक्रमश्चेह वर्धते ॥ ७ ॥

वास्तुनः पश्चिमं[2] द्वारं भवनस्योत्तरामुखम् ।
तत्रैधते धनैर्धान्यैः पुत्रपश्वादिभिश्च विट् ॥ ८ ॥

वास्तु[3] स्यादुत्तरद्वारं गृहं पूर्वामुखं [4]तथा ।
शूद्रस्य कर्मवृत्तिं[5]स्तु धनधान्यैर्विवर्धते[6] ॥ ९ ॥

एकस्यामपि शालायां चत्वारः संप्रकीर्तिताः ।
निवेद्यं[7]द्वारभागाश्च कथ्यन्ते च शुभाशुभाः ॥ १० ॥

उत्सङ्गो हीनबाहुश्च पूर्णबाहुस्तथापरः ।
प्रत्यक्षा[8]यश्चतुर्थश्च निवेशः परिकीर्तितः ॥ ११ ॥

उत्सङ्ग §एवदीक्षाभ्यां(?) द्वाराणां वास्तुवेश्मनोः ।
स सौभाग्यप्रजावृद्धिधनधान्य[9]जयप्रदः ॥ १२ ॥

यत्र प्रवेशतो वास्तु(?)गृहं भवति वामतः ।
तद्धीनं[10]बाहुकं वास्तु निन्दितं वास्तुचिन्तकैः ॥ १३ ॥

---

१ ख. ग. 'स्ते'; द. आर्यस्ते वा निवेशनं। २ द. °म°। ३ द. °स्तुः। ४ द. य°। ५ द. °त्तिस्तद्ध°। ६ द. °ध्यते। ७ द. °श्यगद्वाराश्च; ख. 'श्यगृहद्वाराश्च'। ८ द. क्षोय°; ख. 'क्षो'। ९ द. भ°। १० द. °नं।

§ 'एकदिक्काभ्यां द्वाराभ्याम्' इति पाठः स्यात्।

तस्मिन् वसन्नल्पवित्तः स्वल्पमित्रोऽल्पबान्धवः ।
स्त्रीजितश्च भवेन्नित्यं विविधव्याधिपीडितः ॥ १४ ॥
वास्तुप्रवेश[1]तो यत् तु गृहं दक्षिणतो भवेत् ।
प्रदक्षिणप्रवेशत्वात् तद् विद्यात् पूर्णबाहुकम् ॥ १५ ॥
तत्र पुत्रांश्च पौत्रांश्च धनधान्यसुखानि च ।
प्राप्नुवन्ति नरा नित्यं वसन्तो वास्तुनि ध्रुवम् ॥ १६ ॥
गृहपृष्ठं समाश्रित्य वास्तुद्वारं यदा भवेत् ।
प्रत्यक्षायस्त्वसौ निन्द्यो वामावर्तप्रवेशवत् ॥ १७ ॥
ब्राह्मणो निवसेन्मुख्ये द्विनाम्नि क्षत्रियो वसेत् ।
वितथे निवसेद् वैश्यः [2]शूद्रः सुग्रीवनामनि ॥ १८ ॥
एते वैशेषिकाः सर्वे वर्णानामनुपूर्वशः ।
वास्तुद्वारनिवेशाश्च वासैः सह निरूपिताः ॥ १९ ॥
यथोत्तरमथोच्यन्ते वर्णानां गृहकल्पनाः ।
†शूद्रविट्क्षत्रियाणां च राज्ञां च जयकाङ्क्षिणाम् ॥ २० ॥
सा[3]र्धत्रिभूमि [4]शूद्राणां वेश्म कुर्याद् विभूतये ।
अतोऽधिकतरं यत् स्यात् तत् करोति कुलक्षयम्[5] ॥ २१ ॥
वैश्यस्य वर्धयेद् गेहमर्धपञ्चमभूमिकम् ।
अतिप्रमाणे तत्रास्य धनबन्धुपरिक्षयः ॥ २२ ॥
क्षत्रियस्य गृहं कुर्यादर्धषष्ठतलं परम् ।
सम्पद्बलस[6]मृद्ध्यै तदतिरिक्तं तु तच्छिदे ॥ २३ ॥
परं विप्रस्य भवनमर्धसप्तमभूमिकम् ।
स्वाध्यायाचारभोगार्थमत्युचं तु भयावहम् ॥ २४ ॥
[7]यजन्ते राजसूयाद्यैः [8]क्रतुभिर्येऽवनीश्वराः ।
[9]तैलैरर्धाष्टमैस्तेषां कारयेद् भवनोत्तमम् ॥ २५ ॥

---

१ द. सितो यं तु; ख. ग. शि । २ द. शूद्रं सु° । ३ द. सार्द्धं त्रिभूमिशूद्रेण; ख. ग. र्धं । ४ ख. ग. द्रेण वे । ५ द. क्षयः । ६ द. °समृद्धौ । ७ द. जयन्ते । ८ द. ऋ । ९ द. तैलैरर्द्धाष्टमेतेषां ।

† 'शूद्रविट्क्षत्रविप्राणां राज्ञाम्' इति पाठः स्यात् ।

आहर्तानेकयज्ञानां राजा राजाधिपश्च यः ।
तस्याप्यधाष्टमतलं भवनं सन्निवेशयेत् ॥ २६ ॥

वाजपेयेन[1] वा यष्टा यो द्विजः स्यात् समाहितः ।
गवां कोटिप्रदो यो वा सोऽपि तस्मिन् भवेद्गु[2](द)भीः ॥ २७ ॥

यथाप्रमाणनिर्दिष्टे वसन्तस्ते नृपादयः ।
प्राप्नुवन्ति परामृद्धिमवृद्धिं तु विपर्यये ॥ २८ ॥

सपीठतलकं वेश्म मानतः संप्रकीर्तितम् ।
साधारणेन हस्तेन परं शूद्रस्य विंशतिः ॥ २९ ॥

चत्वारिंशद्[3] विशः षष्टिः क्षत्रियस्य प्रशस्यते ।
अशीतिर्द्विजमुख्यस्य शतहस्ता महीपतेः ॥ ३० ॥

नातः परं नृणामूर्ध्वप्रमाणं शस्तमुच्यते ।
देवदानवदैत्यानां पिशाचोरगरक्षसाम् ॥ ३१ ॥

सिद्धगन्धर्वयक्षाणां विधातव्यमतोऽधिकम् ।
एकभौमादधो नैव गृहं शूद्रस्य विद्यते ॥ ३२ ॥

वैश्यस्य भवनं कार्यमधो नान्य(ध्य)र्धभूमिकात् ।
द्विभूमिकादधः कार्यं क्षत्रियस्य न मन्दिरम् ॥ ३३ ॥

सार्धद्वि[4]भौमाद् विप्रस्य त्रितलादपि भूपतेः ।
हीनप्रमाणादमुतो गृहं यत् कुशिल्पिना स्याद् विहितं कथञ्चित् ।
भर्तुर्भिये[5] सिद्धिविनाशनं तत् प्रशस्त[6]शीलादिविपर्ययाय ॥ ३४ ॥

गुणदोषान् प्रवक्ष्यामि द्वाराणां सर्ववास्तुषु ।
सुस्थितं चतुरश्रं च कान्तं स्वद्रव्ययोजितम् ॥ ३५ ॥

ऋजुं[7] स्वकीयदिग्भागे न ह्रस्वं न तथोच्चकैः ।
नाल्पं न कुब्जं नाप्यनि(?)पिण्डितं[8] न बहिर्गतम् ॥ ३६ ॥

---

१ द. कोटिः प्रदेया वा; ख. ग. टिः प्रदेया वा । २ द. ख. ग. भवेदुमी । ३ ख. ग. द. तिर्द्वयमु । ४ द. भू° । ५ द. °यै द्वित्रिवि; ख. ग. 'द्वित्रिवि' (?) । ६ द. °स्तलीला च विप° । ७ ख. ग. जू । ८ द. ख. ग. स्वे ।

नाध्मातं न कृशं मध्ये गतं नान्तरकुक्षिषु ।
न विद्रुतं न संक्षिप्तं यत् तत् स्याद् द्वारमृद्धिदम् ॥ ३७ ॥
पदस्य द्वादशे भागे पदमध्यात् प्रदक्षिणम् ।
स्थापितं वृद्धिमायाति द्वारं पुष्टिं करोति च ॥ ३८ ॥
रथ्याचत्वरश्रृङ्गाटवापीकूपाट्ट(?)कुम्भकैः ।
कुड्यकोणतरुस्तम्भैर्भवनै[1]स्यन्दनादिभिः ॥ ३९ ॥
यद् विद्धं भवनद्वारं तच्छुभाय न जायते ।
द्वारं द्वारे प्रविष्टं च कर्तव्यं वितनेतन(?) ॥ ४० ॥
पेद्यां[2] प्रवेशयेन्नै[3]कामन्यद्वारे कदाचन ।
द्वारं प्रवेशयेत् पेद्यां नारोहणगवाक्षयोः ॥ ४१ ॥
पक्षद्वारस्य वा नैकां कथञ्चिदपि बुद्धिमान् ।
न बाह्यगान्तरे द्वारे प्रविष्टं कारयेत् क्वचित् ॥ ४२ ॥
विहितं हि तथा तत् स्याद् बहुदोषकरं सदा ।
तोरणं गोपुरद्वारै[4]र्मट्टो येषां गृहे भवेत् ॥ ४३ ॥
गृहाणां मौलिकद्वारं श्रोत्रे चैतान् प्रवेशयेत् ।
द्वारं द्वारस्य कर्तव्यमुपर्युपरि भूमिषु ॥ ४४ ॥
प्रदक्षिणेन वा कार्यं[5] कार्यं[5] नापरथा पुनः ॥ ४५ ॥
उपर्युपरि भूमीनां मुखं कुर्यात् प्रदक्षिणम् ।
नापसव्येन कुर्वीत द्वारमारोहणानि च ॥ ४६ ॥
यस्यां भित्तौ कृतं पूर्वं तस्यामुपरि कारयेत् ।
तथान्यभित्तौ तद्द्वारं विधातव्यं प्रदक्षिणम् ॥ ४७ ॥
न मध्ये सद्मनो द्वारं कुर्यादेव पदस्य च ।
न स्थूले[6](?) न पदे नापि सिरापाते तदिष्यते ॥ ४८ ॥
निरंशावस्थितैर्द्रव्यैस्तिर्यक् का(क्रा)न्तैश्च मन्दिरे ।
मर्मवेधो न दोषाय द्वारवेधोऽथवा क्वचित् ॥ ४९ ॥

---

१ ख. ग. द. नो । २ ग. ऐन्द्यां प्र° । ३ ख. ग. नै । ४ ख. ग. रं पट्टो; द. °द्वारं पट्टो ।
५ ग. य; ६ द. स्त ।

यवनाट्टालकच्छाया पुर[1]दैवकुलस्य च।
न प्रवेश्या गृहद्वारे रश्मयः सोमसूर्ययोः॥ ५० ॥

न प्राकारेण कुड्येन न विटङ्केन वा पुनः।
अन्तर्हितानि दुष्यन्ति द्वारमर्माणि कुत्रचित्॥ ५१ ॥

अत्युच्चे स्याद् भयं[2] राज्ञो निम्ने तस्करतो भयम्।
कुलपीडा भवेत् कुब्जे बहिर्याते पराभवः॥ ५२ ॥

आध्मातेऽत्यन्तदारिद्र्यं[3] कृशमध्ये क्षयो नृणाम्।
रथ्याविद्धे भवेद् [4]रोगो मरणं चत्वरेण च॥ ५३ ॥

शृङ्गाटकेन वैधव्यं दुहितॄणां[5] प्रजायते।
वाप्या कूपेन वा विद्धे स्यादतीसारतो भयम्॥ ५४ ॥

कोणान्मृत्युभयं दद्याद् वृक्षै रोगभयं भवेत्।
स्तम्भेन म्रियते स्वामी भ्रमेणार्थो न तिष्ठति॥ ५५ ॥

प्रणालेन महद् दुःखं महाभीतिर्महाकलिः।
तस्मात् सर्वप्रयत्नेन द्वारवेधं विवर्जयेत्॥ ५६ ॥

यस्याग्रतः पृष्ठतश्च द्वारे भित्त्योर्द्वयोरपि।
अन्यो[6]न्यं भिद्यते यस्मिँ[7]न्नैकगत्याश्रिते उभे॥ ५७ ॥

वास्तु तद् भिन्नदेहाख्यं भिन्नस्वामिविधायकम्।
न तत्र जायते वृद्धिः स्थापितस्य न कस्यचित्॥ ५८ ॥

गृहकुक्षौ कृतं द्वारं सर्वरोग[8]भयङ्करम्।
पूर्वद्वारं तु माहेन्द्रं प्रशस्तं सर्वकामदम्॥ ५९ ॥

गृहक्षतं तु विहितं दक्षिणेन शुभावहम्।
गन्धर्वमथवा तत्र कर्तव्यं श्रेयसे त(स)दा॥ ६० ॥

पश्चिमेन प्रशस्तं स्यात् पुष्पदन्तं जयावहम्।
भ[9]ल्लाटमुत्तरे द्वारं प्रशस्तं स्याद् गृहेशितुः॥ ६१ ॥

---

१ ख. द. रा दे। २ द. भये राज्ञे°। ३ द. द्रं। ४ द. द्वेगो। ५ द. °त्रीणां। ६ द. °न्या। ७ ख. ग. स्मिन्नेक। ८ द. रोगकरं भयं। ९ द. भव्याट°।

एकाशीतिपदे तस्मिंश्चतुरश्रपदेऽपि वा ।
द्वारोऽप्य(प)दगास्तासां ब्रूमो वह्न्यादि[1]तः फलम् ॥ ६२ ॥

हुताशभीतिः स्त्रीजन्म भूत्यर्थः प्रियता[2] नृपे ।
क्रोधे चा[3]नृतता(?) पुंसः क्रौर्यं स्यात् पूर्ववत् क्रमात् ॥ ६३ ॥

सुतापि(प्ति)प्रैष्यनीचत्वे भक्षयों[4]नसुतर्द्धिकृत् ।
रौद्रं कृतघ्नमवसं याम्यतः सुतवीर्यहृत्(?) ॥ ६४ ॥

सुतोपपीडा रिपुवृद्धि[5]रर्थसुतानवाप्ति[6]स्तनयार्थसम्पत् ।
स्वाप्तिर्नृशंसाद् भयमर्थनाश उक्तः क्रमादित्यपरोन्मुखेषु ॥ ६५ ॥

बन्धव्यसत्वे(?) रिपुवृद्धिरर्थसुताप्तिरग्र्या गुणसम्पदश्च ।
सुतार्थलब्धि[8]र्द्विषयात्मजेन दोषास्त्रिया नैर्ऋतं[9]दिङ्मुखेषु ॥ ६६ ॥

गुणाश्च दोषाश्च यथावदेते निरूपिता द्वारसमाश्रिता ये ।
तान् शिल्प[10]विच्छास्त्रविदां वरिष्ठो विज्ञाय पूज्यत्वमुपैति लोके ॥ ६७ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

[11]द्वारगुणदोषो नाम एकोनचत्वारिंशोऽध्यायः ॥

---

## अथ पीठमानं नाम चत्वारिंशोऽध्यायः ।

देवानां मनुजानां च पीठमा[12]नमथोच्यते ।
पीठं क[13]नीयो भागं च सार्धभागं तु मध्यमम् ॥ १ ॥

द्विभागमुत्तमं तत् स्यादेषा पीठसमुच्छ्रितिः ।
महेश्वरस्य विष्णोश्च ब्रह्मणश्चोत्तमं भवेत् ॥ २ ॥

इतरेषां च देवानां कर्तव्यं तन्न धीमता ।
ईश्वरस्य यथाकामं पीठं कार्यं विचक्षणैः ॥ ३ ॥

---

१ द. °र्हितः । २ ख. ग. वा; द. प्रिय वा । ३ ख. वा । ४ द. ग. पा । ५ ख. ग. रर्थं । ६ ख. ग. द. र्थिं । ७ द. ध्धे° । ८ द. दोषास्त्रियानैर्धातश्चङ्मुखेषु । ९ ख. ग. तश्चङ् । १० द. लि । ११ द. द्वारगुणदोषाध्यायो नामैकोन चत्वारिंशः । १२ द. नयति मानमथोंच्यते । १३ द. कमेयो भागोन ।

यस्मिन् स्थाने विधातव्यो ब्रह्मा विष्णुस्तथैव च ।
ईश्वरः सर्वतः कार्यो न दोषस्तत्र विद्यते ॥ ४ ॥
इतरेषां तु देवानां पीठं भागं समुच्छ्रितम्[1] ।
यस्य येन विभागेन वास्तुमानं विधीयते ॥ ५ ॥
तस्य तेनैव भागेन पीठोच्छ्रायो विधीयते ।
मनुजानां च पीठानि वेश्मनां[2] देवपीठकैः[3] ॥ ६ ॥
तुल्यानि कुर्यादुपरि कृता वृद्धिकराः सुराः ।
पुरमध्ये तु कर्तव्यं ब्रह्मणो गृहमुत्तमम् ॥ ७ ॥
चतुर्मुखं च तत् कार्यं यथा पश्यति तत् पुरम् ।
अधिकं सर्ववेश्मभ्यस्तथा राजगृहादपि ॥ ८ ॥
राजवेश्माभिक्रमपि[4] शस्यतेऽन्यैः[5]सुरालयात् ।
पञ्चमो लोकपालानां[6] राजा श्रेष्ठतमो[7] यतः ॥ ९ ॥
एवमेतानि[8] देवानां पीठान्युक्तान्यशेषतः ।
चातुर्वर्ण्यस्य[9] पीठानि ब्रूमो[10] विप्राद्यनुक्रमात् ॥ १० ॥
षट्त्रिंशदङ्गुलोत्सेधं पीठं विप्रस्य शस्यते ।
इतरेषां तु वर्णानां ह्रस्वं स्याच्चतुरङ्गुलम् ॥ ११ ॥
चातुर्वर्ण्यस्य[11] पीठानि भुङ्क्ते विप्रो गृहाणि च ।
त्रयाणां[12] क्षत्रियो वैश्यो द्वयोः शूद्रः क्रमात् स्वकम् ॥ १२ ॥
एवं विभागं[13] पीठानां स्थपतिः परिकल्पयेत् ।
हितं कारयितुर्वाञ्छन् नृपतेश्च समृद्धये ॥ १३ ॥
प्रमाणे स्थापिता देवाः पूजार्हाश्च[14] भवन्ति हि ।
प्रमाणं पीठानामिदमभिहितं ब्रह्ममुर[15]जि-
त्पुरारीणामत्रापरदिविषदां यच्च नियतम् ।

---

१ द. समुद्धृतं । २ द. वेश्मानां । ३ ख. ग. ठके; द. के । ४ द. कर्माय । ५ द. ना. ६ द. पालानां । ७ द. स्तस्तुतमो । ८ द. पंच । ९ द. चतुर्वर्णस्य । १० द. ब्रह्मो । ११ द. वीर्णा सु; ख. ग. र्णासु पी । १२ द. ख. ग. णामन्यजातीनां गृहं शूद्रकमाशकम् । १३ द. ग । १४ द. पूजायाश्च......हि । १५ द. सु ।

ततो विप्रादीनामपि निगदितं यत् तदखिलं
[1]यथौचि[2]त्यायोज्यं श्रियमभिलषद्भिः स्थपतिभिः ॥ १४ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
[3]पीठमानं नाम चत्वारिंशोऽध्यायः ॥

---

## अथ चयविधिर्नामैकचत्वारिंशोऽध्यायः ।

इदानीमभिधीयन्ते चयस्येह गुणागुणाः ।
सुविभक्तः समश्चारुश्चतुरश्रश्[4]चयः शुभः ॥ १ ॥
असंभ्रान्तमसन्दिग्धमविनाश्[5]यं न्यबर्हितम् ।
अनु[6]त्तममनुद्वृत्तमकुब्जं न च पीडितम् ॥ २ ॥
समानखण्डमृज्वन्तमन्तरङ्गं तथैव च ।
सुपार्श्वं सन्धिसु[7]श्लिष्टं सुप्रतिष्ठं सुसन्धि च ॥ ३ ॥
[8]अजिह्मं चेति [9]चेयस्य गुणा विंशतिरित्यमी ।
एतेषां वैपरीत्येन दोषाणामपि विंशतिः ॥ ४ ॥
दक्षिणं तु यदा कुडयं विचिनोति बहिर्मुखम् ।
तदा व्याधिभयं विद्यान्मृत्युदण्डं च निर्दिशेत् ॥ ५ ॥
पश्चिमं तु यदा कुडयं विचिन्वन्ति बहिर्मुखम् ।
धनहानिं[10] तदा वि[11]द्याद् दस्यु[12]भ्यश्च भयं भवेत् ॥ ६ ॥
उत्तरं तु यदा कुडयं विचिनोति बहिर्मुखम् ।
कर्तारं स्वामिनं वापि व्यसनं प्रापयेत् तदा ॥ ७ ॥
प्राच्यं बहिर्मुखं कुडयं चिनोति स्थपतिर्यदा ।
राजदण्डभयं तत्र निर्दे[13]ष्टव्यं विचक्षणैः ॥ ८ ॥

---

१ द. यद्योचित्याद्योज्यं; ख. ग. यद्यौ । २ ख. ग. 'त्याद्योज्यं । ३ द. पीठाध्यायो नाम चत्वारिंशः ॥ छ ॥ ४ क. श्शुभश्चयः । ५ ख. द. नाश्यं च गर्हितं; ग. शं च ग । ६ ख. ग. मत्तम; द. अनुमत्तमनुद्वृत्तकु । ७ क. षु । ८ द. अवि । ९ द. वेद्मस्य । १० क. नि ११ द. विं° । १२ क. भि । १३ द. निर्दिष्टं विचक्षणैः ।

एतदेव फलं ब्रूयात् पतिते[1] दलिते तथा[2] ।
यस्य प्राग्दक्षिणः कर्णः[3] प्रवर्तेत बहिर्मुखः ॥ ९ ॥
स्यात् तत्राग्निभयं घोरं गृहभर्तुश्च संशयः ।
गच्छेद् बहिर्मुखः कर्णो यदा दक्षिणपश्चिमः ॥ १० ॥
कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ।
पश्चिमोत्तरकर्णे तु सम्प्रयाते बहिर्मुखे[4] ॥ ११ ॥
पशुवाहनपुत्राणां संशयस्तत्र जायते ।
प्रागुत्तरो यदा कर्णः प्रचीयेत बहिर्मुखः ॥ १२ ॥
गुरूणां संशयस्तत्र गोवृषादेश्च जायते ।
विशालं यदि जायेत सर्वबाहुषु चिन्वतः ॥ १३ ॥
कर्णिकासमसंस्थानं तद्[5] भवेन्मल्लिकाकृति ।
न[6] तादृशो भवेदायस्तत्र यादृग् व्ययो भवेत् ॥ १४ ॥
चयस्य तस्य दोषेण गृह(ही)क्षीणः[7] पलायते ।
चिन्वतो यदि संक्षिप्तमत्यर्थं[8] तत्र जायते ॥ १५ ॥
ब्रह्मसंज्ञं तदुद्दिष्टं तत्र राजभयं भवेत् ।
विस्तृतं यदि बाह्येषु[9] संक्षिप्तं चैव मध्यतः ॥ १६ ॥
तनुमध्यं तदुद्दिष्टं तत्र विद्यात् क्षुधो भयम् ।
उच्छ्रितं यदि कर्णेषु परिहीणं च मध्यतः ॥ १७ ॥
निर्णतं नाम तद् विद्यात् तत्र चौरभयं भवेत् ।
कर्णेषु परिहीणं चेदुच्छ्रितं चापि मध्यतः ॥ १८ ॥
कूर्मोन्नतमिति ज्ञेयं सर्वदोषभयावहम् ।
विषमोन्नतकर्णेषु निर्दिशेद् द्रविणं[10]क्षयम् ॥ १९ ॥
प्राज्यान्नपानं[11] तद् विद्यात् समेषु विहितेषु च ।
इत्येते चीयमानस्य गुणदोषाः प्रकीर्तिताः ॥ २० ॥

---

१ द. पत्ये तदखिले तथा । २ क. दा । ३ द. कर्ता । ४ द. खः । ५ क. य । ६ द. सतो-ऽद्रिभ° । ७ द. गृहक्षीणे; ख. ग. णे । ८ क. ख. ग. द. वा तेषु । ९ क. ख. ग. र्न । १० द. °णं । ११ द. °तं ।

तस्मात् सर्वप्रयत्नेन चयकर्म प्रयोजयेत् ।
उदकेन समं नीत्वा[1] सम्यङ्निश्चयकारणम् ॥ २१ ॥
तत्रा(स्मा)हृते न चान्यत् स्यान्निश्चयार्थं चयस्य[2] च ।
तस्माज्जलेन वलयं गृह्णीयात् पूर्वमाहृतः ॥ २२ ॥
ततः सुताडिते सूत्रे चयं कुर्याद् विचक्षणः ।
द्विगुणां[3] क्षेत्रमानस्य रज्जुं कृत्वा तदन्तयोः ॥ २३ ॥
यो[4]ऽसौ(?) कार्यौ ततस्तस्यां[5] पादोनक्षेत्रमानतः ।
दद्यान्निरि[6]ञ्छनं कीलौ क्षेत्रगर्भान्तगामिनौ[7] ॥ २४ ॥
निधायार्याः(य)सकौ[8] तस्याः प्रान्तस्थौ[9] योजयेत् तयोः ।
निरञ्छनाभिकृष्टां[10]यां पादोनक्षेत्रसंमितम्[11] ॥ २५ ॥
भुजग[12]त्या भवेद् रज्जुस्तस्यामिष्टानु[13]मानतः ।
चिह्नं दद्यात् स कर्णः स्यादेवं दोषान् प्रसाधयेत् ॥ २६ ॥
भूरि ना[14]च्छादनं दद्यान्न भिन्द्यात् तत्र चेष्टकाः ।
विषमस्थाः कुठारेण छि[15]त्त्वा ताः कल्पयेत् समाः ॥ २७ ॥
यथा न च स्पृशेत् सूत्रं विचिन्[16]वीत तथा बुधः ।
कुड्ये च सादिमध्यान्ते दृ[17]ष्टिमेकां निपा[18]तयेत् ॥ २८ ॥
यदा सर्वपरि[19]क्रान्तं तलं चोद्घाटितं भवेत् ।
तदा नै[20]कत्र कुर्वीत पर्यायेण विचक्षणः ॥ २९ ॥
उद्घाटनं स्तैराणां(?) तु यदी[21]च्छेत् सिद्धिमात्मनः ।
तत्र तत्र चयं कुर्याद् यदि संविद्धकं हितम्[22] ॥ ३० ॥
[23]दुर्वहं हि भवेत् तेन तस्मात् तत् परिवर्जयेत् ।
उपरिष्टात् समं पार्श्वे भु[24]जं कुर्याद् विचक्षणः ॥ ३१ ॥

---

१ द. ताभ्यान्स° । २ द. यायार्यवस्य च । ३ द. णं । ४ द. यासौ कार्यो; ख. ग. या । ५ द. स्या । ६ क. र; द. °च्छनं । ७ द. तैः । ८ क. यामकौ । ९ द. स्था । १० क. ष्णा । ११ ख. ग. 'तः'; द. °म्मितः । १२ ख. ग. ज्ञ; द. भुजं° । १३ ख. ग. द. न । १४ ख. द. °मा । १५ द. चिन्वान कल्पयेद्विमाः ॥ १६ द. विचिन्वति । १७ द. द्रि ष्टमेकानियोजयेत्; ख. ग. 'द्रिष्ठये' । १८ ख. ग. योजये । १९ द. °कांततलावा घटितं भवेत् ॥ २० ख. द. न° । २१ द. दि । २२ द. हि तत् ॥ २३ द. दुर्बलं; ख. ग. दुर्बलं हि । २४ ख. ग. द. भयं कु° ।

समन्ताद्[1] रुचकच्छिन्नश्चयो भित्तिषु पूजितः ।
तस्मात् प्रयत्नः कर्तव्यश्चयकर्मणि नित्यशः ॥ ३२ ॥

इति भाषित[2]रूपितमाचरतश्चयकर्म यथाविधि शिल्पिकृतम् ।
भवतीह यशो भुवने विततं गृहभर्तुरपि प्रचुरो विभवः ॥ ३३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
चयविधिर्नामैकचत्वारिंशोऽध्यायः ॥

---

# अथ शान्तिकर्मविधिर्नाम द्विचत्वारिंशोऽध्यायः ।

इदानीमभिधास्यामो विधानं शान्तिकर्मणः ।
यथावदिष्ट्वा[3] दिक्पालान् हुत्वा[4] शान्तीर्यथाक्रमम् ॥ १ ॥

स्नपयेत् कर्णिकां[5] कुम्भैः सहिरण्यैर्विचक्षणः ।
सर्वगन्धानुलिप्तां[6] च माल्यदामविभूषिताम् ॥ २ ॥

कृतमाल्यानिवसितां[7](?) मूले च मधुलेपितांम्[8] ।
दोषप्रशमनार्थाय तां मूलेषु निखातयेत् ॥ ३ ॥

मधुकुम्भमरिष्टं च शेवालं च विधानवित् ।
वाचयित्वा तु[9] विप्रेन्द्रान् कृतपुण्याहमङ्गलान् ॥ ४ ॥

स्थापयेत् कर्णिकाः सर्वाः स्थपतिः प्रयतः शुचिः ।
एतेन विधिना कर्म चातुर्वर्ण्यस्य कारयेत् ॥ ५ ॥

कर्णिका रोपिता यत्र पुनरुत्पाट्य रोप्यते[10] ।
न तन्निष्पद्यते वेश्म स्वामी चात्र विनश्यति ॥ ६ ॥

निखातं[11] तु यदा दारु च्छिद्यते ताड्यते पुनः ।
तन्नाशो धनधान्यस्य स्वामिनश्चात्र सर्वथा ॥ ७ ॥

---

१ क. दु + क; ग. ह्रुचक । २ द. भाषानिरूपितनारतश्च ... यथाविधिः । मूल्य° । ३ द. °ष्टा । ४ द. ह° । ५ ख. ग. का । ६ द. °प्ता । ७ क. स; द. ता° । ८ द. लेपिता । ९ ख. ग. द. च । १० द. रोपिते । ११ द. निखनितं यदा दारुच्छिद्येत्येत्याद्य तत्पुनः ।

वल्लीनिपीडितं दारु प्रवेशे चेन्निखन्यते ।
आशीविषभयं घोरं तस्मिन्नुत्पातलक्षणम् ॥ ८ ॥

उत्थाने कर्णिका रक्ष्या सर्वसत्त्वाभिधर्षणात् ।
नवे कर्मण्यशकुना मृगव्यालसरीसृपाः ॥ ९ ॥

कर्णिकामधिरोहन्ति दोषांस्तत्र वदेदमून् ।
कृतापीडां[1] परिहृतां यथारोहन्ति[2] वायसाः ॥ १० ॥

गृहिणस्तत् प्रवासः स्यादन्नं[3] पानं च हीयते ।
मयूरे तद्गृहं राजा हरेत् पश्चाब्दतः परम् ॥ ११ ॥

वरांङ्गे[4] जायते व्याधिः कोकिलैर्द्व्यब्दतः[5] परम् ।
काकोलैस्त्रीणि वर्षाणि जायते सुमहद् भयम् ॥ १२ ॥

शुके स्युः कलहाद्यानि[6] न च निष्पद्यते गृहम् ।
कुक्कुटेऽग्निभयं विद्याद् राजतो वा महद् भयम् ॥ १३ ॥

सारिकायां तु दौःशील्यं स्त्रीणां गृहपतेस्तथा ।
सँर्परूपेर्त[7](तु)[8]विघ्नेन गृहं निष्ठां न गच्छति ॥ १४ ॥

स्त्रीपुंसयोः कुलिङ्गे तु जायते पापकारिता ।
पारावर्ते[9] तु जायेते स्त्रीपुंसौ गुरुतल्पगौ ॥ १५ ॥

विडाले तुं[10] कुलं दासैः सह रोगैर्निपीड्यते ।
ज्वलनो वा जलं[11] वापि हस्ती वा हन्ति तद्गृहम् ॥ १६ ॥

आरण्यैः[12] शकुनैरेतत् स्याद्[13] वर्षाद् धर्षणे फलम् ।
यूनां[14] च जायते मृत्युर्मध्वांसङ्गे[15] धनक्षयः ॥ १७ ॥

दुःस्वप्नदर्शनं घूके[16] बालानां मरणं तथा ।
त्रस्तभीते निलीने तु राजा शून्यं हरेद् गृहम् ॥ १८ ॥

---

१ द. लां । २ द. °हति वायसः । ३ द. °न्नपानं । ४ द. वरांगे यायितोव्याधि कोकिलैर्द्वाब्र्दतः परं । ५ ख. ग. द्वा । ६ ख. ज्यानि; द. सुकेसकलहज्यानिः सं च निष्पद्यते गृहं । ७ क. सर्पं । ८ क. न । ९ द. °पते । १० द. ते । ११ द. ज्व । १२ द. णैः । १३ द. स्या । १४ ग. नृणां ज । १५ द. °गंधा° । १६ द. एके ।

यदा त्वग्रे प्रदृश्येत धूम्रः कर्णगतोऽपि वा ।
अग्निर्दहति तत् क्षिप्रं विद्युद् वा हन्ति मन्दिरम् ॥ १९ ॥

यत्रारोहति गृध्रस्तद् द्विजाङ्घ्रि[1]स्पृष्टमाचरेत् ।
कृत्वा हलशतैः कृष्टं ततो बीजानि वापयेत् ॥ २० ॥

गावश्चात्र प्रदुह्येरन् शान्तिकानि च कारयेत् ।
मेघे[2]ऽभिवृष्टे भूयोऽपि तत्र कुर्वीत मन्दिरम् ॥ २१ ॥

येषु येषु गृहाङ्गेषु मधुनः सञ्चयो भवेत् ।
तस्याङ्गस्य वधं ब्रूयात् प्रेषिण्यां चाप्युपद्रवम् ॥ २२ ॥

तस्माद्धेतोः शिखाग्रेषु मुकुटान् प्रणिधापयेत् ।
यावन्न रोपयेत् सौम्यं तावद् रक्षेत् समन्ततः ॥ २३ ॥

अभिलीनं तु शकुनैर्नहि किञ्चित् प्रशस्यते ।
तस्मात् प्रयत्नतो रक्षे[3]दुत्पातात् प्रागुदी[4]रितात् ॥ २४ ॥

भङ्गे गृहाणां दारूणां शान्तिहोमोऽथ कथ्यते ।
इन्द्रकीलो महाकूटः पृष्ठवंशोत्तरौ धरौ[5] ॥ २५ ॥

प्रग्रहो[6](?)ऽलिन्दपादौ वा स्वामिनं घ्नन्त्युपद्रवाः ।
तुलास्थपत्यः(?) कूटं वा वेदिका कर्णपालिकाँ[7] ॥ २६ ॥

नेत्रं कपोतपालि[8]श्च हनप्रविष्टं कुटुम्बि[9]नी[10](?)
अन्वग्राः पक्षि[11](क्ष)वंशाश्च मल्लकाः सकुमारकाः ॥ २७ ॥

गोपानस्यो[12] मृगाल्यश्च स्थपिता[13]ः स्वकुमारिका[14]ः(?) ।
परिघा द्वारपक्षाश्च भ्रातरं घ्नन्त्युपद्रवाः ॥ २८ ॥

संयुक्तं सङ्ग्रहो हन्ति निकृष्टांश्चाधरो धरः ।
स्थौण्यानि प्रतिमोको वा हन्युरिष्टान् परिच्छदान् ॥ २९ ॥

---

१ क. ह्नि; द. जांह्नि° । २ द. मेघा° । ३ ख. ग. क्षेत् प्रातान्; द. त् प्रातान् प्रागुदाहृतान् । ४ ख. ग. दाहृतात् । ५ द. °त्तरोंबरौ; ख. ग. 'व' । ६ द. प्रगृहो लिंगपादो वा । ७ ख. ग. द. °काः । ८ ख. ग. द. °रि° । ९ क. ट । १० द. °नीं । ११ द. यज्ववंशश्च; ख. ग. यज्ववं । १२ द. °स्यौ । १३ द. ता । १४ द. का ।

उद(प)धि[1]र्भगिनीं हन्यादथवा परिचारकान् ।
पुंसां पुन्नामभिर्द्रव्यैः स्त्रीणां स्त्री[2]न(नाम)भिर्भवेत् ॥ ३० ॥

उपघातो हतैर्नित्यं द्रव्याणां तु नपुंसकैः ।
भू[3]लिका स्त्रीविनाशाय गृहनाशाय वे[4]धनम् ॥ ३१ ॥

कीला वा सन्धिपालि[5]र्वा मित्रनाशाय दुष्यति ।
नवे गृहे नवं दारु क्रियमाणमथो कृतम् ॥ ३२ ॥

आयोज्यमानं युक्तं वा[6] न्यूनसंवत्सरं स्थितम् ।
भज्यते देहनाशाय स्फुटत्य[7]थ विभज्यते ॥ ३३ ॥

गृहं ब्राह्मणसात् कृत्वा रत्नैरालिख्य चापरम् ।
नवैर्वस्त्रैः परिच्छाद्य पुनर्भि[8]द्यानि(?)कारयेत् ॥ ३४ ॥

दग्धे भिन्ने[9] प्रचलिते विनते विद्युता हते ।
विरूढे दलिते सन्ने सर्वत्रौषधिभिः स्मृ[10]ताः ॥ ३५ ॥

शान्तयो विविधं हुत्वा ब्राह्म[11]णान् स्वस्ति वाच्य वा ।
स्थूणिका भज्यते यस्य कीर्त्तिस्तस्योपहन्यते ॥ ३६ ॥

चन्द्रसूर्यौ यजेत्[12] तत्र ततः शाम्यति पातकम् ।
तद्विधं वृक्षमानीय पुनस्तां प्रति कारयेत् ॥ ३७ ॥

एवं[13] कृते सुखी स स्यात् कीर्त्तिश्चायुर्ध्रुवा भवेत् ।
मल्लको[14] भज्यते[15] यस्य पौरुषं तस्य हन्यते ॥ ३८ ॥

इष्टानभसनक्षत्रं(?)प्रायश्चित्तं समाचरेत् ।
तद्विधं वृक्षमानीय प्रति कुर्वीत मल्लकम् ॥ ३९ ॥

एवं कृत्वा सुखी स स्याद्[16] बलं चास्याभिवर्धते ।
पृष्ठवंशस्य भङ्गेन गृही बन्धमवाप्नुयात् ॥ ४० ॥

---

१ द. उधिर्भग्निहन्या च दथवा; क. धिर्भगिना, ख. ग. 'भग्नि ह'। २ द. स्त्रीणां स्त्रीनामतिर्भवेत्। ३ ख. द. चू। ४ द. वैधनं। ५ द. लै। ६ ख. स्यान्न्यू। ७ ख. ग. न्त्य; द. स्फुटत्यथ विभुज्यते। ८ द. °द्य मेद्यंति तु का°; ख. ग. द्य मेद्यति तु कार। ९ द. भग्ने; ख. ग. कन्नै। १० द. तः। ११ द. ण। १२ द. यजस्तत्र। १३ द. कृतमुखी सस्या। १४ क. भु। १५ द. यस्य तस्य पुरुषोपहन्यते; ख. ग. स्य तस्य पुरुषोऽपहन्य। १६ द. ख. ग. स्याद्धनं चा°।

राजराजं यजेत् तत्र प्रायश्चित्तं तथाचरेत् ।
सुखी भवति तत् कृत्वा सर्वतश्चाभिवर्धते ॥ ४१ ॥
सर्वेषु स्वस्ति वाच्याश्च ब्राह्मणा दक्षिणाक्षतैः ।
वारणो[1] भज्यते यस्तु ज्येष्ठं पुत्रं स वाज्य[2](बाध)ते ॥ ४२ ॥
पृथ्वीधरं[3] यजेत् तत्र प्रायश्चित्तं तथाचरेत्[4] ।
तद्विधं वृक्षमानीय पुनस्तं प्रति कारयेत् ॥ ४३ ॥
सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धते ।
संग्रहो भज्यते यस्तु कुलज्येष्ठं स वार्ध(बाध)ते ॥ ४४ ॥
पितॄन्[5] देवान् यजेत् तत्र प्रायश्चित्तं तथाचरेत् ।
सुखी भवति कृत्वैवं प्रीयन्ते पितरस्तथा ॥ ४५ ॥
स्थूण्यं तु भज्यते यस्य तनयस्तस्य बाध्यते ।
देवानेव यजेत् तत्र प्रायश्चित्तं तथाचरेत् ॥ ४६ ॥
तद्विधं वृक्षमानीय तत् स्थौण्यं प्रति कारयेत् ।
सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धने[6] ॥ ४७ ॥
उपधी व्यथते यत्र तत्रा[7]मात्यो विनश्यति ।
यजेत वासवं[8] तत्र प्रायश्चित्तं तथाचरेत् ॥ ४८ ॥
आनीय तद्वि[9]धं वृक्षमुपधिं प्रति कारयेत् ।
एवं कृते[10] भवेत् सौख्यममात्यैश्च विवर्[11]धते ॥ ४९ ॥
कायस्तु व्यथते यस्य[12] प्रेष्य[13]स्तस्योपहन्यते ।
यक्षं तत्र यजेद्[14] देवं प्रायश्चित्तं [15]तथाचरेत् ॥ ५० ॥
तद्विधं का[16]ष्ठमानीय कायं तं प्रति कारयेत् ।
एवं कृते सुखी स स्यात् प्रेष्यैरपि विवर्धते ॥ ५१ ॥
तुला तु व्यथते यस्य व्यथतेऽस्य कुटुम्बिनी ।
यजेत मेदिनीं तत्र प्रायश्चित्तं तथाचरेत् ॥ ५२ ॥

---

१ ख. ग. ता । २ द. ग. स पाल्यते; ख. चाल्यते । ३ द. °रं जये तत्र । ४ क. समाच । ५ क. पित्रिदेवा त्यजे तत्र । ६ द. ते । ७ द. त त्र मातौ वि° । ८ द. वे । ९ द. तद्विवत् । १० द. त्वे । ११ क. वर्धयेत् । १२ ख. ग. स्याः प्रेषस्त । १३ द. °ष° । १४ द. जयेद्देव । १५ द. च तथा° । १६ द. केषु ।

तद्विधं वृक्षमानीय स्थापयेत् तां स्वलङ्कृताम् ।
ततस्त्व[1]न्याः क्रियाः पश्यन् कारयेन्मतिमा[2]न् नरः ॥ ५३ ॥
वधूमिव नवैर्वस्त्रैः प्रतिच्छाद्य स्वलङ्कृताम् ।
ब्राह्मणान् वाचयेत् स्वस्ति ततस्तां प्रति कारयेत् ॥ ५४ ॥
सुखी भवति कृत्वैवं धनैर्नि[3]त्यं विवर्धते ।
कर्णिकास्वा[4]न्तरस्थूणामालापादोऽथ भज्यते ॥ ५५ ॥
तद्गृही दुःखमाप्नोति तस्मिन्नुत्पातलक्षणे ।
आनीय स्थपतिं तत्र प्रज्ञावन्तं बहुश्रुतम् ॥ ५६ ॥
तत्र वास्तुविभागेन यो देवः स्याद् विनिश्चितः ।
तस्मै देवाय जुहुयात् प्रायश्चित्तं च[5] कारयेत् ॥ ५७ ॥
सुखी भवति कृत्वैवं सर्वतश्चाभिवर्धते ।
युगं तु व्यथते यत्र तत्र स्यात् पशुपीडनम् ॥ ५८ ॥
यजेत तस्मिन्नीशानं प्रायश्चित्तं च कारयेत् ।
तद्विधं वृक्षमानीय युगं तत् प्रति कारयेत् ॥ ५९ ॥
एवं कृते सुखं तस्य पशुवृद्धिश्च जायते ।
तुलयो [6]अगयोर्वापि(?) पादो यस्य प्रभज्यते ॥ ६० ॥
आयुर्[7]हानिर्भवेत् तत्र बलदेवं[8] प्रपूजयेत् ।
प्रायश्चित्तं ततः कृत्वा पुनस्तं प्रति कारयेत् ॥ ६१ ॥
सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं[9] च तत् ।
द्वाराङ्गं यस्य माहेन्द्रं[10] हिंस्यते नवकर्मणि ॥ ६२ ॥
इन्द्रं तत्र [11]यजेद् देवं प्रायश्चित्तं तथाचरेत् ।
गृहक्षतस्य द्वाराङ्गे पूजयेद् यममेव तत्(म्) ॥ ६३ ॥
पुष्पदन्तस्य द्वाराङ्गे वरुणं तत्र पूजयेत् ।
द्वाराङ्गं यस्य भ[12]ल्लाटं हिंस्यते नवकर्मणि ॥ ६४ ॥

---

१ ख. ग. स्त्विमाः कि; द. स्त्विमाः क्रियाः न्यस्याः । २ क. त्प्रतिमां न । ३ ख. ग. धान्यैश्च व°; द. व धनैर्धान्यैश्च व° । ४ द. भ्यान्तरा । ५ द. °त्तं तथा चरेत्; क. ग. तथाच्चरेत् । ६ ख. द. आ° । ७ ख. ग. यहानिः; द. आयहानि° । ८ द. वंतु पू° । ९ ख. ग. कर्मतत्; द. सान्तिकर्मतत् । १० क. न्द्रे । ११ द. इन्द्रं तत्र जये देव । १२ ख. ग. ल्वा; द. °ल्वाट ।

सोमं तत्र यजेद्[1] देवं प्रायश्चित्तं समाचरेत् ।
सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं[2] च तत् ॥ ६५ ॥

स्थूणाराजस्य यस्याग्रं वक्रं[3] दक्षिणतो भवेत् ।
शरीरं व्यथते तत्र प्रतिसंवत्सरं स्थिरम्[4] ॥ ६६ ॥

पृष्ठतो[5] दीर्घशोकः स्यादुत्तरेण धनक्षयः ।
पूर्वतो राजदण्डः स्यात् तस्मात् तद् ऋजु शस्यते ॥ ६७ ॥

चत्वार्यङ्गानि हिंस्यन्ते शरीरा ये च वेश्मनः ।
तुला वा पृष्ठवंशो वा धारण्यां( णी )चोत्तराम्बरः[6] ॥ ६८ ॥

उक्तांस्तत्र बलीन् कुर्यात् प्रायश्चित्तं तथाचरेत् ।
एवं धन्यं शिवं पुष्टिप्रजावृद्धिकरं भवेत् ॥ ६९ ॥

इत्थं निमित्तानि गृहाश्रितानि
ज्ञात्वा प्रदृष्टान्[8] शकुनांश्च सर्वान् ।
शान्तिं प्रकुर्वन् पृथगुक्तरूपां[9]
प्राप्नोति कीर्त्तिं सुखमर्थमायुः ॥ ७० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
शान्तिकर्मविधिर्नाम द्विचत्वारिंशोऽध्यायः ॥

---

## अथ द्वारभङ्गफलं नाम त्रिचत्वारिंशोऽध्यायः ।

यदत्र नवकर्मोक्तं तद्[10] यज्ञेषु गृहेषु च ।
ज्ञेयं ग्रामे पुरे वापि नगरे पत्तने तथा ॥ १ ॥

संस्थानमाकृतिर्मानं ह्रास[11]वृद्धी च बाहुषु ।
एकमेव विजानीयात् सर्वत्रैव विचक्षणः ॥ २ ॥

यूपस्यैव निमित्तानि दारुकर्मणि निर्दिशेत् ।
पातं पतं[12] विजानीयात् तक्षणं[13] तक्षणेन[14] च ॥ ३ ॥

---

१ द. जये देवं । २ ख. ग. कर्मवित्; द. °कर्म तत् । ३ द. चक्रं । ४ क. ते; द. स्थिरिं ते । ५ द. पूज्यतो । ६ ख. ग. द. थोत्त° । ७ द. अ । ८ क. हृ । ९ द. पाः । १० द. य । ११ ख. ग. द. सं । १२ द. पा । १३ द. तत् । १४ द. तत् ।

यूपोच्छ्रायमिव ब्रूयाद् दारूणामपि चोच्छ्रयम् ।
भङ्गेन भङ्गो निर्दि(र्द्दे)श्यः समाधिश्च समाधिना ॥ ४ ॥

नव[1]कर्मणि यत् स्निग्धं सुगन्धि प्रियदर्शनम् ।
गम्येहरं(?)मनुष्याणां धन्यं तदभिनिर्दिशेत् ॥ ५ ॥

पुरं वा यदि वा ग्रामो गृहं वा यदि निष्प्रभम् ।
आयासबहुलं तद्धि तादृशैर्लक्षणैर्भवेत् ॥ ६ ॥

परिध्वस्तोपमं रूक्षं नवकर्मणि यद् भवेत् ।
श्रमं रोगं च शोकं च तस्मिन्[2] वेश्मनि निर्दिशेत् ॥ ७ ॥

ज[3]नेन च यदाकीर्णं निश्छायमिव[4] लक्ष(क्ष्य)ते ।
कुटुम्बी तत्र षण्मासान् नात्र जीवेन्न संशयः ॥ ८ ॥

यच्छून्यमप्यशून्याभं वेश्म वा यदि वा पुरम् ।
सर्वकामगुणैर्युक्तं धनं(न्यं) तदभिनिर्दिशेत् ॥ ९ ॥

पूर्वो नगरभागश्चेद् रम्यः स्यात् प्रियदर्शनः ।
प्रियभार्या मनःस्वास्थ्यं धनं धान्यं च भूपतेः ॥ १० ॥

पूर्वदक्षिणभागश्चेत् पुरस्य प्रियदर्शनः ।
महद् यशस्तदाप्नोति राजा हेम च पुष्कलम् ॥ ११ ॥

पुरस्य दक्षिणो भागो यदा रम्यस्तदा भवेत् ।
राज्ञः सेनापतिप्राप्तिर्धनं धान्यं च पुष्कलम् ॥ १२ ॥

रमणीयो यदा भागः पुरदक्षिणपश्चिमः ।
अर्थसंपत् तदा राज्ञः प्रजावृद्धिश्च जायते ॥ १३ ॥

पुरपश्चिमभागेन रमणीयेन पार्थिवः ।
पुत्र[5]बान्धवधान्याढ्यः संप्राप्नोत्युन्नतिं पराम् ॥ १४ ॥

पश्चिमोत्तरभागे तु रमणीये नराधिपः ।
प्रेष्यैः पुत्रैर्वाहनैश्च वृद्धिमेत्यु[6]त्तरोत्तराम् ॥ १५ ॥

---

१ द. च । २ द. तस्मिं चास्म° । ३ ख. ग. य । ४ द. मेव लक्षते । ५ ख. ग. नात्र धनवानाढ्यः; द. पुत्रवान् धनधानाद्य । ६ क. ति नरोत्तमः, ख. त्युत्तरोत्तर ।

उत्तरे रमणीये तु पुर[1]भागे नरेश्वरः।
शत्रून् विजयते सर्वान् वर्धते च पुरोहितः॥ १६॥
यदि पूर्वोत्तरो भागः पुरस्य प्रियदर्शनः।
यत्राभ्युत्तरमान[2]न्दं क्षिप्रं राज्ञो विनिर्दिशेत्॥ १७॥
निष्पन्नस्य पुरादेर्यो भागो न स्यान्मनोरमः।
तस्य तस्यैव भागस्य परिहाणिं विनिर्दिशेत्॥ १८॥
नवे यदि पुरद्वारे कपाटं प्रविशीर्यते।
स्त्रीनामधेयमन्यद् वा स्त्रीनाशं तद् विनिर्दिशेत्[3]॥ १९॥
देवागारे पुरद्वारे प्राकाराट्टालकेषु च।
हस्तिशालाश्वशालासु रथशालास्त(स्व)थापि वा[4]॥ २०॥
कोष्ठाग[5]ारायुधाग[6]ारे निमित्तं तु शुभाशुभम्।
य[7]दि किञ्चित् प्रदृश्येत राज्ञस्तदभिनिर्दिशेत्॥ २१॥
भङ्गो यत्रोर्ध्ववंशस्य तत्र राजा विनश्यति।
अर्ग[8]लापीलिकाकु[9]क्षीभङ्गे च नवकर्मणि॥ २२॥
ग्रामे नश्यन्ति चैतानि तदा ग्रामो विनश्यति।
द्वि(दि)गुत्स्थि[10]तं तु राष्ट्राणां गृहार्थेषु कुटुम्बिनाम्॥ २३॥
नवकर्मणि[11] यत्किञ्चिद् भज्यते यदि वा नमेत्[12]।
[13]वि(ध्व)स्ते वा स्फुटे वापि कुटुम्बिमर[14]णं ध्रुवम्॥ २४॥
फलं सर्वनिमित्तेषु शुभं वा यदि वाशुभम्।
संवत्सरं परं ग्राह्यं नवकर्मकृते गृहे॥ २५॥
परिसंवत्सरान्ते च पुराणमिति निर्दिशेत्।
[15]तुम्बिका भज्यते यत्र नवकर्मणि निष्ठिते॥ २६॥

---

१ द. रा। २ द. °न्द°। ३ ख. ग. 'त्॥ देवागारे पुरद्वारे पुन्नाम यदि भज्यते। तत्र राजा विनश्येत स्त्रीनाम यदि तत् स्त्रीयः॥ देवा; द. देवागारे पुरद्वारे पुन्नामयदि भज्यते। तत्र राजा विनष्येतत्स्त्रीनाम यदि तत् स्त्रियः॥ ४. द. च.। ५ द. का.। ६ द. का। ७ द. यद्यत् कि°। ८ क. पि। ९ ख. द. शुचीभ° ग. शुश्री; । १० द. क्ति। ११ द. र्माणि। १२ द. नयेत्। १३ ख. ग. द. विथङ्गे वा। १४ द. नसरणं। १५ क. गुह्यका।

श्रेष्ठा[1] तु महिला तत्र षड्भिर्मासैर्विनश्यति ।
एवमेव नवं यस्य सदनं तु विनश्यति ॥ २७ ॥

प्रेष्य[2]दासा[3]दिविश्वासात् तद्[4] विनाशयति ध्रुवम् ।
पृष्ठवंशो नवो यस्य नवकर्मणि भिद्यते[5] ॥ २८ ॥

कुटुम्बी म्रियते तत्र गृहं संवत्सरात् परम् ।
प्रेष्याश्चात्र विनश्यन्ति दीर्य[6]माणे[7] विशेषतः ॥ २९ ॥

लुमासु भिद्यमानासु[8] कन्यामरणमादिशेत् ।
मुण्डकेषु विनष्टेषु सुहृ[9]दस्य विनश्यति ॥ ३० ॥

अनुपूर्वेषु[10] भिन्नेषु पुत्राणां मरणं ध्रुवम् ।
विपत्तौ मुण्डगोधानां माता तस्य विनश्यति ॥ ३१ ॥

नाग[11]पाशकभङ्गे तु[12] भृत्यानां मरणं भवेत् ।
कपाटे भ्रातृमरणं[13]मर्गलायां स्त्रिया वधः ॥ ३२ ॥

सुतस्य चा[14]र्गलापार्श्वे विनष्टे मरणं भवेत् ।
द्वारबन्धे विनष्टे तु शीघ्रं कुर्यात्[15] कुलक्षयम् ॥ ३३ ॥

इन्द्रकीलो दृढो यस्य भङ्गमायाति मूलतः ।
सपुत्रपशुवर्गस्य तस्य ब्रूयात् कुलक्षतिम्[16] ॥ ३४ ॥

तोरणं भज्यते यस्य द्रव्यं तस्य विनश्यति ।
गृहभर्तुश्च मरणं त्रिदशैरवधारयेत् ॥ ३५ ॥

वास्तुमध्ये विनष्टे तु कुलवृद्धो विनश्यति ।
सोपानं भिद्यते[17] यत्र नवकर्मणि निष्ठिते ॥ ३६ ॥

तस्य प्रेष्याश्च गावश्च हिरण्यं च विनश्यति ।
वेदिका भज्यते यस्य भार्या तस्य विनश्यति ॥ ३७ ॥

---

१ श्रेष्ठया तु । २ द. प्रेष्यां दस्सा सिविश्वास्यास्तद्विभासयति°; क. क्ष, । ३ ख. ग. सिविश्वास्यास्तद् विभासय । ४ क. तं वि । ५ ख. ग. द. भज्यते । ६ ख. ग. वी; द. वीर्यमाणो । ७ क. प्यमानो वि । ८ द. °स भद्य°; ख. ग. भज्यमा । ९ ख. ग. त्त । १० द. प° । ११ द. °क° । १२ क. षु । १३ द. °णं° । १४ द. व; क. व्य । १५ ख. ग. ब्रयात् । १६ ख. ग. द. यभ् । १७ ख. ग. द. भज्यते ।

गवाक्षस्तु विनश्येत पट्टस्तम्भोऽपि[1] वा दृढः ।
गजशुण्डाथ[2] भिन्नोऽश्वः[3] कपोताल्यथवा नवा ॥ ३८ ॥

स्थपनीपट्टिकाश्चैव[4] स्त्रीविनाशं तदादिशेत्[5] ।
विटङ्कस्य तुलाया वा भङ्गे जाते कथञ्चन ॥ ३९ ॥

शालास्तम्भस्य[6] वा नाशे भार्या तस्य विनश्यति ।
स्तम्भशीर्षं[7] यदि भ्रश्येत्[8] स्फुटेत् स्तम्भोऽपि वा दृढः ॥ ४० ॥

भज्यंते[9] प्रतिमोको वा स्वामिनस्तु वधो भवेत् ।
भङ्गे तु भङ्गवाहिन्याः कुलवृद्धवधो भवेत् ॥ ४१ ॥

आकाशंतलके[10][11] पुत्राः प्रतिच्छिन्ने[12] कुटुम्बिनः ।
विनष्टे च विनश्यन्ति षड्भिर्मासैर्न संशयः ॥ ४२ ॥

प्रासादमण्डले[13] भग्ने भग्नासु वलभीषु च ।
भार्या कुटुम्बिनस्तस्य नाशमायात्यसंशयः ॥ ४३ ॥

प्रलीनो वा विलीनो वा प्रासादो यस्य भज्यते ।
प्रलीने भृत्यमृत्युः स्याद् विलीने तु धनक्षयः ॥ ४४ ॥

मिश्रे विनष्टे प्रासादे हीयन्ते[14] सर्ववृद्धयः[15] ।
मरणं वा भवेत् तत्र कुष्ठव्याधिं[16] च निर्दिशेत् ॥ ४५ ॥

येषु स्थानेषु भङ्गो वा विनतिर्वा प्रकीर्तिता[17] ।
उपद्रुतिर्विघातो[18] वा [19]तेषां फलमपीरितम् ॥ ४६ ॥

स्निग्धानि यदि दृश्यन्ते तानि दार्ढ्यान्वितानि च ।
धनमायुश्च हर्षं च पूर्वोक्तानां तदादिशेत् ॥ ४७ ॥

कर्णिकाभ्यन्तरी[20] स्थूणा शालापादोऽथ हीयते ।
यदि तद् दुःखमाप्नोति गृहभर्ता न संशयः ॥ ४८ ॥

---

१ ख. ग. द. पुट° । २ द. गजस्त्वंद्राथभिन्नश्च; ख. स्त्वंद्राथ, ग. स्वंड्यथ । ३ ख. ग. न्नश्च । ४ ख. ग. द. चैव; चै । ५ क. भवेत् । ६ ख. द. मा । ७ ख. ग. द. र्षे । ८ द. भ्रष्टस्फटे; ख. ग. ष्टे । ९ द. प्रद्यते । १० क. शे । ११ द. °को । १२ द. न्नं । १३ द. प्रमाद° । १४ ख. ग. द. यते । १५ द. ख. ग. वृद्धिदः; । १६ द. °व्याधेव नि°; क. वि । १७ क. ख. ग. द. तः । १८ द. °विज्ञानो । १९ ख. ग. द. ये । २० द. कार्तिकाभ्यांतरी ।

संप्रधार्य च मेधावी बलाबलमतन्द्रितः[1] ।
निर्दिशन्[2] बलमाप्नोति धनमायुर्यशस्तथा ॥ ४९ ॥
[3]एवमादिकनिमित्तसूचितं संप्रधार्य [4]मतिमान् बलाबलम् ।
स्पष्टमादिशति योऽत्र शास्त्रवित् कीर्त्तिवित्त+ध( भव ) [5]नानि
सोऽश्नुते ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

द्वारभङ्गफलं[6] नाम त्रिचत्वारिंशोऽध्यायः ॥

## अथ स्थपतिलक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ।

स्थापत्यमुच्यतेऽस्माभिरिदानीं प्रक्रमागतम् ।
ज्ञातेन येन ज्ञायन्ते स्थपतीनां गुणागुणाः ॥ १ ॥
शास्त्रं कर्म तथा [7]प्रज्ञा शीलं च क्रिययान्वितम् ।
लक्ष्यलक्षणयुक्तार्थशास्त्रनि[8]ष्ठो नरो भवेत् ॥ २ ॥
सामुद्रं गणितं चैव ज्योतिषं छन्दः[9] एव च ।
सिराज्ञानं तथा [10]शिल्पं यन्त्रकर्मविधिस्तथा ॥ ३ ॥
एतान्यङ्गानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान् ।
शास्त्रानुसारेणाभ्युद्य लक्ष[11]णानि च लक्षयेत् ॥ ४ ॥
प्रसिद्धशास्त्रदृष्टान्तैर्वास्तुज्ञानं प्रसाधयेत् ।
वास्तुनः ससिरावंशैर्मर्मवेधैः सुनिश्चितैः ॥ ५ ॥
वास्तुद्वारल[12]क्षणान् भूयः सर्वान् जानाति शास्त्रतः ।
यस्तु शास्त्रमविज्ञाय प्रयोक्ता स्थपतिर्भवेत् ॥ ६ ॥
हन्तव्यः स स्वयं राज्ञा मृ[13]त्युवद् राजहिंसकः ।
मिथ्याज्ञानादहङ्कारी शास्त्रे चैवाकृतश्रमः ॥ ७ ॥

---

१ द. यः । २ क. श्यनब । ३ द. चय ? । ४ द. सुम° । ५ क. नमानि । ६ द. °फलाध्यायो नाम त्रिचत्वारिंशः ॥ छ ॥ ७ द. प्रा° । ८ द. स्त्रचित्त°; ख. ग. वित्तो न । ९ द. छंदयेव । १० ख. ग.. शल्यं य । ११ द. ख. ग. लक्षणेन च; । १२ ख. ग. वे । १३ द. मृ रोगनार्यहिंसकः ।

अका[1]लमृत्युर्लोकस्य विचरेद् वसुधातले ।
यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ ८ ॥
स मुह्यति क्रियाकाले दृष्ट्वा भीरुरिवाहवम् ।
केवलं कर्म यो वेत्ति शास्त्रार्थं नाधिगच्छति ॥ ९ ॥
सोऽचक्षुरिव नीयेत विवशो[3]ऽन्येन वर्त्मसु ।
कर्म वास्तुविधेः स्थानं मानमुन्मानमेव च ॥ १० ॥
क्षेत्रजाति(नि) च कर्माणि लुमालेखाच(श्च)तुर्दश ।
चत्वा(तु)रो गण्डिकाच्छेदान् वृत्तच्छेदेषु सप्तसु ॥ ११ ॥
सुश्लिष्टं सन्धिसन्धानैरधरोत्तरसंयुतम् ।
बाह्यरेखान्वितं शुद्धं यो जानाति स कर्मवित् ॥ १२ ॥
शास्त्रकर्मसमर्थोऽपि स्थपतिः प्रज्ञया विना ।
फलेयुः कर्मभिरन्या[6]भिः(?) स्यान्निर्मद इव द्विपः ॥ १३ ॥
प्रत्युत्पन्नमतिर्यः स्याद् वाहतः(कः) स्थपतिस्तथा ।
कर्मकाले न मुह्येत् स प्रज्ञानेनोपबृंहितः ॥ १४ ॥
अप्रज्ञेयं दुरालोकं गूढार्थं बहुविस्तरम् ।
प्रज्ञापोतं समारुह्य प्राज्ञो वास्तु[9]निरं(?) तरेत् ॥ १५ ॥
ज्ञानवांश्च तथा वाग्मी कर्मस्वपि च निष्ठितः ।
एवं युक्तोऽपि न श्रेयान् यदि शीलविवर्जितः ॥ १६ ॥
रोषाद् द्वेषात् तथा लोभान्मोहाद् रागात् तथैव च ।
अन्यं[10]चिन्त्यत्वमायाति दुःशीलानामवि[11]क्षेयात्(?) ॥ १७ ॥
शीलवान् पूजितो लोके शीलवान् साधुसम्मतः ।
शीलवान् सर्वकर्मार्हः शीलवान् प्रियदर्शनः ॥ १८ ॥
शीला[12]धाने परं यत्नमाधि[13](ति)ष्ठेत् स्थपतिः सदा ।
ततः कर्माणि सिध्यन्ति जनयन्ति शुभानि च ॥ १९ ॥

---

१ द. अकालल्लोकमृत्यस्य । २ द. ख. ल्पेन । ३ क. डि । ४ ख. ग. दा वृ । ५ क. ख. ग. च्छा; द. च्छादेष्ट । ६ ख. ग. ण्य । ७ ख. द. ह्यतः । ८ द. रे । ९ द. वास्तुर्न नाचरेत्; ख. ग. स्तुर्ननाचरे । १० द. न्यं । ११ क. वी । १२ ख. ग. द. ल । १३ ग. धेष्वे स्थ; द. °माधेष्वे स्थ° ।

तथाचाष्टविधं कर्म ज्ञेयं स्थपतिना सदा ।
आलेख्यं लेख्य[1]जातं च दारुकर्म चयस्त[2]था ॥ २० ॥

पाषाणसिद्धहेम्नां[3] च [4]शिल्पं कर्म तथैव च ।
एभिर्गुणैः समायुक्तः स्थपतिर्याति पूज्यताम् ॥ २१ ॥

स्थापत्यमङ्गैरिदमष्टभिर्य[5]श्चतुर्विधं वेत्ति विशुद्धबुद्धिः ।
स शिल्पिनां संसदि लब्धपूजः परां प्रतिष्ठां लभते चिरायु[6]ः ॥२२॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
स्थपति[7]लक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ॥

---

## अथ अष्टाङ्गलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ।

प्रोक्तं चतुर्धा स्थापत्यं वास्तुतत्त्वस्य सिद्धये ।
ब्रूमस्तदेव चेदानीमङ्गैः संयुक्तमष्टभिः ॥ १ ॥

तेष्वङ्गं प्रथमं प्रोक्तं वास्तुपुंसो विकल्पना ।
पुरस्य विनिवेशस्तु द्वितीयं द्वारकर्म च ॥ २ ॥

रथ्याविभागः प्राकारनिवेशोऽट्टालकस्य च ।
विनिवेशः प्रतोलीनां विभागस्थानकानि च ॥ ३ ॥

प्रासादश्च तृतीयं स्याच्चतु[8]र्थं तु ध्वजोच्छ्रितिः ।
पञ्चमं नृपतेर्वेश्म स्थानान्तरविभक्ति च ॥ ४ ॥

चातुर्वर्ण्यविभागश्च गृहभागश्च षष्ठकम् ।
सप्तमं यजमानस्य शालायां मानमीरितम् ॥ ५ ॥

यज्ञवेदीप्रमाणं च कोटिहोमविधिस्तथा ।
अष्टमं राजशिबिरनिवेशो दुर्गकर्म च ॥ ६ ॥

---

१. लेख्यज्ञानं च यत्तु क° । २ क. त्त । ३ द. म्ना । ४ ख. ग. कल्पे धर्म; द. कल्पे धर्म्यं त° । ५ द. °जां । ६ ग. य; द. थः ७ द. स्थपतिर्लक्षणाध्यायो नाय चतुश्चत्वारिंशः ॥ छ ॥ ८ द. दं ।

यो वेत्त्य[1]ङ्गान्यमून्यष्टौ सोऽत्र स्थपतिसत्तमः ।
यशो मानं स लभते पूज्यते च नराधिपैः ॥ ७ ॥

अशास्त्रज्ञम[2]कर्मज्ञं स्थपतिं यः प्रयोजयेत् ।
न [3]तस्य वास्तु सिध्येत सिद्धमप्यसुखावहम् ॥ ८ ॥

तस्मात् कर्म च शास्त्रं च यो वेत्ति द्वितयं नरः ।
अष्टाङ्गमपि यो वेत्ति स राज्ञः स्थपतिर्भवेत् ॥ ९ ॥

अङ्गानि पूर्वमुक्तानि वास्तुशास्त्रोक्तविस्तरात् ।
तेषु प्रासादिकं यत् तद् वक्ष्यामोऽग्रे सविस्तरम् ॥ १० ॥

अथाङ्गं सप्तमं ब्रूमो[4] यत् तद् यज्ञेषु युज्यते ।
विनिविष्टे पुरे पूर्वं[5] क्लृप्तेषु सुरधामसु ॥ ११ ॥

दिशि दक्षिणपूर्वस्यां यज्ञार्थं मापयेद् भुवम् ।
निवेशं तत्र कुर्वीत चतुरश्रं समन्ततः ॥ १२ ॥

आयामेन विधातव्यो हस्ताष्टादशविस्तृतः ।
पूर्वद्वारं विधातव्यमादित्यस्य पदे बुधैः ॥ १३ ॥

तस्य पश्चिमभागे तु [6]यजमानकुटी भवेत् ।
षोडशायामविस्तारा प्राङ्मुखी सा प्रशस्यते ॥ १४ ॥

यजमानकुटीद्वारे देवता या च कीर्तिता ।
ततः प्रभृति पूर्वेण प्राग्वंशं परिकल्पयेत् ॥ १५ ॥

वेदिमध्ये स्थितं तत् स्यान्मानं वेद्यांश्च[8] [9]शस्यते ।
पूर्वापरेण षट्त्रिंशत् कर्तव्याः प्रक्रमा बुधैः ॥ १६ ॥

एकत्रिंशत् कुटीभागे मध्येऽष्टादश कल्पयेत् ।
प्रक्रमाः स्युः शिरस्थाने विंशतिश्चतुरु[10]त्तरा[11] ॥ १७ ॥

पुरुषस्य शिरस्तत्र प्राग्वंशे तु प्रतिष्ठितम् ।
तस्मात् पूर्वोत्तरं ज्ञेयं सर्वयज्ञेषु पूजितम् ॥ १८ ॥

---

१ ख. ग. त्त्येतान्य; द. यो भित्ते तान्यमूनष्टौ । २ द. °मकर्मंत । ३ द. ते । ४ द. ब्रूयाद्य° । ५ द. पूर्वं तत्क्लृप्ते । ६ द. जय° । ७ क. प्रतिक° । ८ द. विद्याश्च कथ्यते । ९ क. ख. ग. कथ्यते । १० द. °रोत्तराः; क. ख. ग. रो । ११ क. ख. राः ।

वेद्यन्तरं तु कर्तव्यं शकटं येन गच्छति ।
तस्मादुत्तरवेदी[1] या कार्या प्रत्युत्तरेण तु ॥ १९ ॥
द्विहस्तायामविस्तारो[2] होमचे[3]ष्टः कृतोऽत्र हि ।
प्राग्दक्षिणेन संस्थानं यजमानस्य शस्यते ॥ २० ॥
कटिमात्रं सदा[4] कार्यं नाभिमात्रमथापि वा ।
ततोऽधिकेन दुर्भिक्षमनावृष्टिश्च जायते ॥ २१ ॥
एषा यज्ञक्रिया प्रोक्ता कोटिहोमोऽथ वक्ष्यते ।
पुरस्याभ्यन्तरे भागे हुताशस्य पदे तथा ॥ २२ ॥
तस्मिन् स्थाने विधातव्यः कोटिहोमः सदा पुरे ।
लक्षहोमश्च कर्तव्यो नित्यो नैमित्तिकोऽपि वा ॥ २३ ॥
अथ भूमिवशात् स्थानं कदाचिन्नैव लभ्यते ।
सर्वतो ब्रह्मणः स्थानाद्धोमस्थानं निवेशयेत् ॥ २४ ॥
ऐशानीं दिशमाश्रित्य ब्राह्मणैर्वेदपारगैः ।
पुरश्चरणतत्त्वज्ञैः षट्कर्मनिरतैः सदा ॥ २५ ॥
नित्यं शान्तिपरैर्विप्रै राजा[5] तु विजयी भवेत् ।
नोपसर्गास्तु जायन्ते न च लक्ष्मीः पुरं त्यजेत् ॥ २६ ॥
अनावृष्टिभयं नास्ति सुभिक्षं जायते सदा ।
उक्तं याज्ञिकमङ्गं तु सर्वाङ्गेभ्यः प्रशस्यते ॥ २७ ॥
सर्वं स्थपतिना ज्ञेयं तत्त्वज्ञैर्ब्राह्मणैः सह ।
एकाशीतिपदेनैव यज्ञभूमिं तु मापयेत् ॥ २८ ॥
निवेशं [6]शिबिरस्याथ कथयामोऽङ्गमष्टमम्[7] ।
यदा तु नृपतिः[8] स्थानात् स्वाद् यात्राभिमुखो भवेत् ॥ २९ ॥
शिबिरस्य निवेशं च तत्त्ववेत्ता परीक्षयेत् ।
अर्थशास्त्रविधिज्ञो वा स्थपतिर्वा प्रकल्पयेत् ॥ ३० ॥

---

१ द. °द्या । २ द. °रा । ३ द. °श्वि° । ४ द. °दः । ५ द. ज्ञा । ६ द. विधि° ।
७ द. मः । ८ द. ति ।

शिबिरं चतुरश्रं स्याद् वृत्तं वृत्तायतं क्वचित् ।
चतुरश्रायतं वापि विषमं वा क्वचिद् भवेत् ॥ ३१ ॥

भूमिभागवशात् कल्पं( ल्प्यं )महारथ्योभयान्वितम् ।
शिबिरस्य तु चत्वारि कुर्याद् द्वाराणि यत्नतः ॥ ३२ ॥

रथ्या सार्धा तु सेनायाः पुररथ्याप्रमाणतः ।
मित्रे स्थानं नरपतेः कार्यं पृथ्वीधरेऽपि वा ॥ ३३ ॥

आर्यम्णे[1] वा विधातव्यं पदे[2] वैवस्वतो( ते )ऽथवा ।
निवेशो मन्त्रिणां कार्यः पश्चिमो( मे ) राजवेश्मनः ॥ ३४ ॥

पुरोहितस्योत्तरतो बलाध्य[3]क्षस्य पूर्वतः ।
अन्तःपुरं दक्षिणतो भाण्डागारं तथैव च ॥ ३५ ॥

गृहं प्र[4]वि[5]शतो राज्ञो न्यस्येद् दक्षिणतो हयान् ।
वामे च दन्तिनो न्यस्येदेवं सैन्यं निवेशयेत् ॥ ३६ ॥

बाह्यतः परिखां तस्य कारयेद् राजवेश्म[6]नः ।
हस्तां[7]स्त्रींश्चतुरो वापि पञ्चहस्तानथापि वा ॥ ३७ ॥

चतुष्षष्टिपदाख्येन विभाज्यं[8] शिबिरं बुधैः[9] ।
निवेशः शिबिरस्यो[10]क्तो दुर्गकर्माथ कथ्यते ॥ ३८ ॥

दुर्गं तु[11] षड्विधं प्रोक्तं राज्ञां[12] तु विजिगीषताम् ।
अ[13]ब्दुर्गं पङ्कदुर्गं वा वनदुर्गै[14]रिणे[15] तथा ॥ ३९ ॥

[16]पार्वतीयं म[17]हादुर्गमिति कल्प्यानि पार्थिवैः ।
सर्वेषामेव दुर्गाणां पार्वतीयं प्रशस्यते ॥ ४० ॥

दुर्ग[18]स्थानविभागोऽत्र षोडशाख्येन कीर्तितः ।
मध्ये तु ब्रह्मणः स्थानमसम्बाधं विधीयते ॥ ४१ ॥

---

१ द. स्ते । २ द. पदे चैव तुला यथा । ३ द. °घक्ष्वस्य । ४ क. ख. ग. द. °वे । ५ क. शि । ६ द. नि । ७ द. हस्तास्त्री° । ८ क. व्यं । ९ द. शिशिरा बु° । १० द. क्ते । ११ द. त्विषद्विधं । १२ द. राज्ञा भूमि जिगीषता । १३ द. अदुर्गं । १४ द. दुर्गैरिणा । १५ ग. णो । १६ द. पर्वतीयं गुहादुर्गमिति कल्याणपार्थिवः । ख. ग. प । १७ ख. ग. गु । १८ द. गं ।

ब्रह्मस्थानं समारभ्य हर्म्यं[1] पञ्चशया: स्मृता: ।
उपरथ्या त्रिहस्ता तु[2] शेषास्तु द्विशया[3]: स्मृता: ॥ ४२ ॥

[4]संनिकृष्टा विधातव्या दुर्गा( र्ग )रथ्या समन्तत: ।
द्वारं[5] रथ्याप्रमाणेन कार्यं नात्यन्तमुच्छ्रितम् ॥ ४३ ॥

परचक्रसमं (मसं)बाधं सुरक्षं तत् सदा भवेत् ।
दुर्गेश्वरगृहस्थानं ब्रह्मण[6]: परितो भवेत् ॥ ४४ ॥

वैवस्वतेऽथवार्यम्णे मैत्रे पृथ्वीधरेऽपि[7] वा ।
यथा पुरे पुरा प्रोक्तं[8] स्थानं दुर्गेऽपि तत् तथा ॥ ४५ ॥

वीरा: शुभा ह्यदोषाश्च[9] भूमिपालस्य संमता: ।
धनुर्वेदविधिज्ञाश्च कृतास्त्रा: शास्त्रपारगा: ॥ ४६ ॥

दुर्गे स्थाप्या: सुरूपाश्च बहवश्च वरस्त्रिय: ।
अन्त:पुरं च कोशं च कुमारां[10]श्चात्र वासयेत् ॥ ४७ ॥

एवं [11]दुर्गविधानस्य समासोऽयमुदाहृत: ।
इत्यष्टाङ्गो वास्तुशास्त्रस्य सार: संक्षेपेण स्पष्टमस्माभिरुक्त: ।
यत्र ज्ञाते शिल्पिवृंद[12] वास्तुविद्यापाथोनाथं सन्तरन्त्यप्रयासात्
॥ ४८ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
अष्टाङ्गलक्षणं नाम पञ्चचत्वारिंशोऽध्याय: ॥

---

## अथ तोरणभङ्गादिशान्तिको नाम षट्चत्वारिंशोऽध्याय: ।

पुरातनं नवं वापि कृतं वाथार्ध[13]निर्मितम् ।
देवतानां नृपाणां[14] च तोरणं निपतेद्[15] यदि ॥ १ ॥

---

१ द. रर्घ्यं । २ द. स्तु । ३ द. ती । ४ द. शांतिकृष्टा । ५ द. र । ६ द. ब्रह्मादपरतो ।
७ ख. ग. द. थ । ८ द. क्ता । ९ द. लाथ । १० द. रा । ११ द. र्गे । १२ क. वृद्धास्तु वि ।
१३ द. चाथोर्द्धनि° । १४ ख. ख. ऋषीणां च । १५ क. पत्यते य, ग. नृपतेर्यदि; द. नृपते यदि ।

भज्यते[1] दह्यते वाथ नमते सज्जतेऽथवा ।
दवविद्युज्जलाद्यैर्वा हन्यते तत् कदाचन ॥ २ ॥
तत्र दोषान् प्रवक्ष्यामो दोषप्रशमनानि च ।
तोरणं निपतेत्[2] सर्वं शिरो वास्य कथञ्चन ॥ ३ ॥
राज्ञां सेनापतीनां च प्रतीहारपुरोधसाम् ।
प्रधाना[3]श्वगजानां च विप्रपौरजनस्य च ॥ ४ ॥
तत्र मृत्युभयं[4] विद्याद् दुर्भिक्षं चापि निर्दिशेत् ।
तस्मात् प्रशमहेत्वर्थं विधिं कुर्यादिमं[5] बुधः ॥ ५ ॥
ऋत्विग्भिर्ब्राह्मणैर्धीरैः[6] स्थपतिः सपुरोहितैः ।
रात्रौ होमबलिं कुर्यान्नगरे तु चतुर्दिशम् ॥ ६ ॥
कर्णचत्वरशृङ्गाटेष्ववनीपालवेश्मनि ।
स्थानेष्वेतेषु विप्राद्यैर्वेदिं निष्पाद्य साक्षताम् ॥ ७ ॥
कलशैर्द्रव्यगन्धैश्च श्वेतमाल्याम्बरैर्वृताम् ।
तत्र होमं प्रकुर्वीत शान्तिकं बलिमेव च ॥ ८ ॥
एवं प्रशमयेत् सर्वं यत्किञ्चिद् दुरितोत्थितम् ।
तोरणं भज्यते चेत् तद्राष्ट्रभङ्गं[8] विनिर्दिशेत् ॥ ९ ॥
अस्य प्रशमहेत्वर्थं पूर्वोक्तं कारयेद् विधिम् ।
तदेवैकं प्रदद्यात तोरणं नगरे[10] यं(य)दि ॥ १० ॥
तदा वह्निभयं ब्रूयाद् राष्ट्रस्य नगरस्य च ।
सबाह्याभ्यन्तरं विप्रैर्विधिमेनं प्रयोजयेत् ॥ ११ ॥
नते वा शीर्णभग्ने वा व्याधिपीडां विनिर्दिशेत् ।
होमं बलिं च कुर्वीत पुनःसंस्कारमस्य च ॥ १२ ॥
वातेन विद्युता[11] वापि तोरणं यदि भज्यते ।
तस्मिन् रोगाः प्रवर्तन्ते कुलपीडाधनक्षयाः[12] ॥ १३ ॥

---

१ द. भिद्यते । २ द. नृपते । ३ ख. ग. द. °नानां ग° । ४ द. °यं ब्रूयात् दु° । ५ द. °मां । ६. क. र्वीं; द. र्धीरैः । ७ द. स्थि । ८ द. ङ्गो । ९ क. तदा चैकं । १० ग. रै; द. °रैर्यदि । ११ द. °तो । १२ क. ग. द. थः ।

शान्तिकर्म प्रकुर्वीत ततः शान्तिकरं भवेत् ।
एवमादौ कृते पश्चात् पुनः संस्कारयेद् बुधः ॥ १४ ॥

पूर्वावयवनिर्माणाद् विशिष्टं रचयेत् पुनः ।
[1]दृढसन्धिनिगूढं च दृढद्रव्यसमन्वितम् ॥ १५ ॥

विविधं रूपकर्माढ्यं सुसंस्था[2]नं मनोरमम् ।
अकुब्जमनतं चैव पूर्वोत्कृष्टतरं तथा ॥ १६ ॥

नियुक्ते तु पुनः शान्तिं ब्राह्मणान् वाचयेत् ततः ।
पुराणे वा नवे वाथ कृते वार्धकृतेऽथवा ॥ १७ ॥

प्रासादे वा गृहे वापि कपोतः प्रविशेद् यदि ।
तत्र दोषाः प्रपद्यन्ते शान्तिकर्म तथैव च ॥ १८ ॥

[3]कालमूर्तिः कपोतश्च पापमूलकरण्डकम् ।
विहङ्गापशदो हीनः कृष्णचारी विहिङ्गमः ॥ १९ ॥

चतुर्वि[4]धः समाख्यातो मुनिभिः स तपोधनैः ।
श्वेतो विचित्रकण्ठश्च विचित्रोऽन्योऽथ कृष्णकः ॥ २० ॥

कपोतो भवने यस्य श्वेतवर्णो विशेत् क्वचित् ।
कीर्त्तिविद्याधनं पुण्यं शीघ्रं च नयते क्षयम् ॥ २१ ॥

नित्यं रोगाः प्रवर्धन्ते शिशुपीडा च जायते ।
चित्रकण्ठो[5] हरेज्जायां पुत्रान् सर्वान् विचित्रकः ॥ २२ ॥

सर्वाः सिद्धीश्च कृष्णाङ्गः प्र[6]दुष्यं[7] च कुलं हरेत् ।
रोगाः सर्वेऽपि वर्धन्ते विपदो व्यसनानि च ॥ २३ ॥

बन्धनानि च जायन्ते प्रविष्टे तु कपोतके ।
तस्माद् यत्नपरो भूत्वा प्रायश्चित्तं समाचरेत् ॥ २४ ॥

स्नातस्त्रिकालशुद्धात्मा सोपवासो जितेन्द्रियः ।
देवपूजार्चनरतो नित्यं दानपरः शुचिः ॥ २५ ॥

---

१ ख. ग. द. दृढं । २ ग. द. न । ३ क. कलिसूत्रं क । ४ द. °धं । ५ द. ण्ठे । ६ क. दु । ७ ग. द. °ष्यं ।

यवा[1]न्नप्रायभोजी च नित्यं होमपरायणः ।
गुरुविप्ररतश्चैव श्वेतमाल्याम्बरस्तथा ॥ २६ ॥
गृही सगृहिणीकस्तु व्रतमेतत् समाचरेत् ।
श्वेतके पञ्चरात्रं च चित्रकण्ठे दशैव तत् ॥ २७ ॥
चित्रे पञ्चदशाहानि कृष्णे दिवसविंशतिः ।
[2]व्रतस्थेन तु कर्तव्यमग्निकार्यं मनोरमम् ॥ २८ ॥
यथालाभं समादाय तस्य देहं सपिच्छकम् ।
निकृन्तेत् खण्डखण्डानि विभागाष्टशतानि तं[3]म् ॥ २९ ॥
घृतै[4]प्लुतानि पुण्यानि मधुलाजान्वितानि च ।
पञ्चवारुणसंज्ञेन वह्निकार्ये कृतेऽक्षतैः ॥ ३० ॥
त[5]तश्च मांसं जुहुयाद्द्व[6]व्यमात्रेण मन्त्रवित् ।
हु[7]ते कव्ये ततः क्षीरं दधिमध्वाज्यमेव च ॥ ३१ ॥
संपूजयेद् ग्रहान् सर्वान् ब्राह्मणान् वाचयेत् ततः ।
स्ववित्तपादं श्वेते तु विप्रेभ्यः प्रतिपादयेत् ॥ ३२ ॥
वित्तार्धं चित्रकण्ठे तु पादोनं सर्वचित्रके ।
कृष्णे[8] सर्वधनत्यागः कर्तव्यो ब्राह्मणा[9]त् पुनः ॥ ३३ ॥
[10]एवं शान्तिर्भवेद् गेहे[11] सर्वदोषक्षयाव[12]हा ।
महतीं श्रियमाप्नोति धनलाभश्च जायते ॥ ३४ ॥
पुत्रैः पौत्रैर्वृद्धिमाप्नोत्य[13]नन्तामायुर्दीर्घं प्राप्नुयात् सं[14]यतात्मा ।
एतत् कृत्वा मुच्यते सर्वपापैर्मेघैर्यद्वच्छारदः शीतरश्मि[15]ः ॥ ३५ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

तोरणभङ्गकपोतप्रवेशशा[16]न्तिका नाम षट्चत्वारिंशोऽध्यायः ॥

---

१ ग. द. था । २ द. व्रतस्त्वेना तु । ३ क. तत्; ग. द. ते । ४ ख. ग. द. ताक्षतानि पुष्पाणि म° । ५ द. बदश्च । ६ द. न्य । ७ द. हुतः कुथ्ये ततः । ८ द. °ष्णो । ९ क. णान् पु । १० क. शि । ११ द. देहे । १२ क. पहः । १३ द. प्नोत्यनन्तं चा । १४ क. ग. यु । १५ द. श्मि । १६ द. °शांतिकाध्यायो नाम षट् चत्वारिंशः ॥ छ ॥

## अथ वेदीलक्षणं नाम सप्तचत्वारिंशोऽध्यायः ।

वेद्यश्चतस्रो विज्ञेया या पुरा ब्रह्मणोदिताः ।
वयं तां[1]ः संप्रवक्ष्यामो नाम[2]संस्थानमानतः ॥ १ ॥

प्रथमा चतुरश्रा स्यात् सभद्रा च द्वितीयका[3] ।
तृतीया श्रीधरी नाम चतुर्थी पद्मिनी स्मृता[4] ॥ २ ॥

यज्ञकाले तथोद्वाहे देवतास्थापनेषु च ।
नीराजनेषु सर्वेषु वह्निहोमे च नित्यशः ॥ ३ ॥

नृपाभिषेचने चैव शक्रध्वजनिवेशने ।
नृपयोग्या भवन्त्येता वर्णानामनुपूर्वशः ॥ ४ ॥

चतुरश्रा तु या वेदि नवहस्ता समन्ततः ।
अष्टहस्ता प्रमाणेन सर्वभद्रा प्रकीर्तिता[5] ॥ ५ ॥

श्रीधरी सप्त विज्ञेया हस्ता[6]न् मानेन वेदिका ।
षड्ढस्ता चैव शास्त्रज्ञैर्नलिनीह विधीयते ॥ ६ ॥

चतुरश्रा तु कर्तव्या चतुरश्रा समन्ततः ।
भद्रैस्तु सर्वतोभद्रा भूषणीया चतुर्दिशम् ॥ ७ ॥

श्रीधरी चापि विज्ञेया कोणविंशतिसंयुता ।
नलिनीति च विज्ञेया पद्मसंस्थानधारिणी ॥ ८ ॥

कर्तव्याः[7] स्वस्वविस्तारादुच्छ्रयेण त्रिभागिकाः[8] ।
कुर्यान्मन्त्रवतीभिस्ता इष्टकाभिस्तु चार्य[9](यि) ता[10]ः ॥ ९ ॥

चतुरश्रा यज्ञकाले[11] विवाहे श्रीधरी स्मृता ।
देवतास्थापने वेदीं सर्वभद्रां[12] निवेशयेत् ॥ १० ॥

नीराजने साग्निकार्ये तथा राजाभिषेचने ।
वेदी पद्मावती या च तथा शक्रध्वजोच्छ्रये ॥ ११ ॥

---

१ क. तासां प्र । २ द. मात्म । ३ द. काः । ४ द. ताः । ५ द. ताः । ६ क. स्तोन्मा । ७ क. द. व्या । ८ क. का । ९ द. वायकाः । १० ख. ग. काः । ११ द. या° । १२ द. वेदी सर्वभद्रं ।

चतुर्मुखा तु कर्तव्या सोपानैश्च चतुर्दिशम्।
प्रतीहारसमायुक्ता चार्धचन्द्रोपशोभिता[1] ॥ १२ ॥

चतुःस्तम्भसमायुक्ता चतुष्कुम्भविराजिता।
काञ्चनै राजतैस्ताम्रैर्मृन्मयैः कलशैस्तथा ॥ १३ ॥

कोणे कोणे तु विन्यस्तैर्वल्गुवानरभूषितैः।
स्तम्भप्रमा[2]णं वेदीनां कार्यं छाद्यवशेन च[3] ॥ १४ ॥

एकेन द्वित्रिभिर्वापि च्छाद्यैः सामलसा[4]रिकैः।
स्तम्भमूलानि चाभ्यज्य गुडेन मधुसर्पिषा ॥ १५ ॥

परमान्नेन वाभ्यज्य तान् विन्यस्येद् यथातथम्।
दे[5]वताः पूजयित्वा तु ब्राह्मणान् स्वस्ति वाचयेत् ॥ १६ ॥

चतुर्विधमितीरितं यदिह वेदिकालक्षणं
समग्रमपि वर्तते मनसि यस्य तच्छिल्पिनः।
स याति भुवि पूज्यतामवनिभोक्तुराप्नोति च
श्रियं स्थपतिसंसदि स्फुरति चास्य शुभ्रं यशः ॥ १७ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
वेदीलक्षणं नाम सप्तचत्वारिंशोऽध्यायः।

---

## अथ गृहदोषनिरूपणं नामाष्टचत्वारिंशोऽध्यायः।

अतः परं गृहादीनामप्रशस्तसमुच्छ्रितम्।
क्रियते कथितं यस्मादेकत्र सुसमं भवेत् ॥ १ ॥

रक्षोम्बुनाथकीनाशमरुद्दहनदिक्प्लवा[6]।
मध्यप्लवा च भूर्व्याधिदारिद्र्यमरकावहा ॥ २ ॥

वह्निप्लवा वह्निभिये मृतये दक्षिण[7]प्लवा।
रुजे रक्षःप्लवा प्रत्यक्प्लवा धान्यधनच्छिदे ॥ ३ ॥

---

१ द. ताः। २ द. ण। ३ द. त्। ४ ख. ग. द. र। ५ द. देवतान् (न्) पूजयित्वात् (च) ब्रह्मणा स्वस्ति वाचयेत्। ६ द. निप्लवा। ७ द. णे।

कलहाय प्रवा[1]साय रोगाय च मरुत्प्लवा ।
मध्यप्लवा तु भूमिर्या सर्वनाशा[2]य सा भवेत् ॥ ४ ॥
तुषास्थिकेशकी[3]टत्व[4](क्)शङ्कभस्मोषरान्विताम् ।
कर्[5]पराङ्गारिणीं दुष्टसत्त्वानार्यजनां त्यजेत् ॥ ५ ॥
चैत्रे शोककरं वेश्म ज्येष्ठे मृत्युप्रदायकम् ।
पशुनाशनमाषाढे शून्यं भाद्रपदे कृतम् ॥ ६ ॥
आ[6]श्विने कलहाय स्यात् कार्त्तिके भृत्यनाशनम् ।
माघे चाग्निभयाय स्यान्मासेष्वेषु न कारयेत् ॥ ७ ॥
पावकस्य पदे पृष्ठवंशस्यापि च पश्चिमे ।
पुरप्रासादकर्णे च कीलादि प्राक् प्रयोजयेत् ॥ ८ ॥
पूर्वपश्चिमदिङ्मूढं वास्तु स्त्रीनाशकृद् भवेत् ।
उदङ्मूढं न निष्पत्तिं याति सर्वं च नाशयेत् ॥ ९ ॥
यत्तु दक्षिणदिङ्मूढं जायते मरणाय तत्[7] ।
प्राग्वास्तुनि (तुं[8]) कुर्वीत प्रासादं मन्दिरं पुरे ॥ १० ॥
वलितं चलितं भ्रान्तं विसूत्रं च समुत्सृजेत् ।
यत् स्यान्मुखविनिष्क्रान्तं वलि[9]तं तत् प्रकीर्तितम् ॥ ११ ॥
चलितं पृष्ठनिष्क्रान्तं दिङ्मूढं भ्रान्तमुच्यते ।
वि[10]सूत्रं कर्णहीनं स्यात् फलमेषां प्रचक्ष्महे ॥ १२ ॥
वलिते चलति स्थानं चलिते विग्रहो भवेत् ।
भ्रान्तं योषिद्विनाशाय विसूत्रं भूरिशत्रुकृत् ॥ १३ ॥
मूषकोत्करवल्मीकप्रान्ता वक्रा भुजङ्गवत् ।
छिन्ना भिन्ना विकर्णा च न वास्तुनि शुभा क्षितिः ॥ १४ ॥
मूषकोत्करवत्यर्थं हन्ति वल्मीकिनी सु[11]तम् ।
विकर्णा कुरुते क[12]र्णरोगं[13] छिन्ना विनाशिनी ।
भिन्ना भेदं करोत्युर्वी कुटिला मतिवक्रताम् ॥ १५ ॥

---

१ द. वे । २ द. भासा । ३ द. केसीकीटत्वप्लषभस्मोषरान्वितं; ख. ग. 'सी' । ४ ख. ग. त्वप्लषभ । ५ द. भ । ६ क. अश्विन्ये क; द. अ° । ७ द. तः । ८ द. त । ९ द. विरुद्धं । १० द. विचित्र । ११ क. शुभम्; द. शुतं । १२ क. ग. तुं । १३ क. गान् ।

सपादं सत्रिभागं वा सार्धं द्विगुणमेव च[1] ।
यत् स्यान्मुखायतं वेश्म तदनिष्टफलप्रदम् ॥ १६ ॥
यद् द्विशालं त्रिशालं वा चतुःशालमथापि वा ।
मूषया[2] रहितं वेश्म तदनिष्टफलप्रदम् ॥ १७ ॥
पुरतः पृष्ठतः पार्श्वे यदि वालिन्द[3]वर्जिता ।
गृहे न शस्यते शाला देवागारे तु शस्यते ॥ १८ ॥
अन्यपृष्ठस्थितद्वारं वेश्म खादकमुच्यते ।
पर[4]स्परविरोधाय तद् वेश्म गृहिणोस्तयोः ॥ १९ ॥
सशल्यं पादहीनं च समसन्धि शिरोगुरु[5] ।
वेश्मनामिदमुद्दिष्टं मर्मदोषचतुष्टयम् ॥ २० ॥
वास्तुक्षेत्रस्य यत्राङ्गे यस्य वर्त्म प्रवर्तते ।
त[6]दङ्गं वास्तुनस्तस्य छिन्नं तेनेति निर्दिशेत् ॥ २१ ॥
छिन्नाङ्गं विकलं तत् स्याद् भीतिदं सर्वदोषकृत् ।
तद्भर्तुर्भज्यतेऽङ्गं तद् वेधस्तस्याफलोऽन्यथा ॥ २२ ॥
स्वगृहद्वयमध्येन निर्वाहो यदि वर्त्मनः ।
द्वारवेधोदितान् दोषांस्तदा प्राप्नोति निश्चितम् ॥ २३ ॥
मार्गश्चैको यदा गच्छेदुभयोर्गृहपार्श्वयोः ।
मार्गवेधस्तदा स स्याच्छोकसन्तापकारकः ॥ २४ ॥
उत्सङ्गः पूर्णबाहुश्च हीनबाहुस्तथापरः ।
प्रत्यक्षाय इति प्रोक्तं प्रवेशानां चतुष्टयम् ॥ २५ ॥
गृहस्य सम्मुखं यत्र द्वारं भवति वास्तुनः ।
उत्सँ[7]ङ्ग इति स[8] प्रोक्तः पूर्णबाहुः[9] प्र[10]दक्षिणः† ॥ २६ ॥
वामतो हीनबाहुः स्यात् प्रत्य[11]क्षो वा(क्षो य)स्तु पृष्ठतः ।
चतुर्थो[12]ऽयं समुद्दिष्टः प्रवेशो वास्तुनो बुधैः ॥ २७ ॥

---

१ द. वा । २ द. मूखो । ३ द. नि । ४ द. परविरोधायतद्भवे तद्° । ५ ख. ग. द. रुः । ६ क. य । ७ द. उष्णंग । ८ ख. सं । ९ द. °बाहुसुद° । १० ख. 'सु' । ११ द. प्रत्युक्तवात्तु°; ख. त्युक्तो वा । १२ द. °ष्टो ।

† 'पूर्णबाहुस्तु' दक्षिणे इति तु पाठो युक्तः ।

उत्सङ्गाख्ये प्रवेशो स्यात् प्रजाहानिः कुटुम्बिनः ।
धनधान्यक्षयो[1] वास्य मरणं वा ध्रुवं भवेत् ॥ २८ ॥

पूर्णबाहौ[2] पुत्रपौत्रा धनधान्यसुखानि च ।
भवन्ति वसतो[3] नित्यं गृहिणस्तत्र वास्तुनि ॥ २९ ॥

अल्पमित्रो गृही हीनबाहौ[4]वत्यल्पबान्धवः ।
स्याद् वाल्पवित्तो जीयेत स्त्रीभिः पीडयेत[5] वामयैः ॥ ३० ॥

प्रत्यक्षाय प्रवेशस्तु[6] विहितो यत्र वेश्मनि[7] ।
तस्मिन् निवसतां पुंसां निश्चितः स्याद् धनक्षयः ॥ ३१ ॥

मूषास्वस्थानयुक्तासु शालाभेद इति स्मृतः ।
प्राप्नोति तत्र निवसन् मृत्युं दुःखं सरोगताम् ॥ ३२ ॥

उदग्दक्षिणशालासु पुर्वापरगतासु च ।
अन्यथा वा स्थितं द्वारं वधबन्धनकारकम् ॥ ३३ ॥

मूषागतान् भ्रमान् कुर्यान्न शालां प्रतिभेदयेत् ।
भ्रमभग्नासु शालासु विपद्यन्ते कुटुम्बिनः ॥ ३४ ॥

शालाभेदो भवेद् यत्र पृष्ठतः पार्श्वतो[8]ऽपि वा ।
धनधान्यक्षयस्तत्र गृहिणो जायते ध्रुवम् ॥ ३५ ॥

यत्र प्रत्यङ्मुखे शाले गृहं तत् स्याद् विकोकिलम् ।
आयुश्चतुष्पदं धान्यं वसतां तत्र नश्यति ॥ ३६ ॥

सीमाशालाप्रभिन्नस्य प्रासादस्य[9] गृहस्य च ।
[10]अस्थिरा जायते ऋद्धिः स्थितिश्च न भवेच्चिरम् ॥ ३७ ॥

सर्वदोषकरि ज्ञेया गर्भे चन्द्रावलोकिता[11] ।
मूषां विना विनाशाय कामोच्छित्त्यै गवाक्षकः ॥ ३८ ॥

यदा गण्डोऽथवा कुक्षिः पृष्ठं कक्षाथ भिद्यते ।
दायग्रं जायते भर्तुस्तदानीमदुरसहम् ॥ ३९ ॥

---

१ द. ज । २ द. °हा । ३ भवतो नि° । ४ द. ह । ५ द. पीड्यते वासयैः । ६ द. °सा° । ७ द. नः । ८ ग. थ । ९ द. प्रासादे रूपगृ° । १० द. स्थिरात् । ११ ख. ग. कर्ता; द. कना ।

गर्भादुभयतो गण्डौ कक्षे स्तः[1] कर्णभित्तिगे ।
दक्षिणोत्तरयोः कुक्षी[2] पृष्ठतः पृष्ठमादिशेत् ॥ ४० ॥

स्थापितद्वारसंरोधे गृहिणो जायतेऽश्मरी[3] ।
द्वारे तु विहिते तस्मि[4]न्ननर्थस्तस्य जायते ॥ ४१ ॥

पूर्वद्वारनिरोधं तु[5] नवमार्गं कदाचन[6] (?) ।
श्रोत्र[7]रोधेऽश्मरीदोषः कृत्तश्रोत्रेह्यनंभ्यता[8] (?) ॥ ४२ ॥

कृत्तानि[9] यत्र [10]चीयन्ते गवाक्षालोकनानि च[11] ।
तत्र प्रसूतिर्न भवेन्निष्पन्नापि विनश्यति ॥ ४३ ॥

चीयमाना यदा भित्तिर्दक्षिणा स्याद् बहिर्मुखी[12] ।
तदा व्याधिभयं विद्यान्नृपदण्डभयं तथा ॥ ४४ ॥

यदा तु पश्चिमं कुड्यं प्रयाति बहिरग्रतः ।
धनहानिं विजानीयाच्चौरेभ्यश्च भयं तदा ॥ ४५ ॥

उत्तरं तु यदा कुड्यं चीयमानं बहिर्व्रजेत् ।
गृहभर्तुश्च कर्तुश्च [13]व्यसनं स्यात् तदा महत् ॥ ४६ ॥

यदाग्रं चीयमानायाः पूर्वभित्तेर्बहिर्व्रजेत् ।
तदा गृहपतेस्तीव्रं[14] राजदण्ड[15]भयं भवेत् ॥ ४७ ॥

प्राग्दक्षिणो यदा [16]कर्णश्चीयमानो बहिर्व्रजेत् ।
तत्राग्निभीतिरतुला संशयश्च प्रभोर्भवेत् ॥ ४८ ॥

बहिर्मुखो [17]यदा गच्छेत् कर्णो दक्षिणपश्चिमः ।
कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ॥ ४९ ॥

[18]यत्रोत्तरापरः कर्णश्चीयमानो व्रजेद् बहिः ।
पुत्रवाहनभृत्यानां भवेत् तस्मिन्नुपद्रवः ॥ ५० ॥

---

१ द. स्तिकर्त्त । २ क. क्षौ । ३ द. तेस्मरी । ४ ग. न्य; द. त्य । ५ द. द्वं तु त° । ६ द. नः । ७ द. स्तोत्ररोधस्मरी दोष कृतश्रोत्रे ह्यलंषता । ८ ख. नंषता । ९ ख. ता; द. कृतानि यत्र वी(दी)र्यन्ते गवाक्षं । १० क. यी, ख. वी । ११ द. तु । १२ क. खा । १३ द. व्या । १४ द. त्र. । १५ द. ण्डं । १६ द. कर्ण स्त्री° । १७ द. र्यत्र । १८ द. यत्रोदव्यश्रमः क° ।

यदा प्रागुत्तरः कर्णो बहिर्गच्छति वेश्मनः ।
तदा[1] गवां वृषाणां च गुरूणां च क्षयो भवेत् ॥ ५१ ॥

चतस्रो भित्तयो यस्य बहिर्निर्यान्ति वेश्मनः ।
चीयमानां[2]स्तदत्रोक्तं मन्दिरं मल्लिकाकृति[3] ॥ ५२ ॥

ता[4]दृग् गृहे न तत्रायो व्ययो भवति या[5]दृशः ।
कर्शितोऽस्यैव दोषेण तस्य भर्ता पलायते ॥ ५३ ॥

संक्षिप्यते तु यद् वेश्म चीयमानं समन्ततः ।
संक्षिप्तमिति तज्ज्ञेयं तत्र राजभयं भवेत् ॥ ५४ ॥

यत् स्यादन्तेषु संक्षिप्तं विस्तृतं चापि मध्यतः ।
मृदङ्गाकृतिसंस्थानं तत्र व्याधिभयं भवेत् ॥ ५५ ॥

आद्यन्तविस्तृतं[6] यत् स्यात् संक्षिप्तं चापि मध्यतः ।
मृदु[7]मध्यं तदुद्दिष्टं क्षुद्भयं तत्र जायते ॥ ५६ ॥

विषमैरुन्नतैः कर्णैर्धनक्षयकरं गृहम् ।
भित्तिवच्चापि कर्णेषु प्रागुक्तं फलमादिशेत् ॥ ५७ ॥

मध्ये द्वारं न कर्तव्यं मनुजानां कथञ्चन ।
मध्ये द्वारे कृते त[8]त्र कुलनाशः प्रजायते ॥ ५८ ॥

द्वारं द्वारेण वा विद्धमशुभायोपपद्यते ।
अनिष्टद्रव्यसंयुक्तं धनधान्यविनाशनम् ॥ ५९ ॥

नवं पुराणसंयुक्तमन्यं स्वामिनमिच्छति ।
अधोग्रं राजदण्डाय वि[9]द्धं द्वारं विगर्हितम् ॥ ६० ॥

नवं पुराणसंयुक्तं द्रव्यं तु कलिकारकम् ।
न मि[10]श्रंजातिद्रव्योत्थं द्वारं वा वेश्म वा शुभम् ॥ ६१ ॥

गृहस्थानेषु यद् द्रव्यमधिवास्य प्रतिष्ठितम् ।
तच्चालनेन चलनं गृहभर्तुः प्रजायते ॥ ६२ ॥

---

१ द य । २ द. न । ३ द. °तिः । ४ द. °ग्गर्वे न तत्रायो जाया भवति तादृशः । ५ ख. ता । ६ द. त्रिस्तरं । ७ द. त । ८ द. य । ९ क. द्ध; ख. ग. धं । १० द. त ।

अन्यवास्तुच्युतं द्रव्यमन्यवास्तौ[1] न योजयेत् ।
प्रासादे न भवेत् पूजा गृहे च न वसेद् गृही ॥ ६३ ॥
द्रव्येण देवदग्धेन भवनं यद् विधीयते[2] ।
न तत्र वसति स्वामी वसन्नपि विनश्यति ॥ ६४ ॥
सूर्योद्भवा[3] द्रुमच्छाया ध्वजच्छाया च गर्हिता ।
द्वारातिक्रमणादेताः क्षुद्व्याधिकलिकारकाः ॥ ६५ ॥
प्रासादशिखरच्छाया[4] ध्वजच्छायेति कीर्तिता ।
त्रिपञ्चसप्तमी भर्तुर्गृहतारा न शोभना ॥ ६६ ॥
निम्नोन्नतं करालं च सम्मुखं पृष्ठदेशगम् ।
वामावर्तं च न शुभं द्वारमग्रतरं गृहे ॥ ६७ ॥
निम्ने स्यात् स्त्रीजितो भर्ता दुर्जनस्थितिरुन्नते ।
सम्मुखे[5] सुतपीडा स्यात् पृष्ठगे[6] चपलाः स्त्रियः ६८ ॥
वामे वित्तक्षयो द्वारि(रे)भवत्यग्रतरे प्रभोः ।
द्वारं तस्मान्न कर्तव्यमीदृग्रूपं[7] विचक्षणैः ॥ ६९ ॥
नागदन्ततुलास्तम्भभित्तिमूषागवाक्षकाः ।
द्वारमध्ये न दातव्या[8] न चैते विषमस्थिताः ॥ ७० ॥
इतिहासपुराणोक्तं वृत्तान्तप्रतिरूपकम्[9] ।
निन्दितं च गृहे नेष्टं शस्तं देवकुलेषु[10] तत् ॥ ७१ ॥
यानीन्द्रजालतुल्यानि यानि मिथ्याकृतानि च ।
भीषणानी च यानि स्युर्न कुर्यात् तानि वेश्मसु ॥ ७२ ॥
स्वयमुद्घाटितं द्वारमुच्चाटनकरं[11] भवेत् ।
धनहृद् बन्धुवैरं[12] स्यादथवा कलिकारकम् ॥ ७३ ॥
स्वयं यत् पिहितं[13] द्वारं तद् भवेद् बहुदुःखदम् ।
सशब्दं भयकृत् पादशीतलं[14] गर्भपातनम्[15] ॥ ७४ ॥

---

१ क. ख. स्तुनि यो; द. वास्तु नियो° । २ द. ती । ३ द. °वो । ४ द. °यां । ५ द. न्मु° । ६ द. पृष्ठं त्वे च° । ७ द. °परि रक्षणैः ॥ ८ द. °व्यं । ९ द. काः । १० द. च । ११ द. द्धा° । १२ द. वद्ध° । १३ द. पिहति । १४ द. पात° । १५ द. स्य ।

द्रव्यं नाधोमुखं कार्यं प्रत्यग्याम्याननं न च ।
पश्चिमाग्रे परिक्लेशो दक्षिणाग्रे तु शून्यता ॥ ७५ ॥
स्तम्भद्वारं च भित्तिं च विपरीतं[1] न कारयेत् ।
अमीषां वैपरीत्येन दोषाः स्युर्बहवो नृणाम् ॥ ७६ ॥
मूलसूत्रानुसारेण कर्तव्या भूमिकोपरि ।
उपर्युपरि यद् वेश्म[2]समं संतापकारकम् ॥ ७७ ॥
अधोभूमौ क्षणा ये स्युस्तत्समांश्चो[3]र्ध्वभूमिषु ।
परित्यजन्नपहितां[4](?) न कुर्वीत यथोत्तरम् ॥ ७८ ॥
शाला निम्ना भवेद् यस्मिन्नलिन्दस्त्व[5]धिको भवेत् ।
निधनं जायते तत्र सदा शोकभयानि च ॥ ७९ ॥
मूलद्वारानुसारेण द्वाराण्युपरिभूमिषु ।
कुर्याद् भयप्रदानि[6] स्युर्विहितान्यन्यथा पुनः ॥ ८० ॥
क्षुद्भयप्रदमाध्मानं[7](तं) कुब्जं कुलविना[8]शनम् ।
अत्यर्थं पीडितं पीडां करोत्यन्त[9]नतं क्षयम् ॥ ८१ ॥
प्रवासो बाह्यविनते दिग्भ्रान्ते दस्युतो भयम् ।
मूलद्वारं क्षयं कुर्याद् विद्धं द्वारान्तरेण यत् ॥ ८२ ॥
प्रवासो भृत्य[10]जो द्वेषो विद्धे चत्वररथ्यया ।
ना[11]शं द्रव्यं ध्वजाविद्धं वृक्षेण शिशुदूषकम् ॥ ८३ ॥
पङ्कविद्धे भवेच्छोकः सलिलस्राविणि व्ययः ।
कूपेन विद्धेऽपस्मारो विनाशो दैवतेन च ॥ ८४ ॥
स्तम्भेन दूषणं स्त्रीणां ब्रह्मणा तु कुलक्षयः ।
मानादभ्यधिके द्वारे राजतो जायते भयम् ॥ ८५ ॥
व्यसनं मानतो हीने चौरेभ्यश्च भयं भवेत् ।
व्याधयः श्व[12]भ्रविद्धेन धनस्य च परिक्षयः ॥ ८६ ॥

---

१ क. तां। २ ख. ग. समस्तं ता; द. °समस्तं ताप° (°समस्संताप°)। ३ ग. द. तू। ४ ख. ग. द. ताः। ५ द. °न्दस्तु (अ)थ को°। ६ क. न। ७ द. न। ८ द. निवासनं। ९ क. ग. न्तं। १० ख. ग. द. भृत्यजा दोषा त्रि°। ११ ख. ग. श; द. स। १२ द. श्रु।

देवध्वजेन बन्धः स्यात् सभयैश्वर्यसंक्षयः ।
सन्निपातभयं वाप्या तुल्या [1]दृष्टत्वमाकृते(?) ॥ ८७ ॥
हृद्रुक् कुलालचक्रेण दारि[2]द्र्यं वारिणा भवेत् ।
व्याधिरु[3]क् †कचकूटेन आपाकेन(?) सुतक्षयः ॥ ८८ ॥
नि[4]श्र्व(स्व)तोदूखलेन स्याच्छिल[5]या चाश्मरी भवेत् ।
तोयभाण्डेन दुर्मन्त्री भस्मना चार्शसो गृही ॥ ८९ ॥
दारिद्र्यं छायया विद्धे भवेद् द्वारे कुटुम्बिनः ।
स्थलस्[6]यन्दनवल्मीकैर्विदेशगमनं भवेत् ॥ ९० ॥
कृशं विकृतमत्युचं करालं शिथिलं पृथु ।
[7]वक्रं विशालमुत्तानं शू(स्थू)लाग्रं ह्र[8]स्वकुक्षिकम् ॥ ९१ ॥
स्वपादचलितं ह्रस्वं हीनकर्णं मुखानतम् ।
पार्श्वगं सूत्रमार्गाच्च भ्रष्टं द्वारं न शोभनम् ॥ ९२ ॥
तत् करोति क्षयं घोरं विनाशं स्वामिसम्पदः ।
वसतां कलहं नित्यमतस्तत् परिवर्जयेत् ॥ ९३ ॥
अन्तर्द्वाराद् बहिर्द्वारं नोच्चं कुर्यान्न सङ्कटम् ।
उच्चं विसङ्कटं वापि तच्छिवाय न जायते ॥ ९४ ॥
पट्टसन्धि[9]र्यदा मध्ये द्वारस्य स्यात् कथञ्चन ।
कर्तुस्तदा विनाशः स्यात् कुलस्य च परिक्षयः ॥ ९५ ॥
तुला उपतुला वा स्युर्द्वारि तिर्यग् यदा कृ[10]ताः ।
दारिद्र्यव्याधिसन्तापा भवन्ति स्वामिनस्तदा ॥ ९६ ॥
अनुवंशमनुप्राप्ता [11]जयन्त्यो यदि मन्दिरे ।
वित्तायुषोस्तदाल्पत्वमनारोग्यं च जायते ॥ ९७ ॥
उदुम्बरे(वि)निहि[12]ता(नि?)[13]ललाटी नाम सा तुला ।
दूषणं मरणं वापि कन्यानां विदधाति सा ॥ ९८ ॥

---

१ ख. द. द्र; ग. द्रष्ट्त्व; द्र । २ द. द्रं । ३ क. क्तरच । ४ क. श्वि । ५ द. °ला । ६ द. स्प° । ७ द. वक्त्रं सिलामुत्तानं च शूलाग्रं लम्बकु° । ८ ख. लम्बकु । ९ द. न्धै° । १० द. हृ° । ११ द. जा । १२ द. छ । १३ ख. भल्ला ।

† कन्दकूटकमिति उपरि वक्ष्यते ।

उत्तराङ्गोदरे न्यस्ता ललाटेन समा यदि ।
तुला ललाटिका सापि कुलक्षयकरी भवेत् ॥ ९९ ॥
तुलापिण्डेन विन्यस्ता ज्ञेया यज्ञोपवीतिनी ।
वसतो[1] व्यसनं कुर्यात् कुटुम्बस्यासुखं च सा ॥ १०० ॥
यदि भारतुलैकापि मध्ये विद्धा कथञ्चन ।
तदा वराङ्गं भज्येत धनं च परिहीयते ॥ १०१ ॥
भित्तिभेदो न कर्तव्यस्तुलाग्रैरखिलैरपि ।
कुर्याद् ब्रह्मपदन्यस्तो भारपट्टः कुलक्षयम् ॥ १०२ ॥
अयुक्तयोर्युक्तयोर्वा[2] सन्धिश्चेद् भारपट्टगे[3] ।
सन्धौ स्यात्[4] तत् सुतो ज्येष्ठः कर्तु[5]श्चापि विनश्यति ॥ १०३ ॥
अनुवंशं न भुञ्जीत न शयीत कदाचन ।
भुञ्जानस्यार्थनाशः स्याच्छयानस्य महारुजः[6] ॥ १०४ ॥
नाशोऽनुवंशं रोगाः स्युस्तिर्यक्स्थे रक्षसो भयम् ।
शयनागारविन्यस्ते मरणं नागदन्तके[7] ॥ १०५ ॥
कर्[8]णावात्(?)पक्षिराड्घण्टाध्वजच्छत्रकुमारकान् ।
सिंहकर्णकपोतालिं गृहेषु परिवर्जयेत् ॥ १०६ ॥
इन्द्रकीलं शुकं तुम्बीम[9]र्धवंशं च वेश्मनि ।
न कुर्यात्[10] तत्र विहिताः सर्वदोषावहा यतः ॥ १०७ ॥
अतिक्षिप्रचिरोत्पन्नं कृशद्रव्यम[11]पाहितम् ।
अप्रतिष्ठितसंस्था[12]नं गृहं नमति पञ्चधा ॥ १०८ ॥
अतिस्थूलेन ह्रस्वेन शरीरेण यथा नरः ।
विरूपो दुर्बलश्चैव तथा द्रव्येण मन्दिरम् ॥ १०९ ॥
जीर्णं घु[13]णकृ(क्ष)तं मिश्रं हीनं वक्रं विधिच्युतम् ।
चण्डं तुण्डं वक्रकोणं सन्धिविद्धाल्पमूलके ॥ ११० ॥

---

१ द. थ । २ द. °र्वापसंधिश्चेततारप° । ३ क. ग॰ः । ४ द. स्यां । ५ द. कर्त्रायान्वा ।
६ द. °भुजः । ७ द. दन्तिके । ८ ख. र्त्ता । ९ ख. ग. मूर्द्ध; द. मूर्द्ध° । १० द. °ऩेत्र° ।
११ ख. ग. पाहृ; द. °हृत । १२ द. स्कारं । १३ क. गु ।

वज्रमध्यं स्थूलमूलं कुक्षिभिन्नं च दारु यत् ।
भिन्नमूलं कूर्मपृष्ठं पक्षहीनं च वर्जयेत् ॥ १११ ॥
पातितान् वर्जयेद् वृक्षान् द्विपाश्वा[1]ग्निजलानिलैः ।
प्रभूतपक्षिनिलयान् काककौशिकसेवितान् ॥ ११२ ॥
मधुग्रहपिशाचाहिदु[2]ष्टांश्चैत्यश्मशानजान् ।
चतुष्पथत्रिकमहा[3]नदीसङ्गममार्गजान् ॥ ११३ ॥
देवतायतनेजातानूर्ध्वशुष्कान्[4] क्षतच्छदान् ।
वल्लीपिनद्धान् सुषिरकोटरग्रन्थिसङ्कुलान् ॥ ११४ ॥
याम्यापराशापतितांस्त्यजेत् कण्टकिनोऽपि च ।
कपित्थोदुम्बरा[5]श्वत्थशिरीषवटचम्पकान् ॥ ११५ ॥
कोविदारधवारिष्टश्लेष्मातकविभीतकान् ।
किञ्च सप्तच्छदक्षीरिफलदांश्च द्रुमांस्त्यजेत् ॥ ११६ ॥
मर्माणि यत्र पीड्यन्ते द्वारैर्भित्तिभिरेव वा ।
दारिद्र्यं कुलहानिं वा गृहिणस्तत्र निर्दिशेत् ॥ ११७ ॥
स्तम्भैर्विनश्यति स्वामी तुलाभिः[6] स्त्रीवधो ध्रुवम् ।
सङ्ग्रहैर्बन्धुनाशः स्याज्जयन्तीभिः स्नुषावधः[7] ॥ ११८ ॥
[8]मर्मस्थानस्थितैः कार्यैर्भर्तुः कायो निपीड्यते ।
मर्मस्थैः सन्धिपालै[9]स्तु सुहृद्विश्लेषमादिशेत् ॥ ११९ ॥
गृहपीडा नागदन्तैर्नागपाशैर्धनक्षयः ।
कापिच्छ[10]कैस्तु प्रेष्याणां क्षयं मर्मस्थितैर्वदेत् ॥ १२० ॥
षड्दारुकान्यनुसरागवाक्षालोकनानि च ।
[11]मर्मस्थाननिविष्टानि जनयन्ति महाभयम् ॥ १२१ ॥
स्तम्भैर्वा द्वारमध्यैर्वा तुलाभिर्नागपाशकैः ।
वातायनैर्नागदन्तैर्द्वारमध्ये निपीडिते ॥ १२२ ॥

---

१ द. श्व । २ द. जुष्टान् चै° । ३ द. न्न । ४ ख. गः म्छशाद्भृतान्; द. °न् मक्षच्छदावृतान् । ५ द. °रो । ६ द. नि । ७ द. धाः । ८ द. सम° । ९ द. लै । १० द. त्थ । ११ द. कर्मस्थानानि° ।

व्याधयः संप्रवर्धन्ते धन[1]नाशः कुलक्षयः ।
राजदण्डभयं च[2] स्यादपत्यानां च पीडनम् ॥ १२३ ॥
षड्दारुकाणां मध्येषु[3] द्वारमध्येषु वा पुनः ।
कर्णद्रव्यादिभि[4]र्विद्धेष्वेतदेवादिशेत् फलम् ॥ १२४ ॥
संविद्धा नागदन्तैर्या स्तम्भैर्वातायनैस्तथा ।
शय्या शस्त्राद् भयं भर्तुः कुर्यात्[5] तस्करतोऽपि वा ॥ १२५ ॥
गृहमध्ये कृतं[6] द्वारं द्रव्यकोशविनाशनम् ।
आ[7]वहेत् कलहं भर्तुर्भार्यां वास्य प्रदूषयेत् ॥ १२६ ॥
द्रव्येणै[8]कोत्तरेणापि महामर्मणि पीडिते ।
सर्वस्वनाशो गृहिणो मरणं वा ध्रुवं भवेत् ॥ १२७ ॥
द्वारस्तम्भतुलालिन्दे श्चं[9](च)यदोषैः सं[10]मीरितैः ।
विसूत्रे नागदन्तेऽपि तच्छून्यं जायते गृहम् ॥ १२८ ॥
विभागपदं[11]हीनेषु रूपस्थानेषु वास्तुषु[12] ।
यक्ष्म[13]मातृक्रियाद्येषु रोगान्मृत्युर्न संशयः १२९ ॥
कटुकण्टकिदुर्गन्धिगुह्यकाद्याश्रयान् द्रुमान् ।
न धा[14]रयेत् समीपस्थान् पुरप्रासादवेश्मनाम् ॥ १३० ॥
बदरी कदली चैव दाडिमी बीजपूरिका ।
प्ररोहन्ति[15] गृहे यत्र तद् गृहं न प्ररोहति ॥ १३१ ॥
द्रव्यं द्रव्याधिकं हन्ति कुलमायामतोऽधिकम् ।
उच्छ्रयाभ्यधिकं पूजां सन्ततिं विस्तराधिकम् ॥ १३२ ॥
स्तम्भाङ्गैर्भित्तिभिः पट्टैः शीर्षकैर्भवनैस्तथा ।
आलोकनातोरणाद्यैश्छाद्यकैः कन्दकूटकैः ॥ १३३ ॥
द्वारशाखोत्तमाङ्गैश्च तुलाभिः सन्धिपालकैः ।
अर्गलाग्रैर्वेदिकाभिर्व्यालैर्जालैश्च नूतनैः ॥ १३४ ॥

---

१ द. धनत्रासकक°। २ द. चः। ३ द. तु। ४ क. ख. द्वं; द. 'भिर्वृद्धष्वेवदे°। ५ द. स्त। ६ द. त। ७ द. वा°। ८ क. न्दै। ९ ख. ग. द. स्व। १० क. ख. ग. द. कि। ११ द. शद। १२ क. नः। १३ क. क्ष। १४ द. नवधारयस°। १५ द. ति।

घातितैः पातितैर्नष्टैर्जायते गृहिणो ध्रुवम् ।
व्याधिदारिद्र्यदुःखार्ति[1]र्निर्धनत्वं च जायते ॥ १३५ ॥

उच्चच्छायं छिद्रगर्भं भ्रमितं व[2]मितं मुखे ।
हीनमध्यं नष्टसूत्रं[3] शल्य[4]वि[5]द्धं शिरोगुरु ॥ १३६ ॥

भ्रष्टालिन्दकशोभं च विषमस्थं तुला[6]तलम् ।
अन्योन्यद्रव्यविद्धं च कुंपदप्रविभाजितम् ॥ १३७ ॥

हीनभित्त्युत्तमाङ्गं च विनष्टं स्तम्भभित्तिकम् ।
भिन्नशालं त्यक्तकण्ठं निष्कन्दं मानवर्जितम् ॥ १३८ ॥

विकृतं च गृहं भर्तुरनिष्टफलदायकम् ।
तस्माद् दोषानिमांस्त्यक्त्वा गृहं कुर्याच्छुभावहम् ॥ १३९ ॥

एवंविधं दोषकरं गृहं स्याद् भर्तुश्च कर्तुश्च यतस्तदेते ।
ज्ञेयाः सदा शिल्पिभिरप्रमत्तैस्त्याज्याश्च दोषाः शुभकीर्ति[10]कामैः
॥ १४० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

गृहदोषनिरू[11]पणं नामाष्टचत्वारिंशोऽध्यायः ॥

---

## अथ रुचकादिप्रासादलक्षणं नामैकोनपञ्चाशोऽध्यायः ।

त्रिदशानां नृपाणां च वर्णि[12]नां च विशेषतः ।
उत्पत्तिप्रसृतिं ब्रूमः प्रासादा यस्य ये मताः ॥ १ ॥

पुरा ब्रह्मासृजत् पञ्च विमानान्यसुरद्विषाम् ।
वियद्वर्त्मविचारीणि श्री[13]मन्ति च महान्ति च ॥ २ ॥

तानि वैराजकैलासे पुष्पकं मणिकाभिधम् ।
हैमानि मणिचित्राणि पञ्चमं च त्रिविष्टपम् ॥ ३ ॥

---

१ द. °र्त्ति तु व्यंचत्वं । २ ख. ग. द. नि । ३ क. त्रं स्वश । ४ द. ल्यं । ५ क. सि । ६ क. तु । ७ ख. ग. चतुष्पहप्रतिभा; द. जतुः पद प्रतिभा° । ८ द. स्तु । ९ द. य । १० द. प्रकीर्त्तितामैः । ११ द. अपलक्षणो नामाष्टचत्वारिंशोध्यायः ॥छ॥ १२ द. र्त्ति । १३ द. सी ।

आत्मनः शूल[1]हस्तस्य धनाध्यक्षस्य पाशिनः[2] ।
सुरेशिने च विश्वेशो विमा[3]नानि यथाक्रमम् ॥ ४ ॥
बहून्यन्यानि चैवं स सूर्यादीनामकल्पय[4]त् ।
विशेषा[5]य यथोक्तैस्तान्याकारैः प्रतिदैवतम् ॥ ५ ॥
प्रासादांश्च तदाकारान् शिलापक्के[6]ष्टकादिभिः ।
नगराणामलङ्कारहेतवे समकल्पयत्[7] ॥ ६ ॥
वैराजं चतुरश्रं स्याद् वृत्तं कैलाससंज्ञितम् ।
चतुरश्रायताकारं [8]विमानं पुष्पकं भवेत् ॥ ७ ॥
वृत्तायतं च मणिकमष्टाश्रि[9] स्यात् त्रिविष्टपम् ।
तद्भेदान् श्रीमतोऽन्यांश्च[10] विविधान[11]सृजत् प्रभुः ॥ ८ ॥
ये यत्र[12] विहिता[13] भेदाः पूर्वं कमलयोनिना ।
[14]सर्वांस्तानभिधास्यामो नामसंस्थानमानतः ॥ ९ ॥
रुचकश्चित्रकूटश्च तृतीयः सिंहपञ्जरः ।
भद्रः श्रीकूट उष्णीषः शाला[15]क्षो § गजयूथपः ॥ १० ॥
नन्द्यावर्तोऽवतंसाह्वः स्वस्तिकः क्षिति[16]भूषणः ।
भूजयो विज[17]यो † नन्दी श्री[18]तरुः प्रमदाप्रियः ॥ ११ ॥
व्यामिश्रो हस्तिजातीयः कुबेरो वसुधाधरः ।
सर्वभद्रो विमा[19]नाख्यो मुक्तकोणश्च नामतः ॥ १२ ॥
चतुर्विंशतिरुद्दिष्टा चतुरश्राः समासतः ।
वृत्तांस्तथाभिधास्यामः प्रासादानपरानपि[20] ॥ १३ ॥
वलयो दुन्दुभिः प्रान्तः पद्म[21]ः कान्तश्चतुर्मुखः ।
[22]माण्डूकाख्योऽथ [23]कूर्मश्च तालीगृह उलूपिकः ॥ १४ ॥

---

१ द. मू । २ द. मा । ३ द. मानसानि । ४ द. ये । ५ क. षाकेर्येय, ख. ग. षायग्रथो । ६ ख. ग. ष्ट दारुभिः, द. पक्षेषु दारुभिः । ७ द. येत् । ८ द. रा । ९ द. स्ति । १० द. न्यां तु । ११ द. °धासौस्र । १२ द. त्व; । १३ द. त्वा । १४ द. सर्वन्ता° । १५ क. क्षोऽथ ग. । १६ द. वि । १७ क. ख. ग. या । १८ ग. मत्तः प्र । १९ क. ख. ग. नाङ्को; द. नांको । २० द. पति । २१ द. द्म । २२ क. मान्डूका; ख. ग. द. मदूका; । २३ द. क ।

§ शालाख्य इति लक्षणे पाठः । † लक्षणे तु नन्द इति पठ्यते ।

इति वृत्ताः समासेन प्रासादा दश कीर्तिताः ।
चतुरश्रायता ये स्युः कथ्यन्ते तेऽपि[1] नामतः ॥ १५ ॥

भवो विशालः साम्मुख्यः प्रभवः शिबिरागृहः ।
मुखशालो द्विशालश्च गृहराजोऽमलो विभुः ॥ १६ ॥

एवमेते समुद्दिष्टाश्चतुरश्रायता दश ।
अथ वृत्तायतान् ब्रूमः प्रासादानभिधानतः ॥ १७ ॥

आमोदो रै[2]तिकस्तुङ्गश्चारुर्भूतिर्निषेवकः ।
सदा(?)निषेधः सिंहाख्यः सुप्रभो लोचनोत्सवः ॥ १८ ॥

एते वृत्तायताः प्रोक्ताः प्रासादा नामतो दश ।
[3]अष्टाश्रीणां [4]च नामानि कथयामि समासतः ॥ १९ ॥

वज्रको नन्दनः शङ्कुर्मेखलो वामनो लयः ।
महापद्मश्च हंसश्च व्योमचन्द्रोदयाविति ॥ २० ॥

अष्टाश्रय इमे प्रोक्ताः प्रासादा दश संख्यया ।
भवन्त्येवं चतुष्षष्टिर्लक्ष्मैषामधुनोच्यते ॥ २१ ॥

संस्थानमानविन्यासैर्भद्रस्तम्भादिसङ्ख्य[5]यो ।
एषां विशेषा वक्ष्यन्ते पृथक् पृथगनुक्रमात् ॥ २२ ॥

ज्येष्ठो भागश्चतुर्हस्तः सार्धहस्तत्रयोऽपरः ।
कल्पनीयः कनी[6]यांस्तु हस्तत्रितयसम्मितः ॥ २३ ॥

ज्येष्ठमध्यकनीयोभिरेवं भा[7]गैर्विभाजिताः ।
भवन्ति सर्वप्रासाद[8] ज्येष्ठमध्याधमक्रमात् ॥ २४ ॥

चतुरश्रीकृते क्षेत्रे चतुर्भागविभाजिते ।
कुर्यात् स्वारोहकाश्वासं पीठमंशसमुद्धृतम् ॥ २५ ॥

तथा तस्योपरि स्थाप्या हंसपृष्ठी[9] समन्ततः ।
हस्तमात्रोच्छ्रिता वृत्ता जलनिर्गमभूषिता ॥ २६ ॥

---

१ द. भि । २ ख. ग. री; द. रीतिकस्तुंगश्चावभूति° । ३ द. त्र्यष्टाश्रीणां तु ना° । ४ क. तु । ५ द. योः । ६ द. या । ७ द. द । ८ द. मा । ९ क. ष्ठा ।

ततः पीठस्य तस्यान्[1]तर्द्विभागाय( या )मविस्तृ[2]तिः ।
प्रासादो रुचकः कार्यो भागत्रि[3]तयमुच्छ्रितः ॥ २७ ॥
सार्धभागेन संछा[4] स्यात् सार्धभागस्तु योऽ[5]परः(?) ।
छा[3]य( द्य )त्रयं सकण्ठं स्यात् तेन सामलसारकम् ॥ २८ ॥
द्वारं भागोच्छ्रितं[6] तस्य कार्यं भागार्धविस्तृतम् ।
सप्राग्रीवः स क[7]र्तव्यश्चतुर्दशधरावृतः ॥ २९ ॥
ससौधालिन्दकश्चारुरू[8]र्ध्वच्छा[9]द्योपकर्षवान् ।
क्रियतेऽ[10]त्र यदा स्तम्भा[11]( म्भैः )द्वाविंशत्या समावृतः ॥ ३० ॥
[12]सप्राग्रीवपरिष्कारो भागिकालिन्दशोभितः ।
मध्यप्रदेशे [13]रुचकः प्रासादः परिकीर्तितः ॥ ३१ ॥

रुचकः ।

[14]कर्णप्राग्रीवकै[15]श्चित्रैः सप्राग्रीवश्च यो वृतः ।
द्वाभ्यां द्वाभ्यां गवाक्षाभ्यां चतुर्दिशमलङ्कृतः ॥ ३२ ॥
कपोतालीपरिक्षि[16]प्तः शोभितो द्वारसम्पदा[17] ।
तदानीं चित्रकुटाख्यः प्रासादः सोऽभिधीयते ॥ ३३ ॥

चित्रकूटः ।

अयमेव पुनः षड्भिः स्तम्भैर[18]पि चितो यदा ।
प्राग्रीवकविही[19]नश्च स भवेज्जालरूपकः ॥ ३४ ॥
सिंहपञ्जर इत्युक्तः प्रासादः स तदा शुभः ।

सिंहपञ्जरः ।

कर्णप्राग्रीवकौ द्वौद्वावस्यैव भवतो यदा ॥ ३५ ॥
अलिन्दकगतिस्थित्या तदा भद्रः प्रकीर्तितः ।

भद्रः ।

स्याच्चित्रकूट प्राग्रीवैश्चतुर्भिर्दिक्[20]चतुष्टये ॥ ३६ ॥

---

१ द. तस्यां तद्विभागायमविस्ततिः । २ ख. ग. स्त । ३ ख. वृत्तसमु । ४ ख. स्तम्भा स्यात्; द. घा । ५ क. षु । ६ द. घतयं । ७ द. सं । ८ ख. ग. र्ध्वं । ९ ख. ग. द. द्या । १० ख. ग. न । ११ म्भं क. । १२ द. सा । १३ द. शुचकप्रासादो पूर्वकीर्तितः । १४ क. कै; द. कर्त्त । १५ द. क । १६ द. प्ता । १७ द. दः । १८ ख. ग. प । १९ द. वहीनस्य । २० द. क्षु ।

बहिरन्तश्चतुर्द्वारः श्री[1]कूट इति नामतः ।

श्रीकूटः ।

षड्दारुकसमायुक्त[2]प्राग्द्वारस्त्वयमेवं[3] चेत् ॥ ३७ ॥

प्रासादस्तम्भगर्भ[4]ः स्यात् तदोष्णीषोऽभिधीयते ।

उष्णीषः ।

चतुरंशकविस्तीर्णं षडंशविहि[5]तायति ॥ ३८ ॥

[6]पीठं शालागृहस्योक्तं सशालानिर्गमं शुभम् ।

मध्यादपरतस्तस्य द्विभागायतविस्तृतम् ॥ ३९ ॥

विधेयं गर्भभवनमलिन्दकपरिष्कृतम् ।

का[7]र्या तस्याग्रतः सीमा भागद्वितयमायता ॥ ४० ॥

भागमेकं च विस्तीर्णा चतुःस्तम्भोपशोभिता ।

तदग्रतोऽपरा सीमा कार्या भागान् षडायता ॥ ४१ ॥

तिर्यक्स्था भा[9]गविस्तीर्णा प्रवेशद्वयशोभि[10]ता ।

[11]एषं शालागृहः(?) स्तम्भैर्द्वाविंशत्या समावृ[12]तः ॥ ४२ ॥

प्राग्रीववेदिकाजालपक्षसोपानकैः शुभैः ।

शालाख्यः ।

पञ्चभागोन्मि[13]तव्यासे क्षेत्रभागाष्टकायते ॥ ४३ ॥

पीठं कुर्यादु[14]भयतः ससोपानं शिलाचितम् ।

मध्यादपरभागेऽस्य देवागारं निवेशयेत् ॥ ४४ ॥

वि(द्वि)भागायामविस्तारं चतुरश्रं सुसंहि[15]तम् ।

पादोनभागविस्तारमध्यर्धं भागमुच्छ्रितम् ॥ ४५ ॥

तस्य[16] कार्यं मु[17]खं मध्ये पार्श्वतश्चयशोभितम् ।

सचया निर्गता सीमा द्वौ भागौ त्रींस्तथायथा(ता) ॥ ४६ ॥

---

१ द. स्त्री । २ क. ख. ग. क्तं । ३ क. व. च; द. °मेव त् । ४ ख. ग. र्भस्य; द. गर्भस्य तदष्णीषोऽभि° । ५ द. ह । ६ द.पीठशाल । ७ क. ख. ग. यस्त; द. कार्यस्तस्यायवः शीवा भाग° । ८ द. पजायता । ९ द. ना । .१० ख. ग. द. ताः । ११ क. ख. ग. द. षा । १२ ख. ग. ता; द. सममावृतः । १३ द. °गो निमित्तव्या° । १४ द. कुर्याद्भ्रयतकार्यो । १५ ख. ग. द. ह । १६ ख. स्य मध्ये मुखं कार्यं पा । १७ द. सु ।

चतुरश्रा चतुःस्तम्भा तदग्रे भागविस्तृता[1]।
पञ्चभागायता तिर्यक् कार्या सीमा तथापरा ॥ ४७ ॥

द्वात्रिंशदत्र कर्तव्याः स्तम्भाः [2]सर्वैक्यसङ्ख्यया।
बहिःपरिसरो गर्भात् ससीम्नो भागविस्तृतः ॥ ४८ ॥

एवं स्याद् वेदिकाजालरूपादिभिरलङ्कृतः।
बहिर्व(श्र)योच्छ्रि[3]तश्चैष प्रासादो गजयूथपः ॥ ४९ ॥

गजयूथपः।

षड्भागभाजिते क्षेत्रे चतुरश्रे समन्ततः।
गर्भो द्विभागि[4]कः कार्यो द्वारं भागसमुच्छ्रितम् ॥ ५० ॥

भागा[5][6]र्धं द्वारविस्तारः प्रासादस्योच्छ्रितिं पुनः।
कुर्वीत चतुरो भागान् छादयेच्चित्रकूटवत् ॥ ५१ ॥

कार्या द्विभागिकाः शालाः सालिन्दास्तस्य बाह्यतः।
बहिर्भित्तिपरिक्षिप्ताश्चतुर्भागायताः शुभाः ॥ ५२ ॥

द्वौ द्वौ गवाक्षकौ स्तम्भाः प्रतिशालं भवन्ति षट्।
चतुःस्तम्भधृतैर्युक्ताः[7] कार्या वा धार्मिकालयैः ॥ ५३ ॥

नन्द्यावर्तोऽयमेवं स्यात् सप्राग्रीवचतुष्टयः।
प्राग्रु(?)द्वारक्षणोपेतः प्रासादः शुभलक्षणः ॥ ५४ ॥

नन्द्यावर्तः।

क्षेत्र(त्रे)षड्भागविस्तारे दशभागकृतायतौ।
मध्यादपरभागेऽ[8]स्य देवकोष्ठं निवेशयेत् ॥ ५५ ॥

चतुरंशप्रतिन्या[9]सं चतुरश्रं समन्ततः।
द्वारं तस्य विधातव्यं भागमध्यर्धमुच्छ्रितम् ॥ ५६ ॥

पादोनं भागविस्तारं सिंहवक्त्रविभूषितम्।
सीमा तस्याग्रतः कार्या देवकोष्ठेन सम्मिता[10] ॥ ५७ ॥

१ द. °विस्मृताः। २ ख. ग. द. सर्वे व्यसंख्यया। ३ ख. ज्छ्रि; द. च्छ्रिता। ४ द. का°। ५ द. र्द्धं। ६ द. लां। ७ ख. ग. द. क्ता। ८ क. गस्थादे; ख. ग. गस्थदै; द. मघादपरभागस्था°। ९ ख. ग. व्या; द. °श्ययतिव्यासं। १० द. तः।

स्तम्भैः षोडशभिर्युक्ता भागद्वित्रयमुच्छ्रितैः ।
ससीम्नो देवकोष्ठस्य समन्ताद् भित्तिवेष्टितः ॥ ५८ ॥
अलिन्दो[1] भागिकः कार्यो गवाक्षैरुपशोभितः ।
(तत्)सीम्नोश्चाग्रतः[2] पार्श्वे[3] षड्दारुकयुता बहिः[4] ॥ ५९ ॥
कार्या द्विरंशाः प्राग्रीवा भागिकालिन्दवेष्टिताः ।
द्विद्विस्तम्भधृताः सर्वे पार्श्वतश्चयशोभिताः ॥ ६० ॥
अलिन्दास्तु[5] चतुःस्तम्भाः कार्याः प्राग्रीवकाग्रतः ।
अवतंसक इत्येष[6] सर्वलक्षणसंयुतः ॥ ६१ ॥
प्रासादः कथितः सम्यक्

अवतंसः ।

स्वस्तिकः प्रोच्यतेऽधुना ।
चतुरश्रीकृते क्षेत्रे षड्भागप्रविभाजिते ॥ ६२ ॥
प्रासादं कल्पयेन्मध्ये द्विभागायामविस्तृतम्[7] ।
द्वारपाशोऽस्य भागार्ध[8]विस्तृतो[9] भागिकोदयः ॥ ६३ ॥
गर्भवेश्म चतुःस्तम्भमलिन्दो भागिको बहिः ।
तस्य स्युर्द्वादश स्तम्भा भागिकोऽलिन्दकोऽपरः ॥ ६४ ॥
विंशतिस्तम्भसंयुक्तो विधातव्यः समन्ततः ।
चयावृतं[10]श्च पुरतो भागो वाष्ट[11]धरान्वितः ॥ ६५ ॥
भागमेकैकमुत्सृज्य कर्णाभ्यां भागविस्तृतौ[12] ।
भागिकोच्छ्राय[13]निष्कासौ कार्यौ प्राग्रीवकौ पुनः ॥ ६६ ॥
बाह्यतो भित्तिसंश्लिष्टौ[14] त्रिदिशं[15] सगवाक्षकौ[16] ।
स्वस्तिकोऽयं समाख्यातः प्रासादश्चित्रलक्षणः ॥ ६७ ॥

स्वस्तिकः ।

---

१ द. आ । २ ख. ग. द. श्चायतः । ३ द. पार्श्वयोश्चषद्दारुकषुचा° । ४ क. द्व; ५ द. आ । ६ द. षाः । ७ द. स्मृ । ८ क. र्धे । ९ द. °विस्मृतौ° । १० क. द. °त्त° । ११ द. वाष्टवरांचितः । १२ द. स्मृ° । १३ द. का. आय । १४ द. °संस्निग्धौ । १५ क. दं, ख. ग. द. द । १६ द. °क्षि° ।

अथाभिधीयतेऽधुना प्रासादः [§]शुभलक्षणः ।
षड्भागभाजिते क्षेत्रे चतुरश्रे समन्ततः ॥ ६८ ॥

द्विभागायामविस्तारं मध्ये गर्भगृहं भवेत् ।
भागद्वयोच्छ्रितैः स्तम्भैर्युतं व्यक्तैः सलक्षणैः ॥ ६९ ॥

निष्क्रान्तेषु बहिर्भागे गर्भपादे[1]षु योजयेत् ।
तोरणानि मनोज्ञानि ककुप्सु चतसृष्वपि ॥ ७० ॥

गर्भस्तम्भप्रमाणेन तानि स्तम्भद्वयेन वा ।
समुत्क्षिप्तानि युक्तानि कलशै [2]रविमण्डलैः ॥ ७१ ॥

पल्लवैः[3] पत्रजात्यादिविन्यासैश्चाप्यनेकशः ।
भूषितास्ये पुनर्मूर्ध्नि मकराणां मुखैरपि ॥ ७२ ॥

स्तम्भयोरन्तरे दद्यादुभौ मकरपूरिमौ ।
अन्योन्याभिमुखे[4] श्लिष्टे कुर्यान्मकरयोर्मुखे ॥ ७३ ॥

चतुर्णामपि निर्दिष्टै[5]स्तोरणानां मया विधिः ।
[6]अलिन्दो भागिकश्चान्यो बहिर्भागे प्रकीर्तितः ॥ ७४ ॥

[7]स्युर्भागिकान्यलिन्दान्ते धार्मिकायतनानि च ।
वेष्टितानि बहिर्भित्त्या सम्मुखानि परस्परम् ॥ ७५ ॥

धार्मिकालयभित्तीनां भूमिर्या बाह्यतो भवेत् ।
तस्याः षड्दारुकाणि स्युर्भागमात्रोच्छ्रितानि च ॥ ७६ ॥

प्राग्ग्रीवकैः ससोपानैर्दिक्चक्रैस्तानि भूषयेत् ।
अपरस्याः पुनर्भित्तेर्भागद्वयविनिस्सृतम् ॥ ७७ ॥

मध्ये द्विभागविस्तीर्णं देवकोष्ठं निवेशयेत् ।
द्वारपाशं च कुर्वीत तस्योर्कुं( र्ध्वं ) भागमुच्छ्रितम् ॥ ७८ ॥

तथा भागार्ध[8]विस्तारमित्येष क्षितिभूषणः ।
प्रासादः कीर्तितः सम्यक् सर्वलक्षणलक्षितः ॥ ७९ ॥

---

१ द. पट्टेषु । २ ख. ग. द. श्रि । ३ द. वेय । ४ ख. खौ; द. खो । ५ द. ष्टा । ६ द. आ । ७ द. स्फगिकान्य° । ८ द. वि° । § 'क्षितिभूषण' इति पाठः । स्यात् ।

क्षितिभूषणः ।

क्षेत्रस्य चतुरश्रस्य भागान् द्वादश कल्पयेत् ।
मध्ये गर्भं चतुःस्तम्भं तस्य कुर्याद् द्विभागिकम् ॥ ८० ॥
तद्बहिर्भागिकोऽलिन्दो द्वादशस्तम्भवान् भवेत् ।
मध्येऽपरस्यां यौ स्तम्भौ ताभ्यां कुर्वीत तोरणम् ॥ ८१ ॥
अलिन्दो भागिकः कार्यो भित्त्या भागिकया वृतः ।
प्राच्यां षड्दारुकं[1] मध्ये गर्भं[2]व्यासोन्मितायति ॥ ८२ ॥
तृतीयो भागिकोऽलिन्दः स्याद् भित्त्या परिवेष्टितः ।
चतुर्भागायतं भूयस्तत्र षड्दारुकं भवेत् ॥ ८३ ॥
प्राग्रीवं भागविष्कम्भं कुर्याद् भागद्वयायतम् ।
अग्रतः स्तोभितं स्तम्भैर्भागान्तस्थचयावृतम् ॥ ८४ ॥
यथा प्राच्यां तथोदीच्यां याम्यायामपि कीर्तितम् ।
दिशि प्रतीच्यां तु पुनर्द्वितीयालिन्दकाद् बहिः ॥ ८५ ॥
द्विभागायामविष्कम्भं देवकोष्ठं निवेशयेत् ।
सपक्षद्वारकं श्रीमद् द्वारपाशोपशोभितम् ॥ ८६ ॥
भागिकोऽलिन्दकस्तस्माद् बहिर्भित्त्याभिवेष्टितः ।
बहिश्चयावृतो वा स्याद् गवाक्षैर्वा विभूषितः ॥ ८७ ॥
पृथ्वी विजयते यस्मात् तेनासौ पृथिवीजयः ।

भूजयः ।

यदा पृथ्वीजयस्यैव कर्णप्राग्रीवकावुभौ ॥ ८८ ॥
कोणेषु भागिकौ स्यातां विज्ञेयो विजयस्तदा ।

विजयः ।

अयं समन्तादुत्क्षिप्तो बाह्यालिन्दं विना यदा ॥ ८९ ॥
मध्यमालिन्दसौधस्थं( स्थ )कर्णप्रासादकैश्रितः ।
प्रथमालिन्दगर्भौ च समुत्क्षिप्ततरौ ततः ॥ ९० ॥
स्यातां छाद्यद्वयच्छन्नौ तदा नन्दोऽभिधीयते ।

---

१ ग. कां । २ क. भं ।

नन्दः ।

चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ॥ ९१ ॥

चतुरश्रो भवेन्मध्ये देवकोष्ठो द्विभागिकः ।
द्वारबन्धोऽस्य भागोच्चः कार्यो भागार्धविस्तृतः ॥ ९२ ॥

स्याद् बहिर्द्वादशधरोऽलिन्दको[1] देवकोष्ठतः ।
भागिकः स च विज्ञेयो भित्तियुक्तस्ततोऽपरः ॥ ९३ ॥

अयं द्विभागिकैर्युक्तः प्राग्रीवैर्भागनिर्गमैः ।
तथा तृतीयोऽलिन्दः स्यात् समन्ताद् भित्तिवेष्टितः ॥ ९४ ॥

प्राग्रीवकैश्चतुःस्तम्भैः सप्रवेशैर्विभूषितः ।
भागिकी स्याद् बहिर्भित्तिरितरा तु धरैः समा ॥ ९५ ॥

इत्येष श्रीतरुर्नाम प्रासादः परिकीर्तितः ।

श्रीतरुः ।

अस्यैव स्तम्भगर्भस्य द्वितीयालिन्दभित्तिषु ॥ ९६ ॥

षड्दारूणि विधेयानि पूर्वरूपव्यवस्थिते[2]ः ।
द्वौ द्वौ प्राग्रीवकौ कार्यौ तृतीयालिन्दकाद् बहिः ॥ ९७ ॥

तौ च द्वि(भागा)न्तरितौ सर्वतो भागनिर्गतौ ।
एवं पञ्चांशता(?) स्तम्भैर्द्वाभ्यां च परिवेष्टितः ॥ ९८ ॥

चतुःस्तम्भैः सप्रवेशैः समन्तादुपनिर्गमैः ।
प्रासादोऽयं समाख्यातो नामतः प्रमदाप्रियः ॥ ९९ ॥

प्रमदाप्रियः ।

भागविस्तारविष्कम्भमस्य प्राग्रीवकं यदा ।
भिन्नालिन्दाग्रतस्तिर्यग् द्वे शाले तन्मुखं शुभम्(?) ॥ १०० ॥

द्वितीयालिन्दकस्थाने कर्णप्रासादकैर्युतः ।
एवं व्यामिश्रसंज्ञोऽयं प्रासादः परिकीर्तितः ॥ १०१ ॥

---

१ क. ग. तो । २ क. ते, ख. तैः ।

व्यामिश्रः।

विजयस्यास्य च यदा कर्णलाङ्गलकैर्युता।
भवेद्[1] भित्तिस्तदा हस्तिजातीय इति कथ्यते ॥ १०२ ॥

हस्तिजातीयः।

सीमाप्राग्रीवभूमीषु यदा स्युः पृथिवीजये।
द्विभागाश्चाभितोऽलिन्दास्तिर्यक्[2]शालामुखेषु च ॥ १०३ ॥
[3]अलिन्दे[4] पश्चिमा शाला सर्व(र्वा)शालोकना शुभा।
षड्दारुकं तथैवात्र चतुर्भागायतं भवेत् ॥ १०४ ॥
पूर्ववत् सर्वमन्यच्च कुबेरः स तदा भवेत्।

कुबेरः।

प्रासादः कथ्यतेऽन्यश्च सम्प्रतीह धराधरः ॥ १०५ ॥
कुबेरोपत्तरोक्षिप्तः(?) कर्णप्रासादभूषितः।
मध्यद्वारान्वितः श्रीमान् धराधर इति स्मृतः ॥ १०६ ॥

वसुधाधरः।

यत्र[5]ाग्रतश्चित्रकूटस्तस्माद् यः सर्वतोदिशम्।
धराधरतदभ्भासः(?) सर्वतोभद्र उच्यते ॥ १०७ ॥

सर्वतोभद्रः।

कर्णप्राग्[6]ग्रीवकौ द्वौ द्वौ शालाप्राग्री[7]वकाअ(व)पि।
स्यातां यदा[8]स्य प्रोक्तोऽसौ विमानाख्यस्तदा शुभः ॥ १०८ ॥

विमानाख्यः।

विमान[9]पीठे निर्मुक्तः[10] शालाभिः सर्वतो वृतः।
अन्योन्यशालासम्बन्धे विमानो न्यस्यते यदा ॥ १०९ ॥
कर्णप्रा[11]सादकोपेतः कोणैः शालोज्झितैर्युतः।
स विमुक्तकोणः स्यात् प्रासादोऽत्यर्थशोभितः ॥ ११० ॥

---

१ ख. °वेद्धस्तितदा। २ क. क्तालमु। ३ क. ख. ग. आ। ४ ख. ग. न्दो। ५ क. थाग्रभश्चि। ६ द. ग्गी। ७ द. ग्री। ८ द. य। ९ क. नं। १० क. क्तशा। ११ ख. ग्रीवको; द. ग्गीव°।

मुक्तकोणः ।

प्रासादाश्चतुरश्राः स्वैर्विशेषैर्वर्णिताः पृथक् ।
इदानीमभिधीयन्ते वृत्ताः स्वैः स्वैर्विशेषणैः ॥ १११ ॥

तत्रादौ वलयाकारो वलयः स च कथ्यते ।
समन्ताद् वर्तिते[1] क्षेत्रे चतुर्भागविभाजिते ॥ ११२ ॥

कुर्यात् सारोहणं पीठं सार्धभागोच्छ्रितं शुभम् ।
परिक्षिप्तं गजमुखैर्मकर(रा)स्याम्बुनिर्गतम् ॥ ११३ ॥

बहिर्भागसमोपेतस्तस्मिन् कार्यः सुरालयः ।
पादोनविस्तृति[2]र्द्विघ्नद्वारोच्छ्रायविभूषितः ॥ ११४ ॥

तस्याष्टस्तम्भकोऽलिन्दो बहिर्वलय इत्यसौ ।
वृत्तच्छाद्यः सिंहकर्ण[3]स्तथा जालकरूपवान् ॥ ११५ ॥

†भूलवयः ।

प्राग्री[4]वका(वृतः) स स्याद यद्वा §स्तम्भोच्छ्र[5]यानतः ।
त[6]दैष *दुन्दुभिः प्रोक्तस्त्रिभिस्तैः प्रान्त उच्यते ॥ ११६ ॥

अयमेव चतुर्भिः स्यात् पद्मः प्राग्रीवकैः शुभैः ।
स्तम्भैश्चतुर्भिस्तस्यैव यदा पश्चान्निवेश्यं[7]ते ॥ ११७ ॥

मध्यवृत्तो गर्भकोष्ठो भित्तिश्चोभयतः स्थिता[8] ।
स कान्त इति विख्यातः प्रासादो वर्तुलाकृतिः ॥ ११८ ॥

चत्वारि वलयस्यैव यत्र द्वाराण्यलिन्दकः ।
स्याच्चतुर्विंशतिस्तम्भैर्द्वितीयो भागसम्मितः ॥ ११९ ॥

प्रा[9]ग्रीवकाश्च स्तम्भाभ्यां द्वाभ्यां द्वाभ्यां समन्विताः ।
चत्वारो य[10]त्र स प्रोक्तः प्रासादोऽत्र चतुर्मुखः ॥ १२० ॥

---

१ द. र्त्त । २ क. तिद्विघ्न । ३ क. °र्णतदीयजा°; द. त । ४ द. ग्री । ५ ख. च्छ्र्य-द्वयान्वितः; द. य. द्वयान्वित । ६ ख. द. तदेव । ७ क. ख. द. °शयेत् । ८ द. ताः । ९ द. ग्री । १० द. स्य ।

†लक्ष्ये लक्षणे च वलय इत्ययं पठितः । §स्तम्भद्वयान्वितः इति पाठः स्यात् । *इत आरभ्य तत्तत्प्रासादनामानि पृथक्तया मातृकायां न लिखितानि ।

अस्यैवैकं यदा द्वारं प्राग्रीवोऽलिन्दवेष्टितः ।
एक एव तथाचान्यः प्राग्रीवस्तस्य चा[2]ग्रतः ॥ १२१ ॥
ख्यातो मा[3]ण्डूक इत्येष वृत्तप्रासादसत्तमः (वृत्तः?) ।
दिक्कोणेषु यदास्यैव भवेत् प्राग्री[4]वकल्पना ॥ १२२ ॥
प्रासादोऽयं तदा कू[5]र्मसंज्ञः स्यादपराजितः ।
[6]कूर्मस्यैव यदा दिक्षु स्तम्भैरष्टाभिरष्टभिः ॥ १२३ ॥
प्राग्रीवकाः प्रकल्प्यन्ते चत्वारोऽलिन्दवेष्टि[7]ताः ।
प्राग्रीवकास्तिर्यगग्रे भवन्त्यन्ये तदग्रतः ॥ १२४ ॥
षोडशस्तम्भयुक्तस्य मध्यभागे यदा भवेत् ।
† जानीयाद्दोषविज्ञेयाः प्राग्रीवहरितोत्तमः (?) ॥ १२५ ॥
इति वृत्ताः समाख्याताः प्रासादा नामलक्ष[8]णैः ।
चतुरश्रायतान् ब्रूमः प्रासादानिह साम्प्रतम् ॥ १२६ ॥
अष्टभागायते क्षेत्रे चतुरंशकविस्तृते ।
द्विभागसार्धभागैकभागोऽयं पीठं[9] इष्यते ॥ १२७ ॥
पश्चिमं भागमुत्सृज्य देवकोष्ठं द्विभागिकम् ।
तस्मिन् निवेशयेत् सीमा स्यादस्याग्रेऽष्टभि[10]र्धरैः ॥ १२८ ॥
ससीम्नो देवकोष्ठस्य[11] भागिकालिन्दको बहिः ।
[12]युक्तो धराणां विंशत्या वेदिकाजालवेष्टितः ॥ १२९ ॥
प्राग्रीवकस्य तस्याग्रे स्तम्भद्वितयभूषितः ।
द्विच्छाद्यच्छादितः श्रीमान् सिंहकर्णैरलङ्कृतः ॥ १३० ॥
प्रासादोऽयं भवो नाम विशालः कथ्यतेऽधुना ।
यदास्यैव[13] सनिष्क्रान्ते सीमाया[14]मे च वर्ध(र्धि)ते ॥ १३१ ॥

---

१ द. °दा° । २ क. वा । ३ क. ख. न्दू; द. मांदूक । ४ द. ची । ५ क. कर्त्तः; द. क । ६ द. र्मा । ७ द. ता । ८ क. °णैः । वृत्तप्रासादः । च° । ९ ख. द. टमिष्य; । १० द. र्है° । ११ द. °ष्ठः स्यात् । १२ द. सु । १३ द. वाश । १४ क. ख. द. योगे च वर्धते ।

† इह कियांश्चिद् ग्रन्थो गलित इव भाति, यतो वृत्तप्रासादभेदेषु लक्ष्ये परिगणितयोरुपान्त्ययोः तालीगृहोलूपीनामकयोर्लक्षणं न दर्शितम्, अत्र दृश्यमानस्य च श्लोकार्धस्य नार्थसामञ्जस्यम् ।

वलभ्यौ पार्श्व[1]योः स्यातां विशालाख्यस्तदा भवेत् ।
विशालस्य यदा गर्भे भित्तिर्भवति दिक्त्रये ॥ १३२ ॥

द्वौ द्वौ गवाक्षकौ चापि साम्मुख्यैः[2] स भवेत् तदा ।
प्राग्रीवास्त्रि[3]दिशं त[4]स्य गर्भकोष्ठायता यदा ॥ १३३ ॥

हित्वा वलभ्यौ प्राग्रीवौ विधीयेते तथापरौ ।
कर्णेषु भागमेकैकं त्यक्त्वा स्या[5]त् प्रभवस्तदा ॥ १३४ ॥

एतस्यैव मुखे स्यातां यदा प्राग्रीवकावुभौ ।
पार्श्वयोरपरौ द्वौ द्वौ प्राग्रीवौ[6] भवतो[7] यदा ॥ १३५ ॥

कर्णेषु भित्तयश्च स्युस्तदा स्याच्छिविरागृहः[8] ।
यदास्यैव मुखे शाला भागद्वितयविस्तृता[9] ॥ १३६ ॥

आयामेन च षड्भागा प्राग्रीवौ द्वौ तदग्रतः ।
द्वौ द्वौ गवाक्षकौ स्यातां तद्भित्त्योरुभयोरपि ॥ १३७ ॥

सीमायां द्वादश स्तम्भा मुखशालस्तदा भवेत् ।
अलिन्दो भागिकः कार्यो विशाल[10]स्यैव बाह्यतः ॥ १३८ ॥

प्राग्रीवभूमिषु वृतो[11] भित्त्या च सगवाक्षकः ।
अग्रतः सहितः स्तम्भैः षड्भिश्च क्रियते यदा ॥ १३९ ॥

[12]द्विशाल इति विख्यातः प्रासादो जायते तदा ।
यदास्यैव विधीयन्ते स्तम्भाः सर्वे समन्ततः ॥ १४० ॥

प्राग्रीवकौ चोभयतो गृहराजस्तदा भवेत् ।
सर्वस्यैव(?) यदालिन्दः स्यादन्यो भागविस्तृ[13]तः ॥ १४१ ॥

सीमान्तविस्तृते स्यातां वलभ्यौ[14] भागनिस्सृते[15] ।
भित्तिर्विधीयते शेषा गवाक्षैरुपशोभिता ॥ १४२ ॥

मुखे [16]षड्दारुकं च स्यात् तदा स्यादमलाभिधः ।
एकादशायते क्षेत्रे तथा षड्भागविस्तृते ॥ १४३ ॥

---

१ क. त । २ क. ख्यात् स; द. सोऽमुख्या । ३ द. द । ४ द. य । ५ द. त । ६ द. वो । ७ द. ते । ८ द. तू स्थविरग्रहः । ९ द. ताः । १० क. °लाख्ये च बा° । ११ क. त्तौ । १२ क. वि । १३ द. स्मृ° । १४ द. भ्यो । १५ क. विस्तृते । १६ द. षड्द्वारकं ।

मुक्त्वा भागद्वयं पश्चाद् देवकोष्ठं निवेशयेत् ।
भागं मुक्त्वाग्रतः कुर्यात् सीमां भागचतुष्टयम् ॥ १४४ ॥
अष्टस्तम्भा[1]स्ततोऽलिन्द विंशतिस्तम्भभागिका[2]ः ।
भागिकः परितोऽलिन्दोऽष्टाविंशतिधरोऽपरः ॥ १४५ ॥
द्विद्विस्तम्भयुताः कार्याः प्राग्रीवाः कोष्ठजास्त्र[3]यः ।
सीमास[4]मे वलभ्यौ च प्राग्रीवौ मध्यतस्तयोः ॥ १४६ ॥
द्विद्विस्तम्भौ पुरश्चान्यौ वेदिकाजालशोभितौ ।
वेदिकाजालरूपाढ्यः सिंहकर्णोपशोभितः ॥ १४७ ॥
प्रासादोऽयं विभुर्नाम कथितो भर्तृनन्दनः ।
एवमेते समाख्याताश्चतुरश्रायता दश ॥ १४८ ॥
चतुरश्रायतांस्तिर्यगायत्यां[5]थापरानपि ।
प्रासादानभिधास्यामो [6]नवसंस्थानलक्षणैः ॥ १४९ ॥
द्वौ भागौ[7][8] विस्तृतिर्गर्भे द्विगुणा[9] तिर्यगायतिः ।
मध्ये भागोच्छ्रितं द्वारं तदर्धेन तु विस्तृतम् ॥ १५० ॥
स्तम्भश्चतुर्भिः संयुक्ता सीमा द्वारस्य चाग्रतः ।
द्विभागायामविस्तारा तावन्मात्रसमुच्छ्रितिः ॥ १५१ ॥
तां सीमां गर्भसहितां भागेनान्येन वेष्टयेत् ।
भित्तिस्तत्र विधातव्या सगवाक्षा चतुर्दिशम् ॥ १५२ ॥
षड्दारुकयुतो[10] ह्येष प्रासादो भव उच्यते ।
अस्यैव भागनिष्कासा शाला मुखचतुष्टये ॥ १५३ ॥
यदा[11] षड्दारुकोपेता विशालः स तदोच्यते ।
स्तम्भैर्मुखै[12]र्मुखे षड्भिर्बहिः साम्मुख्य इत्यसौ ॥ १५४ ॥
अस्यैव सीमा कर्णस्था द्विद्विस्तम्भयुता यदा ।
प्राग्रीवै[13]र्भागनिष्क्रान्ता बहिस्था प्रभवस्तदा ॥ १५५ ॥

---

१ द. म्भ । २ द. मासिकाः । ३ क. त । ४ द. सी । ५ क. व्ययप; द. त्याथो । ६ ख. भाग । ७ द. णो । ८ द. त्ताः । ९ द. र । १० ख. द. ते । ११ ख. दा; द. यद्वा षड्दारको° । १२ द. °र्ये । १३ ख. द. वभागः ।

सीम्नोऽग्रतो यदास्यैव स्तम्भद्वययुतो भवेत् ।
प्राग्रीवो भागनिष्क्रान्तस्तदा स्याच्छिबिरागृहः ॥ १५६ ॥
विशालसन्निवेशस्य मुखे शाला भवेद् यदा ।
पार्श्वयोश्चोभयोः शाले प्राग्रीवाश्च त्रयो यदा ॥ १५७ ॥
निष्क्रान्तभाग एकैकः[1] स्तम्भद्वितयसंयुतः[2] ।
प्रासादः स तदा ज्ञेयो मुखशालोऽभिधानतः ॥ १५८ ॥
मुखशालाग्रशालाया यदा स्तम्भाश्चतुर्दश ।
प्राग्रीवो द्विविधश्चाग्रे द्विशालः स तदा भवेत् ॥ १५९ ॥
†भित्तिस्तदानीं(?) प्रासादो गृहराजः प्रजायते[3] ।
गर्भायामसमावग्रपृष्ठयोर्भागविस्तृतौ ॥ १६० ॥
चतुश्चतुर्धरौ यत्र प्राग्रीवौ द्वौ च पार्श्वयोः ।
तौ तु द्विद्विधरौ गर्भविस्तारेण तु सम्मितौ ॥ १६१ ॥
अमलो नाम स प्रोक्तः प्रासादः शुभलक्षणः ।
अस्यैव चाग्रे पृष्ठे च द्विद्विस्तम्भयुतौ यदा ॥ १६२ ॥
प्राग्रीवौ स तदा प्रोक्तः प्रासादो दशमो विभुः ।
प्रासादान् कथयामोऽन्यान् दश वृत्तायतान् पुनः ॥ १६३ ॥
अष्टभागमुखायत्या विस्तृत्या चतुरश्रकम् ।
वृत्तायतं प्रकुर्वीत सबाह्याभ्यन्तरं ततः ॥ १६४ ॥
गर्भं पश्चिमभागेऽस्य चतुर्भागं समन्ततः ।
कुर्यात् तस्याग्रतः सीमां भागद्वितयविस्तृताम् ॥ १६५ ॥
भागत्रयमितां भागेनैकेनान्तरितां च ताम् ।
संयुक्तामष्टभिः स्तम्भैः सुदृढैश्चारुदर्शनैः ॥ १६६ ॥
अलिन्देन परिक्षिप्तां ससीमां देवकोष्ठकम् ।
षोडशस्तम्भयुक्तेन कुर्यात् प्राग्रीवमग्रतः ॥ १६७ ॥

---

१ द. 'मेकैकं । २ द. तं । ३ द. प्रा ।

† इहापि कियांश्चिद् ग्रन्थो गलित इव । इतः श्लोकद्वयात् प्रागेव क. पुस्तके पत्राणि आचतुःपञ्चाशाध्यायैकदेशं लुप्तानि । ग. ग्रन्थस्तु पुरैवावसितः ।

छन्नाद्छाद्यद्वयेनायमामोद इति कीर्तितः।
वृत्तायतेषु प्रथमः प्रासादः स्वामिनो हितः ॥ १६८ ॥

समाहितौ यदास्यैव प्राग्रीवौ भागभिभिन्नौ।
चतुःस्तम्भै रैतिकस्तु[1] वृत्ताभ्यां तुङ्ग उच्यते ॥ १६९ ॥

यदा सीमावधिर्भित्तिर्गवाक्षैरुपशोभिता।
वृत्तप्राग्रीव एकोऽन्ये (?) तदा चारुरुदाहृतः ॥ १७० ॥

सीमामध्ये विधातव्यौ प्राग्रीवौ भागविस्तृतौ।
विस्तारसदृशायामौ दक्षिणेति (?) त्रिषु त्रयः ॥ १७१ ॥

कार्याः प्राग्रीवकास्ते च गर्भकोष्ठेन सम्मिताः।
भूतिरित्येष[2] (सं)प्रोक्तः प्रासादः शुभलक्षणः ॥ १७२ ॥

मुखायतौ[3] स्याच्चतुरो भागान्यत्तिर्यगायतान्(?)।
क्षेत्रवृत्तं ततः कुर्यात् तन्मध्ये गर्भवेश्म च ॥ १७३ ॥

चतुर्भागायतं तत् स्याद् भागद्वितयविस्तृतम्।
अलिन्दो बाह्यतस्तस्य द्वादशस्तम्भसंयुतः ॥ १७४ ॥

भागद्वितयविस्तारः प्राग्रीवश्चांशनिर्गतः।
निषेध इति वि(वक इति) ख्यातः प्रासादोऽयं पुरातनैः ॥१७५॥

यदा(?) निषेधः स्यादस्य पुरः प्राग्रीवको यदि।
चतुर्द्वारपरिक्षिप्तोऽलिन्देनाष्टधरेण वा ॥ १७६ ॥

अयमेवांशकेन स्याद् यदालिन्देन वेष्टितः।
मुखभागत्रयं मुक्त्वा भित्त्या च परिवेष्टितः ॥ १७७ ॥

यदा च कर्णप्राग्रीवौ प्राग्रीवश्चाग्रतो भवेत्।
विशेषरचना या च द्वाविंशतिधरान्वितौ(?) ॥ १७८ ॥

गवाक्षैः शोभनैर्युक्तस्तदा सिंहः प्रकीर्तितः।
द्वादशांशायते क्षेत्रे तथा षड्भागविस्तृते ॥ १७९ ॥

---

१ द. रिरिकस्तु। २ द. रि। ३ द. मुखायतो।

पश्चादंशद्वयं त्यक्त्वा द्विभागायामविस्तृतः ।
देवकोष्ठो विधातव्यस्तद्द्वारं भागमुच्छ्रितम् ॥ १८० ॥
सीमाग्रे सान्तरा द्व्यंशविस्तृता चतुरायता ।
अष्टस्तम्भोऽस्य गर्भो वै षोडशस्तम्भको बहिः ॥ १८१ ॥
अलिन्दस्तस्य पुरतो वृत्तप्राग्रीवकोऽपि च ।
सीमाप्राग्रीवका[1]लिन्दकोष्ठान् वृत्तान् प्रकल्पयेत् ॥ १८२ ॥
प्राग्रीवौ पार्श्वयोः सीमासमौ भागविनिर्गतौ ।
द्वाभ्यां द्वाभ्यां युतौ ज्ञेयौ[2] स्तम्भाभ्यां वर्तुलाकृती ॥ १८३ ॥
एतत्सर्वं विधातव्यमलिन्देनाभिवेष्टितम् ।
चतुर्विंशधरोऽयं[3] च भागिकोऽ[4]स्य प्रशस्यते ॥ १८४ ॥
द्विस्तम्भयुक्तान् प्राग्रीवान् कुर्याद् गर्भस्य दिक्त्रये ।
एवमेष समाख्यातः प्रासादः सुप्रभः शुभः ॥ १८५ ॥
भागद्वितयविस्ताराः प्राग्रीवा येऽस्य कीर्तिताः[5] ।
चतुरश्रास्त एव स्युर्द्विद्विस्तम्भयुता यदि ॥ १८६ ॥
शेषा भवति भित्तिश्च गवाक्षैरुपशोभिता ।
प्रासादोयं तदा ज्ञेयो दशमो[6] लोचनोत्सवः ॥ १८७ ॥
अष्टाश्रानथ वक्ष्यामः प्रासादांल्लक्षणैः सह ।
चतुर्भागान्विते क्षेत्रे तथाष्टाश्रीकृते पुनः ॥ १८८ ॥
द्वौ भागौ गर्भकोष्ठः स्यादलिन्दो भागिकस्तदा ।
स्तम्भाष्टकमलिन्दे स्यात् प्राग्रीवस्तस्य चाग्रतः ॥ १८९ ॥
द्विच्छाद्यश्छा(च्छा)दिनः श्रीमान् प्रासादो वज्रको भवेत् ।
अस्यैवाग्रे यदा सीमा चतुरश्रा चतुर्धरा[7] ॥ १९० ॥
स्याच्चतुर्विंशतिस्तम्भश्चालिन्दो भागिकोऽपरः ।
नन्दनोऽयं समाख्यातः शङ्कुः प्राग्रीवकैस्त्रिभिः[8] ॥ १९१ ॥

---

१ द. को । २ द. यं । ३ द. यांश्च । ४ द. क । ५ द. ताः । ६ द. नो । ७ द. था । ८ द. राः ।

तस्य भित्तिर्विधानव्या क्षेत्रेऽष्टाश्रियुते बुधैः ।
वामनश्च(स्य) पुनर्द्वौद्वौ गवाक्षौ दिक्त्रये मतौ ॥ १९२ ॥
अस्यैवाग्रे यदा सीमाभागाद् भागत्रयायता ।
द्विभागं विस्तृता ह्यंशसमुच्छेदाष्टभिर्धरैः (?) ॥ १९३ ॥
अलिन्दा[1]वेष्टिता युक्ता प्राग्रीवैर्मेखलै[2] §तदा ।
भित्तिक्षेत्रे यदास्यैव प्राग्रीवाः परिवेष्टिताः ॥ १९४ ॥
अलिन्देन धरैः षड्भिः षड्भिर्युक्तास्तदा लयः ।
अष्टभागमिते क्षेत्रे कृतेऽष्टाश्रि[3]णि सर्वतः ॥ १९५ ॥
भागद्वयमितं कुर्याद् देवकोष्ठं मनोरमम् ।
चतुर्भिः शोभितं द्वारैर्भागिका(लिन्दवेष्टितम्) ॥ १९६ ॥
अलिन्दस्य विधानव्याः स्तम्भाश्चाष्टौ ततोऽपरः ।
स्याच्चतुर्विंशतिस्तम्भो भागि[4]कोऽलिन्दकः पुनः ॥ १९७ ॥
तथाविधस्तृतीयोऽपि प्राग्रीवाश्च चतुर्दिशम् ।
प्रासादोऽयं महापद्मो ब्रह्मणः शङ्करस्य च ॥ १९८ ॥
द्वितीयो(ये)ऽलिन्दक(के)ऽस्यैव प्राग्रीवाः स्युश्चतुर्दिशम् ।
अलिन्देन परिक्षिप्तो हंस एष प्रकीर्तितः ॥ १९९ ॥
प्राग्रीवो[5]ऽस्य महापद्मस्यालिन्देनावृतो यदा ।
कर्णप्राग्रीवकौ द्वौ द्वौ व्योमसंज्ञस्तदा भवेत् ॥ २०० ॥
हंसस्यैव वलभ्यः स्युः प्राग्रीवाणां[6] पदे यदा ।
चतुःस्तम्भाः परिक्षिप्ता अ[7]लिन्देन चतुर्दिशम् ॥ २०१ ॥
तदा चन्द्रोदयो नाम प्रासादो जायते शुभः ।
एवमेषां चतुष्षष्टिः प्रासादानामुदाहृता[8] ॥ २०२ ॥
इति सुरभवनानां सप्ततिर्दारवाणा-
मिह सदनचतुष्केणान्वितेयं प्रदिष्टा ।

---

१ द. न्द । २ द. °लैस्तदा । ३ द. स्त्रि । ४ द. गो । ५ द. वा । ६ द. °नां पदे यथा । ७ द. आ । ८ द. ताः ।

§ इहानुक्रमो व्यत्यस्तः । § लद्ये तु मेखल इति पठितः ।

जनमयमवकोशानन्दशुभ्रांशुलेखा (?)
भवति सुविदितैषा शिल्पिनां कामधेनुः ॥ २०३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
रुचकादिचतुष्षष्टिप्रासादलक्षणं नामैकोनपञ्चाशोऽध्यायः ।

---

## अथ प्रासादशुभाशुभलक्षणं नाम पञ्चाशोऽध्यायः ।

प्रासादानामथ ब्रूमो लक्षणानि भवन्ति ये ।
प्रशस्ताश्चाप्रशस्ताश्च तस्मिन्नवनिमण्डले ॥ १ ॥

ये समाः समकर्णाश्च समस्तम्भाः समक्षणाः ।
नैवोच्चा नातिह्रस्वाश्च कर्णायामादविह्वलाः ॥ २ ॥

असंमूढा विभागेन प्रमाणेन सुसंस्थिताः ।
ऊर्ध्वाधः कर्णपादीभिरुपेताः सलिलान्तरैः ॥ ३ ॥

असङ्कीर्णोदयैश्छाद्यैः स्वमानपरिकल्पितैः ।
सुविभक्ताः[1] सुसंस्थाश्च रम्यैरविकलैः[2] कृताः ॥ ४ ॥

समभागविभक्तैश्च[3] युक्ताश्चालिन्दकैः समैः ।
स्वजातिपरिवेषाढ्या नान्यजातिप्रदूषिताः ॥ ५ ॥

असङ्कीर्णाः[4] शरीरेण संस्थानेन सुसंस्थिताः[5] ।
केवला जातिशुद्धाश्च प्रासादाः शुभदा नृणाम् ॥ ६ ॥

सुदृढैर्मूलपादैश्च दृढाश्चामूलमस्तकम् ।
नाधरोत्तरयुक्ताश्च सुश्लिष्टद्रव्यसन्धिभिः ॥ ७ ॥

देव(श)जातिप्रसिद्धैश्च[6] भूषणैः सुविभूषिताः ।
प्रासादाः शुभदा नित्यं पूजासंस्कारवर्धनाः[7] ॥ ८ ॥

कर्ता कारयिता चैषां परां वृद्धिमवाप्नुयात् ।
अधमानपि वक्ष्यामः प्रासादानवलक्षणैः ॥ ९ ॥

---

१ द. व। २ द. द्र। ३ द. क्ता। ४ द. र्णा। ५ द. ता। ६ द. °द्धैर्द्रै°।
७ द. ना।

विषमाः कर्णहीनाश्च क्लेशबन्धभयावहाः।
स्तम्भैः क्षणैश्च विषमैः स्वामिनो मृत्युहेतवः॥ १०॥

अत्युच्चैः स्याद् भयं राज्ञो ह्रस्वैः सेना च मथ्यते।
कर्णायामेन विकलाः प्रासादाः स्युर्भयङ्कराः॥ ११॥

विभागेन विहीनास्तु दारिद्र्यभयदाः स्मृताः।
नष्टाभिः कर्णपादीभिरुद्वेगजननाः नृणाम्॥ १२॥

छाद्यैः सङ्कीर्णकैर्हीनैः कुलक्षयकराः स्मृताः।
दुर्विभक्ताः कुसंस्थाश्च द्रव्यैर्विकलसंयुतैः॥ १३॥

रोगं क्लेशं च मृत्युं च क्रमशो वितरन्ति ते।
विषमैर्भागहीनैश्चाप्यलिन्दैर्व्याधितो भयम्॥ १४॥

पराजयं परिवृतैरन्यजातिप्रदूषितैः।
ये परावृतयो ये ऽन्यसङ्कीर्णा येऽन्यविग्रहाः॥ १५॥

कर्तुः कारयितुर्नैते नन्दका वापि चात्मनः।
दुर्बला मूलपादेन विश्लिष्टैः पीठसन्धिभिः॥ १६॥

अल्पायुषस्ते प्रासादा भवन्ति च भयावहाः।
अधरोत्तरगैः श्लिष्टैर्विज्ञेया व्याधिकारिणः॥ १७॥

आदेशैर्भूषणैर्युक्ताः प्रासादा न सुखावहाः।

ये कीर्तिमिच्छन्ति जयन्ति भूतान् कुर्युः शुभैर्लक्ष्मभिरन्वितांस्ते।
प्रासादमुख्यानितरे तु वर्ज्यास्तेजोयशःश्रीविजयादिकामैः॥१८॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

प्रासादशुभाशुभलक्षणं नाम पञ्चाशोऽध्यायः॥

---

१ द. श्र। २ द. टी। ३ द. नं। ४ द. च। ५ द. यो। ६ द. दृष्टि°। ७ द. र्याः।
८ द. णो।

## अथायतननिवेशो नामैकपञ्चाशोऽध्यायः ।

एवं नृपस्य प्रासादे कृते क्लृप्तेऽथवा भुवि ।
तस्यानुजीविनः कुर्युः प्रासादान् परिधौ यदि ॥ १ ॥

तदा दिग्भागविन्यासस्थानमानान्यनुक्रमात् ।
तेषामिहाभिधीयन्ते सर्वेषां वृद्धिहेतवे ॥ २ ॥

दशाष्टौ षट् च धनुषां शतानि क्ष्माभृतां क्रमात् ।
मानमायतनस्योक्तं त्रेधा श्रेष्ठादिभेदतः ॥ ३ ॥

क्षेत्रमायतनस्यैवं चतुरश्रं समन्ततः ।
तत्र भक्ताः प्रकुर्वीरंस्त्रिधा स्वे स्वामिवत्सलाः ॥ ४ ॥

ये चास्य सम्मताः केचित् कुले जाता हितैषिणः ।
द्वादशांशेन हीनानि क्रमात् तान्यनुजन्मनाम् ॥ ५ ॥

तस्यैव वामतः[1] कुर्यादुत्सेधाद् द्विगुणान्तरे ।
कुर्याद् दशांशहीनानि नैर्ऋत्यां दिशि भूपतेः ॥ ६ ॥

प्रासादान्नृपपत्नीनां सर्वासामपि शास्त्रवित् ।
अष्टभागेन हीनानि प्रतीच्यां दिशि कारयेत् ॥ ७ ॥

देवधिष्ण्यानि तन्त्रैः स्यात् स्वसुराणां विधानतः (?) ।
सौम्यायां मारुतीं यावन्नवांशापचिताः क्रमात् ॥ ८ ॥

प्रासादा मन्त्रिसेनानीप्रतीहारपुरोधसाम् ।
एतेषां पूर्वभागस्थं राजमातुर्निवेशनम् ॥ ९ ॥

हीनमेकादशांशेन तत् कार्यं राजकारिता (?) ।
ऐशीमाश्रित्य देवानां तुल्यमैन्द्रपदावधि ॥ १० ॥

स्वसृणां मातुलानां च कुमाराणां तथा क्रमात् ।
आग्नेय्यां द्विजमुख्यानां विधातव्यं निवेशनम् ॥ ११ ॥

कार्यः पुरोधःप्रासादः तुल्यतत्पुनरेव वा (?) ।
याम्यायां कुर्युरष्टांशहीनान्युर्वीशमन्दिरात् ॥ १२ ॥

---

1 द. नः ।

सामन्त[1]कुञ्जरारोहभट[2]पौरजनाः क्रमात् ।
एतान्यायतनान्येषां यथाभागं प्रकल्पयेत् ॥ १३ ॥

मर्मवेध[3]प्रदेशस्थान् द्वारवेधगतानपि ।
स्वस्थानान्तरितांश्चैतान् न कुर्याद्धितकाम्यया ॥ १४ ॥

अलिन्दैर्गर्भकोष्ठैश्च सीमास्तम्भगवाक्षकैः ।
द्वारद्रव्यतलोच्छ्रायैः प्राग्ग्रीवैः सिंहकर्णकैः ॥ १५ ॥

न कुर्याद् भूषणैस्तुल्यं समं वास्थंदरूपतः (?) ।
समरूपं भवेद्धर्म्यं[4] निर्युक्तं च न नन्दति ॥ १६ ॥

राजपीडा भवेत् तस्मिन्नाधिक्ये च कुलक्षयः ।
प्रासादाद् भूमिपालस्य निवे[5]शं परिधौ स्थित[6]म् ॥ १७ ॥

द्रव्येण कतरेणापि नोत्कृष्टं कारयेद् बुधः ।
संस्थानान्मानतश्चापि विस्ता[7]रेणोच्छ्रयेण वा ॥ १८ ॥

पूर्वोक्तेभ्यो विभागेभ्यः किञ्चिद्धीनतमः शुभः ।
अन्योन्यं द्विगुणच्छाद्यैरेकैकस्यान्तरं शुभम् ॥ १९ ॥

सुभोग्यं तं च कुर्वीत बहुभिर्भवनान्तरैः ।
कोष्ठिकाभोजनागारैर्भाण्डोपस्करधामभिः ॥ २० ॥

शिला[8]लूषात(?)शालाभिः शेषं तु परिपूरयेत् ।
प्रशस्तान् कारयेत् सर्वान् शुभरूपान् मनोरमान् ॥ २१ ॥

प्रायशः स्वालयांश्चान्यान् सर्वस्यान्यगृहाणि च ।
नरेन्द्रायतनस्यैव निवेशात् परिकल्पयेत् ॥ २२ ॥

अन्यथात्वे महादोषा वैपरीत्ये कुलक्षयः ।

इति कथितदिगादिभेदयोगैः
सुरभवनानि भवन्ति यस्य राज्ञः[9] ।

---

१ द. न्तः। २ द. ट्ट। ३ द. धः। ४ द. द्रूम्यं। ५ द. शः। ६ द. तः। ७ द. स्त। ८ द. शिलोल्लषते। ९ द. ज्ञा।

अविरतमुदितोदितप्रतापः[1]
स्वभुजजितां स चिरं प्रशास्ति पृथ्वीम् ॥ २३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
आयतननिवेशो नामैकपञ्चाशोऽध्यायः ॥

---

## अथ प्रासादजातिर्नाम द्विपञ्चाशोऽध्यायः ।

अवतारो निवेशानां विधानं वास्तुनो यतः ।
कात्स्न्र्येन तमतो ब्रूमः सभ्यस्य प्रसवोत्तमः (?) ॥ १ ॥
कुलजातिक्रमाणां च क्रमं दीर्घाल्पजीविनाम् ।
संस्थानमभिधास्यामो लक्ष्यलक्षणमेव च ॥ २ ॥
शुभाशुभानां वैराजमादिं तेषां प्रचक्षते[2] ।
पूर्वोक्तस्य विमानस्य तस्यातो लक्ष्म कथ्यते ॥ ३ ॥
वैराजस्य यथाकारव्यवस्थानमशेषतः ।
चतुरश्रं समं क्षेत्रमशीत्यंशैर्विभाजयेत् ॥ ४ ॥
संयुक्तमष्टभिर्भागैः कुर्याद् गर्भगृहं शुभम् ।
द्विपञ्चाशद्भिः सीमा गर्भकोष्ठसमन्विताः ॥ ५ ॥
द्वात्रिंशता देवकोष्ठैः सर्वैरेकान्तरैश्च तैः ।
बाह्यस्थाने ततः स्थानाद् द्वादशक्षोभणैर्धरैः ॥ ६ ॥
हेमरत्नमयैः स्तम्भैः शुक्लपट्टैश्च भूषितैः ।
शुक्लालङ्कारखचितैर्वितानैश्च विभूषणैः ॥ ७ ॥
स्फाटिकैर्विविधैर्जालैः सहरिन्मणिवेदिकैः ।
हंसकर्णकपोतालीतिर्यक्स्थाल्यर्धकर्णिकैः ॥ ८ ॥
पर्यन्तदेशधृतया गर्भस्योपरि घण्टया ।
लोकनाथेन तत् सृष्टमाद्यं वैराजसंज्ञितम् ॥ ९ ॥

---

१ द. चिरसमु° २ द. क्ष्य ।

तस्मात् स्वस्तिकसंज्ञः प्राग् गृहच्छन्दो विजायते ।
चतुश्शालस्त्रिशालश्च हिरण्यौकस्त्वतोऽपि च ॥ १० ॥

सिद्धार्थको द्विशालः स्यादेकशालस्तु कुम्भकः ।
सृष्टमन्यद् विमानं च वरं वीरं चतुर्मुखम् ॥ ११ ॥

गणानां देवतानां च स्कन्दस्य च यथाक्रमम् ।
प्रासादा द्वादशैतेऽन्ये जज्ञिरे शुभलक्षणाः ॥ १२ ॥

स्वस्तिकः श्रीतरुश्चैव तृतीयः क्षितिभूषणः ।
भूजयो विजयो भद्रः श्रीकूटोष्णीषसंज्ञितौ ॥ १३ ॥

नन्द्यावर्तो विमानश्च सर्वतोभद्र एव च ।
विमुक्तकोणप्रासाद इति वैराजसंभवाः ॥ १४ ॥

एकैकस्मात् क्रमेणैवमेकैकः समजायत ।
स्वस्तिकाद् रुचको ज्ञेयः श्रीतरोः सिंहपञ्जरः ॥ १५ ॥

क्ष्माभूषणात् तु शाला स्याद् भूजयाद् गजयूथपः ।
विजयादवतंसश्च भद्रान्नन्दी विनिर्गतः ॥ १६ ॥

श्रीकूटाच्चित्रकूटाख्य उष्णीषात् प्रमदाप्रियः ।
व्यामिश्रो नन्दिकावर्ताद् विमानाद्धस्तिजाव( ति )कः ॥ १७ ॥

कुबेरः सर्वतोभद्रान्मुक्तकोणाद् धराधरः ।
एतेभ्योऽपि च संभूताः कनीयांसोऽभिधानतः ॥ १८ ॥

तद्भेदास्ते तदाकारैर्लक्ष्याः स्वैः स्वैः पृथग्विधैः ।
भागैस्तेषूत्तमैः पूर्वान् मध्यमान् मध्यमैस्तथा ॥ १९ ॥

कनीयसः कनीयोभिः प्रासादानुपकल्पयेत् ।
शिखरैरपरैः श्लिष्टाः प्रासादा जज्ञिरे ततः ॥ २० ॥

प्रथमो रुचकस्तेषु द्वितीयो वर्धमानकाः ।
अवतंसस्तृतीयस्तु चतुर्थो भद्र उच्यते ॥ २१ ॥

---

१ °ण्याकस्व° । २ द. द्रा । ३ द. त । ४ द. क्षा ।

पञ्चमः सर्वतोभद्रः षष्ठः स्यान्मुक्तकोणकः ।
मेरुर्मन्दर[1] इत्यष्टौ विज्ञेयाः शिखरोत्तमाः ॥ २२ ॥

चतुरश्राः समाख्याता देवानामालयाः शुभाः ।
एते ते वंशजाः सर्वे निवेद्या ब्रह्मजातयः ॥ २३ ॥

वैराजकुलसंभूताः प्रासादाः परमोत्तमाः ।
एतेभ्योऽन्येऽपि संभूताः पुत्रपौत्रप्रपौत्रय[2](जा)ः ॥ २४ ॥

स्ववंशाः सुपरीवाराः परवंशविवर्जिताः ।
कर्तव्या भूतिकामेन तेजसा शुभलक्षणाः ॥ २५ ॥

नन्दका वर्धनाश्चैव सर्वकामफलप्रदाः ।
हृष्टपु[3]ष्टजनाकीर्णाः पूजासंस्कारवर्धनाः ॥ २६ ॥

यदि हीना भवन्त्येते परवंशेन दूषिताः ।
तदुद्वेगं नृणां नित्यमर्थनाशं कुलक्षयम् ॥ २७ ॥

पीडां च स्वामिनः कुर्युर्यदन्यदपि गर्हितम् ।
तस्मादेते विधातव्या दूषिता नान्यजातिभिः ॥ २८ ॥

इति वैराजजातानामुत्पत्तिः परिकीर्तिता ।

वैराजजन्मसुरसद्मपरम्परेय-
मुक्तैवमत्र शुभलक्ष्मवती समासात् ।
आनन्दकीर्त्तिधनधान्यकरी कृता स्या-
दन्यादृशी पुनरनर्थफलैव कर्तुः ॥ २९ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
प्रासादजातिर्नाम द्विपञ्चाशोऽध्यायः ॥

---

## अथ जघन्यवास्तुद्वारं नाम त्रिपञ्चाशोऽध्यायः ।

ब्रूमो जघन्यवास्तूनां द्वारमानमतः परम् ।
विस्तारं सतलोच्छ्रायं द्रव्यव्यासविधिं तथा ॥ १ ॥

---

१ द. °मन्दिर । २ द. °त्रयजाः ॥ ३ द. तृ ।

कथिता ये निराधाराः प्रासादास्तिर्यगायताः ।
तेषां भागचतुष्केण गर्भवासं विभाजयेत् ॥ २ ॥
द्वारं सार्धेन भागेन कुर्वीत स्वार्धविस्तृतम् ।
द्वारविस्तारपादेन पेद्याया विस्तृतिर्भवेत् ॥ ३ ॥
विस्तारार्धेन पिण्डः स्यात् तत्समः स्यादुदुम्बरः ।
सार्धमूलादुम्बरकः(?)शाखा व्यासवशाद् भवेत् ॥ ४ ॥
चतुर्विधश्च कर्तव्यः पेद्यापिण्डः प्रमाणतः ।
शाखा तु पेद्यापिण्डश्च(स्य) विस्तारेण विधीयते ॥ ५ ॥
शाखाविस्तारतो रूपशाखा स्यात् सार्धविस्तृतिः ।
अर्धेन पेद्यापिण्डस्य खल्वशाखा विधीयते ॥ ६ ॥
रूपशाखासमाः कार्या विस्तारात् तुङ्गशाखिकाः ।
तुङ्गाया बाह्यतः शाखाः क्रियन्ते यास्तु काश्चन ॥ ७ ॥
अष्टांशाभ्यधिकाः सर्वाः कर्तव्या विस्तरेण ताः ।
द्वारस्यायामविस्तारयोगात् सङ्ख्या भवेत् तु या ॥ ८ ॥
तलोदयस्य तन्मानं गर्भमण्डपयोः समम् ।
यदि भिन्नतलं कर्तुं मण्डपेः कश्चि हीयते(?) ॥ ९ ॥
द्वारोच्छ्रिते तद्गुणानां मण्डपे स्यात् तलोच्छ्रितिः ।
प्रासादेषु कनीयस्सु तलमानमुदाहृतम् ॥ १० ॥
षड्भागाभ्यधिकं ज्येष्ठे मध्येऽष्टांशाधिकं ततः ।
बलविधिः(?) समपदः प्रासादस्य विधीयते ॥ ११ ॥
नाधस्तात् स प्रयोक्तव्यो नोर्ध्वतश्चाप्युदुम्बरात् ।
कुम्भिकाभरणपट्टजयन्तीशीर्षकायफलकेषु तुला(नाम्) ।
उक्त(मान)मिह यत् प्रथमं तन्नाधिकं प्रविदधीत न हीनम् ॥१२॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
जघन्यवास्तुद्वारं नाम त्रिपञ्चाशोऽध्यायः ॥

---

४ द. सु°। २ द. प। ३ द. द। ४ द. मुक्तमिह। ५ द. ना।

# अथ प्रासादद्वारमानादि नाम चतुष्पञ्चाशोऽध्यायः ।

इदानीमभिधास्यामः प्रासादानां यथाक्रमम् ।
द्रव्येषूदयविस्तारं बाहल्यं परिधिं तथा ॥ १ ॥

प्रासादभागिकोत्सेधं प्रासादद्वारमिष्यते ।
सत्र्यंशोच्छ्रितं वापि[1] सार्धांशोच्छ्रयमेव वा ॥ २ ॥

स्वीयस्वीयोदयादर्धविस्तारं च तदिष्यते ।
विस्तृतिर्भागतुर्यांशात्[2] पेद्यायाः स्थौल्यमर्धतः ॥ ३ ॥

पेद्याबाहल्यविस्तीर्णा[3] शाखा भवति मानतः ।
उत्तराङ्गानि कुर्वीत पेद्याशाखासमानि तु ॥ ४ ॥

सपादपेद्याविस्तारा रूपशाखा विधीयते ।
रूपशाखान्वितः कार्यः पीठबन्धस्तथोपरि ॥ ५ ॥

वृत्तं कार्यमधोवृत्ते पत्रकैश्च निरन्तरम् ।
स्तम्भाच द्विगुणव्यासं भरणं भूषणान्वितम् ॥ ६ ॥

रूपशाखासमं तच्च कर्तव्यमतिसुन्दरम् ।
ऊर्ध्वे समन्ताच्चाष्टांशमात्रे तच्चतुरश्रकम् ॥ ७ ॥

तदूर्ध्वं भरणोच्छ्रायः स्यात् पादोनसमुच्छ्रितिः ।
कपोतश्चाप्यधश्शीर्षगर्भः स च विधीयते ॥ ८ ॥

सरथालयपत्रो वा स्वोदयार्धविनिर्गमः ।
तस्योपरिष्टात् कर्तव्यं स्यादुच्छालयपत्रकम् (?) ॥ ९ ॥

रथिका[4] (तु) विधातव्या द्वयोरप्युच्छ्रितिस्तयोः ।
सार्धप्रमाणभरणाद् भूषा स्यात् पुष्पकादिभिः ॥ १० ॥

रूपकैर्वा यथाशोभं स्तम्भिकाभिश्च सर्वतः ।
कण्टकोयत्रिभागोन(?) कूटाकारं[5] भवेदतः[6] ॥ ११ ॥

१ द. रि । २ द. °सं । ३ द. पेयाबा° । ४ ख. द. थि । ५ द. ठा । ६ द. द ।

विभूषितं सिंहचक्रैर्हस्तितुण्डैरथापि वा ।
कपोतादि विधातव्यमन्तरे रूपशाखयोः ॥ १२ ॥
कार्यं विषमसंख्यं च सर्वमेतद् विचक्षणैः ।
तस्माद् बहिर्विधातव्या सर्वतः परिमण्डली ॥ १३ ॥
अन्त्यशाखासमा सा[1] च प्रमाणेन विधीयते ।
तस्यां सद्वारशाखायां (प्रा)[2]येशः पद्मपत्रिकाः ॥ १४ ॥
कार्यात्रा वाच(वा द्वार)शाखायास्तद्विस्तारसमुच्छ्रिताः ।
भवेदधस्तादर्धेन ग्रीवाया रसना तथा ॥ १५ ॥
ग्रीवया सार्धया तुल्यमन्तरं पत्रकाण्यधः ।
भागद्वयं प्रकुर्वीत जङ्घा त्र्यंशा ततोऽप्यधः ॥ १६ ॥
पेद्यापिण्डप्रमाणेन खल्वशाखा विधीयते ।
पेद्यापिण्डसमो बाह्यशाखान्यासः प्रकीर्तितः ॥ १७ ॥
क्रमेणानेन कर्तव्याः शाखा[3]ः स्वल्पा यदृच्छया ।
न नवभ्यः परं कार्या द्वारशाखाः कथञ्चन ॥ १८ ॥
निर्गमो वा प्रवेशो वा[4] विस्तारेण समन्वितः ।
पेद्याया यदि वार्धेन शाखानां स विधीयते ॥ १९ ॥
सा[5]र्धपेद्यापिण्डसमः पिण्डस्यो[6]दुम्बरो भवेत् ।
तलन्यासस्तदर्धेन भूमिरङ्गा च(ङ्गाश्च) तत्समा[7]ः ॥ २० ॥
उदुम्बरकपिण्डस्य मानात् सिंहमुखानि च ।
उदुम्बरात् पादहीनस्तुल्यो वाभ्यधिकोऽथवा ॥ २१ ॥
पट्टस्य पिण्डस्त्रिविधो विस्तारा[9]त् स्तम्भतोऽधिकः ।
भागपा[10]दंसमस्तम्भो द्वादशांशं प्रपीडितः ॥ २२ ॥
भागद्वये च कर्तव्यो रूपलक्षणसंयुतः ।
चतुष्षष्टिप्रकारोऽयं नानारूपप्रपञ्चतः ॥ २३ ॥

---

१ द. स्ता । २ द. पश । ३ ख. द. °व्या शाखारतत्र य° । ४ ख. द. वा सविस्तारेण संमितः । ५ ख. र्धा । ६ द. उ । ७ क. मा । ८ क. ह । ९ ख. रस्त; द. र । १० ख. दः ।

स्तम्भविस्तारविस्तीर्णं पिण्डे तत्पादवर्जितम् ।
विस्तारात् त्रि[1]गुणं दैर्घ्याद्धी[2]रेग्रहणमिष्यते ॥ २४ ॥
प्रविष्टौ स्तम्भमाने स्तः कुम्भिकोत्कालकौ सदा ।
तलपट्टसमं पट्टमुत्तरं परिकल्पयेत् ॥ २५ ॥
[3]ती(ही)रं तस्य त्रिभागेन समुत्सेधाद् विधीयते ।
किञ्चिद् विनिर्गतं [4]पट्टाद् यथाशोभं प्रकल्पयेत् ॥ २६ ॥
अत ऊर्ध्वं यथाशोभं कण्ठके[5]ना[6]सनेन च ।
रथकैश्चित्ररूपैश्च कूटा[7]गारैः सतोरणैः ॥ २७ ॥
[8]अलिन्दे मण्डपे वापि चतुष्के वलभीषु वा ।
वितानानि विचित्राणि समुत्क्षिप्ततलानि च ॥ २८ ॥
लक्षणेनं[9] च युक्तानि विदधीत यथोचितम् ।
लु[10]माः फलकवर्तीभिः कृता[11]ः समभिदध्महे ॥ २९ ॥
उत्क्षिप्तानां च ये भेदा जायन्ते सर्ववास्तुषु ।
[12]तुम्बिनी लम्बिनी हेला शान्ता कोला मनोरमा[13] ॥ ३० ॥
आध्माता चेति सप्तैता नामतः कथिता लुमाः ।
चतुरश्रीकृते क्षेत्रे[14] कान्ते भूमितले शुभे ॥ ३१ ॥
सूत्रं क्षेत्र[15]समं कृत्वा कर्णात् कर्णं विभाजयेत् ।
विन्य[16]स्येद् गर्भसूत्राणि तयोर्मध्यगतानि च ॥ ३२ ॥
भूयश्चान्यानि मध्येषु सूत्राणि विनिवेशयेत् ।
मध्ये वृत्तं समालिख्य [17]तुम्बिका कमलोपमा ॥ ३३ ॥
कार्या भागीकृतं तत्र वृत्तं क्षेत्रे[18] प्रवर्तयेत् ।
सूत्रे सूत्रे [19]तुं पिण्डस्थां[20] लु[21]मां सूत्रेण वालिखेत् ॥ ३४ ॥

---

१ द. त्रि । २ द. °तिहार° । ३ क. नी । ४ द. °ता पट्टा अ° । ५ क. को । ६ ख. न; द. कंचकेन शेनेन च । ७ द. ढा । ८ द. आ । ९ द. णानं । १० क. ख. माफ । ११ क. ख. ता स । १२ ख. द. रुचिनी । १३ ख. द. माः । १४ ख. द. पूर्वं का । १५ द. °त्रं । १६ द. से° । १७ ख. द. रुचिका । १८ क. ख. त्रं । १९ क. ख. ण । २० द. °स्थं लुमा २१ क. ख. मासू ।

लुमान्तरेषु सर्वेषु वैकटयेन[1] घुषीकृतम् ।
तयोरन्तरयोर्मध्ये लुमामूले विकर्करम् ॥ ३५ ॥
द्विगुणं त्रिगुणं वा स्यात् ततश्च वलिनीं लिखेत् ।
व्यासार्धेनोदयश्चेह कर्तव्यस्तत्र मण्डले ॥ ३६ ॥
सम्पातात्[2] तलसूत्राणां तुम्बिका[3] चोर्ध्वसूत्रिता ।
उदयस्तलसूत्रस्य[4] तुम्बिकायास्तथान्तरम्[5] ॥ ३७ ॥
पूर्वसूत्रे[6] लुमाग्रेषु कण्टकान् कल्पयेद् ऋजून् ।
बहिस्थानेषु चान्तेषु लक्षं कुर्यात् सुनिश्चितम् ॥ ३८ ॥
लक्षं[7] गृहीत्वाधःसूत्र ऊर्ध्वसूत्राणि लक्षयेत् ।
उदये कण्टकस्यान्ते तद्वदेवानुसन्ततम् ॥ ३९ ॥
दापयेदुत्तरं सूत्रं लुर्मानां[8] खल्वकानि[9] च ।
पिण्डव्यासं वलीनां चाप्येषु क्षोभणविस्तृती ॥ ४० ॥
लुमा कर्णगता या स्याद्[10]धमाता सा प्रकीर्तिता[11] ।
छेदे[12] प्रवर्तितान्या स्यात् किञ्चिदूना मनोरमा[13] ॥ ४१ ॥
कोला तृतीया शान्तेति चतुर्थी परिकीर्तिता[14] ।
हेलाख्या पञ्चमी षष्ठी लम्बिनी नामतो[15] लुमा ॥ ४२ ॥
सप्तमी तुम्बिनीत्येता मार्गसूत्रविनिर्गताः ।
एताभिः कारयेत्[16] कोलं वितानं नयनोत्सवम् ॥ ४३ ॥
कोलाविलं हस्तितालु[17] चाष्टपत्रं शरावकम् ।
नागवीथीवितानं च पुष्पकं भ्रमरावली ॥ ४४ ॥
हंसपक्षं करालं च विकटं शङ्खकुट्टिमम् ।
शङ्खनाभिः[18] सपुष्पं च शुक्तिवृ[19](वृं)त्तकमेव च ॥ ४५ ॥

---

१ ख. कायेन । २ द. संयाता चल° । ३ ख. द. रुचिका । ४ ख. द. मू । ५ द. रुचिकाया° । ६ क. त्रेषुमाग्र । ७ ख. बलं गृ । ८ द. ना । ९ ख. द. ल्वि । १० द. द । ११ द. ताः । १२ ख. र्तिन्य + स्याः; द. प्रवर्त्तिन्यस्याः कि° । १३ द. माः । १४ द. ताः । १५ ख. तस्तुला । द. °तस्तुला । १६ ख. का; द. °ये का° । १७ द. °स्त° । १८ द. ती । १९ क. मु ।

मन्दारं कुमुदं पद्मं विकासं गरुडप्रभम् ।
पुरोहतं पुरारोहं विद्युन्मन्दारकं तथा ॥ ४६ ॥
एतान्येवं वितानानि सङ्ख्यया पञ्चविंशतिः ।
एतेषां रूपनिर्माणमधुना संप्रचक्ष्महे ॥ ४७ ॥
समन्ताच्चतुरश्रे च चतुरश्रा[1]यतेऽथवा ।
क्षेत्रे वृत्तीकृते नाभ्यै[2]कया तत् कोलमुच्यते ॥ ४८ ॥
चतुरश्रे यदा क्षेत्रे कर्णस्थानेषु कृत्स्नशः ।
चतुरश्रनिबन्धेन चतुरश्रनिबन्धने ॥ ४९ ॥
[3]वलिनी विकटाकारा पूर्वं[4] वृत्तान्यधस्तथा ।
भ्रमवृत्तं च यन्मध्ये परं तत्रापरा लुमाः[5] ॥ ५० ॥
क्रियन्ते[6] तुम्बिकाः पञ्च यत्र सु[7]स्थाः [8]सुसं[9]वृताः ।
मार्ग्र(?)स्तलेऽधःसूत्रस्य तद् भवेन्नयनोत्सवम् ॥ ५१ ॥
कोलाविलं[10] समे क्षेत्रे[11] भागाष्टकविभाजिते ।
मध्ये द्विभागे विलिखेद् वृत्तं तुम्बिकयान्विते ॥ ५२ ॥
तत्र भ्रमान्ते च सूत्रे भ्रमान् षोडश कारयेत् ।
ऋजूनि यानि सूत्राणि लुमास्ताः परिकल्पयेत् ॥ ५३ ॥
यानि शेषाणि सूत्राणि वलिनीस्ताः प्रक[12]ल्पयेत् ।
तुम्बिन्यां कारयेद् वृत्तं गजतालुकमुच्यते ॥ ५४ ॥
अष्टपत्रे चतुष्षष्टि[13]भागं क्षेत्रं प्रकल्पयेत् ।
लुमास्थानेषु पत्राणि खण्डितान्यन्तरैस्तथा ॥ ५५ ॥
सम्पातेषु समस्तेषु तु[14]म्बिकाः सन्निवेशयेत् ।
वृत्ताकारं शरावं स्याद् विन्यासं च [15]धरैश्च तत् ॥ ५६ ॥
चतुरश्रेऽथवा वृत्ते भागत्रयविभाजिते ।
निवेशयेन्नागबन्[16]धं § सम्पाते वलिसूत्रयोः ॥ ५७ ॥

---

१ द. स्रा । २ क. भै । ३ क. ब । ४ क. वीं ; द. वीं ५. द. नाः । ६ द. रु । ७ द. स्व । ८ ख. द. स्व । ९ ख. स्थिता । १० द. ल । ११ द. त्रं । १२ द. प्रचक्ष्महे । १३ द. ग । १४ ख. त्व । १५ द. व । १६ द. न्धात् ।

§ नागवीथीति लक्ष्ये पठितम् ।

वितानमेतत्[1] कथितं यश्चिकीर्षति [2]मानवः ।
ऊर्ध्वतिर्यग्गतैर्नालैः क्रियते यन्निरन्तरम् ॥ ५८ ॥
पुष्पमालाकुलं श्रीमत्[3] पुष्पकं तदुदाहृतम् ।
अशोकपल्लवाकीर्णलुमाभ्रम[4]निबन्धनम् ॥ ५९ ॥
चतुरश्रक्रियायुक्तं सा प्रोक्ता भ्रमरावली ।
आध्माता कर्णमायाता तुम्बिकास्थानसंश्रया ॥ ६० ॥
तुम्बिनी यत्र मध्ये तु हंसपक्षं तदुच्यते ।
अस्यैव पक्षे तु यदा सम्बध्येत मनोरमा[5] ॥ ६१ ॥
तुम्बिनी च विपक्षेषु करालं तदुदाहृतम् ।
कोला लुमा स्याद् विकटे शङ्खे शान्ता प्रकीर्तिता[6] ॥ ६२ ॥
शङ्खनाभिसमं सूत्रं तुम्बिकायाः प्रवर्तते ।
सर्वेष्वपि लु[7]मास्थानेष्वेकरेखान्वितं भवेत् ॥ ६३ ॥
शङ्खनाभिरिति प्रोक्तं वितानमिदमुत्तमम् ।
एतस्यैव लुमास्थाने तुम्बिका पद्मकावृता[8] ॥ ६४ ॥
वलयैर्भूषिता यत् स्यात् सपुष्पमिति तद् विदुः ।
क्षेत्रे वृत्तायताकारे कारयेच्छुक्तिसंज्ञकम् ॥ ६५ ॥
वृत्ताकारे भवेत् क्षेत्रे वृत्तं वलयकर्मणा ।
चतुरश्रे समे क्षेत्रे यल्लुमार्धलु[9]मंर्धते(तः) ॥ ६६ ॥
वृत्तक्षोभणभङ्गानि तन्मन्दारकमुच्यते ।
कुमुदं कुमुदस्यैव लुमाक्षे[10]पांदिहार्धतः ॥ ६७ ॥
पद्मके स्याद[11]धःक्षिप्ता विकासे मध्यमा लुमा ।
गरुडे गरुडो मध्ये नागाभरणशोभितः ॥ ६८ ॥
†पुरोगतं तद् यदधो गत्वा स्या[12]दूर्ध्वगं पुनः ।
अधो गत्वा पुरारोहमूर्ध्वमूर्ध्वं ततोप्यधः ॥ ६९ ॥

---

१ द. न । २ ख. द. °ति नामतः । ३ द. श्रीमान् । ४ क. स । ५ द. माः । ६ द. ताः । ७ द. रु° । ८ द. ताः । ९ द. मा । १० ख. द. त्रा । ११ द. धि । १२ द. ख. दर्धगतं पु° ।

† पुरोहतमिति तु लक्ष्ये पठितम् ।

विचित्रक्षोभणाकीर्णमन्ते वृत्तं मुहुर्मुहुः ।
अष्टभिश्चाश्रिभिर्मध्ये विद्युन्मन्दारकं भवेत् ॥ ७० ॥

मानोन्मानमथ ब्रूमः प्रासादच्छाद्यसंश्रयम् ।
अर्धेनच्छाद्यविस्तारस्योर्ध्वे वंशं प्रकल्पयेत् ॥ ७१ ॥

अयमर्धोदयः प्रोक्त आव[1]न्त्यो नामतः परः ।
त्र्यंशेनच्छाद्यविस्तार[2]स्योदयो वामनो भवेत् ॥ ७२ ॥

वामनावन्त्ययोर्मध्ये नवधा प्रविभाजयेत् ।
भागोत्तरोदयात्[3] तेऽष्टौ वामनादुदयाः स्मृताः ॥ ७३ ॥

वा( आ )तपत्रोऽथ कौबेरः स( श )[4]मनाख्यस्तथावली ।
हंसपृष्ठो महाभोगी नारदः [5]शम्बुकस्तथा ॥ ७४ ॥

वामनः प्रथमस्तेषामाव[6]न्त्योते( न्त्येन ) दशेत्यमी ।
छाद्यानामथ वृत्तानामुदयः प्रोच्यतेऽधुना ॥ ७५ ॥

तलसूत्रसमं कृत्वा कुर्याद् द्वादशधोदयम् ।
षष्ठादारभ्य भागा[7]त् स्युः सप्त भागोत्तरोदयाः ॥ ७६ ॥

कुबेरशेखरी चन्द्री नागश्चातु( थ ) गणाधिपः ।
मुख्यश्चाच्छः सुभद्रश्च वृत्ते सप्तोदयाः स्मृताः ॥ ७७ ॥

कृत्वा त्रिकर्करपदं लुमापृष्ठं लिखेत् ततः ।
भागार्धमधिकं क्षेत्रे[9] भवेच्छाद्य[8]कवर्तना ॥ ७८ ॥

भागार्धवर्धिते क्षेत्रे तलसूत्रक्रमान्विते ।
लुमामाद्यां लिखेद् भूयः षट् क्रमेणानुसन्ततम् ॥ ७९ ॥

रिक्षा यथाद्विहस्ताय( ? ) लुमायाः स्यादनन्तरम् ।
लुमा त्रिभागहीनेन परिवृद्धाङ्गुलेन सा ॥ ८० ॥

तस्या[10]श्चानन्तरा लक्ष्म्या सार्धं वृद्धाङ्गुल[11]त्रयम् ( ? )
त्र्यंशोनैः षड्भिरपरा त्र्यंशोनैर्दशभिः परा ॥ ८१ ॥

---

१ द. °त्या । २ क. स्योदयस्यव्यसनो ( ? ) ३ द. °ष्टौ च । ४ ख. द. समानाख्य° । ५ द. °दस्यम्बुका° । ६ क. न्त्यौते । ७ ख. द. गाः । ८ क. श्छाद्यः । ९ त्राद् भ । १० श्चामं· भरायक्ष्म्या सा । ११ ख. द. लं द्वयम् ।

चतुर्दशभिरन्या स्यात् सार्धैर्वृद्धा[1] ततोऽङ्गुलैः ।
विंशत्यङ्गुलवृद्धा तु सप्तमी कोणसंश्रिता[2] ॥ ८२ ॥
क्रमेणानेन[3] मानानि लुमानां वृद्धिह्रासयोः ।
अनुपातेन कार्याणि च्छाद्यक्षेत्रानुसारतः ॥ ८३ ॥
† कुबेरवल्लरीचन्द्री[4]पन्नगा गणनायकः[5] ।
§ मुग्धा सु[6]भद्रेत्येताः स्युर्लुमाकर्माधमादितः ॥ ८४ ॥
एतासां गण्डिकाछेदाश्चत्वारः परिकीर्तिताः ।
ऊर्ध्वस्तिर्यग[7]( ग्ग )तिस्त्र्यंशस्तथार्धत्र्यंश एव च ॥ ८५ ॥
छाद्यकोदयविस्तारं तन्निर्गमसमायति ।
कृत्वा षोढा भजेत् क्षेत्रं विस्तारायामतः समम् ॥ ८६ ॥
तत्रोर्ध्वद्रव्यमानेनच्छिन्द्यात् प्रागेव गण्डिकाम् ।
तस्यां छेदानुसारेण दापयेदेव[8] लम्बकम् ॥ ८७ ॥
अधस्ताद् गण्डिकायाश्च कण्टकानि प्रकल्पयेत् ।
अवपातोच्छ्रयौ[9] ज्ञात्वा त्रीणि स्थानानि चिह्नयेत् ॥ ८८ ॥
गर्भे तथोर्ध्वे प्रान्ते च तृतीयं मध्यतस्तयोः ।
यत्र[10] स्थाने स्थितं सूत्रं स्पृशति स्थानकत्रये ॥ ८९ ॥
तस्मात् प्र[11]सार्य तत्सूत्रं भ्रमयेत् कर्कटं ततः ।
लुमार्धस्यैवमुपरि संस्थानमुपजायते ॥ ९० ॥
उपरि स्थितेन सूत्रेण तत्तुल्येनैव कर्कटम् ।
प्रान्तावलम्बकस्थाने भ्रमयेत् खल्वसिद्धये ॥ ९१ ॥
[12]प्रागक्षे भागयुगलावच्छिन्नं फलके पुनः ।
कल्पयेत् सममेवैषा लुमापार्ष्णिर्निगद्यते ॥ ९२ ॥

---

१ ख. द. °द्धां° । २ क. द. ताः । ३ क. °न नामानि । ४ ख. द. न्द्रा । ५ द. काः । ६ क. स । ७ ख. गा । ८ द. दाययेद । ९ द. °यो° । १० द. त । ११ द. प्रा । १२ ख. द. प्राक्क्षेत्रे भा ।

† 'कुबेरशेखरी' ति पूर्वं पठितम् । § 'मुख्य' इति पूर्वं पठ्यते । तदनन्तरं च 'अच्छ' इति नामान्तरमपि तत्र दृश्यते ।

शेषां लुमां तु दीर्घांशैश्चतुर्भिः प्रविभाजयेत् ।
चतुर्धातः परं तस्याः कर्तव्यं वृत्तवर्तनम् ॥ ९३ ॥
अर्धोदये लुमोच्छ्रायो विस्तारांशद्वयोन्मितः ।
मूलेऽग्रतश्च भागार्धमुदयोऽस्या विधीयते ॥ ९४ ॥
अधःक्षेत्रे स विस्तारात् सूत्रमालम्ब्य तद्यथा ।
विस्तारात् सदृशे क्षेत्रे सार्धतद्भागमा[1]श्रितः ॥ ९५ ॥
लुमाग्रे[2]भागत्र्यंशे च तयोर्मध्ये[3] च यत् स्थितम् ।
सूत्रं स्पृशेत् तत्र धृत्वा कर्कटं भ्रमयेद् बुधः ॥ ९६ ॥
भागभागोत्तरक्षेत्रापेक्षया चतसृष्वपि ।
गण्डिकासु विधातव्यं विधिवद् वृत्त[4]वर्तनम् ॥ ९७ ॥
मूला[5]ल्लुमायाः क्षेत्रस्य पञ्चमांशत्रयेऽथवा ।
पृथुत्वार्धे लुमापृष्ठलेखावृत्तद्वयं यथा ॥ ९८ ॥
संपतत्येवमालिख्य शेषं पूर्ववदाचरेत्
लुमाया मूलतः क्षेत्रसप्तमांशचतुष्टये ॥ ९९ ॥
पृथुत्वार्धे लुमापृष्ठलेखावृत्तद्वयं यथा ।
संपतत्येवमालिख्य षड्भागैः शेषमाचरेत् ॥ १०० ॥
नवांशपञ्चके यद्वा क्षेत्रस्यैव लुमादितः ।
पृथुत्वार्धे लुमापृष्ठद्वयलेखां निवेशयेत् ॥ १०१ ॥
शेषैः षड्भिस्ततो भागैरन्यत् तु प्राग्वदाचरेत् ।
भागार्धं निर्गमः कार्यः प्रासादानां कनीयसाम् ॥ १०२ ॥
छाद्यकस्यैव भा[6]गैस्तु ज्यायसां निर्गमो यतः ।
तदन्तरे ये प्रासादास्तेषां क्षेत्रानुसारतः ॥ १०३ ॥
छाद्यस्य निर्गमः कार्यो विद्वद्भिरनुपाततः ।
निर्गमस्य त्रिभागेन कनीयाञ् छाद्यकोदयः ॥ १०४ ॥

---

१ ख. द. मायता । २ ख. र्ध; द. र्द्धे । ३ ख. ध्यं यतः स्थितम् । ४ द. त्ति । ५ ख. लानुमा; द. °नु । ६ क. गाः स्युर्निर्गमोक्षायसां मतम् (?) ।

अर्धभागेन परमो भाज्यं षड्भिस्तदन्तरम्।
अन्ये भागोत्तराः पञ्च सप्तैव मुदया मताः॥ १०५॥

इदानीमभिधास्यामः सिंहकर्णस्य लक्षणम्।
छायो[1]दयोदयः स स्याद् दशभिस्तं विभाजयेत्॥ १०६॥

तैः स्यात् षोडशभिर्भागैस्तस्यैव तलविस्तृतिः।
ऊर्ध्वतश्चतुरो भागांस्त्यक्त्वा शङ्कुं निवेशयेत्॥ १०७॥

चतुर[2]श्रीकृते क्षेत्रे कर्णेनारभ्य शङ्कुतः।
ततो वृत्तं लिखेत् पश्चाच्छङ्कुं समभिरोपयेत्॥ १०८॥

ऊर्ध्वदेशा[3]त् तु भागेन स स्याद् भागचतुष्टये।
लिखेद् वृत्तं त्रिभागोनत्र्यंशककर्टकोद्भवम्॥ १०९॥

तस्योपरिष्टात् तदनु ग्रीवा कार्यैकभागिनी।
गर्भे शृङ्गाग्रयोर्मध्ये[6] तिर्यग् भागद्वयं भवेत्॥ ११०॥

मध्ये कर्णाग्रयोस्तिर्यक् कार्यं भागत्रयं[7] बुधैः।
ग्रीवाया उपरिष्टाच्च भागमेकं शिखा भवेत्॥ १११॥

शिखाग्रमुपरिष्टाच्च कर्तव्यं गर्भसङ्गतम्।
शिखाग्रमूर्ध्वतस्तद्वदर्धभागावलम्बितम्॥ ११२॥

भागावलम्बि कर्णाग्रं स्कन्धाग्रं तावदेव तु।
स्यात् कर्णखण्डयोर्मूलं स्कन्धदेशस्य सङ्गतम्॥ ११३॥

स्वस्ति[10]को त्र्यंशविस्तारायामः प्राग्वृत्तमध्यतः[11]।
एवं शङ्कुमधःसूत्रादूर्ध्वं भागो[12](गे) निवेशयेत्॥ ११४॥

भागे निवेशितं कुर्यात् पूर्ववृत्ता[13]द्यशेषतः।
स्वस्तिकान्तं च[14] पूर्वोक्तं पूर्ववत् सर्व[15]माचरेत्॥ ११५॥

---

१ द. यो। २ ख. श्रांशिकक्षे; द. °स्रंशिकक्षेत्रे। ३ ख. शौ त्रिभागोनैः स; द. °शो त्रिभागोनैः स°। ४ ख. द. य। ५ ख. कैः। ६ ख. द. °ध्यं। ७ द. य। ८ ख. र्ध; द. °र्द्धं°। ९ ख. द. ग। १० ख. द. कस्कन्धवि। ११ द. ख. मः। १२ ख. द. गर्भं नि°। १३ क. त्या। १४ ख. द. तु। १५ ख. द. मुपा।

तलसूत्रादुपर्यंशैश्चतुर्भिर्गर्भतः समः( मम् )
द्वाभ्यां द्वाभ्यामुभयतो भागाभ्यां तिर्यगेव च ॥ ११६ ॥

भागेन तद्वदेवाधःसूत्रादुपरि गर्भतः।
चतुर्भिश्च चतुर्भिश्च भागैरुभयतः समम् ॥ ११७ ॥

वृत्तार्धानि लिखेद्[1]ेककर्णयुक्तानि पूर्ववत्।
एकशृङ्गाणि च ग्रीवास्वस्तिकार्धयुतानि च ॥ ११८ ॥

तलसूत्रबहिर्देशाद् बाह्यवृत्तसमुद्भवः[2]।
पदत्रयप्रविष्टैः[3] स्यात् पार्ष्णिरत्र परिस्फुटः[4] ॥ ११९ ॥

त्रिवलीललितो नाम सिंहकर्णोऽयमीरितः।
दशभागीकृते प्राग्वदुदये तत्प्रमाणतः ॥ १२० ॥

चतुर्दशांशविस्तीर्णे कर्णे सार्धे वलिर्भवेत्।
दशभागोच्छ्रिते प्राग्वत् स्यात् त्रयोदशविस्तृतः ॥ १२१ ॥

क्षेत्र एकवलिर्नाम सिंहकर्णस्तथापरः।
एते शोभान्विताः कार्यास्त्र्यश्रसंवरणास्त्रयः ॥ १२२ ॥

प्रासादानामिति निगदितं द्वारमानं निवेशैः[5]
स्तम्भानां च स्फुटमिह वितानानि तेषां लुमाश्च।
वृत्तच्छायोच्छ्रितिरभिहिता छाद्यसंस्था लुमाश्च
प्रोक्ताः सप्त प्रथितमपरं सिंहकर्णप्रमाणम् ॥ १२३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

प्रासादद्वारस्तम्भनिवेशवितानलुमालक्षणवृत्तच्छाद्यलुमासिंहकर्णप्रमाणं नाम

चतुष्पञ्चाशोऽध्यायः ॥

---

१ क. द्वे। २ द. वाः। ३ क. ष्टा। ४ क. पुरः स्फु। ५ द. शैं।

# अथ मेर्वादिषोडशप्रासादादिलक्षणं नाम पञ्चपञ्चाशोऽध्यायः ।

प्रासादानामतो लक्ष्म षोडशानां विशेषतः ।
ज्येष्ठमध्यकनिष्ठानां यथावदभिदध्महे ॥ १ ॥

विभज्यते यथा[1] येन प्रागश्चोर्ध्वं विधीयते( ? ) ।
यावद्[2] यस्य प्रमाणं तु[3] तथा तत् तस्य कथ्यते ॥ २ ॥

मेरुः प्रासादराजश्च कैलासश्च हरे[4]प्रियः ।
सर्वतोभद्रकश्चैव विमानच्छदनन्दनौ ॥ ३ ॥

स्वस्तिको मुक्तकोणश्च श्रीवत्सो हंससंज्ञितः ।
रुचको वर्धमानश्च गरुडश्च[5] गजस्तथा ॥ ४ ॥

मृगराजश्च पद्मश्च वलभी [6]चेति ते स्मृताः ।
न त्रयस्त्रिंशतोऽधस्तान्नापि पञ्चाशतः परा ॥ ५ ॥

सङ्ख्या भवति हस्तानां मेरोरिति पुराविदः ।
विभज्य दशधा क्षेत्रं[7] शृङ्गं कुर्याद् द्विभागिकम् ॥ ६ ॥

कृत्वा षड्भागिकं मध्यं निर्गमस्तत्र दीयते ।
भागस्य षोडशांशेन विधेयं सलिलान्तरम् ॥ ७ ॥

पदैः षोडशभिर्गर्भे विधेया चास्य विस्तृतिः ।
प्रासादभित्ति( : )पदिका पदविस्तृतमन्तरम् ( ? ) ॥ ८ ॥

[8]पदिका बाह्यभित्तिः स्यादित्येष स तदा[9] स्मृतः ।
द्विपदो वेदिकाबन्धो जङ्घा पञ्चपदोदया ॥ ९ ॥

पदार्धेन पदार्धेन मेखलान्तरपत्रके ।
[10]शृङ्गोच्छ्रितिस्त्रिभिर्भागैर्नवभिः शिखरोच्छ्रितिः ॥ १० ॥

शिखरस्यास्य कर्तव्यास्तज्ज्ञैः षोडश भूमिकाः ।
स्कन्धोंऽशैर्विस्तृतः षड्भिरंशेनोच्छ्रितमण्डकम् ॥ ११ ॥

---

१ क. था प्रायः प्रापे चोर्वे वि (?) । २ क. दस्य । ३ क. च । ४ क. रि । ५ क. डो गरुडस्त । ६ द. वे । ७ द. ति । ८ क. वाटिका । ९ द. धा । १० क. त्रिभागोच्छ्रि ।

ग्रीवा वंशोच्छ्रिता कार्या शिखरस्यादिविस्तृतौ ।
षड्[1]गुणेनैव[2] सूत्रेण वेणुकोशं समालिखेत् ॥ १२ ॥

विस्तृतेरपि[3] भद्रायाः कुर्याद् द्विगुणमुच्छ्रयम् ।
कुम्भं भागेन कुर्वीत प्रासादेष्वखि[4]लेष्वपि ॥ १३ ॥

एवमेष चतुःशृङ्गश्चतुर्द्वारोपशोभितः ।
मेरुर्मेरूपमः कार्यो वाञ्छता शुभमात्मनः ॥ १४ ॥

सर्वस्वर्णमयं मेरुं यद् द[5]त्त्वा पुण्यमाप्नुयात् ।
तमिष्टकाशैलमयं कृत्वा तदधिकं[6] भजेत् ॥ १५ ॥

मेरुः ॥

चतुरश्रीकृते क्षेत्रे सप्तविंशतिपाणिकम् ।
दशधा विभजेत् स स्यात् कैलासः पुण्यवर्धनः ॥ १६ ॥

ब्रह्मकोष्ठगतो गर्भः शेषं भित्त्यन्धकारिका ।
चतुर्भागं भवेद् भद्रं मूलकर्णौ त्रिभागिकौ ॥ १७ ॥

सप्तभागोच्छ्रिता जङ्घा मेखला चार्धभागिका ।
भागेनान्तरपत्रं स्याद् [7]भागेनाण्डकमुच्छ्रितम् ॥ १८ ॥

ग्रीवाग्रभागमुत्सेधाच्छिखरं दशकोच्छ्रितम् ।
अर्ध[8]षष्ठांशविस्तारः स्कन्धः कैलाससंज्ञिते ॥ १९ ॥

अस्मिन्नन्तरपत्रे तु सूत्रं दत्त्वा सुताडितम् ।
त्रिगुणेन लिखेत् तेन वेणुकोशं मनोरमम् ॥ २० ॥

अष्टभूम्युच्छ्रयः श्रीमान् मञ्जर्या च विराजितः ।
उच्छ्रयश्चास्य कर्तव्यो द्विगुणः श्रियमिच्छता ॥ २१ ॥

कार्यं षड्भूमिकं चास्य भद्रं भागार्धनिर्गतम् ।
पाकः सिंहकर्ण[9]स्थुः(?) समाप्तिर्नायकेन च ॥ २२ ॥

कैलास एष कथितो विशेषेण हरप्रियः ।

कैलासः ॥

---

१ क. षड्गणा तेनु सू । २ द. न । ३ द. प । ४ द. पिब । ५ क. पदत्वात् पु । ६ द. पं । ७ क. वे । ८ क. र्ध । ९ द. र्णा ।

इदानीं सर्वतोभद्रः प्रासादः परिकीर्त्यते ॥ २३ ॥

स स्यात् षड्विंशतिं हस्तान् परमः परिमाणतः ।
जठरं बाह्यसीमा च भित्तयो लम्बकारिकाः ॥ २४ ॥

जङ्घोत्सेधश्च कर्णौ च यथा मेरोस्तथा स्मृताः ।
तथैव भद्रविस्तारैः कार्यौ[1] भागार्धनिर्गतः ॥ २५ ॥

रथिकैका चतुर्भागा ततः[2] सार्धद्विभागिका[3] ।
तासां परस्परं ज्ञेयो[4] भागभागं विधीयते(?) ॥ २६ ॥

षड्भागात् विस्तृतं[5] कार्यं शिखरं सप्तमो[6]च्छ्रितम् ।
षड्भिर्दशभिर्भागैः स्यान्मूलजा स्कन्धविस्तृतिः(?) ॥ २७ ॥

ग्रीवार्धभागमुत्सेधादण्डकं भागमुच्छ्रितम् ।
मूलसूत्रानुसारेण च्छेदः संयुज्यते यथा ॥ २८ ॥

अस्य रेखा तथा कार्या सर्व[7]श्रेयःप्रसाधनी[8]
मेरोरस्य च शृङ्गाणि सिंहकर्णै[9]र्विभूषयेत् ॥ २९ ॥

मञ्जरीं पद्मकोशाग्रतुल्यां सर्वत्र कारयेत् ।
जयं लक्ष्मीं यशः कीर्त्तिं सर्वानि(णी)ष्टफलानि च ॥ ३० ॥

करोति सर्वतो भद्रं सर्वतोभद्रकः कृतः ।

सर्वतोभद्रः ॥

चतुरश्रीकृते क्षेत्रे विभागशतभाजिते ॥ ३१ ॥

विमानं विभजेत् प्राज्ञः श्रेयःपुष्टिसुखावहम् ।
भद्रैश्चतुर्भिस्तत् कुर्यात् कर्णप्राग्ग्रीवकैस्तथा ॥ ३२ ॥

पञ्चभूमिर्भवत्येष यदि वा त्रिविधां भवेत् ।
हस्तां[11]स्त्रिंशद् भवेज्ज्येष्ठो मध्यमः पञ्चविंशतिः ॥ ३३ ॥

स्यादेकविंशतिर्हस्तात् कनीयान् षोडशाथवा ।
जातिशुद्धो भवेदेको मञ्जर्या वै[12] परो भवेत् ॥ ३४ ॥

---

१ क. र्या । २ द. त् । ३ ख. द. काः । ४ क. यो भागं । ५ द. स्तृ° । ६ ख. वो, द. यो ।
७ क. र्वाः, ८ क. नीः । ९ द. कर्णौ वि° । १० द. धो । ११ द. स्त । १२ द. च ।

मिश्रकोऽन्यो विमानानामिति संख्या त्रिधोदिता ।
ज्येष्ठो मिश्रकनिर्माणः स च कौ[1]लाशभद्र[2]कृत्(?) ॥ ३५ ॥

मध्यमो जातिशुद्धः स्यात् कनीयान् मञ्जरीयु[3]तः ।
पञ्चभागयुतं भद्रं विस्तरेण प्रकीर्तितम् ॥ ३६ ॥

कर्णप्राग्ग्रीववविस्तारः कर्तव्यो भागसंमितः ।
भागार्धं क्षोभणे[4] कार्यं तलिपं तज्जलान्तरं(?) ॥ ३७ ॥

गुप्तकर्णं तु कर्तव्यं यदि[5]च्छेल्लक्षणान्वितम् ।
तस्माद् भद्रस्य नि[6]ष्कंशं(?) भागेनैकेन कारयेत् ॥ ३८ ॥

मिश्रकस्य चतुर्भागं भद्रं कुर्याद् विचक्षणः ।
पञ्चभागोच्छ्रिता जङ्घा खुरपिण्डकया सह ॥ ३९ ॥

द्विभा(गा) रथिका कार्या भूमिः स्याच्चतुरंशका[7] ।
द्वितीयार्धांशहीना च तृतीया भूमिरिष्यते ॥ ४० ॥

चतुर्थे(र्थी) तु त्रिभिर्भागैरर्धहीना तु पञ्चमी ।
उदयो भूमिकाया यः कूटं कुर्यात् तदर्धतः ॥ ४१ ॥

अर्धेन [8]कुम्भिकां कुर्यादुच्छा[9]लकसमन्विताम् ।
[10]ऊर्ध्वभवस्तु(?) पञ्चम्या वेदिका भागमुच्छ्रिता ॥ ४२ ॥

घण्टा षड्भागविस्तारा कार्या भागद्वयोच्छ्रिता[11] ।
घण्टोत्सेधं त्रिभिर्भागैर्विभजेत् तदनन्तरम् ॥ ४३ ॥

भागिकानि प्रकुर्वीत कण्ठग्रीवाण्डकानि च ।
भागं कण्ठप्रदे[12]शः स्याद् [13]दण्डिकायाः समुच्छ्रितिः ॥ ४४ ॥

घण्टार्धेन विधातव्या द्विभागा कलशोच्छ्रितिः ।
सूरसेनादिकं सर्वं कर्तव्यं पूर्ववत् तथा ॥ ४५ ॥

भद्रं मनोरमैश्चेह सिंहकर्णैर्विभूषयेत् ।
पञ्च[14]व्यासेन सूत्रेण पद्मकोशं समालिखेत् ॥ ४६ ॥

---

१ द. कै। २ द. व। ३ द. वितः। ४ द. °णा कार्या यच्छेषं तद् जलांतरम् ॥ ५ द. दी। ६ द. ष्का, ७ द. काः, ८ द. स्त°। ९ द. त्का। १० द. ऊर्ध्वं भवतु। ११ द. ताः। १२ द. शाः। १३ द. च्चद्रि। १४ द. न्या।

लतान्[1]तयो(?)भवेदेषां लताभिस्तं प्रकल्पयेत् ।
मिश्रको मिश्रितैरङ्गैः शुद्धः स्याद् भूमिकान्वितः ॥ ४७ ॥

विमानः ॥

नन्दनस्य भवेत् सीमा द्वात्रिंशद्धस्तनिर्मितः[2] ।
अष्टाष्टकविभागेन चतुःषष्टिपदो हि सः ॥ ४८ ॥
भागैश्चतुर्भिर्गर्भोऽस्य शेषं भित्त्यन्धकारिका[3] ।
भद्रं गर्भसमं कार्यं तदूर्ध्वेनास्य निर्गमः ॥ ४९ ॥
द्वौ रथौ पार्श्वतो भूयः सर्वतः कर्णसूत्रतः ।
पञ्चभागोच्छ्रिता जङ्घा मेखला भागसंमिता[4] ॥ ५० ॥
षड्भ(भू)मिरेष भूमिः स्यादेकैका द्वादशांशका[5] ।
रेखास्कन्धा[6]ण्डकादीनां कैलासे(न) समाकृतिः ॥ ५१ ॥
नन्दनो नन्दयत्येष समृद्धा(द्धया) हन्ति चापदः ।

नन्दनः ॥

चतुरश्रीकृते क्षेत्रे पञ्चविं(शति) हस्तके ॥ ५२ ॥
सूत्रपातं ततः कुर्यात् कर्मायतमुखायतम्(?) ।
ततः सीमार्धसूत्रेण सम्यग् वृत्तं समालिखेत् ॥ ५३ ॥
ततस्तदष्टाविंशत्या भजेद् भागैर्यथापदम् ।
निर्मापये शालार्धेन (त् तदर्धेन शाला)दिक्सूत्रसंश्रिताः ॥ ५४ ॥
तासां तु मध्यगाः कार्या एकैकस्य रथास्त्रयः ।
अन्ये चार्धरथाः कार्याः शालाकर्णसमाश्रिताः ॥ ५५ ॥
भागषट्कोच्छ्रिता जङ्घा भागार्धेन तु मेखलाः ।
भागेनान्तरपत्रं स्याद् भागं चोर्ध्वं वृत्तमण्डकम् ॥ ५६ ॥
अर्धभागोच्छ्रिता[11] जीवा विष्कम्भेन चतुष्पदाम्[12](?) ।
शिखरस्योच्छ्रयो भागैरेकादशभिरिष्यते ॥ ५७ ॥

---

१ द. तु(त्र) । २ द. विस्तृता । ३ द. काः । ४ द. ताः । ५ द. °डकाः । ६ द. °न्धांश° । ७ द. °र्णा । ८ द. °त्ततः शालाः कर्ण° । ९ द. प. । १० द. चोच्छ्रितमंडपं ॥ ५० ॥ ११ द. तो । १२ द. दाः ।

सर्वेषामेव लतिना [1]मात्रिधा द्विगुणो हि सः (?) ।
विस्ताराद्[2] द्विगुणं सूत्रं स्कन्धाद्यं [3]चापि षड्गुणम् ॥ ५८ ॥
सुत्तानितं(?) समाकृष्य पद्मकोशं समालिखेत् ।
स पञ्चविंशतिर्हस्ता ज्येष्ठः[4] षोडश मध्यमः ॥ ५९ ॥
कनीयान् द्वादशकरच्छस्यो[5](?) विजानता ।
ज्येष्ठस्य भागसंख्येयमेतदर्धेन मध्यमः ॥ ६० ॥
मध्यमस्य तथार्धेन कनीयान् भागसंख्यया ।
भागषट्कमिता जङ्घा ज्येष्ठस्य परिकीर्तिता[6] ॥ ६१ ॥
सप्तभागोच्छ्रिता सा स्यान्मध्यमे सकनीयसि ।
सर्वेषां लतिनामेष क्षेत्रेण विधिरी[7]रितः ॥ ६२ ॥
स्वस्तिकोऽयं समाख्यातः स्वस्तिश्रेयस्करो[8] नृणाम् ।

स्वस्तिकः ॥

इदानीं मुक्त[9]कोणस्य सू(ल)क्षम ब्रूमः स तु [10] त्रिधा ॥ ६३ ॥
षोडश द्वादशाष्टौ च हस्तसंख्या परस्य च ।
ज्येष्ठः षोडशभिर्भागैर्मध्यो[11] द्वादशभिर्भवेत् ॥ ६४ ॥
कनीयानष्टभिः प्रोक्तः प्रासादो मुक्तकोणकः ।
मुक्तकोणस्वस्तिकयोरिदमेवान्तरं भवेत् ॥ ६५ ॥
स्वस्तिको वर्तुलस्तत्र चतुरश्रोऽपरः स्मृतः ।
पञ्चभागो[12]न्नता जङ्घा द्वौ भागौ रथिका भवेत् ॥ ६६ ॥
भागैश्चतुर्भिः कर्तव्या द्वितीया तस्य भूमिका ।
येषास्त्वर्धार्धभागेन विधेयास्त(द्व ?)स्य भूमिकाः ॥ ६७ ॥
विधाय नवधा गर्भस्तै[13]स्त्रयोदशभिर्भवे[14]त् ।
जङ्घापादोनपञ्चाशैराद्यैकःऽपणिकौ[15](?)भवेत् ॥ ६८ ॥

[16]मुक्तकोणः ।

विस्तारं दशधा कृत्वा षड्भागं मध्यमालिखेत् ।

---

१ द. मास्कंधाद् । २ द. त्रि । ३ द. श्रद्धापि । ४ द ष्ट । ५ द.ः प्रारब्धव्यो विजानता । ६ द. ताः । ७ द. वी° । ८ द. रा । ९ द. क्त । १० द. च । ११ द. ध्ये । १२ द. च्छ्रोप्ता । १३ द. गर्भे तंत्रयो° । १४ द. जे । १५ द. का । १६ द. शु° ।

[1]कर्णा द्विर्भागिको(?)मध्यं चतुर्धा विभजेत् पुनः ॥ ६९ ॥

त[2]द्वन्मध्ये कृतौ द्व्यंशौ भागिकौ वामदक्षिणौ ।
अङ्गुलीकरसंख्यातै[3]र्विधेयो रथनिर्गमः ॥ ७० ॥

प्राग्ग्रीवैर्विकटैः स्वष्टैः स्तम्भैः स[4]द्भूपकर्मभिः(?) ।
एवं गु[5]णसमायुक्तः श्रीवत्सः[6] सुखदो भवेत् ॥ ७१ ॥

द्व्यङ्गुलं त्र्यङ्गुलं वापि चतुरङ्गुलमेव च ।
उदकान्तरकं कार्यं श्रीवत्सो नन्दनो(त्से नन्दने)पि च ॥ ७२ ॥

श्रीवत्सः ॥

विस्तारैर्दशधा भक्तैः षड्भा(गा)मञ्जरी भवेत् ।
सर्वतोभद्रवन्मूलकर्णावस्य द्विभागिकौ ॥ ७३ ॥

उदकान्तरमन्य(प्य)स्य श्रीवत्सस्यैवं कल्पयेत् ।
हंसोऽयं कीर्तितः सम्यक् शुभदो लक्षणान्वितः ॥ ७४ ॥

हंसः ॥

रुचकोऽप्येवमेव स्यादुदकान्तरवर्जिता(र्त)म् ।
भित्तयश्चतुरंशेन गर्भो व्यासार्धसं[9]मतः ॥ ७५ ॥

रुचकः ॥

चतुरश्रीकृते क्षेत्रे विभजेद् दशभिः पदैः ।
विदध्या[10]द्वर्धमानाख्यं तत्र भ्रान्तमनुक्रमात् ॥ ७६ ॥

भद्र[11]स्यं च भवेद् भागैश्चतुर्भिः परिविस्तृतम् ।
एकैकेन भागेन द्वौ रथौ वामदक्षिणौ ॥ ७७ ॥

द्विभागविस्तृतौ कर्णौ निर्गमः स्यात् कराङ्गुलैः ।
वर्धमा[12]नैः क्रियायुक्तो यशोलक्ष्मीं [13]विवर्धयेत् ॥ ७८ ॥

रुचको वर्धमानो वा श्रीवत्सो हंस एव च ।
य एको रोचते तेषु न्यसेत् तं गरुडे सुधीः ॥ ७९ ॥

---

१ द. कर्णो द्विभागिकौ । २ द. तत्र मध्ये कृतो द्व्यंशो । ३ द. तौ वि° । ४ द. सद्रूप° । ५ द. णः । ६ द. त्ससुभवो । ७ द. स्यै । ८ द. तः । ९ द. मितः । १० द. द्व° । ११ द. मस्य । १२ द. न । १३ द. च ।

पक्षावेतस्य कर्तव्यौ प्रासादार्धविनिर्गमौ[1]।
नासिकां वैनतेयस्य त्रिगर्भां कारयेदपि ॥ ८० ॥

गरुडः ॥

चतुःषष्टिपदे क्षेत्रे प्रासादं विभजेच्छुभम् ।
क्षेत्रार्धेन च सूत्रेण पृष्ठतो वृत्तमालिखेत् ॥ ८१ ॥
भागैश्चतुर्भिर्जङ्घास्य मेखलाचार्धभागिका ।
पुरतः †सूरसो[2]यं(?) पृष्ठतश्च गजाकृतिः ॥ ८२ ॥

गजः ॥

चतुःषष्टिपदः सिंहो भद्रं भागचतुष्टयम् ।
द्व्यंशकौ मूलकर्णौ च गर्भः षोडशभिः पदैः ॥ ८३ ॥
विस्तारार्धे भवेज्जङ्घा मेखला पदिका भवेत् ।
एकैका रथिका चास्य भवेद् भागत्रयोच्छ्रिता[3] ॥ ८४ ॥
सर्वतोभद्रवर्चा[4]स्या रेखाग्रीवाण्डकादिकम् ।
सिंहाक्रान्तैस्तथा भद्रैः प्रासादः सिंह उच्यते ॥ ८५ ॥
विक्रमार्ज[5]वशीलानां प्रासादोऽयं शुभावहः ।

सिंहः ॥

पद्मस्य हस्तसंख्या स्यात्[6] षोडश द्वादशाथवा ॥ ८६ ॥
वर्तुलः स च कर्तव्यः सूत्रं तु स्वस्तिके यथा ।
सर्वे रथाः स्मृताः पद्मपत्राकृतिमनोरमाः[7] ॥ ८७ ॥
उदकान्तरकं कुर्याच्छ्रे[8]यसे नन्दने यथा ।

पद्मकः ॥

स्वस्तिकस्य यथा पूर्वं कथितं मानलक्षणम् ॥ ८८ ॥
तेनैव §लक्षलितैः[9] सर्वो(?)विदधीत विचक्षणः ।
यथामूलविभक्तै[10]स्तु लतिषु स्वस्ति[11]कादिषु ॥ ८९ ॥

१ द. तौ । २ द. सेनोयं । ३ द. ताः । ४ द. त्वस्याद्रे° । ५ द. न । ६ द. या । ७ द. हराः । ८ द. च्छ्रीवत्से नन्दने । ९ द. लतिनः सर्वान् वि° । १० द. क्ति । ११ द. स्वि ।

† 'सूकरास्योऽयमू' इति स्यात् । § 'लतिकाः सर्वा' इति स्यात् ।

यथास्कन्धविभागोऽपि[1] रेखामध्यविभागतः।
स्वस्तिकाङ्गो विधातव्यः शुकनाशो( सो )च्छयाच्छुभः[2] ॥ ९० ॥
प्रासादानां स भागैः स्यात् सप्तभिर्विहितः श्रिये[3]।
विमाने स धराव्यंशन्यूनः[4] कार्यो विपश्चिता ॥ ९१ ॥
कैलासो च( सा च )तुरंशोना विधेना( या ) शुकनासिका[5]।
सर्वतोभद्रसिंहाख्यौ[6] मेरूणां तु विशेषतः ॥ ९२ ॥
षड्भिर्भागैर्विना कार्या शुकनासा विजानता।
प्रासादोचेन[7] सन्धारो विमानाद्याः प्रकीर्तिताः ॥ ९३ ॥
विस्तारार्धेन तद्गर्भो यच्छेषं तेन भित्तयः।
प्रासाद( सि ? )जङ्घोच्छ्रयेण तुल्यो गर्भतुलोदयः ॥ ९४ ॥
सभित्तिर्गर्भतुल्यः[8] स्यात् सन्धारेषु तुलोदयः।
स विधेयः पुनर्व्यासाद् यदि वा किञ्चिदुन्नतः ॥ ९५ ॥
मूलसूत्रं तु दशधा ++[10]( मश्य ? )समालिखेत्।
गर्भसूत्रं प्रतिष्टाप्य सिंहकर्ण[9] प्रकल्पयेत् ॥ ९६ ॥
सार्धभागेन सूत्रेण मध्यमस्य समालिखेत्।
उरो द्विभागतुल्यं तु मस्तकं भागमुच्छ्रितम् ॥ ९७ ॥
अर्धेन वोच्छ्रयस्तस्याः पक्षोच्छ्रायो[11] द्विभागिकाः[12]।
उरो (लेख्ये[13] ? ) च सीमान्ते सूत्रेणच्छन्दमादिशेत् ॥ ९८ ॥
नवधा दशधा चैव सिंहकर्मा( र्णा )वुभौ स्मृतौ।
एकषड्विस्तृतो भागा( ? )[14] उदयात् पञ्चभागिकः ॥ ९९ ॥
सूरसेनो द्वितीयस्तु स्यात् समोदयविस्तृतिः
उदयात् सार्धविस्तीर्ण[15] सिंहकर्णस्त्रिसंकुला[16]( ? ) ॥ १०० ॥
कामलान् मल्लकांश्चान्यान् सिंहकर्णात् प्रलोप( कल्प )येत्[17]।
प्रासादानां हि सर्वेषां सर्वमेतद् विभूषणम् ॥ १०१ ॥

---

१ द. त। २ द. यः शुभः। ३ द. यै। ४ द. शिखरा त्र्यंश न्यून°। ५ द. काः। ६ द. ख्य। ७ द. प्रसादा येन सांधारा°। ८ द. ग। ९ द. सा। १० द. कृत्वा मत्स्यं। ११ द. यो। १२ द. कः। १३ द. °ख्ये। १४ द. दु। १५ द. र्णा। १६ द. संकलाः। १७ द. न् प्रलेपयेत् ॥।

यस्य यत्रोचितं स्थानं तत् तत्र विनिवेशयेत् ।
निर्मितौ[1] वलभेस्तिर्यक् सूत्रं कुर्वीत सप्तधा ॥ १०२ ॥

पञ्चभागांश्च मुखतस्तेनैवांशेन कल्पयेत् ।
मेखलान्तरपत्रे च [2]जम्भाकुम्भकमेव च ॥ १०३ ॥

पञ्चभागोच्छ्रितं कुर्यात् तद्वच्छिखरमुच्छ्रितम् ।
कीर्तितानि विमानानि यान्येव सुरवर्त्मनि ॥ १०४ ॥

तान्येव स्थावरत्वेन प्रासादा इति विश्रुताः ।
महेश्वरस्य कैलासो विष्णोस्तु[3] गरुडाभिधः ॥ १०५ ॥

कार्यः प्रजापतेः पद्मो गणनाथस्य च द्विपः ।
न खल्वेतेऽन्यदेवानां विधातुमुचिताः स्मृताः ॥ १०६ ॥

यस्तु त्रिविष्टपः स स्यात् सर्वदेवनिकेतनः ।
अस्मात् तु येऽन्ये प्रासादाः स्मृतास्तेऽनेकरूपिणः ॥ १०७ ॥

सर्वेषामेव देवानामभेदेन भवन्ति ते ।
[4]जगत्यां विस्तरः कार्यः प्रासादोच्छ्रयसंमितः ॥ १०८ ॥

गर्भार्धेनोच्छ्रयस्तस्याः[5] शुभदः परिकीर्तितः ।
मण्डपस्य षडंशार्धो[6](?)पञ्चमांशादथ[7] स्मृतः ॥ १०९ ॥

कर्णप्रासादकाः कार्याः प्रासादस्य त्रिभागतः ।
पूर्वापरमुखाः कार्या एते[8] याम्योत्तराननाः ॥ ११० ॥

ऐन्द्रे याम्ये वारुणे च कौबेरे च यथाक्रमम् ।
दिग्भागेषु चतुर्ष्वेषु[9] वलभीं [10]विनिवेशयेत् ॥ १११ ॥

गर्भविस्तारविस्तीर्णां द्वौ त्रिभागौ मुखायताम् ।
इति [11]बाह्यपरीवारे जङ्घा प्रासादमानतः ॥ ११२ ॥

तीर्यगायतमारोप्य सूत्रं गर्भेण मण्डपे ।
(गुरुकक्षोऽर्थे[12] ?) कर्तव्या गवाक्षस्तम्भसंयुताः ॥ ११३ ॥

---

१ द. निष्पत्त्यैव लभेत्ति° । २ द. जंघा । ३ द. श्च । ४ द. जगत्या विस्तृतः । ५ द. °स्य । ६ द. °शाद्धा । ७ द. व । ८ द. नैते । ९ द. थैं । १० द. च । ११ द. वास्य° । १२ द. °क्षाप्र° ।

प्रासादविस्तरात् कार्यो द्विगुणो मण्डपः सदा ।
मण्डपस्यस(स्व)[1]विस्तारा(द)[2]जगती द्विगुणा बहिः ॥ ११४ ॥

कर्णप्रासादकाः[3] कार्याः प्रासादस्यार्धतोऽपि वा ।
तेषामध्यर्धतः कुर्याद् वलभीनां निवेशनम् ॥ ११५ ॥

अनेन क्रमयोगेन बाह्याद् बाह्यं सुसंवृतम् ।
यदा(था) हि शोभते राजा केयूराङ्गदकुण्डलैः ॥ ११६ ॥

तथा प्रासादराजोऽयं शोभते भूषणैर्निजैः ।
ध्वास्यां[4]र्हस्यातिसौम्यस्य(?) श्रीकीर्तिविजयावहः ॥ ११७ ॥

अनेन विधिना न्यस्तः प्रासादः स्यात् सदा नृणाम् ।
आदित्यं पूर्वतो न्यस्येत् कुमारं पूर्वदक्षिणे ॥ ११८ ॥

दक्षिणे मातृदेवै(वाँ)[5]स्तु गजास्यं दक्षिणोपरि[6] ।
विन्यसेद् वारुणे गौरी[7] वायव्येऽपि च चण्डिकाम् ॥ ११९ ॥

विष्णुं कुबेरदिग्भागे तथैशान्यां महेश्वरम् ।
अन्येषामपि देवानां कथ्यते तु क्रमो[8]ऽधुना ॥ १२० ॥

तत्रै[9]शान्यां दिशि न्यस्येदीशानं लोकनायकम् ।
दानवानां निहन्तारं पूर्वस्यामपि वासवम् ॥ १२१ ॥

वैश्वानरं तथाग्नेय्यां धर्मराजं च दक्षिणे ।
नैर्ऋत्यां निर्ऋतिं न्यस्येत् प्रतीच्यां तु प्रचेतसम् ॥ १२२ ॥

वायुं वायव्यदिग्भागे कुबेरमपि चोत्तरे ।
अष्टौ ह्येते महात्मानो लोकपालाः प्रकीर्तिताः ॥ १२३ ॥

पालयन्ति[10] जगत् सर्वं स्वस्वस्थाने प्रतिष्ठिताः ।
पुर(कर्कट[11]? कर्वट)दुर्गेषु ग्रामेषु नगरेषु च ॥ १२४ ॥

क्रमेणानेन विन्यस्ताः स्युः प्रजानां सुखावहाः ।
न यत्र देवताबाधस्तत्र द्वारं प्रकल्पयेत् ॥ १२५ ॥

---

१ द. तु । २ द. ज्ज । ३ द. °का कार्या । ४ द. ध्वजाकश्चातिसौम्यश्च श्रीकीर्त्तिवि° । ५ द. वी । ६ द. °णापरे । ७ द. री । ८ द. भवे । ९ द. ईशान्यां दिशि वि° । १० द. °न्तु । ११ द. कर्वर° ।

प्रासादस्यानुसारेण भवेद् द्वारं शुभावहम् ।
अथातः प्रोच्यते सम्यग् द्वारमानमनुक्रमात्[१] ॥ १२६ ॥
ज्येष्ठमध्यकनिष्ठानां द्रव्यं[२] स्तम्भानुसङ्गतम् ।
एकहस्ते भवेद् द्वारं प्रासादे षोडशाङ्गुलम् ॥ १२७ ॥
द्विकरे द्विगुणं तत् स्यात् त्रिकरे द्विकरं शुभम् ।
चतुष्करे चतुःषष्टिरङ्गुलानि प्रशस्यते ॥ १२८ ॥
अत ऊर्ध्वं प्रतिकरं त्र्यङ्गुला वृद्धिरिष्यते ।
द्वारोदयकरैस्तुल्यान्यङ्गुलानि नियोजयेत् ॥ १२९ ॥
( षोह्यां[३]जयवान्यालर्ध ? ) ध्रुवके चतुर( र ? )ङ्गुले ।
विस्तारो द्विगुणस्तस्य स्तम्भपिण्[४]डं स एव हि ॥ १३० ॥
एकद्वित्रिचतुष्पञ्चषट्सप्तककरावधि[५] ।
द्वारविस्तारभागेन स्तम्भः सम्यग् विधीयते ॥ १३१ ॥
चतुर्भागेन कर्तव्या सीमास्तम्भ[६]ः प्रमाणतः( ? ) ।
तथा स्तम्भस्य बाहुल्याच्चतुर्भागविभागविना[७] ( ? ) ॥ १३२ ॥
[८]+भागौ तत्र कर्तव्यौ हीरग्रहणमुच्छ्रितम् ।
भागत्रयेण कर्तव्यः पट्टस्य[९] च समुच्छ्रयः ॥ १३३ ॥[१०]
[११]भागेनैकेन नीस्यातव्यविस्तारं भत्रिभागरच्यकिम् ( ? ) ।
पट्टहस्ते विधातव्यमङ्गुलद्वयनिर्गमम् ॥ १३४ ॥
[१२]+ड + + + + स्तारः स्तम्भतुल्यः प्रशस्यते ।
एकैकमङ्गुलं ( लौं[१३] ? )पट्टपार्श्वयोरधिकस्ततः ॥ १३५ ॥
प[१४]ट्टदस्य विस्तारः( ? )कार्यश्चतुर्भागविभाजितैः[१५] ।
भागेनैकेन चोत्सेधस्तुलाधारणमिष्यते ॥ १३६ ॥

---

१ द. मुपक° । २ द. व्य । ३ द. पेद्या बाहल्य सेन्यर्थ ध्रु° । ४ द. ण्ड । ५ द. धिः । ६ द. म्भप्र° । ७ द. विभाजितौ । ८ द. द्वौ भागौ तत्र कर्त्तव्यं° । ९ द. पदस्य । १० द. स्तंभपिंडत्रिभागोन पदस्य यदि वोच्छ्रयः । ११ द. भागेनैकेन तीरं स्याद्द्वास्तंभत्रिभागिकं । पदतस्तद्विधातव्यं त्र्यंगुलद्वयनिर्गमम् ॥ १२ द. स्तंभशीर्षस्य विस्तारः । १३ द. पादः । १४ द. पदस्य विस्तरः का° । १५ द. तान् ।

तुलाधारणकोत्सेधाच्चतुर्भागविभाजितात्।
भागमेकं परित्यज्य पिण्डस्तस्य विधीयते॥ १३७॥

मात्राहीना भवेन्मेढ्यां[1] तावन्न्यस्येच्छलान्तले (?)।
द्वौ भागौ मूलभागेन जयन्तीपिण्डविस्तरौ॥ १३८॥

इति हीरग्रहादीनां समासाल्लक्ष्मकीर्तनम्[2]।
पञ्चांशाभ्यधिकं[3] स्तम्भविस्तारस्थेन[4] कुम्भिका (?)॥ १३९॥

कुर्वीत स्तम्भतः सार्धा गर्ग[5](?)कुम्भस्य विस्तृतीः[6]।
अथवा स्तम्भकर्णेन स्तम्भाग्रद्विगुणा क्वचित्॥ १४०॥

पादोनस्तम्भविस्तारादग्रकुम्भे समुच्छ्रितिः।
स्तम्भविस्तारकर्णाद् वा यद्वा पिण्डोऽग्रकुम्भके॥ १४१॥

तस्य भागान् प्रवक्ष्यामो यथाकुम्भं[7] स युज्यते।
विभक्तोऽत्र[8] त्रिधा पिण्डो भागेनैकेन पुत्तली॥ १४२॥

चतुर्भिस्तस्य मध्यस्य[9] (द्यखं?)पद्मं समालिखेत्।
उच्छाले[10] पञ्चधा भक्ते त्रिभिरावर्तनं[11] + +॥ १४३॥

वर्तनं योषव्येत्(?) किञ्चिन्न च खल्वं समाचरेत्।
वर्तने कुम्भकुम्भौ[12] तु सूत्रं दत्त्वा सुतानितम्॥ १४४॥

पद्मनाला[13]समा स स्यान्न भवेत् पङ्क्तिवर्जिता[14] (?)।
नवाधोचाहा[15](?)लके भक्ते वीरगण्डस्तु भागिकः[16]॥ १४५॥

एकेनैकेन भागेन विधेया[17] पट्टिकद्दिका।
[18](ध्वसंछाकाल?)कर्तव्यं भागद्वितयसंमितम्॥ १४६॥

तलकुम्भकपिण्डं तु पञ्चधा प्रविभाजयेत्।
भागेनैकेन पद्मं स्याद् भागेन कलशं लिखेत्॥ १४७॥

---

१ द. ढ्या तां च न्यस्येच्छलाखले। २ द. °र्त्तितं। ३ द. पंचास्याभ्य°। ४ द. °रस्तेन कुंभिकाः। ५ द. मग्र°। ६ द. °तिः। ७ द. म्भः स युज्यते। ८ द. विभक्तान्नवधा पिंडान्भागेनैकेन चुंवली। ९ द. मध्यं स्याच्छेरां पद्मां स°। १० द. त्था°। ११ द. वर्त्त°। १२ द. °यक्षौ। १३ द. ल। १४ द. ताः। १५ द. °धो कालके। १६ द. दका। १७ द. विधेयं पट्टिकाद्वयं। १८ द. कालकं तथ कर्त्तव्यं।

द्वाभ्यां समालिखेत् कुम्भं भागेनैकेन पट्टिकाम् ।
वर्तमाना[1] चत्रा(?)कार्या शोभा स्यादस्य यावतः[2] ॥ १४८ ॥

एष कुम्भक्रमः प्रोक्तः स्तम्भपादे व्यवस्थितः ।
[3]तलपट्टस्य पिण्डस्तु भागपट्टसमो भवेत् ॥ १४९ ॥

द्रव्येष्वत्र हि सर्वेषु सम्यक् शोभा [4]विवक्षिता ।
न्यूनातिरिक्तमप्यस्मान्मानेष्वङ्गुलमाचरेत् ॥ १५० ॥

द्वारामुदयविस्तारो द्रव्यसंस्थानमेव च ।
पूर्वमेव यथोद्दिष्टं ( य ? त )था सर्वमनुस्मरेत् ॥ १५१ ॥

पिण्डेन त मूलशाखायां[5] द्वितीया प[6] विधीयते ।
सं[7]पायते सपादन प्रत्ययदेनाथ सार्धनरूपशाखा प्रशस्यते(?)॥१५२॥

[8]अर्धेन मूलशाखाः समा चैव बाह्यशाखा शाखां प्रकल्पयेत्(?) ।
ऊर्ध्वपञ्चमशाखाया ( तु ? ) सप्तमी नवमी च सा ॥ १५३ ॥

रूपशा[9] + + + + स्यान्न न्यूना नाधिकापि च ।
[10]विस्तरार्धं तु कर्तव्यः सर्वासामेव निर्गमः ॥ १५४ ॥

शाखाविस्तारविस्तीर्णा( नु ? न्यु )त्तरङ्गानि कारयेत् ।
सार्धेन ध्रुवशाखानां[11] पिण्डेनोदुम्बरोदयः ॥ १५५ ॥

उदुम्बरस्य पिण्डेन सिंहवक्त्राणि[12] कारयेत् ।
तदर्धं विलसन्धिः[13] स्यात् तत्समा भूमिरङ्गिका ॥ १५६ ॥

तलन्याससमः पट्टः पिण्डपूर्वव्यवस्थितः ।
कूटाकारैर्विचित्रैश्च शोभनै रूपकर्मभिः ॥ १५७ ॥

पत्रजातै[14]रनेकैश्च कण्ठं कुर्याद् यथेप्सितम् ।
पाचकः कटुतीक्ष्णाद्यैरनुसाररसैर्यथा ॥ १५८ ॥

---

१ द. °नोवताकार्या । २ द. ता । ३ द. तलपदस्य पिंडं तु भारपदसमो भवेत् ॥ ४ द. व्यवस्थिताः । ५ द. या । ६ द. पि । ७ द. सपादेनाथा सार्धेन रूप° । ८ द. अर्द्धेन मूलशाखाया खलत्रशाखा तु विस्तृताः ॥ ४७ ॥ रूपशाखा समाचैव बाह्यशाखां प्रकल्पयेत् । उर्ध्वं पंचमशाखाया सप्तमी नवमी च या ॥ ( अर्धेन मूलशाखाः ... नवमी च सा ॥ १५३ ) मूद्रित पाठः । ९ द. °शाखा समासा स्यात् । १० द. स्व विस्ताराद्धा तु । ११ द. °याः । १२ द. चक्राणि । १३ द. न्धी । १४ द. ते° ।

अन्वीक्ष्य विपचेत् तद्वत् स्थपतिः सर्वमाचरेत् ।
यदुक्तं यदनुक्तं च तत् समग्रमपि स्फुटम्[1] ॥ १५९ ॥
(युक्ता[2])युक्तं समालोच्य यथाशोभं समाचरेत् ।
आरभ्य मेरोरिनि षोडशैते प्रासादमुख्याः कथिता यथावत् ।
संक्षेपतो लक्ष्म तथा जगत्यां[3] द्वारादिसम्बन्धि च(द्वा?)
दारुमानम्[4] ॥ १६० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
मेर्वादिषोडशप्रासादलक्षण[5]जगतीलक्षण[6]द्वारादिकला नाम
(पञ्चमो ? पञ्चपञ्चाशो)ऽध्यायः ॥

---

## अथ रुचकादिचतुष्षष्टिप्रासादकः षट्पञ्चाशोऽध्यायः ।

अथातः सम्प्रवक्ष्यामि प्रासादाञ् शिखरान्वितान् ।
रुचकादींश्चतुःषष्टिं नामलक्षणतः क्रमात् ॥ १ ॥
पूर्वं[7] यानि विमानानि पञ्चोक्तान्यभवंस्ततः ।
नदाकारभृतः सर्वे[8] प्रासादाः पञ्चविंशतिः ॥ २ ॥
शिखरैर्विविधाकारैरेकेनाण्डेन भूषिताः ।
केचिदण्डत्रयोपेताः केचित् पञ्चाण्डकान्विताः ॥ ३ ॥
ईषद्भेदेन ते ज्ञेयाः प्रासादाः सर्वकामदाः ।
सौवर्णा राजताश्चैव देवानां सततं प्रियाः ॥ ४ ॥
मणिमुक्ताप्रवालाद्यैर्भूषणैः सुविभूषिताः ।
रीतिकाताम्रघोषाद्यैः पिशाचोरगरक्षसाम् ॥ ५ ॥
देवलोका भवन्त्येते कामस्वच्छन्दचारिणः ।
पाताले चापि निर्दिष्टाः पाषाणैः स्फटिकैस्तथा ॥ ६ ॥

---

१ द. स्फटं । २ द. मुक्तामुक्तं । ३ द. त्या । ४ द. नाम् । ५ द. णं । ६ द. णं ।
७ द. पूर्वे । ८ द. रा° ।

इष्टकाकाष्ठपाषाणैर्मर्त्यलोकेऽपि नन्दकाः ।
सुखदाश्च भवन्त्येते कर्तुः कारयितुस्तथा ॥ ७ ॥
लक्षणेनान्वितानेतान् कथयामो यथाविधि ।
पुराणां भूषणार्थाय भुक्तिमुक्तिप्रदा नृणाम् ॥ ८ ॥
रुचको भद्रकश्चैव हंसो हंसोद्भवस्तथा ।
प्रतिहंसस्तथा नन्दो[१] नन्द्यावर्तो धराधरः ॥ ९ ॥
वर्धमानोऽद्रिकूटश्च श्रीवत्सोऽथ त्रिकूटकः ।
मुक्तकोणो गजश्चैव गरुडः सिंह एव च ॥ १० ॥
भवश्च विभवश्चैव पद्मो मालाधरस्तथा ।
वज्रकः स्वस्तिकः शङ्कुर्मलयो मकरध्वजः ॥ ११ ॥
इत्येते नामतः प्रोक्ताः प्रासादाः पञ्चविंशतिः ।
एतेषां रूपनिर्माणं कथयामो यथाविधि[२] ॥ १२ ॥
रुचका(द्य[३])ष्टादशैषां चतुरश्राः प्रकीर्तिताः ।
भवश्च विभवश्चैव चतुरश्रायतोऽथवा[४] ॥ १३ ॥
पद्मो मालाधरश्चैव वृत्तावेतावुदाहृतौ ।
मलयो मकराख्योऽथ[५] द्वौ तु वृत्तायताविमौ ॥ १४ ॥
वज्रकः स्वस्तिकः शङ्कुरित्थमष्टाश्रयस्त्रयः ।
ललिताः[६] कथिता ह्येते ब्रूमोऽन्यान् मिश्रकानथ ॥ १५ ॥
सुभद्रो यौकिटश्च[७](?) सर्वतोभद्र एव च ।
सिंहकेसरि[८]संज्ञोऽन्यश्चित्रकूटो धराधरः ॥ १६ ॥
तिलकाख्यः स्वतिलकस्तथा[९] सर्वाङ्गसुन्दरः ।
नवामी मिश्रकाः प्रोक्ताः कथ्यन्ते (सांधकारिकाः[१०]?) ॥ १७
केसरी सर्वतोभद्रो नन्दनो नन्दिशालकः[११] ।
नन्दीशो[१२] मन्दिराख्यश्च श्रीवृक्षश्चामृतोद्भवः ॥ १८ ॥

---

१ द. न्द । २ द. धिः । ३ द. °द्याः षोड° । ४ द. तौ तथा । ५ द. मकरांकोऽथ । ६ द. ललितः क° । ७ द. °द्रोऽथ किरीटश्च स° । ८ द. °र । ९ द. श्रीति° । १० द. सां° । ११ द. नन्दशा° । १२ द. नंदशो मंद° ।

हिमवान् हेमकूटश्च कैलासः पृथिवीजयः ।
इन्द्रनीलो महानीलो भूधरो रत्नकूटकः ॥ १९ ॥
वैडूर्यः पद्मरागश्च वज्रको मुकुटोत्कटः ।
ऐरावतो राजहंसो गरुडो वृषभस्तथा ॥ २० ॥
मेरुः प्रासादराजश्च देवानामालयो हि सः ।
[1]+ संयोगे तु संधारान् कथयामो यथाविधि[2] ॥ २१ ॥
लतात्रिपुष्कराख्यौ च पञ्चवक्त्रश्चतुर्मुखः ।
नवात्मकश्च निर्गूढैः[3] प्रासादाः पञ्च संज्ञिताः ॥ २२ ॥
आद्यः पञ्चाण्डकः कार्यः प्रासादः केसरीति यः ।
सर्वतोभद्रको यस्तु विधेयः स नवाण्डकः ॥ २३ ॥
त्रयोदशाण्डकस्तु स्यान्नन्दनो नाम यो भवेत् ।
नन्दिशालस्तु यः प्रोक्तः स स्यात् सप्तदशाण्डकः ॥ २४ ॥
अण्डकैरेकविंशत्या नन्दीशः परिवारितः ।
पञ्चविंशाण्डकोपेतं मन्दरं कारयेद् बुधः ॥ २५ ॥
श्रीवृक्षः शस्यते चैतेष्वेकोनत्रिंशताण्डकैः[4] ।
स्यात् त्रयस्त्रिंशताण्डैस्तु प्रासादो ह्यमृतोद्भवः ॥ २६ ॥
अण्डकैः क्रियते सप्तत्रिंशता हिमवानपि ।
सैकया हेमकूटस्तु स्याच्चत्वारिंशताण्डकैः ॥ २७ ॥
पञ्चचत्वारिंशताण्डैः कैलासो नाम नामतः ।
भवत्येकोनपञ्चाशदण्डकः पृथिवीजयः ॥ २८ ॥
इन्द्रनीलश्च यः प्रोकारः (क्तः स त्रि)पञ्चशताण्डकैः ।
सप्तपञ्चाशता युक्तो महानीलस्तथाण्डकैः ॥ २९ ॥
एकषष्ट्यण्डकोपेतः प्रासादो भूधरो भवेत् ।
पञ्चषष्ट्यण्डकैर्युक्तो रत्नकूटः प्रशस्यते ॥ ३० ॥
नवषष्ठ्यण्डकः कार्यो वैदूर्यः[5] शुभलक्षणः ।
त्रिसप्तत्यण्डकयुतः पद्मरागो विधीयते ॥ ३१ ॥

१ द. संयोगेन तु सं॰ । २ द. धिः । ३ द. ॰ढ प्रा॰ । ४ द. प्येकोन॰ । ५ द. वैडूर्यः ।

अण्डकैः सप्तसप्तत्या प्रासादो विजया[1]भिधः ।
एकाशीत्यण्डकोपेतो विधेयो मुकुटोत्कटः ॥ ३२ ॥

ऐरावतस्तु पञ्चाशीत्यण्डकः परिकीर्तितः ।
नवाशीत्यण्डकैर्युक्तो राजहंसः प्रशस्यते ॥ ३३ ॥[2]

नवत्या सप्तयुतया प्रासादो वृषभो[3]ऽण्डकैः ।
शतेनैकोत्तरेणाण्डैर्मेरुः प्रासादराट् स्मृतः ॥ ३४ ॥

हरेर्हिरण्यगर्भस्य + +[4] + भास्करस्य च ।
मेरुरेष विधातव्यो नान्यस्य त्रिदिवौकसः ॥ ३५ ॥

मेरोः प्रासादराजस्य देवानामालयस्य च ।
कर्ता क्षत्रिय एवास्य वै[5]श्य( श्यो[6]ऽ )स्य स्थपतिर्भवेत् ॥ ३६ ॥

एवं विधीयमानेऽस्मिन् मेरौ द्वावपि नन्दतः ।
वास्तुशास्त्रविधिज्ञोऽपि क्षत्रियः स्थपति[7]र्यदि ॥ ३७ ॥

तदास्य सत्यं शौचं च विक्रमश्च विनश्यति ।
ईश्वरोऽपि यदा विप्रो मेरुप्रासादकृद् भवे[8]त् ॥ ३८ ॥

कर्तुः कारयितुः पीडा पूजा चास्य न तादृशी ।
ब्राह्मणः स्थपतिश्चा[9]स्य वास्तुशास्त्रे विशारदः ॥ ३९ ॥

वणि[8]क्कर्मणि वर्तेत धनवानपि यद्यसौ ।
सर्वविप्रेषु निर्दिष्टः[9] कर्ता स्थपतिरेव सः[10] ॥ ४० ॥

[11]तत्रस्था देवताः सर्वास्तस्य वृद्धिः कथञ्चन ।
वास्तुशास्त्रविधिज्ञोऽपि तत्तत्[12] कारयिता यदि[13] ॥ ४१ ॥

राजापि क्षत्रियः कर्ता मेरु( रो )र्भवेत् तदा ।
राष्ट्रभङ्गो भवेत् तस्य प्रजा यान्ति दिशो दश ॥ ४२ ॥

---

१ द. वज्रकाभिधः । २ द. त्रिनवत्यंडकैर्युक्तो गरुडाख्यः प्रशस्यते । ३ द. भा° । ४ द. °स्य हरण्य भा° । ५ द. वैश्यश्च स्थ° । ६ द. वे° । ७ द. °ति श्चेत्स्याद्वास्तुशास्त्र वि° । ८ वणिग्धर्मेन व° । ९ द. विद्विष्टः । १० द. च । ११ द. अपूज्या देवतास्तत्र न स्याद्वृष्टिः कदाचन । १२ द. शूद्रः । १३ द. दा ।

क्षत्रियेण नरेन्द्रेण कर्ता स्थपतिना यदि[1] (?) ।
मेरोः पूजा भवेत् तत्र[2] क्षत्रियोऽप्यक्षयं पदम् ॥ ४३ ॥
एकैकस्य च[3] यन्मानं सकर्णस्य[4] च यद्धशम् ।
प्रासादानां च सर्वेषां तत् सम्यगभिधीयते ॥ ४४ ॥
चतुरश्रीकृते क्षेत्रे चतुर्भागविवर्जिते[5] ।
भागिका सर्वतो भित्तिः शेषं गर्भगृहं भवेत् ॥ ४५ ॥
तस्याग्रतः पुनः कार्यो भागद्वयविनिर्गतः ।
विस्तारेण त्रिभागश्च प्राग्ग्रीवः स्तम्भभूषितः ॥ ४६ ॥
पीठोत्सेधस्य भागेन भवेज्जङ्घा द्विभागिका ।
भागार्ध[6] + तरं पत्रं(?) पादेन स्याद् वरण्डिका ॥ ४७ ॥
सपादांश्चतुरो भागान् शिखरस्योच्छ्रयः स्मृतः ।
त्रिगुणेन च सूत्रेण पद्मकोशं समालिखेत् ॥ ४८ ॥
स्कन्धकोशान्तरं चास्य भागैः प्रविभजेत् त्रिभिः ।
भवेद् ग्रीवार्धभागेन भागेनामलसारकम् ॥ ४९ ॥
पद्मशीर्षं च भागार्धाद् भागेन ( [8] + लसीः ? )स्मृतः ।
इत्युक्तो रुचकाख्योऽयं

रुचकः ॥

भद्रकाख्योऽथ कथ्यते ॥ ५० ॥
[9] + + + + + + + + + + + + + + + + + ।
+ + + + + + + + + + + + + + + + + + ॥ ५१ ॥

भद्रक ॥

[10] भद्रं तु कर्णयोर्मध्ये कारयेदुदकान्तरम् ।
तदा हंसो विजानीयात् प्रासादो देवतालयः ॥ ५२ ॥

हंसः ॥

---

१ द. विशा । २ द. त्तत्र स्यात्तयोश्चाक्षयं पदम् । ३ द. तु । ४ द. °न लक्षणं यस्य यादृशम् । ५ द. विभाजिते । ६ द. भागार्द्धं वान्तरं पत्रं । ७ द. °दं च° । ८ द. कलशः । ९ द. भवेद्रुचक एवात्र भद्रो भद्रत्रयान्वितः । भद्रं द्विभागविस्तारं पदषड्भागनिर्गमम् ॥ भद्रकः ॥ १० द. तोयान्तरं ते भद्रस्य मध्ये स्याद्भद्रकर्णयोः । तदा हंस इति ख्यातः प्रासादोऽति मनोहरः ॥

हंसस्येवं[1] यदा कुर्याद् भद्रस्यान्ते जलान्तरम् ।
तदा हंसोद्भवो नाम प्रासादः परिकीर्तितः ॥ ५३ ॥

हंसोद्भवः ॥

रथान्तकर्णयोश्चैवं[2] यदा स्यादुदकान्तरम् ।
प्रतिहंसस्तदा प्रोक्तः प्रासादोऽयं[3] मनोरमः ॥ ५४ ॥

प्रतिहंसः ॥

प्राग्ग्रीवा रुचकस्यैव सीमाविस्तारविस्तृता[4]ः ।
निर्गता भद्रमानेन तदा नन्दः स उच्यते ॥ ५५ ॥

नन्दः ॥

प्राग्ग्रीवैर्भद्रमानेन नन्दो यदि विभूष्यते ।
निर्गतैर्भागमानेन चतुरश्रैः समन्ततः ॥ ५६ ॥
प्राग्ग्रीवः पुरतः कार्यः स्तम्भद्वयविभूषितः ।
नन्द्यावर्तस्तदा प्रोक्तः प्रासादो विजयावहः ॥ ५७ ॥

नन्द्यावर्तः ॥

नन्द्यावर्ते यदा कुर्याद् भद्रान्ते जलनिर्गमम् ।
धराधरस्तदा ज्ञेयः प्रासादो भुवनोत्तमः ॥ ५८ ॥

धराधरः ॥

दशधा भाजिते क्षेत्रे चतुरश्रे समन्ततः ।
भागद्वयेन कर्णः स्याद् भजेच्छेषं च सप्तधा ॥ ५९ ॥
भागत्रयेण रथको मध्यमोऽस्य विधीयते ।
द्वाभ्यां द्वाभ्यां तु भागाभ्यां रथकौ वामदक्षिणौ ॥ ६० ॥
भागस्यैव त्रिभागेन भवेदस्य विनिर्गमः ।
कथितो वर्धमानोऽयं

वर्धमानः ॥

गिरिकूटोऽथ कथ्यते ॥ ६१ ॥
वर्धमानस्य भद्रस्थमध्यसूत्रेण योजयेत् ।
कर्णिसूत्रं तदग्राभ्यां न्यस्येत् सूत्रचतुष्टयम् ॥ ६२ ॥

१ द. स्यै । २ द. रथान्तयोश्च भद्रे च यदा । ३ द. यमनुत्तमः । ४ द. श्रु ।

तदुत्पन्नैस्तु भद्रस्थकर्णैः स्याच्चित्रकूटकः ।

गिरिकूटः ॥

कर्णान्ते च रथान्ते च यदि स्यात् सलिलान्तरम् ॥ ६३ ॥

वर्धमानस्य भवति श्रीवत्सः स्यात् तदा शुभः ।

श्रीवत्सः ॥

गिरिकूटस्य संस्थाने तद्रूपे विनिवेशिते ॥ ६४ ॥

कर्णा( न् ) प्रतिरथेष्वस्य निखिलेष्वपि योजयेत् ।
प्राग्वत् प्रतिरथोद्भूतसूत्राभ्यां कर्णवर्त्मना ॥ ६५ ॥

त्रिकूटाख्यस्तदैव स्यात् प्रासादो देवतालयः ।

त्रिकूटः ॥

त्रिकूटस्यैव संस्थाने भद्रकर्णपरिच्युते ॥ ६६ ॥

स्वरूपभद्रसंस्थाने मुक्तकोणः प्रजायते ।

मुक्तकोणः ॥

चतुर्भि( र्वि )स्तृतैर्भागैः क्षेत्रे पञ्चभिरायते ॥ ६७ ॥

भागेन भित्तिः कर्तव्या शेषं गर्भगृहं भवेत् ।
अस्य क्षेत्रार्धसूत्रेण पृष्ठतो वृत्तमालिखेत् ॥ ६८ ॥

पुरतः शूरसेनोऽस्य पृष्ठतोऽपि गजाकृतिः ।
प्रासादोऽयं गजो नाम गणेशस्य विधीयते ॥ ६९ ॥

गजः ॥

वर्धमानस्य संस्थाने गरुडं विनिवेशयेत् ।
तस्य पक्षौ विधातव्यौ प्रासादार्धेन निर्गतौ ॥ ७० ॥

पक्षयोस्तु दशास्तस्य( ? ) वर्धमानं विभाजयेत् ।
जातिशुद्धा रथाः कार्याः पार्श्वयोर्गरुडो भवेत् ॥ ७१ ॥

गरुडः ॥

वर्धमानस्य संस्थाने प्राग्वत् कर्णौ नियोजयेत् ।
द्विभागा रथिका कार्या शेषं भद्रं प्रकल्पयेत् ॥ ७२ ॥

जङ्घास्य पञ्चभिर्भागैः पीठं चास्य तदर्धतः ।
विरण्ड्यर्धांशिकाद्भिश्च(?) भागश्चान्तरपत्रयोः ॥ ७३ ॥
तथोत्सेधस्त्रिभागैश्च नवभिः शिखरोच्छ्रितः ।
कुम्भश्चामलसारश्च सिंहेऽस्मिद्रा(स्मिन् भा)गमाग(न)तः ॥७४॥
सिंहः ॥
चतुरश्रीकृते क्षेत्रे चतुर्भिर्भाजितैः पदैः ।
सीमाविस्तारमानेन रथांस्तस्य प्रकल्पयेत् ॥ ७५ ॥
पादेनैकेन निर्यातान् दिक्षु सर्वास्वनुक्रमात् ।
प्राग्ग्रीवान् पुनरस्यैव भागद्वितयविस्तृतान् ॥ ७६ ॥
पदषड्भागनिर्यातान् विदधीत चतुर्दिशम् ।
चतुर्भागायतो गर्भः कार्योऽस्य द्व्यंशविस्तृतः ॥ ७७ ॥
जङ्घोत्सेधश्च पीठं च यथा भद्रे तथा भवेत् ।
प्रासादो भवसंज्ञोऽयं देवतात्रितयाश्रयः ॥ ७८ ॥
भवः ॥
भवस्यैव यदा कुर्याद् रथान् सजलनिर्गमान् ।
द्विभङ्गं संश्रयोऽन्यः सा(?)प्रासादो विभवाभिधः ॥ ७९ ॥
(त्रिलिङ्गः ?)
अष्टधा भाजिते क्षेत्रे चतुरश्रे समन्ततः ।
विदध्याद् गर्भसूत्राणि कर्णसूत्राणि च क्रमात् ॥ ८० ॥
दिक्सूत्रेष्वखिलेष्वस्य सीमार्धं पदमेव च ।
पदस्याष्टादशो भागस्तद्योगाद् वृत्तमालिखेत् ॥ ८१ ॥
विस्तारार्धं भवेद् गर्भो गर्भार्धास्तस्य भित्तयः ।
तद्वृत्तबाह्यसूत्रेण भागान् षोडश कारयेत् ॥ ८२ ॥
दिक्सूत्रकर्णसूत्रेषु रथकान् सम्प्रकल्पयेत् ।
द्विभागा रथिका[1] कार्या सलिलान्तरभूषिता ॥ ८३ ॥
सलिलान्तरमेतस्य श्रीवत्सस्येव कल्पयेत् ।
जङ्घोत्सेधे[2] च पीठे च शिखरं(?)[3] च तथा भवेत् ॥ ८४ ॥

१ द. थ । २ द. धश्च पीठं च । ३ द. रतं ।

मालाधा[1]रः स विज्ञेयः सबाह्याभ्यन्तरः समः ।

मालाधरः ॥

मालाधरस्य संस्थाने यत् क्षेत्रं पूर्ववत् स्थितम् ॥ ८५ ॥
उदकान्तरविच्छिन्नं पद्मं तत्र निवेशयेत् ।
तथाग्रे कारयेत् कर्ण[2]व्यासार्धेन विनिर्गमान् ॥ ८६ ॥
पद्मपत्रनिभाकारान् जातिशुद्धान् सलक्षणान् ।

पद्मः ॥

षड्भागानायते[3] क्षेत्रे विस्तारे[4] चतुरश्रके ॥ ८७ ॥
द्विभागाद्[5] विपुलो गर्भश्चतुर्भागायतो भवेत् ।
गर्भव्यासमितं सूत्रं पदपादसमन्वितम् ॥ ८८ ॥
[6]वृत्तार्धं भ्रमयेत् तेन दक्षिणेनोत्तरेण च ।
सीमाविस्तारसूत्रेण पदपादयुतेन च ॥ ८९ ॥
पुरतः पृष्ठतश्चापि तद्वृत्तमनुवर्तयेत् ।
वृत्तक्षेत्रमिदं तस्य भागैर्द्वादशभिर्भवेत्[8] ॥ ९० ॥
द्विभागो भद्रविस्तारो भागिकी भागविस्तृतिः
भद्राणां च रथान्मध्ये भागेनैकेन विस्तृता[7](?) ॥ ९१ ॥
उदकान्तरकं चात्र मालाधरवदाचरेत् ।
वृत्तायतस्तु कर्तव्यः प्रासादो मलयाभिधः ॥ ९२ ॥

मलयः ॥

मलयस्यैव कर्णेषु रथिका[9]न् यदि कल्पयेत् ।
[10]उदकान्तरविच्छिन्नान् पदषड्भागनिर्गतान् ॥ ९३ ॥
पीठोत्सेधश्च जङ्घा च शिखरं चात्र यद् भवेत् ।
एकमात्रा[11]समायुक्तं लतिना[12] ते(?) प्रतीयते(न्तर्विधीयते) ॥ ९४ ॥
[13]त्र्यंमाशा(त्र्यश्रा)णां चतुरश्राणां कोणेष्वर्धपरिक्षयात् (?) ।
अष्टाश्रं जायते यत्र वाजाग्रमपि तां नरम् (?) ॥ ९५ ॥

---

१ द. ध । २ द. कर्णा न्या° । ३ द. ता । ४ द. रा । ५ द. ग । ६ द. वृत्तार्धं...वृत्तमनुवर्तयेत् । प्रतौ नास्ति । ७ द. ताः । ८ द. भवेत् । ९ द. थ । १० द. उदकान्तरविच्छिन्नान्...चात्र यद भवेत् पुस्तके नास्ति । ११ द. न । १२ द. ललिनां तद्विधीयते । १३ द. प्रासादः सर्वकामार्थः भुक्तिमुक्तिप्रदायकः...सपादमिहधारयेत् । प्रति पाठः ।

अष्टाश्रं चतुरो भागान् विदध्यात् तत्र भागिकी ।
भित्तिर्विधेया भागाभ्यां भवेद् गर्भगृहं ततः ॥ ९६ ॥
रथिकासु विधेयोऽस्य परितो जलनिर्गमः ।
वज्रको नाम कथितः प्रासादः शुभलक्षणः[1] ॥ ९७ ॥

वज्रकः ॥

वज्रकस्यैव संस्थाने सलिलान्तरवर्जिते ।
चत्वारिंशद्भागभक्ते रथिकाः[2] स्युस्त्रिभागिकाः ॥ ९८ ॥
अष्टासु दिक्षु कर्णाश्च भवन्त्यस्य द्विभागिकाः ।
कर्णैः[3] पद्मकतुल्योऽयं स्वस्तिकः समुदाहृतः ॥ ९९ ॥

स्वस्तिकः ॥

वज्रकस्यैव संस्थाने ये रथाः प्राक् प्रदर्शिताः ।
एकैकस्तेषु कर्तव्यश्चतुरश्चतुरोंऽशकान् ॥ १०० ॥
भागद्वयेन मध्यः स्याद् रथकोशाद्[4] विनिर्गतः ।
शङ्कुर्नामायमुद्दिष्टः प्रासादोऽष्टाभिरश्रिभिः ॥ १०१ ॥

शङ्कुः ॥

चतुरश्राः षोडश[5] प्रोक्ताश्चतुरश्रायतद्[6]द्वयम् (?) ।
वृत्तवृत्तायतौ द्वौ द्वावुक्ताश्चाष्टाश्रयस्त्रयः ॥ १०२ ॥
पञ्चविंशतिरित्येते प्रासादा ललिताः[7] स्मृताः ।
मिश्रकाणामथ ब्रूमो लक्षणानि यथाक्रमम् ॥ १०३ ॥
भद्रकस्यैव संस्थाने भद्रे शृङ्गं यदा भवेत् ।
सुभद्रो नाम(?)संज्ञोऽयं कर्णकूटैः करीयसौ[8](?) ॥ १०४ ॥
पूर्वोक्तस्य यदा शृङ्गं भद्रे केसरिणो भवेत् ।
लताख्योक्तं[9](?) तदा स स्यात् सर्वतोभद्रसंज्ञितः ॥ १०५ ॥
भद्रे शृङ्गं परित्यज्य सिंहं तत्रैव कारयेत् ।
मिश्रयोगे तयो[10]र्मिश्रः स भवेत् सिंहकेसरी ॥ १०६ ॥

---

१ द. °दोऽयं सुलक्षणः। २ द. थ। ३ द. °र्णे। ४ द. °शांह्रिनि°। ५ द. शो। ६ द. तं। ७ द. °दाः ललिनः स्मृ°। ८ द. किरीद्यमौ। ९ द. न। १० द. °गेन यो मिश्रः।

श्रीवत्सस्यैव संस्थाने भद्रे[1] कूटं निवेशयेत् ।
कर्णे तत्रैव योगेन प्रतिश्रृङ्गोपशोभितम् ॥ १०७ ॥

कलशैः सप्तदशभिः पद्मघण्टामलैः सह ।
स च[2] त्रिकूट इत्युक्तो विचित्रशिखरान्वितः ॥ १०८ ॥

कर्णे भद्रे प्रतिस्थाने पूर्णे[3] श्रृङ्गे यदा भवेत् ।
अण्डकैः सप्तदशभिस्तदा स्यात् स धराधरः ॥ १०९ ॥

श्रीवत्सस्यैव संस्थाने कर्णे कूटं निवेशयेत् ।
श्रृङ्गं भद्रो + भद्रे च तदा तिलक उच्यते ॥ ११० ॥

यथा कर्णे तथा भद्रे यो भवेच्चित्रकूटवत् ।
उत्तमाङ्गे[5] च यस्तद्वत् स स्यात् सर्वाङ्गसुन्दरः ॥ १११ ॥

प्रतिश्रृङ्गेषु सर्वेषु यदा[6] कूटं निवेश्यते ।
मिश्रकः स तु विज्ञेयः श्रीनाम्ना चा[7]न्तिकोऽन्तिकः ॥ ११२ ॥

सर्वे कूटावृताः कार्याः सर्वे कार्याश्चतुर्मुखाः ।
मिश्रका बहुश्रृङ्गाश्च कुटीसंज्ञास्ततोऽपरे ॥ ११३ ॥

इदं नवानां मिश्राणामिह लक्षणमीरितम् ।
[8]साधारणमतः स्पष्टं ब्रूमः सम्प्रति लक्षणम् ॥ ११४ ॥

चतुरश्रीकृते क्षेत्रे भागाष्टकविभाजिते ।
तस्य मध्ये भवेद् गर्भो द्विभागो देवतालयः ॥ ११५ ॥

भागे निवेशयेद् भित्तिं कुर्याद्[9] भागेन कारिकाम् ।
बा[10]ह्यंभित्तिं पुनर्भागे विधेयास्त[11]स्य सिद्धये(?) ॥ ११६ ॥

तस्य कर्णेषु कर्तव्या रथिकाश्च द्वि[12]भागिकाः ।
शेषं भद्रं प्रकर्तव्यमुदकान्तरभूषितम् ॥ ११७ ॥

भागेन निर्गतं दिक्षु सर्वास्वेषु[13] भवेद् विधिः ।
चतुर्भागोच्छ्रिता जङ्घा [14]करकश्च तदर्धकः[15] ॥ ११८ ॥

---

१ द. भटे । २ द. चित्र । ३ द. वं । ४ द. भद्रोपभद्रे च । ५ द. °ङ्गैव । ६ द. यथा । ७ द. °म्नातिलकोङ्कितः । ८ द. सांधाराणाभथ । ९ द. °त्तिः कुर्याद्भागेध कारिका । १० द. बाह्यां-भितिः । ११ द. त । १२ द. विभागिका । १३ द. °स्वेत्रूदितो । १४ द. कु° । १५ द. तः ।

वरण्ड्यन्तरपत्रं च भागेनैकेन कल्पयेत् ।
रथिकैकान्तरं तस्य सा[1]र्धभागत्रयोच्छ्रिताः(?) ११९ ॥
षड्भागे शिखरं मूले शेषांशकसमुच्छ्रितम् ।
तस्योच्छ्रयं त्रिधा कृत्वा वेणुकोशं समालिखेत् ॥ १२० ॥
स्कन्धकोशान्तरं तस्य चतुर्धा विभजेत् ततः ।
पद्मशीर्षं तथा ग्री( वां )सार्धेनांशेन कारयेत् ॥ १२१ ॥
कुर्याद् भागेन भागेन कुम्भं[2] चामलसारकम् ।
भागार्धेन प्रकुर्वीत तदूर्ध्वं बीजपूरकम् ॥ १२२ ॥
[3]प्रासादः कैसरी नाम सर्वतः सन्ततिप्रियः ।

कैसरी[4] ॥

चतुरश्रं समं कृत्वा भूमिभागं विचक्षणः ॥ १२३ ॥
प्रासादो[5]( द )व्यासतः कुर्याज्जगतीं द्विगुणामिह ।
विदध्याज्जा[6]गतीपीठं प्रासादार्धसमुच्छ्रितम् ॥ १२४ ॥
पीठस्योपरि संस्थाप्य प्रासादं विभजेत् ततः ।
सर्वतोभद्रसंस्थानं हस्तसंख्या यदा[7] भवेत् ॥ १२५ ॥
हस्तैः सप्तत्रिंशता तु ज्येष्ठः सार्धे(?) [8]उदाहृतः ।
मध्यमः सप्तविंशत्या प्रासादः[9] स्यात् कलाधिकैः ॥ १२६ ॥
कनीयान् पञ्चदशभिः प्रासादः समुदीरितः ।
[10]तलच्छन्दो यदा ह्येषां तथा चैवोर्ध्वतो गतिम् ॥ १२७ ॥
ज्येष्ठमध्यकनिष्ठानां तथा सम्यङ्[11] निगद्यते ।
चतुरश्रीकृते क्षेत्रे शतमूलविभाजिते ॥ १२८ ॥
न्यसेत् तन्मध्यतो गर्भं चतुर्वर्गपदान्वितम् ।
गर्भ[12]पादेन भित्तिः स्यात् तद्वदेवान्धकारिका ॥ १२९ ॥
बाह्यभित्तिस्तथवा[13]( थैव ) स्याद् [14]दशशास्युर्द्विभागिका(?) ।
प्रतिवर्णपदांशेन(?) षोडशे[15]न जलान्तरम् ॥ १३० ॥

---

१ द. सा च भा°। २ द. कुंभमाम्°। ३ द. प्रासादः केसरी नाम पार्वत्या सततप्रियः। ४ द. के°। ५ द. °दं। ६ द. ज्ज। ७ द. यथा। ८ द. सार्द्धैरु°। ९ द. दा। १० द. तदच्छंदो यथा चैवोर्द्धतो गतिः। ११ द. क्। १२ द. °र्भा। १३ द पुस्तके पाठः नास्ति। १४ द. द्रथिका। १५ द. °षु-[illegible]

शेषं भद्रं(?)प्रकर्तव्यं गर्भार्धेन विनिर्गतम् ।
भागार्धं[1] क्षोभयेत् पार्श्वे निर्गमं च तथाचरेत् ॥ १३१ ॥

शेषः स्याद् भद्रविस्तारः पञ्चभागायतस्तथा ।
पीठं तस्यैव कर्तव्यं सार्धद्वयसमुच्छ्रितम्[2] ॥ १३२ ॥

द्विगुणां च तथा जङ्घामुच्छ्रायेणास्य कल्पयेत् ।
मेखलामर्धभागेन भागेनान्त(र)पत्रकम् ॥ १३३ ॥

प्रथमा[3] रथिका तत्र कार्या भागत्रयोच्छ्रिता ।
द्वितीया रथिका या सा सार्धभागेन[4] चोच्छ्रिता ॥ १३४ ॥

भागे[5] भागेऽन्तरं कार्यमुपर्युपरि चोभयोः[6] ।
षड्भागान् विस्तृतं[7] कुर्याच्छिखरं सप्तमोच्छ्रितम्[8] ॥ १३५ ॥

एवं भूमिभिरष्टाभिः कुर्यादेनं विचक्षणः ।
जलनिर्गमविच्छिन्ना रथाः प्रतिरथास्तथा[9] ॥ १३६ ॥

चतुर्गुणैः पृथक्सूत्रं(त्रैः[10]) पद्मकोशं समालिखेत् ।
मञ्जरी ललिता कार्या नीलोत्पलदलाकृतिः ॥ १३७ ॥

ग्रीवा चैकार्धभागेन[11](भागेना)मल्लसारकम्[12] ।
पद्मशीर्षं च कर्तव्यं ग्रीवामानेन धीमता ॥ १३८ ॥

सार्धभागेन सोष्णीषः पद्मस्योपरिकुम्भकः ।
सर्वतोभद्र इत्युक्तो रेखानानाम्[13](?) एष शेखरः ॥ १३९ ॥

विधाय सर्वतोभद्रं देवानामालयं शुभम् ।
लभते परमं लोकं दिवि स्वच्छन्दभाषिनम्[14] ॥ १४० ॥

सर्वतोभद्रः ॥

चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ।
व्यासपादेन गर्भस्तं[15](स्यात् त)दर्धादन्धकारिका ॥ १४१ ॥

---

१ द. °र्धे । २ द. °तिः । ३ द. प्रतिमा । ४ द. सार्धभागद्वयोच्छ्रिता । ५ द. भागं भागोत्तरं । ६ द. चैतयोः । ७ द. क्षिप्तं । ८ द. चो । ९ द. रथो प्रतिरथस्तथा । १० द. प्रतौ नास्ति । ११ द. वा । १२ द. र । १३ द. रथिनामेव शेषरः । १४ द. कारिणं । १५ द. स्थस्तदर्द्धाभ्यन्थकारिका: ।

[1]जङ्घा स्कन्धश्च तं कर्ण(?) भद्रं चाप्यस्य यद् भवेत् ।
सर्वतोभद्रवत् सर्वं तद् विधेयं चतुर्दिशम् ॥ १४२ ॥
तस्य भद्राणि सर्वाणि भित्तिभिः परिवेष्टयेत् ।
भद्रे भद्रे पुनश्चा[2]स्य वर्धमानं निवेशयेत् ॥ १४३ ॥
पञ्चभागास्तथा सार्धाः शिखरस्योदयो भवेत् ।
सर्वतोभद्रकाकारा रथिका[3]श्चात्र कारयेत् ॥ १४४ ॥
कुर्यात् षडंशा[4] विस्तीर्णशिखरं प्र+धोच्छ्रितम् (?) ।
सर्वतोभद्रसंस्थानादेषां[5] चास्वत्र योजयेत् (?) ॥ १४५ ॥
ग्रीवा चामलसारं च कुम्भश्चापि तथा भवेत् ।
प्रासादो नन्दनो नाम कर्तव्यो देवतालयः ॥ १४६ ॥
कृतेऽस्मिन् नन्दति स्वामी दुरितानि च निर्दहेत्[6] ।
नन्दनः ॥
भक्ते द्वादशधा क्षेत्रे चतुरश्रीकृते ततः ॥ १४७ ॥
सप्तवर्गपदो[7] गर्भो भित्त्या सह विधीयते ।
सपादपादिका[8] भित्तिगर्भे(?)कुर्याद् विचक्षणः ॥ १४८ ॥
बाह्यभित्तिश्च तद्वत् स्यात् तद्वच्चाप्यन्धकारिका[9] ।
पीठोच्छ्रयस्तथा जङ्घा कर्णेषु रथिकाश्च यां[10]ः ॥ १४९ ॥
सर्वतोभद्रकाकारान्मूलकर्णांश्च योजयेत् ।
एकैकां रथिकां[11] चान्यां विन्यसेत्[12] पक्षयोर्द्वयोः ॥ १५० ॥
चतस्रो रथिकाश्चैवं कर्णे कर्णे निवेशयेत् ।
शेषो भद्रस्य विस्तारः स्वविस्तारार्धनिर्गतः ॥ १५१ ॥
भूषयेत् सिंहकर्णैश्च[13] भद्रव्यासार्धमुन्नतैः ।
विन्यसेच्छिखरं तत्र भागैर्विस्तृतमष्टभिः ॥ १५२ ॥[14]
चतुर्गुणेन सूत्रेण वेणुकोशं समालिखेत् ।
स्कन्धकोशान्तरं चास्य त्रिभिर्भागैर्विभाजयेत् ॥ १५३ ॥

---

१ द. जंघा स्कंधश्च भद्रं वा......प्यस्य । २ द. पुनः स्वास्य । ३ द. रतिका° । ४ द. °शान् विस्तीर्ण शिखरं सप्त वोच्छ्रितम् । ५ द. °ना प्रेषां चास्य प्र° । ६ द. निर्हरेत् । ७ द. °प्रदो । ८ द. °कां भित्तिं गर्भे । ९ द. °काः । १० द. या । ११ द. °की । १२ द. विन्यासात् । १३ द. स्तु । १४ द. समुच्छ्रित तद्दशभिर्विधेयमतिसुन्दरम् । चतुर्गुणेन... ।

ग्रीवार्ध[1]भागिकोत्सेधा( द् ? )भागेनामलसारकः ।
पद्मशीर्षं[1] तथार्धेन भागेन कलशः स्मृतः ॥ १५४ ॥

त्रिपादा[2] रथिकास्तिस्र उच्छ्रायेण प्रकीर्तिताः[3] ।
सर्वतोभद्रकाकारो नन्दिशालः प्रकीर्तितः ॥ १५५ ॥

नन्दिशालः ॥

[4]नन्दिशालस्य संस्थाने तद्रूपे समवस्थिते ।
तस्य भद्राणि सर्वाणि भित्तिभिः परिवेष्टयेत् ॥ १५६ ॥

भद्रे भद्रे तस्य[5] तस्य वर्धमानं निवेशयेत् ।
अर्धषष्ठांस्तथा[6] भागान् स्याद् भद्रशिखरोच्छ्रयः ॥ १५७ ॥

पीठोच्छ्रायं[7] च जङ्घां च तथास्य शिखरोच्छ्रयम् ।
नन्दिशालसमाकारं सर्ममेव[8] प्रकल्पयेत् ॥ १५८ ॥

कार्योऽयं सर्वदेवानां प्रासादो नन्दिवर्धनः ।

नन्दिवर्धनः[9] ॥

नन्दिवर्धनसंस्थानं[10] पूर्ववत् परिकल्पयेत् ॥ १५९ ॥

उभयोः कर्णयोर्मध्ये ये तत्र रथिके स्थिते[11] ।
तयोश्चोपरि कर्तव्यं शिखरं लक्षणान्वितम् ॥ १६० ॥

षडंशविस्तृतं चैतत्[12] सार्धषट्कसमुच्छ्रितम् ।
चतुर्गुणेन सूत्रेण वेणुकोशं समालिखेत् ॥ १६१ ॥

ग्रीवा चामलसारं च कुम्भकस्याश्रयो[13] भवेत् ।
कार्यः स सर्वतोभद्रसंस्थान इति निश्चयः ॥ १६२ ॥

मन्दिरोऽयमिति ख्यातः[14] प्रासादः क्षितिभूषणः ।

मन्दिरः ॥

नन्दिवर्धनसंस्थाने तद्रूपसमवस्थिते ॥ १६३ ॥

---

१ द. °र्षस्तदार्धेन । २ द. त्रिपदा रथिकास्तत्र । ३ द. तः । ४ द. अयं श्लोकः पुस्तके नास्ति । ५ द. °र्थे । ६ द. ष्ट । ७ द. यां । ८ द. °र्वं° । ९ द. प्रतौ नास्ति । १० द. ने । ११ द. ता । १२ द. व सार्धं । १३ द. °कश्चास्य यो । १४ द. मिति प्रोक्तः प्रा° ।

दिक्सूत्रे कर्णसूत्रे च ( कुम्भ ? ) + रथिकाष्टकम्[1] ।
रथिका अपि चैताः स्युर्द्विभागायतविस्तृताः ॥ १६४ ॥

षड्भागविस्तृतिश्चास्य शेषं शिखरमाचरेत् ।
उच्छ्रयश्चास्य कर्तव्यो भागानां सार्धसप्तकम् ॥ १६५ ॥

षड्भागैः[2] स्कन्धविस्तारो ग्रीवा चास्य द्विभागिका ।
रेखा चामलसारं च कलशश्चात्र यो भवेत् ॥ १६६ ॥

सर्वतोभद्रवत् स स्याच्छ्रीवृक्षोऽयमुदाहृतः ।

श्रीवृक्षः[3] ॥

चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते ॥ १६७ ॥

द्विभागविस्तृताः कर्णा रथिकास्तेषु कारयेत् ।
उदकान्तरविच्छिन्ना मूलकर्णेषु योजयेत् ॥ १६८ ॥

शेषं भद्रस्य विस्तारस्तदर्धमपि[4] निर्गमः ।
सर्वतोभद्रमप्यस्य भद्रे भद्रे विभज्य च ॥ १६९ ॥

पूर्वैर्गुणैस्तु संयुक्ते चतुर्दिक्षु निवेशयेत् ।
तस्य गर्भस्तु कर्तव्यः ( पदाष्टक[5] ? )विस्तृतः ॥ १७० ॥

सार्धभागैः[6]प्रमाणः स्याद् भित्तिर्गर्भस्य मध्यतः ।
बाह्यभित्तिस्तथैवास्य शेषं भ्रमणमाचरेत् ॥ १७१ ॥

जङ्घाषड्भागमुत्सेधात्[7] पीठं तस्य तदर्धतः ।
वरण्डीना( म )न्तरं पत्रं[8] भागेनैकेन कारयेत् ॥ १७२ ॥

रथिकाद्वादशविस्तारानुपर्युपरि[9] योजितां[10]( ? ) ।
तिस्रस्तिस्रो निवेशाः[11] (इयाः )स्युः कर्णे कर्णेत(य)थाक्रमम् ॥१७३॥

प्रथमा रथिकास्तस्य[12] कुर्याद् भागत्रयोच्छ्रिताः[13] ।
कुर्यादु( पर्यु )पर्यन्याः पादपादविवर्जिताः ॥ १७४ ॥

---

१ द. कुर्वीत रथकाष्टकं । २ द. ग । ३ द. पुस्तके नास्ति । ४ द. मिति । ५ द. पदाष्टाष्टक वि° । ६ द. गे । ७ द. प्रतौ नास्ति । ८ द. थ । ९ द. उ । १० द. ताः । ११ द. शास्या कर्णे कर्णे यथा° । १२ द. त्र । १३ द. ज्झिताः ।

अष्टभिर्विस्तृतं भागैः सार्धैर्नवभिरुच्छ्रितम् ।
सर्वतोभद्रकाकारं शिखरं तस्य कारयेत् ॥ १७५ ॥

प्रासादोऽयं विमानाख्यः प्रख्यातश्चामृतोद्भवः ।

विमानः[1] ॥

द्विसप्तायामविस्तारं हिमवन्तं विभाजयेत् ॥ १७६ ॥

चतुर्धा[2] रथिकास्तत्र कर्णे कर्णे[3] निवेशयेत् ।
द्विभागविस्तृताः सर्वा उपर्युपरि कारयेत् ॥ १७७ ॥

प्रथमा भूमिका तस्य स्याच्च[4] भागत्रयोच्छ्रिता[5] ।
[6]पादपादविहीनास्तु क्रमणोपरिभूमयः ॥ १७८ ॥

नन्दिशालगुणैर्युक्तं शिखरं चात्र कारयेत् ।
सर्वतोभद्रवन्मध्ये भूमिकाश्च समाचरेत् ॥ १७९ ॥

द्विभागाँ रथिकास्तस्य सर्व(र्वा) भागत्रयोच्छ्रिताः ।
द्वितीयभूमि(काँ ?)रथिका भूम्युशँ(च्छ्रा)येण कारयेत् ॥ १८० ॥

शिखरस्योच्छ्रयः कार्यः सपादत्र्यास[11]संमितः ।
अमृतोद्भववज्जङ्घा पीठं चात्र तथा भवेत् ॥ १८१ ॥

जातिशुद्धो भवत्येष हिमवान् भुवनोत्तमः[12] ।

हिमवान् ॥

हिमाचलस्य संस्थाने तद्रूपे समवस्थिते ॥ १८२ ॥

तस्य भद्रेषु सर्वेषु वर्धमानं च योजयेत् ।
भागषट्कप्रविस्तारं तदर्धेन विनिर्गतम् ॥ १८३ ॥

भागैः सप्तभिरप्यस्य सार्धैः स्याच्छिखरोच्छ्रयः ।
शिखरस्याग्रतः स्तम्भः[13](म्भं)सिंहकर्णै वि(र्णैर्वि)भूषयेत् ॥१८४॥

---

१ द. प्रतौ नास्ति । २ द. चतस्रो रथि° । ३ द. इ । ४ द. स्यात्स । ५ द. ताः । ६ द. पदे पदे वि° । ७ द. ग । ८ द. प्रतौ नास्ति । ९ द. प्रतौ नास्ति । १० द. प्रतौ नास्ति । ११ द न्या । १२ द. भ । १३ द. स्तंभं हंसकर्णे विभू° ।

दिक्[1]सूत्रैरस्य सर्वेषु क्रियां प्राग्वत् प्रकल्पयेत् ।
जङ्घोत्सेधश्च[2] कर्णश्च शिखरं चास्य यद् भवेत् ॥ १८५ ॥
हिमवत्सदृशं सर्वं विधेयं तद् विजानता ।
हेमकूट इति ख्यातः प्रासादोऽयं जगत्त्रये ॥ १८६ ॥
एष त्रिमूर्तिनिलयः कार्यो नान्यस्य कस्यचित् ।

हेमकूटः ॥

[3]हिमवत्तुल्यसंस्थानं[4] प्रासादं[5] परिकल्पयेत् ॥ १८७ ॥
तस्य[6] मध्ये विधातव्यः सर्वतोभद्रसंज्ञितः ।
वर्जनीयं तु तन्मध्ये वर्धमानं[7]निवेशनम् ॥ १८८ ॥
ततः स्थानेषु सर्वेषु खण्डरेखां[8] निवेशयेत् ।
व्यासोच्छ्रितैस्ततः सिंहकर्णैर्भद्रं विभूषयेत् ॥ १८९ ॥
ऊर्ध्वं च शिखरं तस्य वर्जनीयं विचक्षणैः ।
द्वे द्वे च रथिके कार्ये सपादद्व्यंशकोच्छ्रिती[9] ॥ १९० ॥
तयोश्चोपरि विस्ताराच्छिखरं चतुरश्रकम् ।
उच्छ्रयः पञ्चभिः सार्धैर्विधेयः शिखरस्य च ॥ १९१ ॥
दिक्सूत्रेषु [10]च सर्वेषु क्रियामेवं प्रकल्पयेत् ।
बाह्यरेखा तु[11] जङ्घा च हिमवत्सदृशी स्मृता ॥ १९२ ॥
कैलासोऽयमिति ख्यातः कर्तव्यः शूलपाणये ।

कैलासः ॥

एतस्यैव यदा भद्रमुच्छ्रि[12]तं सिंहकर्णकैः ॥ १९३ ॥
द्वे द्वे च रथिके तत्र दीर्घ[13](ये)ते सु[14]मनोरमे ।
शेषः[15] शिखरविस्तारः पञ्चभागसमुच्छ्रितः ॥ १९४ ॥
प्राग्ग्रीवकाश्च भद्रेषु भाग[16]भागविनिर्गताः ।
विस्ता[17]रेण चतुर्भागा दिक्षु सर्वास्वयं विधिः ॥ १९५ ॥

---

१ द. दिक्सूत्रेष्वस्य सर्वेषु । २ द. °धस्य कर्णस्य । ३ द. हे । ४ द. ने । ५ द. °दे परिकल्पिते । ६ द. तस्या । ७ द. नं । ८ द. खां । ९ द. ते । १० द. प्रतौ पाठः नास्ति । ११ द. च । १२ द. जितं शंख । १३ द. पुस्तके नास्ति । १४ द. स । १५ द. ष । १६ द. गं । १७ द. स्त ।

विमानसदृशी चास्य बाह्यलेखा विधीयते।
गुणैरेभिस्तदा युक्तः प्रासादः पृथिवीजयः॥ १९६॥

पृथिवीजयः[1] ॥

भक्ते षोडशभिः क्षेत्रे चतुरश्रे समन्ततः।
गर्भोऽष्टवर्गः स्यात् तस्य मध्ये भित्तिर्द्विभागिका॥ १९७॥
भ्रमणं बाह्यभित्तिश्च[2] तत्समे एव कीर्तिते[3]।
कर्णेषु रथिका कार्या सलिलान्तरभूषिता[4]॥ १९८॥
तत्तुल्यायामविस्तारा रथिकाः स्युस्तथापराः।
तद्वत् तृतीयरथिका भद्रं चतुष्पदायतम्॥ १९९॥
विस्तारार्धेन निष्क्रान्तं क्षोभयेद् वर्धमानतः[5]।
[6]वरण्ड्यन्तरपत्रे च सार्धे(र्ध)भागेन कारयेत्॥ २००॥
उपर्युपरि भाँगान् हि हीनाः स्युः क्रमशोभर्वः (?)।
भद्रे रथिकयोर्मध्ये सिंहकर्णो[9] विधीयते॥ २०१॥
एतस्य चोच्छ्रयो भागैः पञ्चभिः परिकीर्तितः।
पार्श्वस्थे सिंहकर्णस्थे[10] रथिके ये निवेशिते॥ २०२॥
तयोरुपरि षड्भागं विस्तृतं शिखरं भवेत्।
विधेयमुच्छ्रये[11]णैतत् त्रिभागान् सप्ताथ(प्र[12])वाधिकान्॥ २०३॥
पक्षयोरुभयोस्तस्य रथिके (च[13]) तदूर्ध्वतः।
सिंहं निवेशयेद् दिक्षु निखिलास्वप्ययं विधिः॥ २०४॥
मूलकर्णे ततश्चोर्ध्वं[14] शिखरं दशविस्तृतम्।
एकादशोच्छ्रितं कार्यं क्रमवृत्त्या[15] मनोरमम्॥ २०५॥
चतुर्गुणेन सूत्रेण वेणुकोशं ततो लिखेत्।
पूर्वोक्ता [16]सांतरं भागैरमुष्या(?) विभजेत् त्रिभिः॥ २०६॥

---

१ द. पुस्तके पाठः नास्ति। २ द. त्तेस्तु। ३ द. के(की)र्त्यते। ४ द. ताः। ५ द. कः। ६ द. इतः पूर्वं-चतुरस्रष्वपि चाशासु विधातव्यो विधिर्बुधैः। अष्टभागोच्छ्रिता जंघा खुरकश्च तदर्द्धतः॥ पुस्तकस्य अधिकः पाठः। ७ द. भागांह्रिही°। ८ द. भुवः। ९ द. र्णौ। १० द. °र्णस्तु रथिको। ११ द. पुस्तके नास्ति। १२ द. पुस्तके नास्ति। १३ द. °के ये त°। १४ द. श्चोर्द्ध्वं। १५ द. °ध्या। १६ द. °क्तात्स्यांतरं भागैरमुष्य वि°।

ग्रीवार्धभागमुत्सेधादण्डकं भागमुच्छ्रितम् ।
पद्मशीर्षं तथार्धेन कलशश्चांशकोदयः ॥ २०७ ॥

देवानामालयः स [1]स्यादिन्द्रनीलोऽयमीरितः ।

इन्द्रनीलः ॥

एतस्यैव यदोर्ध्वस्थं शिखरं क्रियतेऽन्यथा ॥ २०८ ॥

चतुर्थी रथिका चास्य दीयतेऽतिमनोरमा[2] ।
पूर्वोक्तेन विधानेन पादं वि [3]+ + वर्जिता ॥ २०९ ॥

शिखरस्यार्ध[4]विस्तारो नव भागा[5]स्तथोच्छ्रयः ।
इन्द्रनीलस्य सदृशं शेषमन्यद् विधीयते ॥ २१० ॥

महानीलोऽयमाख्यातः प्रासादस्त्रिदशालयः ।

महानील[6]: ॥

इन्द्रनीलस्य संस्थाने दिक्सूत्रेषु समन्ततः ॥ २११ ॥

सर्वतोभद्रशिखरं हित्वा( ह्रो[7]+ ? )निवेशयेत् ।
विधिरेष समस्तासु ककुप्सु प्रविधीयते ॥ २१२ ॥

भद्रेषु वर्धमानस्य विन्यासं परिव[8]र्जयेत् ।
व्यासोच्छ्रितैः सिंहकर्णै[9]र्भद्रमस्य विभूषयेत् ॥ २१३ ॥

महानीलस्य सदृशं सर्वमस्यं प्रकल्पयेत् ।
इन्द्रगोपनिभाकारः प्रासादो भूधरः स्मृतः ॥ २१४ ॥

सुरेश्वरस्य कर्तव्यो नान्येषां कथमप्यसौ ।

भूधरः ॥

भूधरस्य तु संस्थाने तद्रूपे समवस्थिते[10] ॥ २१५ ॥

भद्रे[11] भद्रे पुनः प्राज्ञो वर्धमानं निवेशयेत् ।
चतुर्भागमि[12]तव्यासं सार्धचतुःसमुच्छ्रितम् ॥ २१६ ॥

---

१ द. म्यगि । २ द. माः । ३ द. पादपादविवर्जिताः । ४ द. थ । ५ द. भागे तथो° । ६ द. प्रतौ नास्ति । ७ द. हित्वा सिंहो निवेश्यते । ८ द. मन्यत् । ९ द. ता । १० द. °तौ । ११ द. भद्रेषु न प्रा° । १२ द. ति न्यासं सार्धं ।

रत्नकूटः समाख्यातः प्रासादः श्रीपतेरयम् ।

रत्नकूटः ॥

चतुरश्रीकृते क्षेत्रे विंशत्या भाजिते[1]ऽशकैः ॥ २१७ ॥
कुर्याद् विभागविस्तारां[2] रथिकाः पञ्च कर्णगाः ।
पञ्चोपरि पुनः पञ्च दद्यादेकां तदूर्ध्वतः ॥ २१८ ॥
प्रथमा भूमिका चास्य कार्या भागत्रयोच्छ्रिता[3] ।
पादपादविहीनास्तु क्रमेणापरभूमयः ॥ २१९ ॥
[4]भद्रकर्णान्तरस्थे द्वे रथिके ये तदूर्ध्वतः ।
शिखरं दशविस्तारं कुर्यात् सार्धदशोच्छ्रितम् ॥ २२० ॥
मूलकर्णानुसारेण शिखरं तत्र यद् भवेत् ।
[5]तस्य द्वादशविस्तारं त्रयोदशसमुच्छ्रितम् ॥ २२१ ॥
भद्रं विभूषयेत्[6] पत्रैः सिंहकर्णैर्मनोरमैः[7] ।
[8]पञ्चव्यासेन सूत्रेण वेत्रकोशं समालिखेत् ॥ २२२ ॥
स्कन्धकोशान्तरं चास्य त्रिभिर्भागैर्विभाजयेत् ।
पद्मशीर्षं तथा ग्रीवां सार्धभागेन कारयेत् ॥ २२३ ॥
कुर्याद् भागेन भागेन कुम्भं चामलसारकम् ।
नवभागोच्छ्रितां जङ्घां तदर्ध[9]खरपिण्डकाम् ॥ २२४ ॥
वरण्ड्यन्तरपत्रं च कुर्याद् भागद्वयेन च ।
वैडूर्यो[10]ऽयं समाख्यातः प्रासादो दानवद्विषः ॥ २२५ ॥

वैडूर्यः ॥

एतस्यैव यदा भद्रे भद्रे स्याद् वर्धमानकः ।
पद्मरागस्तथैव[11] स्याद् कार्योऽयं पद्मरागतः[12] ॥ २२६ ॥

पद्मरागः[13] ॥

पद्मरागस्य भद्रेषु वर्धमानं विवर्जयेत् ।
भद्रस्य पार्श्वद्वितये प्रदद्याद् रथिकाद्वयम् ॥ २२७ ॥

---

१ द. कं । २ द. रः । ३ द. ताः । ४ द. कर्णभद्रा° । ५ द. तत् स्याद्वा° । ६ द. °द्रत्नैः । ७ द. हरैः । ८ द. एवं । ९ द. धैखुर° । १० द. डू° । ११ द. °दैष । १२ द. जन्मनः । १३ द. पुस्तके नास्ति ।

व्यासोच्छ्रायैश्च¹ भद्राणि सिंहकर्णैर्विभूषयेत् ।
यदन्यदस्य तत् सर्वं² पद्मरागसमं भवेत् ॥ २२८ ॥
वज्रकोऽयं समाख्यातो विधेयस्त्रिपुरद्विषः ।

वज्रकः ॥

वज्रकस्यैव भद्रेषु पूर्ववद् रथिकास्थितौ ॥ २२९ ॥
षड्भागविस्तृतं तत्र शिखरं विनिवेशयेत् ।
सप्तभागसमुत्सेधं दिक्षु सर्वास्वयं विधिः ॥ २३० ॥
मुकुटोज्ज्वल इत्युक्तः प्रासादोऽयं सुरालयः ।

मुकुटोज्ज्वलः ॥

अस्यैव तु यदा स्थाने भद्रे भद्रे चतुर्दिशम् ॥ २३१ ॥
सिंहकर्णं परित्यज्य वर्धमानो विधीयते ।
ऊर्ध्वाभवतृतीयायाः(?) सप्तोच्छ्रायैषडायताः³ ॥ २३२ ॥
ऐरावतोऽयं कर्तव्यः प्रासादस्त्रिदशेशसंतिः⁴(शितुः) ।

ऐरावतः ॥

ऐरावतस्य संस्थाने प्रासादे पूर्ववत् स्थिते ॥ २३३ ॥
वर्धमानं विहायोर्ध्वे यदा सिंहो निवेश्यते ।
शिखराणि च चत्वारि दिक्षु सर्वासु वर्जयेत् ॥ २३४ ॥
क्षेत्राया(ष्टांमे⁵?)र्विस्तारं गर्भवेश्म निवेशयेत् ।
चतुर्भागायतं भद्रं निर्गमेण विभाजितम्⁶ ॥ २३५ ॥
भद्रत्रयं प्रयुञ्जीत भित्तिभागेन वेष्टितम् ।
द्वारोच्छ्रयं⁷ स(स्व)विस्ताराद् व(द्वा)रार्धेन समुच्छ्रयः ॥ २३६ ॥
गवाक्षस्तत्र कर्तव्यो यथा द्वारं न लङ्घ्यते ।
मध्ये चतुष्किका कार्या द्विभागायामविस्तृता⁸ ॥ २३७ ॥
प्रासादो राजहंसोऽयं ब्रह्मादीनां प्रशस्यते ।

राजहंसः ॥

---

१ द. स्तु । २ द. ऊर्ध्वं भवस्तृ° । ३ द. यः । ४ द. °शालयः । ५ द. माष्ट वि । ६ द. गिकम् । ७ द. °च्छ्रायं सविस्तारा द्वा° । ८ द. ताः ।

राजहंसस्य संस्थाने तृतीये[1](य)रथिकोपरि ॥ २३८ ॥

यदोर[2](स्य)शिखरं सप्तसमुच्छ्रायं षडायतम् ।
स्यात् तदा गरुडो नाम गरुडध्वजवल्लभः ॥ २३९ ॥

प्रासादः सर्व† [3]+ + + + + कारयितुस्तथा ।

गरुडः ॥

अस्यैव मूलशिखरं त्यक्त्वा भागद्वयोन्मितम् ॥ २४० ॥

क्रियन्ते रथिकाः पू[4](क)र्णे तदूर्ध्वं मूलमञ्जरी ।
क्रियते द्वादशोच्छ्राये[5](या) दशभागायता[6] यदा ॥ २४१ ॥

तदा स्याद् वृषभो नाम वृषभध्वजवल्लभः ।

वृषभ[7]ः ॥

स[8](श)तार्धहस्तविस्तारं ज्येष्ठं मेरुं प्रकल्पयेत् ॥ २४२ ॥

मध्यमे हस्तसंख्या स्यात् (षट्[9]त्र्यं द्विकालाधिकः ?) ।
दशत्रिगुणितां[10] ([11]हस्ताभ्यां ?)संख्या प्रोक्ता कनीयसि ॥ २४३ ॥

चतुरश्रीकृते क्षेत्रे भागविंशवि[12](ति)भाजिते ।
विस्तारार्धं भवेद् [13]गर्भगृहं(र्भगृहं)भित्त्या समन्वितम् ॥ २४४ ॥

भागप्रमितविस्तारा गर्भभित्तिर्विधीयते ।
सार्धद्विभागान्या भित्तिस्तद्वदेवान्धकारिका(ः?) ॥ २४५ ॥

द्विभागा रथिका कार्या [14]कर्णे कर्णे विजानता ।
चतुर्भागा रथा भद्रेष्वेतदर्धेन (वि?)निर्गता[15] ॥ २४६ ॥

भद्रकर्णान्तयोः [16]कार्या यदाष्टांश(यं तदष्टांशं)जलान्तरम् ।
भद्राणां रथिका[17]ः कार्याः पार्श्वयोरुभयोस्तथा ॥ २४७ ॥

---

१ द. पुस्तके पाठः नास्ति । २ द. यदोरः शि° । ३ द. कामाप्त्यै कर्तुः । ४ द. पुस्तके नास्ति । ५ द. पुस्तके 'ये' इति पाठः नास्ति । ६ द. प । ७ द. पुस्तके नास्ति । ८ द. पुस्तके नास्ति । ९ द. षड्त्रिंशद्विकलाधिका । १० द. गुणिना हस्ता । ११ धनूरेखान्तर्गत 'हस्त' इति स्यात् । १२ द. 'वि' इति पाठः नास्ति । १३ द. गर्भं गृह । १४ द. र्याः । १५ द. विस्तृताः । १६ द. कार्यं पादाष्टांशज° । १७ द. °का कार्या ।

† 'कामार्थः कर्तुः' इत्येवञ्जातीयं लुप्ताक्षरस्थाने निवेश्यम् ।

रथिकानां च सर्वासां स्वभद्रं विस्तरार्धतः ।
श‍ृङ्गं भद्रं यथैवैकं तथा सर्वाणि कारयेत् ॥ २४८ ॥

दिक्सूत्रेषु ( च[1] ) सर्वेषु वर्धमानं निवेशयेत् ।
अष्टभागोच्छ्रिता जङ्घा खुरपिण्डं[2] तदर्धतः ॥ २४९ ॥

ये[3]( मे )खलान्तरपत्रे च स्यातां भागद्वयोद्गते[4] ।
प्रथमा रथिकास्तत्र ( सपादा[5]त्सू ? )त्रयोच्छ्रिताः ॥ २५० ॥

पदपादविहीनाः स्युः क्रमेणोपरिभूमयः ।
दिक्सूत्रेषु सकर्णेषु क्रिया प्राग्वद् विधीयते ॥ २५१ ॥

शिखरं दशविस्तारं भागैर्द्वा[6] ( गद्वा )दशकोच्छ्रितम् ।
चतुर्गुणेन सूत्रेण वेणुकोशं समालिखेत् ॥ २५२ ॥

स्कन्धकोशान्तरं चास्य त्रिभिर्भागैर्विभाजयेत् ।
ग्रीवा च पद्मशीर्षं च तावद्[7] भागार्धमुच्छ्रयात् ॥ २५३ ॥

भा[8]गमामा( गं चाम )लसारं स्यात् कलशो भागमेव च ।
सा[9]( श )तश‍ृङ्गावृतो मेरुरयं[10] प्रासाद ईरितः ॥ २५४ ॥

प्रदक्षिणीकृते त[11]स्या तत्पुण्यं कनकाद्रिणा( ? )
शैलेष्टकामये तत् स्यात् कृतेऽस्मिन्नधिकं ततः ॥ २५५ ॥

मेरुः ॥

नन्दिशालस्य संस्थाने तद्रूपे समवस्थिते ।
द्वितीया[12] रथिका कार्या भागद्वयविनिर्गता[13] ॥ २५६ ॥

शेषो भद्रस्य विस्तारः स्वविस्तारो[14]ऽ( रा )र्धनिर्गतः ।
अष्टांशायामविस्तारः स्व[15]विस्तारो( रा )र्धनिर्गतः ॥ २५७ ॥

अष्टांशायामविस्तारः( रा ) शाला स्यात् पुरतः पुनः ।
तस्या मध्ये भवेद् गर्भो द्विभागायामविस्तरः[16] ॥ २५८ ॥

---

१ द. पुस्तके नास्ति । २ द. °ण्डस्त° । ३ द. प्रतौ नास्ति । ४ द. °योन्विते । ५ द. सपादांशत्र° । ६ द. प्रतौ नास्ति । ७ द. भवेद् । ८ द. भागमामलसारस्य । ९ द. प्रतौ नास्ति । १० द. °र्ह्ययं । ११ द. नस्याद्यत्पुण्यं । १२ द. य । १३ द. ताः । १४ द. °स्तरोर्द्ध° । १५ द. पुस्तके नास्ति । १६ द. स्तृतः ।

गर्भभित्तिर्भवेच्चास्य भागेनैकेन निर्गता[1]।
बाह्यभित्तिस्तथैव स्यात् तत्समा चान्धकारिका[2] ॥ २५९ ॥
द्विभागा[3] रथिकास्तस्य सलिलान्तरभूषिताः ।
शेषो भद्रस्य विस्तारो भागेनैकेन निर्गमः[5] ॥ २६० ॥
जङ्घोत्सेधं ( च[4] ) पीठं च विदध्यान्नन्दिसौर( शाल )वत् ।
रथिकास्तत्र कर्तव्याः कर्ण[6]( र्णे ) भागत्रयोच्छ्रिताः ॥ २६१ ॥
षडंशान् विस्तृतैः( तं ) कुर्याच्छिखरं सप्तचो( मो[7] )च्छ्रितम् ।
कार्या केसरिवच्चास्य रेखा सामलसारिका ॥ २६२ ॥
एभिर्गुणैर्युतं चैनं पार्श्वयोरपि योजयेत् ।
प्रासादोऽयं लताख्यः स्यात् कर्तव्यो दानवद्विषः ॥ २६३ ॥

लताख्यः ॥

अग्रेनमं यदा पश्चान्न्यस्येत[8] सरिणं तदा ।
भवेत् त्रिपुष्कराख्योऽयं प्रासादस्त्रिदशालयः ॥ २६४ ॥

त्रिपुष्कराख्यः ॥

नन्दिशालस्य सर्वासु दिक्षु[10]( क्ष्व )यं केसरी यदा ।
स्यात् तदा पञ्चवक्त्रोऽसौ विधेयः पद्मजन्मनः ॥ २६५ ॥

पञ्चवक्त्रः ॥[11]

यदा च पञ्चवक्त्रस्य मध्ये गर्भो[12]( र्भो ) न दीयते ।
बाह्यलेखादिकं प्राग्वद्[13] दिक्षु सर्वासु कल्पते[14] ॥ २६६ ॥
चतुःस्तम्भसमा कार्या मध्ये चास्य चतुष्किका ।
वितानं चोपरि न्यस्येन्मध्यतस्तस्य भूषणम् ॥ २६७ ॥
हरो हिरण्यगर्भश्च हरिर्दिनकरस्तथा ।
एते चतुर्मुखे[15] स्थाप्या नापरेषां भवत्ययम् ॥ २६८ ॥

चतुर्मुखः ॥

---

१ द. ताः । २ द. काः । ३ द. ग । ४ द. पुस्तके 'च' इति पाठः अस्ति । ५ द. प्रतौ नास्ति । ६ द. नास्ति । ७ द. नास्ति । ८ द. नास्ति । ९ द. र्के । १० द. नास्ति । ११ द. नास्ति । १२ द. नास्ति । १३ द. ग्वा । १४ द. °ल्प्यते । १५ द. खाः ।

चतुःषष्टिकरे कुर्यात् क्षेत्रे[1] मानैकविंशतिः (?) ।
सप्तवर्गपदो गर्भो भित्त्या सह विधीयते ॥ २६९ ॥

स्याद् गर्भभित्तिर्[2]भागेन भागेनैवान्धकारिका ।
षड्भागं कर्णविस्तारं दशधा प्रविभाजयेत् ॥ २७० ॥

षड्भिर्भागैर्भवेद[3]स्य गर्भो भित्त्या समन्वितः ।
बाह्या भित्तिर्भवेद् भागाद् भाग[4]श्चैवान्धकारिका[5] ॥ २७१ ॥

द्विभागं कर्णवैपुल्यमुदकान्तरभूषितम् ।
शेषो भद्रस्य विस्तारश्चतुर्थांशविनिर्गतः ॥ २७२ ॥

क्षोभयेदर्धभागे[6] तु तदर्धेन जलान्तरम् ।
मत्तवारणकैर्विद्या[7]त् स्तम्भैरुपरि शोभिता[8]ः ॥ २७३ ॥

रथिकैका त्रिभागेन पुनः सार्धद्विभागिका[9] ।
तासां परस्परक्षेपो भागो भागो विधीयते ॥ २७४ ॥

शेषं शिखरविस्तारः[10] सार्धषट्कं तदुच्छ्रयः[11] ।
पृथक्सूत्रैस्त्रिगुणितैर्वेणुकोशं समालिखेत् ॥ २७५ ॥

स्कन्धकोशान्तरं भागैश्चतुर्भिस्तस्य भाजयेत्[12] ।
ग्रीवार्धभागमुत्सेधो भागेनामलसारकम् ॥ २७६ ॥

पद्मशीर्षस्त[13](र्षं त)था भागं कलशो भागसंमितः ।
अर्धभागसमो(मु[14])त्सेधं कारयेद् बीजपूरकम् ॥ २७७ ॥

सर्वकर्णेषु कर्तव्याः[15] क्रियाश्चैवं विचक्षणैः ।
दिक्सूत्रबाह्यभागेषु वलभीं[16] संनिवेशयेत् ॥ २७८ ॥

निर्गमे पञ्चभागः स्यात् तिर्यक् प्रक्षिप्त[17]भागिकाः (?) ।
अस्यां[18] द्विभागिको गर्भो मध्ये[19] भागत्रयोच्छ्रितः ॥ २७९ ॥

---

१ द. क्षेत्रांशानेकविंशति । २ द. भा । ३ द. ष्व । ४ द. गा । ५ द. काः । ६ द. गं । ७ द. °र्वैद्या । ८ द. नः (तः) । ९ द. काः । १० द. र । ११ द. या । १२ द. व । १३ द. प्रतौ नास्ति । १४ द. नास्ति । १५ द. °व्या क्रिया सैवं । १६ द. भां । १७ द. स्यात्सप्तभागिकः । १८ द. स्य । १९ द. मध्यभागत्रयायतः ।

भागार्ध[1]भागं भित्तिः स्यात् तत्समा चान्धकारिका ।
[2]तस्याश्चाग्रे विधातव्यः(?) षड्दारुकसमन्वितम् ॥ २८० ॥

एकैकां रथिकां सार्धभागां कर्णेषु योजयेत् ।
शेषं भद्रस्य विस्तारो भागः स्यादस्य[3] निर्गमः ॥ २८१ ॥

एवं भद्रं [4]वि(द्वि)भागं स्यात् स्तम्भद्वयसमन्वितम् ।
[5]वेलभावर्नयोर्मध्ये भागमेकं च विस्तृतम् ॥ २८२ ॥

[6]तत्रोदकान्तरं कुर्याद् गुणद्वारविभूषितम् ।
नवभागोच्छ्रिता जं[7]ङ्घा पीठमस्य तदर्धतः ॥ २८३ ॥

मेखलान्तरपत्रे च कुर्याद् भागद्वयोन्मिते ।
रथिका स्याद् द्विभागा च ततः सार्धैकभागिका ॥ २८४ ॥

शेषं शिखरविस्तारः पञ्चांशं शिखरोच्छ्रयः ।
उपर्युपरि कर्तव्यं सर्वतोभद्रकद्वयम् ॥ २८५ ॥

द्वे द्वे च सर्वतोभद्रे कर्णे कर्णे निवेशयेत् ।
दिक्सूत्रेषु समस्तेषु क्रियामेवं प्रकल्पयेत् ॥ २८६ ॥

[8]विस्तार शिखरस्याष्टौ भा[9]गात्स्यार्धसमुच्छ्रयः(?) ।
पञ्चव्यासेन सूत्रेण [10]+ + + + + + + + + ॥ २८७ ॥

[11]वेणुकोशान्तरं चास्य त्रिभिर्भागैर्विभाजयेत् ।
ग्रीवां[12] च पद्मशीर्षं च भागेन स्यादिदं द्वयम् ॥ २८८ ॥

प्रत्येकं[13] भागिकौ कार्यौ कलशामलसारकौ ।
[14]त(न)वात्मकोऽयं कथितः प्रासादस्त्रिदशालयः ॥ २८९ ॥

नवात्मकः ॥

---

१ द. °र्द्धं भागभित्तिः । २ द. 'तस्याश्चाग्रं विधातव्यम्' इति स्यात् । द. पुस्तके 'तस्य वाग्रं विधातव्यः षद्दारक°' । ३ द. र्द्ध । ४ द. पुस्तके नास्ति । ५ द. व्यलर्लीकर्णयोर्मध्ये । ६ द. तं° । ७ द. ज्ज । ८ 'विस्तारः शिखरस्याष्टौ भागः सार्धं समुच्छ्रयः' इति स्यात् । ९ द. भागान् सार्धान् स° । १० द. 'वेणुकोशं समालिखेत्' इति चतुर्थपादः स्यात् । द. वेणुकोशं समालिखेत् ॥ ११ द. स्कंध । १२ द. वां । १३ द. क । १४ द. पुस्तके नास्ति ।

विन्यसेद्[1] दि(दी)शमै[2]शान्यामाग्नेय्यां पुरुषोत्तमम् ।
ब्रह्माणं वायुदिग्भागे नैर्ऋते च[3] दिवाकरम् ॥ २९० ॥

मध्यगर्भे शिवः स्थाप्यः प्राच्यामपि पुरन्दरः[4] ।
धर्मो[5]यमां(याम्यां) प्रतीच्यां च वरुणः सोम उत्तरे ॥ २९१ ॥[6]

([7]भक्ताठा ?) शक्तिसम्पन्नः पूर्वायतनसन्निधौ ।
प्रासादं कारयेद् यत्नात् तदाद्यं[8] नैव पीडयेत् ॥ २९२ ॥

[9]उत्कृष्टमपकृष्टं वा यत्र स्थाने निवेशयेत् ।
प्रासादं तत्र कर्माणि यानि तान्यभिदध्महे ॥ २९३ ॥

सम्मुखं नैव कुर्वीत हीनं वा यदि वाधिकम् ।
[10]वेदभागास्तं तव सश्रितस्तस्या स्यात्प्रासादोऽतिविगर्हितः(?)॥२९४॥

अन्योन्यं दक्षिणे वेधो हीन इत्यभिधीयते ।
वेधभागा[11]मृते(?)मृत्युं हीने हानिं विनिर्दिशेत् ॥ २९५ ॥

हरो हिरण्यगर्भश्च हरिर्दिनकरस्तथा ।
एते देवाः समाख्याताः परस्परविरोधिनः ॥ २९६ ॥

एता न दक्षिणापार्श्वे स्थापयेत् पुरमाश्रितान् (?) ।
वामतो नान्यदेवानां ना(स्ति ?)पि हीनालयेषु च ॥ २९७ ॥

नैतेषां दक्षिणे कुर्यादन्येषामपि चालयम् ।
हीनं वा यदि वाहीनं यदीच्छेच्छ्रिय आत्मनः ॥ २९८ ॥

तेषामुत्तरतो नू(ही)नं यदि(दी)च्छेद् देवतालयम् ।
प्रासादपदमानेन नवषट्त्रिंशदा(द)न्तरे ॥ २९९ ॥

प्रासादं कारयेदन्यं मर्मवेधविवर्जितान्(तम्) ।
पुरतः पृष्ठतो वापि पार्श्वयोरुभयोरपि ॥ ३०० ॥

---

१ द. नास्ति । २ द. मी । ३ द. वा । ४ द. रं । ५ द. पाच्यां । ६ द. अतःपरं नवात्मकः इति पुस्तकस्य पाठः । ७ द. भक्तीच्छाशक्तिसंपन्न पू° । ८ द. द्यां । ९ द. व । १० द. वेधभागाश्रितस्तस्याप्रा° । ११ द. °गा सृते नृत्यं ।

महाममर्माणि चत्वारि कुर्याद् यत्ताघनोत्तरे (?)[1] ।
क्षणमध्येषु सर्वेषु द्रव्यमेकं न दापयेत् ॥ ३०१ ॥

तदा युग्म + + + + वेधमर्म विवर्जयेत् ।
क्षणमध्ये यदा द्रव्यमेकं मोहात् प्रदीयते ॥ ३०२ ॥

कर्तृकारकयोः पीडा भवेत् पूजा न तादृशी ।
तस्मात् सर्वप्रयत्नेन स्थपतिः कारकोऽपि च ॥ ३०३ ॥

मर्माणि वर्जयेद् यत्नात् प्रासादस्य समीपतः ।
अथ मर्मवियुक्तो(क्तं) यः प्रासादं कर्तुमिच्छति ॥ ३०४ ॥

प्रासादतः सदा तेन विधेयं महदन्तरम् ।
(प्रासादां तूत्तरं कवः) कार्यं फलपुष्पैर्विभूषितम् ॥ ३०५ ॥

य एतैर्लक्षणैर्युक्तं कारयेद् देवतालयम् ।
धनधान्यमवाप्नोति मोदते सुखमेव च ॥ ३०६ ॥

हरो हिरण्यगर्भश्च हरिर्दिनकरोऽपि च ।
एते देवाः समाख्याता देवनामपि पूजिताः ॥ ३०७ ॥

पृथक्त्वेन च कर्तव्या एकरूपसमन्विताः ।
अष्टबाहुश्चतुर्वक्त्रः कुण्डली मुकुटोज्ज्वलः ॥ ३०८ ॥

हारकेयूरसंयुक्तो रत्नमालोपशोभितः ।
ऋष्यागतपुरः कार्यः पद्महस्तो दिवाकरः ॥ ३०९ ॥

शङ्खचक्रधरो देवो वामे च मधुसूदनः ।
कण्ठाभरणसंयुक्तो मूर्धा च मुकुटोज्ज्वलः ॥ ३१० ॥

ब्रह्मा पश्चिमतः कार्यो बृहज्जठरमण्डलः ।
कुण्डिकामक्षसूत्रं च दधत् कूर्चविभूषितः ॥ ३११ ॥

प्रासादा रुचकादयोऽत्र ललिताः प्राग् विंशतिः पञ्चयुक्
तावन्तश्च ततोऽनु केसरिमुखाः( स )न्धारकाः कीर्तिताः ।

---

१ 'यत्नाद्यथोत्तरम्' इति स्यात् ।

मिश्राख्या नव पञ्च चानुकथितास्तद्वन्निगूढाख्यया
षष्टिः स्याच्चतुरन्वितेति विदिता सैषा भवेत् सम्पदे ॥ ३१२ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
रुचकादिचतुःषष्टिप्रासादको नाम
षट्पञ्चाशोऽध्यायः ॥

---

## अथ मेर्वादिविंशिका नाम सप्तपञ्चाशोऽध्यायः ।

अथान्यान् कथयिष्यामः समासात् सूक्ष्मलक्षणान् ।
पञ्चाशतमिहोत्कृष्टान् प्रासादान् श्रीधरादिकान् ॥ १ ॥

श्रीधरो हेमकूटश्च सुभद्रो रिपुकेसरी ।
पुष्पो विजयभद्रश्च श्रीनिवासः सुदर्शनः ॥ २ ॥

भगवत्याः प्रिया ह्येते तथा कुसुमशेखरः ।
देवस्य शम्भोर्दयितः प्रासादः सुरसुन्दरः ॥ ३ ॥

नन्द्यावर्तश्च पूर्णश्च सिद्धार्थः सिरव(शङ्ख)वर्धनः ।
त्रैलोक्यभूषणश्चेति पद्मसु(स्तु) ब्रह्मणः प्रियः ॥ ४ ॥

पक्षबाहुर्विशालश्च तथान्यः कमलोद्भवः ।
हंसध्वज इति ख्याताः प्रासादा ब्रह्मणः प्रियाः ॥ ५ ॥

लक्ष्मीधराक्ष(ख्य)ः प्रासादो वस्त(स)तौ मधुविद्विषः ।
महावज्रो रतितनुः सिद्धकामस्तथापरः ॥ ६ ॥

पञ्चचामरसंज्ञश्च नन्दिघोषाख्य एव च ।
अनुकीर्णः सुप्रभश्च सुरानन्दोऽथ हर्षणः ॥ ७ ॥

दुर्धरो दुर्जयश्चैव त्रिकूटो नवशेखरः ।
पुण्डरीकः सुनाभश्च महेन्द्रः शिखिशेखरः ॥ ८ ॥

वराठः सुमुखः शुद्धश्चत्वारिंशादितीरिताः ।
मिश्रकास्तु दश प्रोक्ता मिथः कर्मप्रभेदतः ॥ ९ ॥

विज्ञेयो[1] नन्दसंज्ञश्च महाघोषस्तथापरः ।
वृद्धिरामाभिधानश्च[2] प्रासादोऽन्यो वसुन्धरः ॥ १० ॥
मुद्गकोऽथ बृहच्छालस्तथा(थै[3]) व च[4] सुधाधरः ।
[5]संवराख्यः शुकनिभस्तथा सर्वाङ्गसुन्दरः ॥ ११ ॥
पञ्चाशदेवं कथिता[6] प्रासादानां यथाक्रमम् ।
इदानीं लक्ष्मतो ब्रूमः श्रीधरं सर्वकामिकम् ॥ १२ ॥
वल्लभं सर्वदेवानां पुण्यानां कारणं प[7]रम् ।
चतुरश्रीकृते क्षेत्रे चतुर्विंशतिभाजिते ॥ १३ ॥
द्वादशाखिलकोणेषु कर्णशृङ्गाणि योजयेत् ।
विस्तारं च चतुर्भागमेकैकस्य विनिर्दिशेत् ॥ १४ ॥
परस्परं च [8]निष्कोऽसौ(विष्कम्भो) द्विपदोऽत्र विधीयते ।
द्व्यंशानि कर्णि(र्ण)भद्राणि निर्गमश्चार्धभागिकः ॥ १५ ॥
[10]कर्णकर्णपदे[11]न्यैस्यात् पदार्धा[12]र्धेत(?)विस्तृतः ।
वारिमग्नो[13] विधातव्यो मध्यगः पूर्वमानयोः[14] ॥ १६ ॥
भद्रस्य मानमुद्दिष्टं विस्तारा[15]द् दशभागिकम् ।
निर्गमश्च त्रिभिर्भागैः समसूत्रसमाहितैः[16] ॥ १७ ॥
द्वि[17]पादा बाह्यभित्तिस्तु द्वि[18]पादा चान्धकारिका ।
भवेच्छतपदः कन्दो गर्भः षड्विं[19]शदंशकः[20] ॥ १८ ॥
द्विपदः कर्णकन्दश्च प्रत्यङ्गं पदिकं स्मृतम् ।
निर्गतं चार्धभागेन चतुर्दिक्षु व्यवस्थितम् ॥ १९ ॥
भागेन निर्गता कार्या शाला चास्य चतुष्पदा ।
अभ्यन्तरं बाह्यभित्तेः [21]कन्दस्य च तथा बहिः ॥ २० ॥

---

१ द. ज । २ द. राम । ३ द. प्रतौ नास्ति । ४ द. 'व' पाठः । ५ द. संवत्सराक्षः कथित-स्तथा । ६ द. तं । ७ द. व । ८ द. निष्काशो द्वि° । ९ द. पुस्तके नास्ति । १० द. 'कर्णः कर्णपदेऽन्यः स्यात् पदार्धार्धेन' इति स्यात् । ११ द. न । १२ द. द्धार्द्धेन । १३ द. °मार्गो । १४ द. याः । १५ विस्तरादष्ट भा° । १६ द. श्रितः । १७ द. प । १८ द. प । १९ द. त्रिं । २० द. काः । २१ द. स्क ।

उभयोरन्तरं कार्यं विस्तारात् पञ्चभागिकम् ।
अन्तरालं च कुर्वीत शृङ्गं तच्च[1] चतुष्पदम् ॥ २१ ॥
विभागस्तादृशोऽस्य स्याद् बाह्यशृङ्गस्य यादृशः ।
भित्तिकन्दान्तराले च कार्यं षड्दारु[2]कं बुधैः ॥ २२ ॥
[3]इतिकातोरणयुतं चतुर्दिक्षु मनोरमम् ।
पुरतो मण्डपं कुर्यात् सर्वलक्षणसंयुतम् ॥ २३ ॥
भागैः पञ्चाशता कुर्यादस्य मानमिहोर्ध्वगम् ।
एषां मध्ये [4]सत्रिंशत्या प्रविधेयास्तुलोदयाः ॥ २४ ॥
तेषां मध्येंऽशकैः षड्भि[5]र्वेदीबन्धो विधीयते ।
नवधा भाजिते तत्र वेदीबन्धे समैः पदैः ॥ २५ ॥
कुम्भश्चतुष्पदस्तत्र द्विपदस्तु मसूरकः ।
भागेनान्तरपत्रं स्यान्मेखला द्विपदाः स्मृताः ॥ २६ ॥
मूलभागास्तु ये तैः स्याज्जङ्घा दशभिरुच्छ्रिताः ।
द्विपदा मेखला प्रोक्ता द्व्यंशे चान्तरपत्रके ॥ २७ ॥
अधस्तादूर्ध्वपक्ष[6]( ट्ट )स्य तलपट्टस्य चोपरि ।
षोडशांशाँ[7] विधातव्या[8]स्तत्रैतत् कर्म वा[9]र्चयेत् ( ? ) ॥ २८ ॥
भागेन रूपधारा [10]स्यात् सार्धा सार्धा च सेनकम् ( ? ) ।
वेदी भागत्रयोत्सेधा[11] + द्धेनासनपट्टकः ॥ २९ ॥
[12]सोर्ध्व( सार्ध )भागेन कर्तव्यम[13]ूर्ध्वचन्द्रावलोकनम् ।
आसनस्योर्ध्वतः स्तम्भाः सार्धपञ्चपदाः स्मृताः ॥ ३० ॥
भागेनो[14]च्छालकं कार्यं [15]शीष( शीर्षं ) सार्धपदोन्नतम् ।
प[16]ट्टः स्याद् द्वि[17]पदोत्सेधस्त्रिपदश्छाद्यविस्तरः ॥ ३१ ॥
[18]लम्बनं तु तदर्धेन यथाशोभमथापि वा ।
[19]ऊर्ध्वनान्तरः( र्ध्वेनान्तर )पत्रस्य कस्य( ल्प्य )तेऽप्ययथाक्रमम् ॥

---

१ द. त्तु । २ द. र । ३ द. इलिका तोरणैः युक्तं । ४ द. ऽथ । ५ द. काः । ६ द. पुस्तके नास्ति । ७ द. °शो । ८ द. व्यो । ९ द. चा । १० द. स्त्यात्सार्द्धाशाद्राजसेनकं । ११ द. धं सार्द्धेना° । १२ द. प्रतौ नास्ति । १३ द. र्ध्वं । १४ द. त्का° । १५ द. प्रतौ नास्ति । १६ द. टः । १७ द. विधो । १८ द. लवणं । १९ द. ऊर्ध्वमन्तरपत्रस्य कथ्यतेऽथ यथागमम् पुस्तकस्य पाठः ।

कोणेषु कूटः कर्तव्यो विविधैः कर्मसम्भ्रमैः ।
विस्तारः[1] स्याच्चतुर्भागस्तेषां षड्भाग उच्छ्रयः ॥ ३३ ॥
कर्णा[2] घण्टासमायुक्ताः[3] कूटमानं विधीयते ।
[4]तत्र मृत्युक्रमात्(?)कुर्यादेकैकं च तदूर्ध्वतः ॥ ३४ ॥
तेषां च तुल्यता कार्या विस्तारादुच्छ्रयादपि ।
चत्वार एककर्णे स्युरेवं सर्वेषु षोडश ॥ ३५ ॥
सिंहकर्णस्य विस्तारो[5](र)मानं स्यादष्टभागिकम् ।
[6]षड्भागस्तु तथोत्सेधो रथिकैश्च विभूषणम् ॥ ३६ ॥
गुणद्वा(ता)[7]रैसमायुक्तः शूरसेनाभिधानकः ।
सिंहकर्णो[8] विधातव्यः सर्वकर्मसमाकुलः ॥ ३७ ॥
सिंहकर्णो[9]दयादूर्ध्वमुरोमञ्जरिका भवेत् ।
[10]विस्तारादष्टभागासावुच्छ्रायन(यान्न)वभागिका ॥ ३८ ॥
लतापञ्चकसंयुक्ता मञ्जरी स्यात् सुशोभिता[11] ।
ग्रीवा पादोनभागा स्यादण्डकं भागमुच्छ्रितम् ॥ ३९ ॥
[12]चन्द्रिका सार्धभागेन कलशश्चैव भागिकः ।
कूटमू[13]र्ध्वे(र्ध्वि) द्वितीया[14] स्यादुरोमञ्जरिका तथा ॥ ४० ॥[15]
([16]भागात्तद्द्वादशविस्तीर्णा तु सार्धा न त्रिदशावाच्छ्रिता ?) ।
भागमेकं भवेद् ग्रीवा सार्धभागेन चा[17]ण्डकम् ॥ ४१ ॥
[18]कर्परं(?) चार्धभागेन कलशश्च द्विभागिकः ।
उरःशिखरकान्य(ण्य)[19]ष्टौ भवन्त्येवं चतुर्द[20](र्दि)शम् ॥ ४२ ॥
द्वितीयकूटकस्योर्ध्वे कर्तव्या मूलमञ्जरी ।
भाग[21]षोडशविस्तारा [22]पदाष्टादशकोदयः(या) ॥ ४३ ॥

---

१ द. रं । २ द. °र्ण । ३ द. क्तं । ४ द. तत्र द्दक् प्रक्रमात् कु° । ५ द. रं । ६ द. तद्भागश्च तथोत्सेधा रथकैश्च । ७ द. पु. नास्ति । ८ द. रः । ९ द. र्णं । १० द. विस्तरो इष्टभागं स्यादुच्छ्रयनवभागिकाः ॥ पुस्तकस्य पाठः । ११ द. ताः । १२ द. चंडिका । १३ द. प्रतौ नास्ति । १४ द. यः । १५ द. भागान् द्वादश्यविस्तीर्णान् सार्धा स्त्रिदशचोच्छ्रितान् ॥ पुस्तकस्य पाठः । १६ 'भागद्वादशविस्तीर्णा सार्धोनत्रिंशतोच्छ्रिता' इति स्यात् । १७ द. चंडिकं । १८ द. कर्परं चात्र भागेन । १८ द. पुस्तके नास्ति । २० द. प्रतौ नास्ति । २१ द. गं । २२ द. पराष्टदशकोटे यः ।

स्कन्[1]धमानं हि सर्वेषां यथोक्तं शनवास्तुनि ।
ग्रीवा सार्धपदांशा स्यादण्डकं द्विपदान्वितम् ॥ ४४ ॥

[illegible]नि कुर्यात् सर्वाण्डकानि च ।
द्विपदं[2] च( म )ण्डिकायुग्मं कार्यं सामलसारकम् ॥ ४५ ॥

तस्योपरि स्यात् कलशो वर्तुलस्त्रिपदोच्छ्रितः ।
तोरणैर्मकरैः पत्रैः सा[3]ग्रैश्च सव( म )रालकैः ॥ ४६ ॥

हस्तितु[4]ण्डैः [illegible]( प्स )रोगण[illegible] ।
ईदृशं श्रीधरं कुर्यात् [illegible] ॥ ४७ ॥

श्रीधरं कारयेद् यस्तु [illegible] मानवः ।
इहैव ल[6]भ[7]ते( वसतः ? ) सौख्यमनुऐन्द्रत्[8]वमाप्नुयात् ॥ ४८ ॥

भोगान् भुक्त्वा पुमान् स्वर्गं[9] नीयते च परे पदे ।
सर्वपापविनिर्मुक्तः शान्तश्[10]च स्यान्न संशयः ॥ ४९ ॥

श्रीधरः ॥

हेमकूटमथ ब्रूमः शुभलक्षणसंयुतम् ।
सर्वविद्याधरस्थानमाश्रयः स [11][illegible]ः ॥ ५० ॥

चतुरश्रीकृते क्षेत्रे षड्विंशत्यंशभाजिते ।
तत्र स्युः षड्पदाः कर्णाः शाला द्वादशभागिकाः ॥ ५१ ॥

निर्गताश्च त्रिभिर्भागैर्भवन्त्येताश्चतुर्दिशम् ।
अष्टभागायतौ[12] भूयो निर्गमै[13]श्च त्रिभिः पदैः ॥ ५२ ॥

चतुःस्तम्भाश्चतुष्पा[14]श्व( र्श्वा ) दिक्षु सर्वास्वयं विधिः ।
कर्णशालान्तरं कार्यं पदे[15]नैकेन विस्तृतम् ॥ ५३ ॥

प्रविष्टं तत् पदेनैकं[16] तदेवात्र जलान्तरम् ।
पदेन कर्णे कोणः स्यात् प्रत्यङ्गे पदार्धविस्तृते ॥ ५४ ॥

---

१ द. द । २ द. तीयं च । ३ द. ग्रासैश्च स व॰ । ४ द. तु । ५ द. प्रतौ पाठः नास्ति । ६-७ द. प्रतौ नास्ति । ८ द. स्व । ९ द. र्गे । १० द. शांतः स्यान्नात्र संशयः । ११ द. पता । १२ द. तो । १३ द. ता । १४ द. ष्व्याश्च । १५ द. भागे । १६ द. व ।

कर्मप्रमाणमेतस्य पृथङ् मध्येऽ[1]भिधीयते ।
द्विपदं ([2]राजासेनं स्याद्वेदा + + चतुष्पदा (?) ॥ ६७ ॥

भवत्यासनपट्टस्य कल्पना भागमानतः ।
सार्धं भागद्वयं कार्यमूर्ध्वं चन्द्रावलोकनम् ॥ ६८ ॥

स्तम्भाना[3]सनपट्टार्धेन युञ्ज्यादष्टभागिकान् (?) ।
भरणस्तम्भशीर्षे च प्रत्येकं प[4]दके स्मृते ॥ ६९ ॥

द्विपदश्चा[5]र्धपट्टः स्याच्छाद्य[6]केन सुशोभितः ।
त्रिपदं छा[7]द्यकं तत्र विस्तारेण प्रकीर्तितम् ॥ ७० ॥

एतन्मानं समाख्यातमलिन्देषु चतुर्दिशम् ।
ऊर्ध्वमन्तरपत्रस्य कथयामो यथाक्रमम् ॥ ७१ ॥

षट्पदे कर्णविस्तारा[8]( रे ) सप्तांशा कर्णमञ्जरी ।
ग्रीवाम[9]र्धपदं कुर्यात् पदमेकं तथाण्डकम् ॥ ७२ ॥

[8]अर्धांशा चन्द्रिका च स्यादेकांशः कलशोच्छ्रयः ।
[10]अस्योरोमञ्जरी कार्या विस्तारेण चतुष्पदा ॥ ७३ ॥

ग्रीवाण्डके[11] विधातव्यं(व्ये)भागेनार्धेन कुम्भकः ।
सिंहकर्णस्[12]तु कर्तव्यो द्विपदोऽस्यैव मध्यतः ॥ ७४ ॥

इत्थं पञ्चाण्डकाः कर्णे हेमकूटेषु[13] कीर्तिताः ।
अष्टांशविस्तृतं कुर्यादुदयेन च षट्पदम् ॥ ७५ ॥

अलिन्दस्योर्ध्वभाग[14]स्तं( स्थं ) सिंहकर्णं[15] मनोरमम् ।
सिंहकर्णे द्वि[16]भागस्[17]थो( स्थां ) द्वादशांशकविस्तृत[18]( ताम् ) ॥ ७६ ॥

उरोमञ्जरिकां कुर्यात् त्रयोदशपदोच्छ्रिताम् ।
सप्तांशविस्तृतः स्कन्धो ग्रीवा च पदमुच्छ्रि[19]तां ॥ ७७ ॥

---

१ द. वि । २ द. राजसेनं स्यात् वेदी तस्य चतुष्पदा ॥ मुद्रित पुस्तके पाठांतरः तु 'राजासनं स्याद् वेदी चास्य चतुष्पदा' इति स्यात् । ३ द. °सनपाटार्धे नियु° । ४ द. दि । ५ द. य । ६ द. य । ७ द. प्रतौ नास्ति । ८ द. अर्द्धा स्याच्चं° । ९ द. श । १० अस्येररो मंजरी? ११ द. °कं । १२ द. °र्णोऽस्य । १३ द. प्रकी° । १४ द. नास्ति । १५ द. °र्णं । १६ द. °द्व । १७-१८ द. प्रतौ नास्ति । १९ द. ताः ।

अण्डकं सार्धभागेन चन्द्रिकार्धपदा स्मृता[1] ।
आकाशलिङ्गं कुर्वीत द्विपदं सुमनोरमम् ॥ ७८ ॥

विस्तारो मूलमञ्जर्या भागविंशतिसंमितः ।
उच्छ्रायोऽस्यैकविंशत्या स्कन्धो द्वादशभागिकः ॥ ७९ ॥

पञ्चभौ[2]मस्तु कर्तव्यो यथा चारु[3]ः स जायते ।
प्रथमा भूमिका तत्र पञ्चभागा विधीयते ॥ ८० ॥

परा परार्धभागेन न्यूना न्यूना विधीयते ।
स्कन्धमानं विधातव्यं पदेनैकेन चोन्नतम् ॥ ८१ ॥

विभज्य दशधा कुर्याल्लताः पञ्चातिसुन्दरीः[4] ।
हेमकूटस्य कर्णेषु प्रत्यङ्गे नरकिन्नराः ॥ ८२ ॥

म[5](अ)न्ये तिलककूटाश्च कर्तव्यास्तु निरन्तराः ।
ईदृशी मञ्जरीहे[6](है)मे विधेया कूटनिर्गता(:?)[7] ॥ ८३ ॥

ग्रीवा सार्धपदा प्रोक्तो[8](क्ता) विस्तारादष्टभागिका(:?)[9] ।
अण्डकं द्विपदोत्सेधमेकादशपदायतम् ॥ ८४ ॥

दं[10]ण्डिका सार्धभागो[11]च (चा) विस्तारा[12]न(न्न)वभागिका ।
त्रिपदः कलशः कार्यो विस्तारेणोच्छ्रयेण च ॥ ८५ ॥

एवंविधं विधत्ते यो हेमकूटं मनोरमम् ।
स क्रीडति पुमान् स्वर्गे यावत् क्रीडा पिनाकिनः ॥ ८६ ॥

हेमकूटः ॥

सुभद्राख्यमथ ब्रूमः प्रासादं भद्रभद्रकम् ।
सुभद्रोऽयमतः प्रोक्तो भद्रे[13] भद्रे यतोऽन्वितः ॥ ८७ ॥

चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते ।
गर्भः षोडशभिर्भागैः स्क(क)न्दः षट्पदविस्तृतः ॥ ८८ ॥

---

१ द. ताः । २ द. भू° । ३ द. रु । ४ द. री । ५ द. मध्येति° । ६ द. प्रतौ नास्ति । ७ द. ताः । ८ द. प्रतौ नास्ति । ९ द. काः । १० द. चंद्रिका । ११ द. प्रतौ नास्ति । १२ द. °रान विभा° । १३ द. भद्रै र्भद्रैर्य° ।

भित्तिः स्यात् पदविंशत्या तत्र कन्दस्थसंस्थाः स्थ[1](स्मृ)ताः ।
कर्णाः [2]प्रत्यङ्गको(का)न्येषां प्रत्येकं पदविस्तरात् ॥ ८९ ॥

द्व्यंशो म[3]ध्यगविस्तार उभयोर्निर्गतो[4](म)ः पदम् ।
द्व्यंशः [5]सेरसि(?)विस्तार आक्रा[6]न्तपदभित्ति[7]भिः ॥ ९० ॥

द्विपदा बाह्यभित्तिः स्याद् विस्तारेण सुशोभिता[7](ः?) ।
चतुष्पदायतः कर्णो भद्रं तस्य द्विभागिकम् ॥ ९१ ॥

निर्ग[8]मोऽस्यार्धभागेन स्यादेवं सुन्दरं कृतम् ।
कर्णे कोणासु(स्तु) पदिका दिक्षु सर्वासु शोभनाः ॥ ९२ ॥

नि[9]र्यूहविस्तरः कार्यः सार्ध(र्धं)पञ्चपदोन्मितः ।
द्विपदो निर्गमश्चास्य सर्वदिक्षु विधीयते ॥ ९३ ॥

सलिलान्तरकं कुर्यादन्तरे [10]कर्णभद्रयोः ।
प्रविष्टं पदमानेन पदपादेन निर्गतम् ॥ ९४ ॥

ऊर्ध्वमानमथैतस्य[11] यथावदभिधीयते ।
[12]राजपीठं विधातव्यं भागार्धेनातिसुन्दरम् ॥ ९५ ॥

ऊर्ध्वभागेन खुर[13]पीठं स्यात्कुम्भकं ततः ।
द्विपदः कुम्भकोत्सेधः पादोनं [14]सोम(स्यान्म)सूरकम् ॥ ९६ ॥

भागार्धेनान्तरं पत्रं पादोनांशेन मेखलाः ।
षड्भागमुच्छ्रिता जङ्घा भागेन चान्तपट्टि[15]काः(?) ॥ ९७ ॥

मेखलान्तरपत्रे च प्रत्येकं प[16]दके स्मृते ।
प[17]ट्टादधरखुरादूर्ध्वं भागा [18]सैकां दशान्तरम् । (?) ॥ ९८ ॥

[19]राजासनं पदं प्रोक्तमुत्सेधं(धे)नातिशोभनम् ।
अर्धेनात्यं[20]धिके कार्ये द्वे पदे वेदिकोच्छ्रयः ॥ ९९ ॥

---

१ द. थि । २ द. त्र । ३ द. °ध्यंग° । ४ द. तः । ५ द. शि । ६ द. न्तः । ७ द. ताः । ८ द. ना । ९ द. निर्घू(र्व्यू-र्गू-र्य)ह । १० द. भद्रकर्णयोः । ११ द. क । १२ द. ग । १३ द. °कं । १४ द. नांशंगसू° । १५ द. का । १६ द. दि । १७ 'पट्टादधः खुरादूर्ध्वं भागास्त्वेकादशान्तरम्' इति स्यात् । द. पट्टाऽधः खु° । १८ द. च्चैका । १९ द. राजसेनं पदे प्रोक्तं उत्सेधेना° । २० द. °भ्य° ।

पदार्धमासनं कार्यं अंशं च[illegible] ।
ऊर्ध्वमासनपट्टस्य स्तम्भः पञ्चपद[illegible] ॥ १०० ॥
( पञ्चपदान्वितः[1] ? )

भरणं [illegible] च पदेन स्यात् समुच्छ्रितम् ।
[illegible] कुर्यात् पदैकेन पट्टकम् ॥ १०१ ॥

द्विपदस्थः प्र( ह्वाच्च )[illegible] पदै[illegible] लम्बनम् ।
ऊर्ध्वमन्तरपत्रस्य [illegible] ॥ १०२ ॥

चतुष्पदेषु कर्णेषु ये कर्णाः पट्टिकाः स्थिताः ।
तेषु[3] ( खिखरकाः ? ) कार्या [illegible] पदम् ॥ १०३ ॥

कलशोनं तथा ग्रीवा पदार्धेन समुच्छ्रिता[4] ।
द्विपदः सिंहकर्णस्तु [illegible] समः ॥ १०४ ॥

[5]( [illegible] ? ) विधातव्या त्रिपदी[6] कर्णमञ्जरी ।
ऊर्ध्वं च त्रिपदा स ( सा ) स्याद् द्विपदा स्कन्धविस्तृतिः ॥ १०५ ॥

सार्धभागेन कर्तव्यं सग्रीवं कलशा[illegible] ।
सिंहप्रासादवत् कर्णा विधेयाः शुभलक्षणाः ॥ १०६ ॥

मूलमानेन [illegible] नि[7]र्गू( गू )हस्योपरि स्थिताः ।
द्वितीयश्च तृतीयश्च तदूर्ध्वं च समुच्छ्रि[illegible]ः ॥ १०७ ॥

[illegible]दूर्ध्वं कर्तव्या मूलमञ्जरी ।
विस्तारो दशभागांशानु( गः स्याद्‍ु )च्छ्रायो[8] द्वा[illegible] ॥१०८॥

लताभिः पञ्च( वि ? )भिर्युक्ता विचित्रैश्चापि कर्मभिः ।
षट्पदोऽस्य स्मृतः स्कन्धो ग्रीवा चास्य [illegible] ॥ १०९ ॥

[illegible] समाख्याता पादोनं समुच्छ्रिता[10] ।
अण्डकां( कं )[11] [illegible] ( [12]भवि ? ) षड्भागविस्तृतम् ॥११०॥

१ द. प्रतौ नास्ति । २ द. र । ३ द. खिंखुरका कार्या । ४ द. ताः । ५ 'शिखराधो' इति स्यात् । द. खिंखरोर्द्ध वि° । ६ द. दा । ७ द. निर्यूहस्यो° । ८ द. या । ९ द. का । १० द. ताः । ११ द. सां द्वि° । १२ द. भवेत् ष° ।

पादोनं चन्द्रिकाभागं[1] कलशश्च द्विभागिकः[2] ।
प्रासादं ये सुभद्राख्यं कारयन्ति सुलक्षणम् ॥ १११ ॥
कल्पकोटिसहस्राणि भद्रं तेषां शिवाग्रतः ।
सुभद्रः ॥
सर्वपापक्षयकरस्त्रिषु लोकेषु कीर्तितः[3] ॥ ११२ ॥
रिपुकेसरिसंज्ञोऽयं[4] प्रासादः परिकीर्त्यते ।
चतुरश्रीकृते क्षेत्रे भागविंशतिभाजिते ॥ ११३ ॥
द्विपदा बाह्यभित्तिः स्यान्मध्यभित्तिश्च तावता( ती ) ।
भ्रमणी द्विपदा कार्या विस्तारात् सर्वदिग्रताः( ग्गता )[5] ॥ ११४ ॥
गर्भोऽष्टविस्तृतः[6] कर्णः( +[7] कन्द ? )सार्धभागिकः ।
चतुर्भागायतं भद्रं कुर्याद् भागेन निर्गतम् ॥ ११५ ॥
रथकोऽसौ समुद्दिष्टो विधातव्यश्चतुर्दिशम् ।
पार्श्वयोश्च प्रतिरथौ कार्यौ[8] सार्धपदायतौ ॥ ११६ ॥
पदार्धेन विनिष्क्रान्तौ[9] + + + विविधेष्वपि ।
कर्णायामश्चतुर्भागो[10] द्विपदं कर्णभद्रकम् ॥ ११७ ॥
पदार्धेन विनिष्क्रान्तं बाह्यकर्णे[11] व्यवस्थितम् ।
पद( : ? )पादेन विस्तीर्णं प्रविष्टं पदमात्रकम् ॥ ११८ ॥
कार्यं जलान्तरं मध्ये कर्णस्य तिलकस्य च ।
द्व्यंशास्तिलकविस्तारैः[12] पदेनैकेन निर्गमः ॥ ११९ ॥
सुवर्णिताः[13] स्युस्तिलका भद्रकोणे[14]व्यवस्थिताः ।
अष्टभागं भवेद् भद्रं पदत्रयविनिर्गतम् ॥ १२० ॥
चतसृष्वपि तद् दिक्षु कर्तव्यं स्तम्भभूषितम् ।
ऊर्ध्वमानमथ ब्रूमः प्रतिपन्नं सुखावहम् ॥ १२१ ॥

---

१ द. भं° । २ द. वि । ३ द. विश्रुतः । ४ द. ऽथ । ५ द. ग्गताः । ६ द. र्भा । ७ द. कर्णः कंदः सार्धं द्वि° । ८ द. कार्यौ भद्रप° । ९ द. न्तो विधिरेषरथेष्वपि । १० द. न्या । ११ द. °र्णे । १२ द. र । १३ द. °र्त्ति । १४ द. °णे ।

ऊर्ध्वप्रमाणं द्विगुणं कर्तव्यं द्विकलाधिकम् ।
भागैरेकोन[1]विंशत्या मध्ये कार्य[2]स्तलोदयः ॥ १२२ ॥
एभ्यो मध्याद् विधातव्या[3] वेदीबन्धा[4]ः सुशोभना[5]ः ।
द्विपदः कुम्भकः सार्ध[6] पदं तु कलशो भवेत् ॥ १२३ ॥
मेखलान्तरपत्रे तु[7] कार्यं सार्धपदोन्नते ।
नवभागोन्नता जङ्घा द्विपदा रूपपट्टिका ॥ १२४ ॥
मेखलान्तरपत्रे तु विदधीत पदद्वयम् ।
मध्यं स्यात् षोडशपदं [8](मानायाः?)खुरके(को)ऽस्य च ॥ १२५ ॥
राजसेना[9] तथा वेदी तद्वदासनपट्टकम् ।
पदैः पञ्चभिरेतानि विदध्यादूर्ध्वमानतः ॥ १२६ ॥
चन्द्रावलोकनं कुर्याद् द्विपदं भागमानतः ।
उपर्यासनपट्टस्य स्तम्भः स्यात् सप्तभागिकः ॥ १२७ ॥
भरणं स्तम्भशीर्षं च द्विपदं चोर्ध्वमानतः ।
द्विपदः पट्टपिण्डः स्यात् त्रिपदश्छाद्यविस्तरः ॥ १२८ ॥
ऊर्ध्वमन्तरप[10]त्रस्य साम्प्रतं परिकीर्त्यते ।
चतुष्पदै[11]ः कर्णशृङ्गमायामोच्छ्रायतः [12]++(?) ॥ १२९ ॥
ग्रीवाण्डकं च भागेन चन्द्रिकार्धपदेन च ।
कलशश्चार्ध[13]भागेन कर्तव्योऽत्र न संशयः ॥ १३० ॥
अस्योर्ध्वतः प्रकर्तव्या द्वितीया कर्णमञ्जरी ।
त्रिपदायामविस्तारा ग्रीवाण्डकलशा(ः)[14]पदम् ॥ १३१ ॥
भद्रकर्णाश्रिते द्व्यंशो[15] विस्ता[16]रस्तिलके स्मृतः ।
उच्छ्रयस्त्रिपदस्तस्य द्विती[17]यः स्यात् तदूर्ध्वतः ॥ १३२ ॥
सार्धद्विपद उच्छ्रायो विस्तारो द्विपदः स्मृतः ।
सप्तभागोन्नतं तद्वद् विस्तारादष्टभागिकम् ॥ १३३ ॥

१ द. °केन । २ द. °स्तु° । ३ द. व्यो । ४ द. न्धः । ५ नः । ६. र्धे । ७ द. षु । ८ द. मालाया खुरकस्य च । ९ द. नं । १० द. °यत्तस्य । ११ द. दं । १२ द. °तः समम् । १३ द. त्र । १४ द. °स्पदं । १५ द. शे° । १६ द. स्त° । १७ द. द्वितीयस्य तत्संशयः ।

सिंहकर्णौ( र्णं ) प्रकुर्वीत सुसूत्रमानपूर्वकम्( ? ) ।
उरोमञ्जरिका कार्या द्वितीया तिलकोर्ध्वतः ॥ १३४ ॥

अर्धभागायतां[1] मूले नवभागमितोच्छ्रया( ः ? ) ।
तस्यास्तु स्कन्धविस्तारो भागैः स्याद‍र्धपञ्चमैः ॥ १३५ ॥

ग्रीवार्धभागमुत्सेधाद् भागेनामू( म )लसारकम् ।
चन्द्रिका चार्धभागेन कलशो भागमुच्छ्रितः ॥ १३६ ॥

द्वितीया कर्णश्रृङ्गस्य स्यादूर्ध्वे मूलमञ्जरी ।
भागा( ग )द्वादशविस्तारा कलयाऽभ्यधिकोर्ध्वतः[2] ॥ १३७ ॥

स्कन्धः सप्तपदश( दः ) प्रोक्तो ग्रीवा भागसमुच्छ्रिता ।
अण्डस्य द्व्यंश उत्सेधो विस्तारः सप्तभागिकः ॥ १३८ ॥

चन्द्रिकैकेन भागेन कलशस्तु द्विभागिकः ।
तला(लता)नागरिका कार्यानात्यन्तत्क(नान्यत् क)र्मात्र योजयेत् ॥

[3]जेस्मिन् ( ? ) विजयमिच्छन्ति भोगान् सुविपुलानपि ।
सर्वपापप्रणाशं च कार्यो[4] वा रिपुकेसरी ॥ १४० ॥

रिपुकेसरी ॥

इदानीं प्रेष( पुष्प )कं नाम प्रासादमभिदध्महे ।
निर्मितं( तो ) धनदस्यार्थे ( यः )[5] पूर्वं विश्वकर्मणा ॥ १४१ ॥

चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते ।
[6]विभज्यस्त्रिपदाकीर्णं ( ? ) चत्वारोऽपि विदिग्र( ग्ग )ताः ॥ १४२ ॥

[7]कर्णमकर्णगर्भाद्य(?) सूत्रं तेन समानि च ।
[8]रक्तानि दत्त्वा सूत्राणि तदग्रद्वितयः[9]( ? ) स्मृताः ॥ १४३ ॥

सूत्रेण चतुरः कर्णान् दिक्स्थानुत्पात( द )येत् ततः ।
चत्वारोऽन्ये[10] पुनः कर्णाः संसिद्धाः सर्वमे[11] ( ए )व हि ॥ १४४ ॥

---

१ द. अष्टभागायते मूले । २ द. शा । ३ द. य । ४ द. कार्यस्तैरि° । ५ द. यत् । ६ द. विभाज्यो( ज्यं )स्त्रिपदाः कर्णाश्चत्वारोपि विदिग्गताः । ७ द. कर्णगं कर्णगंधाय सूत्रं । ८ द. भ । ९ द. °यस्यशः । १० द. न्याः । ११ द. पूर्वमेव हि ।

एवमष्टदला(न्) कर्णान् वृत्तानेवं(व) प्रकल्पयेत्।
भागप्रवेशविस्तारं कर्णान्ते च जलान्तरम् ॥ १४५ ॥
शाला स्यात्[1] षट्पदायामा त्रिपदोऽस्याश्च निर्गमः।
द्विपदा बाह्यभित्तिः स्यात् षट्पदा कन्दविस्तृतिः ॥ १४६ ॥
कन्दगर्भस्थितं तन्त्रं[2] भ्रामयेत् कर्णकंवत(?)।
उत्पद्यते ततो वृत्तं समसूत्रं सुशोभनम् ॥ १४७ ॥
कुर्वीत तस्य मध्ये तु कन्दं षोडशपत्रकम्।
भित्तिकन्दान्तराले यच्छेषं[3] + स्याद्भ्रमन्तिका(?) ॥ १४८ ॥
पुष्पकस्य तलन्यासः पञ्चपुष्पाकृतिर्भवेत्[4]।
इदानीमूर्ध्वमस्यैव कथ्यते मानपूर्वकम् ॥ १४९ ॥
(एकोनत्रिं[5]शदन्यूर्ध्वं सा स्युः पदान् पूर्वं ?) यथाक्रमम्।
अतो बहिर्विधातव्यः पीठबन्धः[6] पदत्रयम् ॥ १५० ॥
(जंयो[7] ?) कुम्भः सपादांशः पादोनः स्यान्मसूरकः।
अर्धेनान्तरपत्रं स्यात् कपोताली च तत्समा[8] ॥ १५१ ॥
माला विद्याधरी[9] कार्या पुष्पहस्तैरलङ्कृता[10]।
पदद्वादशकोत्सेधः (सगुरुः[11] ?) स्यात् तुलोदयः ॥ १५२ ॥
अस्य मध्ये विधातव्यो वेदीबन्धस्त्रिभागिकः।
पदार्धं[12] खुरकं कुर्याद् भागेनैकेन कुम्भकम् ॥ १५३ ॥
मसूरकं पदार्धेन मेखला पदमानतः।
षड्भागमुच्छ्रिता जङ्घा पुष्पके परिकीर्तिता[13] ॥ १५४ ॥
व(म)रालग्रास(ह)मकरैः पुष्पविद्याधरैरपि।
[14] सूक्ष्मकर्णसमा कर्णा (?) चास्य जङ्घा विधीयते ॥ १५५ ॥

---

१ द. त्तत्पदा°। २ द. 'पत्रं भ्रामयेद् कर्णकन्दतः' इति स्यात्। इति मुद्रित पुस्तकस्य पाठः; द. सूत्रं भ्रमयेत्कंदकर्णवत्। ३ द. °षं सा स्याद्भ्रमंतिका। ४ द. वेत्। ५ द. त्रिंशदस्य स्युः पदान्यूर्ध्वं य°। ६ द. धप°। ७ द. जङ्घाकण्ठः सपादांशपादानस्यान्म°। ८ द. °माः। ९ द. रैः। १० द. ताः ः. ११ द. सुखिरः स्यात्तु°। १२ द. र्थं। १३ द. ताः। १४ द. सूक्ष्मान् कर्ण चास्य जंघा। मुद्रित पुस्तके तु 'सूक्ष्मकर्णसमाकीर्णा' इति स्यात्।

भागेनैकेन भरणं भागेनैकेन पट्टिका ।
मेखलान्तरपत्रं च भागेनैकेन चोच्छ्रितम् ॥ १५६ ॥

ऊर्ध्वतस्तलपट्टस्य पट्टस्योर्ध्वस्य मस्तकम् ।
भागैकादशका तावद् विधेया कर्णचर्चिता( ? ) ॥ १५७ ॥

भागेन राजसेनं स्याद् [1]द्विभागो वेदिकोच्छ्रिता[2]ः( ? ) ।
भवेदासनपट्टश्च[3] भागार्धेन समुन्नत[4]ः ॥ १५८ ॥

चन्द्रावलोकनं कुर्याद् भागिकं त्र्यंशलम्बितम् ।
आसनस्योर्ध्वतः कुर्यात् स्तम्भं[5] पञ्चपदं शुभम् ॥ १५९ ॥

हीरग्रहणकं शीर्षं द्वयं सार्धैकभागतः ।
गुला( [6]गल )पट्टश्च भागेन मल्लका[7]द्यं द्विभागिकम् ॥ १६० ॥

भागेन लम्बितं[8] तत् स्यात् सुसृ[9]ष्टं सुमनोरमम् ।
एतस्योपरिभागेन कर्तव्या छेद( छाद्य )पट्टिका ॥ १६१ ॥

[10]पदेनैकेन चास्योर्ध्वं कपोताल्यै[11]न्तरच्छदे ।
भागषट्केन विस्तीर्णे पञ्चभागसमुन्नतं( ते ) ॥ १६२ ॥

शूरसेनं प्रकुर्वीत मध्यवर्तालितोरणम् ।
वरालग्रासमकरैर्वराहगजसुण्डकैः( ? ) ॥ १६३ ॥

एवमादिभिराकीर्णमलिदस्योपरिस्थितम् ।
कोणं कुर्यात् पुष्पकूटं पुष्पकर्मनिरन्तरम् ॥ १६४ ॥

चतस्रो भूमयोऽस्य स्युताश्च न्यूना[12]ः पुरः पुरः ।
[13]प्रथमा भूमिका + + + + + स्यात् परा परा ॥ १६५ ॥

आद्यस्य कोणकूटस्य विस्तार[14]स्त्रिपदः स्मृतः ।
परेषां पुनरेषं स्यात् क्रमादूनो[15]ऽङ्घ्रिणाङ्घ्रिणा ॥ १६६ ॥

---

१ द. मुद्रित पुस्तकस्य पाठः— द्विभागाद् वेदिकोच्छ्रिता 'इति स्यात् । २ द. ता । ३ द. स्य । ४ द. समुच्छ्रितः । ५ द. स्तंभः पंचपदस्य च । ६ द. तुला । ७ द. छा । ८ द. नं । ९ द. श्रि । १० द. पा । ११ द. °ल्या° । १२ द. न्यूनपुरः सराः । १३ द. प्रथमा भूमिकोच्छ्रायात्पादोनं पदपञ्चकम् । भागार्द्धेन विहीना स्यात् भूमिका स्यात् परापराः ॥ पाठः । १४ द. स्त । १५ द. °दूनां ह्रिणां ह्रिणा ।

बाह्यात् परस्परं क्षेपमंशेनांशेन योजयेत्।
मध्ये लतास्य कर्तव्या [1]भागषट्केन विस्तृता॥ १६७॥

स्कन्धे द्विपदविस्तारां विदध्यान्मध्यमञ्जरीम्।
षड्गुणं सूत्रमादाय [2]लतारेखां समालिखेत्॥ १६८॥

आलेखं[3] च ततः कुर्यात् सुशुद्धं[4] भागसुन्दरम्।
भागेन वेदिकोत्सेधः षड्भागः स्कन्धविस्तरै(र)ः॥ १६९॥

भागेनैकेन च ग्रीवा द्वाभ्यां[5] सामलसारकम्।
विशालपद्मसदृशं विधेयं पद्मशीर्षकम्॥ १७०॥

चन्द्रिका पद्मपत्राभा द्वयमेतत् पदोच्छ्रितम्[6]।
[7]ंयंशः स्यात् (कलशोर्मृत्या जनकैरवकुड्मलैः[8]?) १७१॥

एवंविधं विधत्ते यः पुष्पकं सुमनोरमम्।
तुष्येत् तस्य धनाधीशः शु[9]भैर्याति व्रजेच्च सः(?)॥ १७२॥

पुष्पकः॥

ब्रूमो विजयभद्रस्य सुभद्रस्य च लक्षणम्।
वल्लभः षण्मुखस्यायं बहुपुण्यविधायकः॥ १७३॥

चतुरश्रीकृते क्षेत्रे साष्टविंशतिभाजिते।
कुर्यादष्टपदं कर्ण(र्णं)भद्रं वास्य चतुष्पदम्॥ १७४॥

[10]पंदेनैकेन निर्यातं[11] सर्वकोणेष्वयं विधिः।
उदकान्तरकं कार्यं [12]पदैक्लृप्तं पदायतम्॥ १७५॥

दशभागायतं भद्रं कार्यं त्रिपदनिर्गतम्।
[13]दिक्षु(येव?) विधेयः स्यान्मुखतो मुखमण्डपः॥ १७६॥

त्रिपदा बाह्यतो भित्तिस्त्रिपदा चान्धकारिका[14]।
मध्ये प्रासादमानं तु कर्तव्यं षोडशांशकम्॥ १७७॥

---

१ द. भागमेकेन वि°। २ द. ल(त)त्परेषां समाचरेत्। ३ द. ख्य। ४ द. संयुद्धं भा°। ५ द. °भ्यामा°। ६ द. °ताः। ७ द. अंशः स्यात्कलशो मूर्त्यां जि°। ८ द. °लं। ९ द. °नैर्त्रे°। १० द. पा। ११ द. तः। १२ द. पदक्षुद्रं पदायुतम्। १३ द. दिक्षु विधिरेवः स्यात्। १४ द. काः।

[1]कर्णा चतुष्पदा( ? )कन्दे भद्राण्येषां पदद्वयम्[2] ।
निष्क्रान्तानि पदेन स्युः कन्दकर्णाश्रितानि हि ॥ १७८ ॥

षट्पदं मध्यमङ्गं स्याद् द्विपदश्चास्य निर्गमः ।
कर्णशालान्तरं यत् स्यात् ( सा[3] गन्धमार्गे ? ) विधीयते ॥ १७९ ॥

द्विपदा कन्दभित्तिः स्याद् गर्भो द्वादशभागिकः ।
ऊर्ध्वमानमिह प्रोक्तं द्विगुणं द्विकलाधिकम् ॥ १८० ॥

चतुर्विंशतिभागान्ते तुलो[4]च्छ्रायस्य मध्यतः ।
ऊर्ध्वमानं तु यत् प्रोक्तं ग्रीवाण्डाद्यं ततो बहिः ॥ १८१ ॥

कार्य[5]( तुलोदयं स्यांच ? ) वेदीबन्धोंऽशसप्तकम् ।
त्रिभागं कुम्भकः[6] सूत्रं( ? ) सार्ध[7]भागो मसूरकः ॥ १८२ ॥

भागेनान्तरपत्रं स्यात् सार्धभागेन मेखला ।
जङ्घा द्वादशभिर्भागैर्द्व्यंशा[8] वा गलपट्टिका( : ? ) ॥ १८३ ॥

अन्धारिका च भागार्धं[9] सार्ध[10]भागा वरण्डिका ।
भागेनान्तरपत्रं स्याद्[1] रूपकर्मसमाकुलम् ॥ १८४ ॥

ऊर्ध्वाधःपट्टयोर्मध्ये( ध्य )भागो भागैकविंशतिः ।
अतो मध्याद् विधातव्यं द्विपदं राजसेनकम् ॥ १८५ ॥

वेदी चतुष्पदा प्रोक्ता भागेनासनपट्टकः ।
पदद्वयेन सार्धेन कार्यं चन्द्रावलोकनम् ॥ १८६ ॥

नवभागोच्छ्रितः स्तम्भः पत्रकर्मसमाकुलः ।
भागेनैकेन भरणं शीर्षकं च द्विभागिकम् ॥ १८७ ॥

उ[11]च्छालकमुभौ भागौ हा[12]रग्रहणमासिकम् ( ? ) ।
द्व्यंशा पट्टोच्छ्रितिर्भागचतु[13]ष्का बाह्यविस्तृतिः ॥ १८८ ॥

---

१ द. 'कर्णाश्चतुष्पदाः' इति स्यात् । इति मुद्रित पुस्तके; द. पुस्तकेऽपि °श्च° । २ द. यात् । ३ द. सांबुमार्गो वि । ४ द. त । ५ द. कार्यस्तुलोदयस्यांते वें° । ६ द. °कस्तत्र° । ७ द. °शाद्वामलपट्टिका । ८ द. सार्ध भागव° । ९ द. च । १० द. °र्णस° । ११ द. त्का° । १२ द. हीरग्रहणमाशिक । १३ द. चतुष्कं छाद्यविस्तृतिः ।

(द्व्यंशास्यालम्बनोर्ध्वे[1] तु रूपकं चक पट्टिकाः ?)।
सा[2] च भागत्रयेण स्यात् सुश्लिष्टा साधुचित्रिता ॥ १८९ ॥

कर्णकर्णेषु शृङ्गाणां विस्तृतिर्द्वि[3]पदा भवेत्।
ऊर्ध्व[4]मानं त्रिभागं स्याद् ग्रीवाण्डकलशैः सह ॥ १९० ॥

मध्ये चतुष्पदा कर्मा( र्णा )दुरोमञ्जरिका भवेत्।
उच्छ्रायः षट्पदस्तस्या[5] ग्रीवाण्डं द्विपदोच्छ्रितम् ॥ १९१ ॥

भागेन कलशोत्सेधः स्यादेवं कर्णनिर्मित( ति[6] ):।
कर्णा[7] + पिण्डिका कार्या भद्रदेशे तथोच्छ्रितः ॥ १९२ ॥

कर्तव्यः सप्तभिर्भागैः सिंहकर्णः[8] सुचर्चितः।
कर्णद्वये तथा शृङ्गे तयोरूर्ध्वं चतुर्दिशम्[9] ॥ १९३ ॥

उरोमञ्जरिकायामादुदया( ? )दश पञ्च च।
तस्याश्चाष्टपदः[10] कन्दो ग्रीवा भागसमुन्नता[11] ॥ १९४ ॥

द्विभागमण्डकं कार्यं चन्द्रिका पदमुच्छ्रिता।
त्रिपदाः[12] कलशास्तेषां मध्यगान्तरमञ्जरी ॥ १९५ ॥

तला( लता )पञ्चकसंयुक्ता चरटक्रिययान्विता[13]।
भागविंशतिविस्तीर्णा कर्तव्या मूलमञ्जरी ॥ १९६ ॥

द्वा[14]विंशतिसमुत्सेधा स्कन्धो द्वादशभागिकः।
मध्या लता सू( शू )रसेनकर्मरूपसमाकुला[15] ॥ १९७ ॥

ग्रीवा सार्धपदोत्सेधा[16] कार्या द्विपदमण्डकम्।
भागेन चं[17]( म )ण्डिकां कुर्यात् कलशं तु चतुष्पदम् ॥ १९८ ॥

एकोनत्रिंशदण्डोऽयं प्रासादः शुभलक्षणः।
षट्पदं पीठमाख्यातं चरितं[18] पूर्वकर्मवत् ॥ १९९ ॥

---

१ द. ध्यंशांशलंबनोद्ध्र्वे तु रूपकं बकपट्टिका। २ द. द्वे। ३ द. °त्रि। ४ द. °र्ध्वं। ५ द. इतः परं-कलशं यावदिष्यताम् ॥ ऊर्ध्वताः कर्ण शृंगस्य षट्पदाकर्णमंजरी। उच्छ्रायः षट्पदस्तस्या। ६ द. ताः ७ द. श्चपंडकाः। ८ द. °स्तु चर्चितः। ९ द. ईशा। १० द. ट्ट। ११ द. ताः। १२ द. दः। १३ द. ताः। १४ द. °त्रिं। १५ द. लाः। १६ द. °धः। १७ द. चंद्रिका कार्या कलशं°। १८ द. चर्चितं पू°।

आरोग्यं पुत्रलाभश्च भवेद्[1] विजयकारिणाम्[2] ।
तेषां तुष्यति षड्वक्रो भक्त्या ये विदधत्यमुम् ॥ २०० ॥

विजयभद्रः ॥

अधुना श्रीनिवासाख्यः प्रासादः सम्यगुच्यते ।
तृप्त्यर्थमेव क्रियते जयश्रीस्तत्र तिष्ठति ॥ २०१ ॥

चतुरश्रीकृते क्षेत्रे भक्तेऽष्टादशभिः पदैः ।
अन्धारिका च भित्ते( त्ति )श्च पदे द्वे द्वे यथाक्रमम् ॥ २०२ ॥

गर्भश्च षट्पदः कार्यः श्रीनिवासस्य सुन्दरः ।
कन्दे स्युर्द्विपदाः कर्णा भागेन सलिलान्तरम् ॥ २०३ ॥

भद्रं चतुष्पदं कार्यं पदेनैकेन निर्गतम् ।
बाह्याः स्युस्त्रिपदाः कर्णा भद्रैश्च द्विपदैर्युताः ॥ २०४ ॥

भद्रं चतुर्थकर्णेषु( तु ) पदेनैकेन निर्गतम् ।
कोणकोणाश्च कर्तव्याः पदस्यार्धं समायताः ॥ २०५ ॥

पदेनाम्बुधरः कार्यः प्रवेशाद् विस्तृतेरपि ।
विस्तारात् षट्पदं भद्रं पदद्वितयनिर्गमम् ॥ २०६ ॥

नीरस्यालान्तरे( ? ) कार्या( : ) तिलका द्व्यंशविस्तृताः ।
पदेनैकेन निष्क्रान्ताः शोभिताश्चारुकर्मणा ॥ २०७ ॥

ऊर्ध्वमानमथ ब्रूमः श्रीनिवासे यथाक्रमम् ।
खुरकस्योच्छ्रितिः पीठे पादोनं पदमिष्यते ॥ २०८ ॥

कुर्यात् सपादो( दे )नांशेन जाड्यकुम्भ( : ? )समुच्छ्रितम् ।
भागेनान्तरपत्रे तु भागेनैकेन मेखलाम् ॥ २०९ ॥

पीठोत्सेधश्चतुर्भागः श्रीनिवासे भवेदिति ।
वेदीबन्धस्य खुरको भागार्धेन समुन्नतः ॥ २१० ॥

कुम्भकः सार्धभागेन तदर्धेन म[3] + + + ।

---

१ द. द् । २ द. णं । ३ द. 'मसूरकम्' इति स्यात् ।

[ इत ऊर्ध्वमादर्शग्रन्थे द्वे पत्रे (१६८, १६९ तमे) लुप्ते । तयोराहत्य उपपञ्चाशाः श्लोका नष्टाः संभाव्यन्ते । ]

+ + + + + + + + + + + + + + पञ्जरात् ॥

त्रिभागेन तु भागस्य अष्टश्रृङ्गस्य(?) पक्षकः ।
नष्टश्रृङ्गस्य(?) श्रृङ्गस्य चान्तरे सलिलान्तरम् ॥

अन्योन्यं श्रृङ्गनिष्कासो भागेनैकेन शस्यते ।
दशभागायतं भद्रं चतुर्थांशेन निर्गम(तम्) ॥

एवमेष तलच्छन्दः कथितः सुरसुन्दरे ।
ऊर्ध्वमानमथ ब्रूमो भागशुद्धया यथाक्रमम् ॥

पीठादारभ्य विस्तारो(राद्) द्विगुणा स्यात् समुन्नतिः ।
उपपीटेऽप्यलंकुर्याद् भागमेकं समुन्नतम् ॥

पदेन पादहीनेन (गजा ?)द्वारसमुन्नतिः ।
उच्छ्रितिर्जाड्यकुम्भस्य सार्धभागा विधीयते ॥

कलशोत्तरपत्रे च पादहीनपदोन्नते(:?) ।
अस्यादूर्ध्वं तु कर्तव्या पदार्धं ग्रासपट्टिका (?) ॥

(आयपीठोच्छदा प्रोक्ता मूलभूतोभिवास्तुनः ?) ।
खुरकश्च पदार्धेन (सार्धभागे कुम्भपूरकः ?) ॥

भागेनैकेन कलशः समवृत्तोऽतिसुन्दरः ।
भागं सपादं कुर्वीत मेखलान्तरपत्रके ॥

षड्भागेनु (नो)च्छ्रिता जङ्घा भागार्धं ग्रासपट्टिका ।
कर्णे चैकेन भागेन भागार्धं (कुणपो ?[1]) भवेत् ॥

भागेन हीरकं कुर्याद् यथा शोभा प्रजायते ।
मेखलान्तरपत्रे च सार्धभागेन कारयेत् ॥

ऊर्ध्वतः पदयोर्मध्ये स्यात् सार्धद्वादशांशकम् ।
तन्मध्ये सार्धभागं तु राजसेनं सपट्टकम् ॥

---

१ 'कोणयोः' इति स्यात् ।

द्वौ भागौ वेदिका भागस्यार्धमासनपट्टकः ।
भागं चन्द्रावलोकं स्यात् स्तम्भमासनमूर्धनि ॥
निवेशयेत् पञ्चभागं भरणं भागिकं ततः ।
भागमेकं समुच्छ्रायां ( यः ) शीर्षकं द्विगुणायतम् ॥
पट्टस्य कुर्यादुत्सेधं भागमर्धसमन्वितम् ।
सार्धभागद्वयं बाह्यं ( तद्रूपं दूतावलं छिवितम् ? ) ॥
द्वौ भागौ छाद्यकस्योर्ध्वे कार्या वासनपट्टिका ।
विराजमाना सा कार्या रूपग्रासवरालकैः ॥
मेखलान्तरपत्रेषु ( तु ) भागाद् रूपसमन्विते ।
भागद्वयेन कर्तव्या द्वितीया मेखला बुधैः ॥
कूटान्यतः परं कुर्यात् कर्मयुक्तानि सर्वतः ।
कूटेषु कुर्यात् प्रत्येकं सिंहकुम्भसमन्वितम् ( ? ) ॥
उरोमञ्जरिका तानि भवत्येव ( ? ) यथाक्रमम् ।
अष्टाण्डकत्रयान्तेषु षडण्डं स्याच्चतुष्टयम् ॥
चतुरण्डं द्वयं कृत्वा त्वेवं कर्णे विदुर्बुधाः ( ? ) ।
नव कुण्डानि( ? ) तुल्यानि विस्तारेण पदद्वयम् ॥
सार्धं भवति प्रत्येकं सार्धमुच्चैः पदद्वयम् ।
एवं ( निकर्त एकैकं स्यात् ? ) तत्पदं वांशदण्डकम् ॥
सिंहकर्णः षडुच्छ्रायो भद्रे स्यात् प्लवविस्तृतिः ।
द्वितीय( श्चानुदन्तश्चा ? ) शोभितश्चारुकर्मणा ॥
तृतीयो द्विपदः कार्यः सिंहकर्णो मनोरमः ।
विस्तारो मूलमञ्जर्याश्चतुर्दशपदो भवेत् ॥
भागसप्तदशोच्चे तु मातृभिः( ? ) पद्मकोशवत् ।
स्कन्धश्चाष्टपदः प्रोक्तो ग्रीवा सार्धपदोच्छ्रिता ॥
द्विपदश्चाण्डकोत्सेधश्चन्द्रिकार्धपदोन्नतः( ता ) ।
कलशं त्रिपदं प्राहुर्मातुलिङ्गस्य( स )मुद्भवम् ॥

मध्ये तु मूलमञ्जर्याः कुर्वीत शिखरत्रयम् ।
सुरेखं सुप्रसन्नं च सर्वदेशिविभूषितम् ॥
षट्पञ्चाशं(?) भवेदस्मिन्नण्डकानां शतद्वयम् ।
एवं श्रेष्ठोऽयमाख्यातः प्रासादोऽण्डकमानतः ॥
सप्त(शत)मेकान्नसप्तत्या युतं स्यान्मध्यमे पुनः ।
एकोत्तरं शरं(तं)प्राहुरण्डकानां कनीयसाम(सि) ॥
मन्दारकुसुमाकाराण्या(ण्येता)नि सुरसुन्दरे ।
कुर्याद् (य) एनं प्रासादमीदृशं सुरसुन्दरम् ॥
स वैरिञ्चं (यु)गशतं सूर्यलोके महीयते ।

सुरसुन्दरः ॥

नन्द्यावर्तमथ ब्रूमः प्रासादं नृपवृद्धिदम् ॥
भूषितं मना(नाग)कन्याभिर्वल्लभं पृथिवीभुजाम् ।
चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ॥
पदद्वयमिदं यत्र[1] नादाय(?) ब्रह्मणः पदात् ।
वृत्तं समालिखेद् गर्भा वस्मैलं च तुलं(?) भवेत् ॥
भागेन च तुलो(?)भित्तिर्भागेन स्याद् भ्रमन्तिका ।
भागेन बाह्यभित्तिः स्यात् पदपञ्चकवर्जिता ॥
कन्दे वि(द्वि)भागं कुर्वीत पुष्पशेखरकं ततः ।
द्विपदा बाह्यतः कर्णा विधातव्यास्तु वर्तुलाः ॥
यथागात्रं विधातव्याः स्वस्तिकाकृतयश्च ते ।
चत्वारो रथिका(कन्दो कोणे कर्णे ?) चतुष्टयम् ॥
पञ्चभागायतं भद्रं सार्धभागविनिर्गमम् ।
भद्रान्तपातिनी कुर्यात् प+ङ्क्तिं पदसंमिते ॥
शेषं भद्रं तु कर्तव्यं विस्तारेण त्रिभागिकम् ।
भागस्यार्धेन विस्तीर्णं तथा भागप्रवेशकम् ॥

---

१ 'यत्नादादाय' इति स्यात् ।

एतत्प्रमाणं कर्तव्यमिह प्राज्ञैर्जलान्तरम् ।
तलच्छन्दानुगं भद्रं नन्द्यावर्त(र्ते) यथाक्रमम् ॥

ऊर्ध्वमानमथ ब्रूमो नन्द्यावर्त(र्ते) यथाक्रमम् ।
सार्धभागद्वयोच्छ्रा(१यामासनं तस्य ?)दूर्ध्वतः ॥

(२कार्यतुलोदयस्य + ?) मध्ये भागैस्तथाष्टभिः ।
तुलोदयस्य मध्ये स्याद् वेदीबन्धो द्विभागिके (क): ॥

भागिकः कुम्भकोसेन(त्सेधो) मेखलाकलशान्वितः ।
चतुर्भागा भवेज्जङ्घा भागिकं भरणं भवेत् ॥

मेखलान्तरपत्रे तु भागेनैकेन कल्पयेत् ।
पादेन राजसेनं स्याद् (वद्वत्तच पट्टतः ?) ॥

वेदी साष्टपदोत्सेधा भागपादेन चासनम् ।
भागार्धेन नतं कुर्याद् भागं (३पंश्चवलोकत ?) ॥

पादोनत्रिपदः स्तम्भः पल्लवैरुपशोभितः ।
हीरग्रहणशीर्षं च कुर्याद् भागसमुच्छ्रिति ॥

पट्टमेकपदोत्सेधं छाद्यकं द्विपदायतम् ।
भागेन कुर्यादुपरि पट्टिकां चारुकर्मणा(म् ?) ॥

अंशांस्त्रीनुच्छ्रितः सिंहकर्णः स्याच्चतुरायतः ।
भूषितः(स्वरसे + न ?) स च कार्योऽतिशोभनः ॥

विस्ताराद् द्विपदे शृङ्गे सार्धभागद्वयोच्छ्रिते ।
अस्योर्ध्वमन्यशृङ्गं स्यात् सदृशोच्छ(च)परिस्तृति(: ?) ॥

प्रत्यङ्गस्तु व(ङ्गेषु च) कूटानि सार्धांशोच्छ्रायवन्ति च ।
द्वितीयः सिंहकर्णः स्यात् सिंहकर्णस्य मस्तके ॥

(४ततो शृङ्गं ?) तृतीयः स्याच्चतुर्थस्तस्य चोपरि ।
षड्भागविस्तृता कर्ण(: ?) कूटस्था मूलमञ्जरी ॥

---

१ 'यमासनं स्यात् त' इति स्यात् । २ 'कार्यस्तुलोदयस्तस्य' इति स्यात् । ३ 'चन्द्रावलोकनम्' इति स्यात् । ४ 'ततः शृङ्गे' इति स्यात् ।

सप्तभागोच्छ्रिता च स्यात्(स्कन्धस्यच शोच्छ्रितिः ?)[1] ।
स्यादुरोमञ्जरी मूलमञ्जर्या मध्यसंश्रया ॥
भागैश्चतुर्भिर्विस्तारः षड्भिश्चास्याः समुच्छ्रितिः ।
कलशाण्डकसंयुक्ता कर्णाभ्यन्तरमञ्जरी ॥
स्यादण्डकैकविंशत्या नन्द्यावर्तः सुलक्षणः ।
भक्त्या ये कारयन्त्येनं नद्यावर्तमनुत्तमम् ॥
विमानं शुभमारुह्य शक्रलोकं व्रजन्ति ते ।

नन्द्यावर्तः ॥

प्रासादमथ वक्ष्यामः पूर्णं पूरितवाञ्छितम् ॥
वन्दितैः( तं ) किन्नरैर्यक्षैर्मनुष्यपितृवल्लभम् ।
चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ॥
विस्तार( राद् ) द्विपदो गर्भः कार्या भित्तिस्तु भागिकः ।
द्विपदं कन्दभद्रं च निर्गमोऽस्यार्धभागिकः ॥
शोभना दिषु( क्षु ) सर्वासु द्विपदा च भ्रमन्तिका ।
पदिका बाह्यभित्तिस्तु द्विपदा कर्णविस्तृतिः ॥
आयत्या चतुरो ( भागावण्डभित्तेर्विनिर्गमा ? ) ।
भद्रं सुशोभनं तस्या द्वि( वि )धातव्यं द्विभागिकम् ॥
पर्णस्तु पदिका( ? ) पक्षभद्रं भागार्धनिर्गतम् ।
जलान्तरं तु भागार्धमायामक्षेपयोः समम् ॥
चतुर्भागो वलस्यास्य( ? ) गर्भो भित्तिस्तु भागिकी ।
यामायुर्वित्तगोस्त्रीणां वलभी कीर्तिकारयेत् ( ? ) ॥
पूर्वतः कारयेद् द्वारं चतुर्गर्भेऽत्र मन्दिरे ।
ऊर्ध्वमानं तु वक्ष्यामः प्रासादस्यास्य सम्प्रति ॥
पीठं द्विभागिकं कार्यं वेदीबन्धो द्विभागिकः ।
जङ्घा पदचतुष्कं च शोभिता रूपकर्मणा ॥

---

१ 'स्कन्धः स्याच्च दशोच्छ्रितिः' इति पाठ्यं स्यात् ।

पदद्वयं तु कर्तव्यं ( हीनंरं ? ) सातपत्रकम् ।
कलशाण्डकयुक्तानामुच्छ्रायस्त्रिपदो बुधैः ॥
कर्तव्यः कर्णशृङ्गाणां सर्वेषामपि मानतः ।
चतुष्पदोच्चा वलभी घण्टाकलशसंयुता ॥
मल्लच्छाद्यत्रयं कुर्यात् कर्णशृङ्गस्य चोपरि ।
युक्तमन्तरपत्रेण भागोच्छ्रायं पृथक् पृथक् ॥
भागेनैकेन घण्टा स्याद् भद्रा( भागा )भ्यां कलशाण्डके ।
समूलकलशे कर्णे सूत्रं सम्पातयेद् बुधः ॥
मल्लच्छाद्यं विधातव्यं सूत्रेणैकेन लाञ्छितम् ।
प्रासादमेवं पूर्णायुर्यः कुर्याद् भक्तिमानिमम् ॥
( [१]सप्तकामः + ? ) पुरुषः स( श )र्वलोके महीयते ।

पूर्णः ॥

सिद्धार्थमथ वक्ष्यामः सर्वकामार्थसिद्धिक( द )म् ॥
कामाः सिध्यन्ति यत्कर्तुरिहलोके परत्र च ।
चतुरश्रे समे क्षेत्रे विभक्ते दशभिः पदैः ॥
कुर्वीत षट्पदं गर्भं + + चास्य चतुष्पदम् ।
भागेनैकेन रमणीं बाह्यभित्तिं च भागिकीम् ॥
कुर्वीत द्विपदान् कर्णाञ् शालां षड्भिः पदैर्बुधै( धः ) ।
तदूर्ध्वं कर्णशृङ्गाश्च( ङ्गं च ) यथाशोभं प्रकल्पयेत् ॥
त्रिपदं निर्गमं तस्याश्चतुष्कीश्च चतुर्दिशम् ।
मध्ये बहिश्च कुर्वीत तस्या द्वारचतुष्टयम् ॥
उन्नतं भागविंशत्या मानमस्योर्ध्वतो भवेत् ।
त्रिपदः पीठबन्धः स्याद् द्विगुणोच्छ्रायबाह्यतः ॥
सार्धं भागद्वयं कार्यो वेदिबन्धस्तु शोभनः ।
अर्धकुम्भेकमर्दं च मेखलां समसूरकः ( ? ) ॥

---

१ 'आप्तकामः स' इति स्यात् ।

जङ्घा सार्धचतुर्भागा कार्योच्छ्रायेण शोभना ।
मेखलान्तरपत्रे च भागेनैकेन कारयेत् ॥

खुरका( द् ) मेखला यावत् सप्तभागान्तरं भवेत् ।
भागाभ्यां राजसेनं च कुर्याद् वेदीं च सासनाम् ॥

त्रिभागं स्तम्भमुत्सेधाद् भागस्यार्धेन हीरकम् ।
भागार्धं स्तम्भशीर्षं स्याद् भागः पट्टस्य चोन्नतिः ॥

सूर्यच्छाद्यो द्विभागः स्याद् भागेनैकेन लम्बना( : ? ) ।
शृङ्गोत्सेधस्त्रिभागश्च कलशाण्डकसंयुत( म् ? : ) ॥

चतुर्भागोन्नतः सिंहकर्णः षड्भागविस्तृतः ।
कुर्वीत शृङ्गयोरूर्ध्वं शोभनां मूलमञ्जरीम् ॥

अष्टभागप्रविस्तीर्णां नवभागसमुच्छ्रित( ताम् ) ।
स्कन्धः पञ्चपदो ज्ञेयो ग्रीवा चार्धपदोच्छ्रिता ॥

अण्डकं भागमात्रं स्यादूर्ध्वं भागेन चन्द्रिका ।
वर्तुलः समविस्तारः कलशस्तु द्विभागिकः ॥

भद्रे वराटकाश्चेह कर्तव्या हेमकूटवत् ।
यः कुर्यात् कारयेद् यस्तु सिद्धार्थं सर्वकामदम् ॥

स भवेत् सर्वकामाप्तिः शिवलोके च शाश्वतः ।

सिद्धार्थः ॥

अथाभिधीयते सर्वपापघ्नः शङ्खवर्धनः ॥

आलयः सर्वदेवानां प्रासादो भूभृतां प्रियः ।
चतुरश्रे समे क्षेत्रे ( गर्भाकर्णे ? ) विशोधितम् ॥

वर्तुलं कारयेत् पश्चात् सर्वकोणेषु लाञ्छितम् ।
विस्तारार्धे भवेद् गर्भो यच्छेषं तेन ( भर्तिवः ? ) ॥

द्विगुणं कारयेदूर्ध्वं भागविंशतिभाजिते ।
तुलोदयोऽष्टभागः स्याद् द्वादशांशा च मञ्जरी ॥

कुम्भकं कलशं द्वाभ्यां कपोतालीं च कल्पयेत् ।
पञ्चभागोच्छ्रिता जङ्घा मध्येऽस्या ग्रासपट्टिका( म् ) ॥
मेखलान्तरपत्रे च भागेनैकेन कारयेत् ।
भागार्धं कारयेत् प्राज्ञः संख्या( शङ्खा )वर्तकमञ्जरीम् ॥
शङ्खवर्तककूटांश्च विदधीत + विस्तरात् ।
शतवास्तुविभक्तेऽस्मिन् या + मानानुसारतः ॥
स्कन्धो विधेयो ग्रीवा च भगार्धेन समुच्छ्रिता ।
चन्द्रिका शिरसा सार्धं कार्या सार्धपदोन्नता ॥
द्विपदः कलशोच्छ्रायः कर्तव्यः शङ्खवर्धने ।
गर्भश्चा( स्या )च्छादनं कुर्यात् संख्या( शङ्खा )वर्तवितानकम् ॥
यः शङ्खवर्धनं कुर्यात् स भुनक्ति चिरं महीम् ।
वशगा चास्य सततं भवेल्लक्ष्मीजलाञ्जलिः[1] ( ? ) ॥

शङ्खवर्धनः ॥

त्रैलोक्यभूषणं ब्रूमो वन्दितं त्रिदशैरपि ।
आश्रयं सर्वदेवानां पापस्य च विनाशनम् ॥
त्रिंशद्धस्तः कनीयान् स्यान्मध्यमस्त्रिदशाधिकः ।
पञ्चाशद्धस्त उत्कृष्टस्त्रिविधं( धो ) हस्तसंख्यया ॥
चतुरश्रे समे क्षेत्रे त्रिंशद्भक्तोप( क्ते प्र )कल्पयेत् ।
दशभागायतं गर्भं कन्दं द्विगुणसप्तकम् ॥
चतुष्पदं कन्दकर्तं( र्णं ) भद्रं चास्य द्विभागिकम् ।
कुर्वीत षट्पदां शालां भागेनैकेन निर्गताम् ॥
अन्धोऽर्धद्विपदे चास्य द्विपदाश्चात्र भित्तयः ।
शृङ्गमेकं भवेन्मध्ये विस्तारेण चतुष्पदम् ॥
मध्ये शृङ्गस्य चान्तः + + + षड्दारुकं भवेत् ।
द्व्यंशा द्वितीया रमणी( या ? ) बाह्यभित्तिर्द्विभागिका ॥

---

१ 'लक्ष्मीः कृताञ्जलिः' इति स्यात् ।

कर्णशृङ्गद्वयं कार्यं विस्तारेण चतुष्पदम् ।
द्वादशांशमिता शाला निर्गमोऽस्याः पदत्रयम् ॥

प्राक्कर्णशृङ्गमष्टांस्तिस्यादुर्जनफलोपमम् (?) ।
++ द्विशृङ्गभागेन विनिष्क्रान्तं चतुष्पदम् ॥

द्विपदं तस्य भद्रं च निर्गमो द्विपदं भवेत् ।
शृङ्गयोरुभयोर्मध्ये पदार्धं पक्षभद्रकम् ॥

पदार्धं वारिमार्गश्च प्रक्षेपः पदसंमितः ।
ऊर्ध्वमानमथ ब्रूमः षष्टिभागसमुच्छ्रितम् ॥

तुलोदयस्ततो ( विंशपञ्चसूदनुमञ्जरी ? )।
( स न्नसंसत्यदोच्छ्रायो ? ) भागेष्वेषु विधीयते ॥

तुलोदयस्य मध्ये तु वेदी पञ्चपदोदया ।
तदर्धं कुम्भकं कुर्यात् तद्वत् कलशमेखला ॥

एकादशपदा जङ्घा हीरकं तु पदत्रयम् ।
द्वौ भागौ मेखला तद्वद् द्वितीयापि सतारका ॥

ऊर्ध्वतस्तलपट्टस्य प + षोडशभिः पदैः ।
राजसेनं सार्धभागं वेदी कार्या द्विभागिका ॥

पदार्धमासनं सार्धपदं चन्द्रावलोकनम् ।
स्तम्भः सप्तपदो( दैर्[1]घ्यहार ?) सार्धत्रिभागिकम् ॥

शीर्षं सार्धपदोत्सेधं पक्षस्तु द्विपदो भवेत् ।
त्रिपदं छाद्यकं कुर्याद् भागेनैकेन लम्बितम् ॥

द्विपदां छेदहारां तु(?) द्व्यंशा वा सन्तु पट्टिकाः ।
तदूर्ध्वं मञ्जरीं कुर्याद् द्राविडक्रमभूषितम् ॥

सप्तोच्छ्रितं कोणकूटं सघण्टाकलशाण्डकम् ।
द्वितीयामेतदूर्ध्वं च तन्मानेनैव कारयेत् ॥

---

१ 'दैर्घ्याद्धीरं' इति स्यात् ।

कर्णे कर्णे समाश्रित्य षट्पदानि तु कारयेत् ।
(षष्ठाण्डके[1] ?) द्वे कुर्वीत ष(ड‍ंश ? डण्ड)कचतुष्टयम् ॥
एवं कर्णाण्डकानि स्युश्चत्वारिंशत् समासतः ।
द्वादशांशकविस्तारमुच्छ्रायान्नवभागिकम् ॥
आद्यक्रमे विजानीयाद् द्राविडाभक्रियान्वितम् ।
अष्टाण्डकं समुत्सेधाद् विस्ताराद् दशभागिकम् ॥
भद्रक्रमं द्वितीयं तु विद्यात् कर्मविभूषितम् ।
विस्तारो मूलमञ्जर्या द्वाविंशत्यंशसंमितः ॥
त्रयोविंशतिरुच्छ्रायः स्कन्धाश्चैव त्रयोदश ।
ग्रीवा पट्ट(द)द्वयोत्सेधात् त्रिपदोन्नतमण्डकम् ॥
कर्परं द्विपदं भागचतुष्कं कलशोच्छ्रयः ।
प्रासादा(दे)द्वादशैतस्मिन्नुरोमञ्जरिका मताः ॥
अण्डकानां तु विज्ञेयं त्रिसप्तत्यधिकं मतम् ।
त्रैलोक्यभूषणं कृत्वा त्रिदशानन्दकारकम् ॥
कल्पान्तं यावदध्यास्ते पुरुषस्त्रिदशालयम् ।

त्रैलोक्यभूषणः ॥

प्रासादमथ पद्माख्यं कथयामोऽश्विनोः प्रियम् ॥
चतुरश्रीकृते क्षेत्रे सप्तभागविभाजिते ।
त्रीन् भागान् मध्यमे त्यक्त्वा द्वौ (द्वौ) कोणेषु लाञ्छयेत् ॥
(सा द्वयेद्द्भि ?)रष्टौ च पश्चादपि च षोडश ।
विस्तारार्धेन गर्भः स्याद् विस्तारार्धं तथा बहिः ॥
ऊर्ध्वमानमथ ब्रूमः पद्माख्यस्य यथाक्रमम् ।
विस्ताराद् द्विगुणोत्सेधं भागविंशतिभाजितम् ॥
वेदी जङ्घा तथैतस्मिन् कार्या मालाथ मञ्जरी ।
ग्रीवाण्डकलशाश्चेह शङ्खवर्धनवर्त्मना ॥

---

1 'अष्टाण्डके' इति पाठ्यं भाति ।

पद्माख्यः कारितो येन प्रासादो दश( स्र )वल्लभः ।
आत्मा समुद्धृतस्तेन पापपङ्कमहोदधेः ॥

पद्मास्यः ॥

पक्षबाहुमथ ब्रूमः प्रासादं कुलनन्दनम् ।
सर्वरोगहरं पुण्यं सर्वलोकक्षणं भवं( ? ) ॥

चतुरश्रीकृते क्षेत्रे द्वादशांशविभाजिते ।
अष्टभागायतं गर्भं कुर्याद् भित्तिर्द्विभागिका ॥

द्विपदं कारयेत् कर्णं भागार्धमुदकान्तरम् ।
प्रत्यङ्गं सार्धभागे सा( स्यात् ) शाला चैव चतुष्पदा ॥

निष्क्रामम्मु( उ )भयोर्भागाद् भागार्धेन पृथक् पृथक् ।
कर्तव्या( व्यौ ) पक्षयोर्बाहू विस्तारेष्व( णा )ष्टभागिकौ ॥

चतुष्पदस्तयोर्गर्भो द्विपदा भित्तिविस्तृतिः ।
चतुर्भागं भवेद् भद्रं कोणश्चैव द्विभागिकः ॥

ऊर्ध्वमानमथ ब्रूमश्चतुर्विंशतिभागिकम् ।
त्रिपदो वेदिकाबन्धो जङ्घा पञ्चपदोन्नता ॥

द्वौ भागौ कलशः कार्यो द्वौ भागौ चन्द्रिकाण्डकम् ।
मध्ये तु मञ्जरी कार्या घण्टाबध( बद्धा ) च पार्श्वयोः ॥

पक्षबाहुः कृतो येन त्रिगर्भः कर्मभूषितः ।
स त्रिनेत्रप्रतापः स्याच्च( त् ) तुरङ्गव्रातनायकः ॥

पक्षबाहुः ॥

विशालं सम्प्रवक्ष्यामि विशालैरन्वितं गुणैः ।
दयितं कृत्तिकासूनोः पूजितं गणकिन्नरैः ॥

क्षेत्रे( त्रं ) दशांशं कुर्वीत षड्भागा मध्यमञ्जरी ।
भागिक्यो भित्तयः कार्या भ्रमन्त्यभि( न्त्योऽपि ) तथाविधाः ॥

भागद्वयं भवेत् कर्णो वारिमार्गेण संयुतः ।
पदेन तिलकं कुर्याद् भागार्धेन विनिर्गतम् ॥

आयामनिर्गमा( मौ ) चास्य चतुर्भागा चतुष्किका ।
चतुष्पदो मध्यगर्भ( र्भः ) चतुर्द्वारस्य शस्यते ॥
विस्ताराद् द्विगुणोच्छ्रायान्यू ( यमू )र्ध्वमानं विधीयते ।
विदध्याद् वेदिकाबन्धं सार्धभागय( गेन ) संमितम् ॥
सार्धैश्चतुर्भिः कुर्वीत भागैर्जङ्घोच्छ्रितिं बुधः ।
मालामन्तरपत्रं च भागेनैकेन कारयेत् ॥
सार्धद्विभागिकं शृङ्गं कलशाण्डकसंयुतम् ।
तस्यार्धमपरं शृङ्गं तावन्मानं विधीयते ॥
षड्भागविस्तृतां जङ्घामन्तर्या भागसप्तकम् ।
तद्विस्तारदशांशैं( शे )स्यात् षड्भिः स्कन्धस्य विस्तृतिः ॥
ग्रीवायास्तु विधातव्या पदस्यार्धं समुन्नतिः ।
भागेनाण्डकमुच्छ्रायो भागेनार्धेतु( न ) चन्द्रिका ॥
द्विपदं कलशं कुर्यात् समसूत्रं सुशोभनम् ।
प्रासादोऽयं विशालः स्यादेवं सप्तदशाण्डकम् ॥
यः करोति स लोकेऽस्मिन्( + र[१] ) नागाधिपो भवेत् ।
लभते च बहून् कामान् देहान्ते चोत्तमं पदम् ॥

विशालः ॥

ब्रूमोऽथ लक्ष्म( क्ष्मी )दयितं प्रासादं कमलोद्भवम् ।
सिद्धगन्धर्वसहितं स्कन्दो यत्र व्यवस्थितः ॥
चतुरश्रं समं क्षेत्रं भुवि दिक्षु विदिक्षु च ।
कृत्वा वृत्तं समालिख्य भागैर्द्वात्रिंशता भवे( जे )त् ॥
भागौ द्वौ द्वौ ततः कुर्यादेकैकां दलपट्टिकाम् ।
कर्णं षोडशभिः का( कु )र्यादम्भोजसदृशाकृतिः( म् ) ॥
पञ्चभिर्भाजिते सीम्नि गर्भो भागत्रयं भवेत् ;
अधस्तादा( [२]समत्त स्यात् ? ) पद्मपीठं प्रकल्पयेत् ॥

१ 'नरो' इति स्यात् । २ 'सनं तस्य' इति स्यात् ।

कृत्वा ([1]द्विगुणमूर्ध्वानद्विंशत्या ?) प्रविभाजयेत्।
तुलोदयोऽथ भागः स्याद् द्वादशांशा च मञ्जरी॥
वेदी जङ्घा च माला च स्याद् यथा शङ्खवर्धने।
तदूर्ध्वं पद्मकूटानि(दि) चोन्नत्तं पद्मपत्रवत्॥
भूमिका(:) पञ्च कर्तव्या(:) पदहीना व्य(य)थोत्तरम्।
देवि(वेदि)का तस्य कर्तव्या विकासिशतपत्रवत्॥
पादोनभागो ग्रीवा च सपादं पदमण्डकम्।
चन्द्रिका चैव भागेन विकासिकमलाकृतिः॥
द्विपदं कलशं कुर्यात् साब्जपत्रं सपल्लवम्।
आरोग्यं स्यात् पुरोदेशे कारिते कमलोद्भवे॥
आयुःश्रीवृद्धिपुत्राः स्युरपयानां(?) च संख्यया।

कमलोद्भवः।

हंसध्वजमथ ब्रूमो हंसक्रीडाविभूषितम्॥
सेवितं सुरसङ्घेन वल्लभं पद्मजन्मनः।
विभज्य दशधा क्षेत्रमारभ्य ब्रह्मणः पदात्॥
आदाय पार्श्वयोर्भागांस्त्रींस्त्रीन् वृत्तं प्रकल्पयेत्।
एवं गर्भो विधातव्यश्छाद्यस्य (जगताल्लभिः ?)॥
द्विपदा बाह्यतो भित्तिः कर्णः कार्यो द्विभागिकः।
भद्रं पञ्चपदं कार्यं पदार्धमुदकान्तरम्॥
द्वौ भागौ निर्गतं भद्रं स्तम्भद्वयसमन्वितम्।
मध्ये तु च्छादकं कुर्याद् [2]वातोच्छ्रायं(?) द्विविस्तृतम्॥
कुर्याद् भागं सविस्तारं तोरणं चतुरुन्नतम्।
वरालमकरैर्युक्तं स्तम्भेषु स्यात् तथेल्लिकाः॥
पुरस्तान्मण्डपं प्राज्ञो रवाय(रचये)न्मानपूर्वकम्।
ऊर्ध्वमानमथ ब्रूमः सूत्रं स्याद् भागविंशतिः॥

---

१ 'द्विगुणमूर्ध्वं तद्विंशत्या' इति पठनीयं स्यात्। २ 'भागोच्छ्रायम्' इति स्यात्।

मेखलावेदिकाजङ्घाः शङ्खवर्धनवन्मताः ।
कर्तव्याः कर्णरथिकास्त्रिपदाः कलशान्विताः ॥
चतुष्किका पञ्चपदा वराटीघटयान्विता ।
कार्या कलशसंयुक्ता विस्तारोच्छ्राययोः समा ॥
[1]कोणशृङ्गोर्द्धयः(?) कुर्यादष्टांशां मूलमञ्जरीम् ।
उच्छ्रिता नवभिर्भागैः पञ्चभौमास्तु संवृताः ॥
प्रथमा द्विपदा भूमिर्हेमकूटक्रियोपमा ।
अन्यास्तु पदपादार्धहीनाः कार्या यथोत्तरम् ॥
[2]महारत्नपुनः(?) कार्यो भूमिकापरिवर्तने ।
भागेन वेदिकोच्छ्रायः स्कन्धस्तु शतवास्तुवत् ॥
ग्रीवाण्डकसमुत्सेधं विदधीत पदद्वयम् ।
अण्डके वर्तना कार्या कङ्कतीफलसन्निभा ॥
चन्द्रिका भागमेकं च द्वौ भागौ चेत् + + + + ।
हंसध्वजः कृतो येन वल्लभः पद्मजन्मनः ॥
स याति विविधैर्यानैर्देहान्ते वसु + गतिम् ।

हंसध्वजः ॥

अथ लक्ष्मीधरं ब्रूमो यं कृत्वा विजयं नरः ॥
राज्यमायुष्यपूजा च गुणानाप्नोति चैश्वरान् ।
चतुरश्रीकृते क्षेत्रे भक्ते षोडशभिः पदैः ॥
कर्तव्यः षट्पदः कन्दो गर्भसूत्रचतुष्पदः ।
चतुसृष्वपि दिक्षु स्यात् त्रिभिर्भागैर्भ्रमन्तिका ॥
द्विपदा बाह्यभित्तिः स्याच्छुभा कार्या चतुर्दिशम् ।
कर्णेषु शृङ्गमेकैकं द्वे द्वे शृङ्गे तु मध्यगे ॥
द्व्यंशानि तानि विस्ताराद् दशशृङ्गाणि दिक्रयेत्( कूत्रये ) ।
षट्शालाश्च विधातव्याः शुभा दिक्षु तिसृष्वपि ॥

१ 'कर्णश्रृङ्गोर्ध्वतः' इति पाठ्यं भाति । २ 'महान् यत्नः पुनः' इति स्यात् ।

याम्येन (च) चतुर्भागा भागद्वितयनिर्गताः।
तलच्छन्दोऽयमुद्दिष्टो मण्डपः पुरतो भवेत् ॥
विस्ताराद् द्विगुणा सासः (णो यामः)प्रासादस्यास्य चोच्छ्रयः।
स्यात् त्रयोदशभागोऽत्र प्रमाणेन तुलोदयः ॥
ऊर्ध्वं च विंशतिपदं वेदीबन्ध(ः) पदत्रयम्।
उत्सेधात् षट्पदा जङ्घा भागेन भरणं भवेत् ॥
भागैस्त्रिभिर्मेखले द्वे शृङ्गं च कलशं त्रिभिः।
उच्छ्रयेण विधातव्यः सिंहकर्णच(श्च)तुष्पदः ॥
दश शृङ्गाणि कुर्वीत घण्टा(पक्षं?)च विक्र(दिकूत्र)ये।
चतुर्दशांशविस्तारा पञ्चगा(?) मूलमञ्जरी ॥
ऊर्ध्वं सप्तदशांशा च ग्रीवोच्छ्रायः पदद्वयम्।
अण्डकं द्विपदं कार्यं भागेनैकेन कर्परम् ॥
कलशं त्रिपदं मूर्ध्नि वर्तयेत् सुमनोरमम्।
लक्ष्मीधराख्यं प्रासादं यः कुर्याद् वसुधातले ॥
अक्षये स पदे तत्त्वे लीयते नात्र संशयः।

लक्ष्मीधरः ॥

महावज्रमथ ब्रूमः प्र(प्रे)त्य पापहरं शुभम् ॥
प्रासादे कारये(रिते) यत्र सुरेन्द्रः परितुष्यति।
अष्टौ हस्तान् कनीयान् स्यान्मध्यो द्वादश मानतः ॥
उत्तमः षोडश प्रोक्तस्त्रिधैवं करसंख्यया।
स्वविस्तारस्य सूत्रेण( + + क्षेत्र)मालिख्य वर्तुलम् ॥
कोणेषु लाञ्छितं कृत्वा भागैः षट्त्रिंशता भजेत्।
द्विपदाः कर्णिकाश्चेह कार्या द्वादशसंख्यया ॥
कर्णिकाद्वयमध्ये तु स्तम्भो भागे च वर्तुलः।
शतपत्राकृतिः कार्या द्वौ भागौ मूर्धमानतः ॥
अधस्तान्मेखलायाश्च कमलोद्भववद् भवेत्।
स्तम्भयेत् कर्णिकामध्ये तेषु कूटानि कारयेत् ॥

कुर्यादालेखमुपरि कर्णिकायाः सुशोभनम् ।
कर्तव्या भूमयः पञ्च क्रमेणायतयान्विता (?) ॥
स्याद् भागार्धोदया ग्रीवा विस्तारेण चतुष्पदा ।
अण्डकं सार्धभागेन विधातव्यं सकर्परम् ॥
भागद्वयं तु कलशः शृङ्गकर्णैः सपल्लवैः ।
यः करोति महावज्रं प्रासादं पुरभूषणम् ॥
तुष्टो दिवि सदाम्पत्यो रमते सोऽप्सरोगणैः ।

महावज्रः ॥

रतिदेहमथ ब्रूमः प्रासादं सुमनोरमम् ॥
अप्सरोगणसंकीर्णं कामदेवस्य मन्दिरम् ।
अष्टभागीकृते क्षेत्रे समभागे समायते ॥
द्विपदं कर्णकूटं स्याद् वारिमार्गसमन्वितम् ।
अलिन्दस्य चतुर्भागा विस्तारायामतः समाः ॥
भागिकी बाह्यभित्तिस्तु शेषं गर्भं प्रकल्पयेत् ।
मध्ये चतुष्किका कार्या यत्र स्तम्भाः सुशोभनाः ॥
नेकरका त्रिवक्त्रैश्च हस्ते सर्वैः सपत्रकैः (?) ।
पल्लवैर्नागबन्धैश्च सालभञ्जिभिरन्विताः ॥
खेल्लिका तत्र कर्तव्या मकरास्यविनिर्गता ।
चत्वारो बाह्यतोऽलिन्दाः स्तम्भद्वितयभूकुलम् (?) ॥
सदृशं प्रथमं कार्यं भवनं कर्मयुक्तिमत् ।
द्वितीयं भवनं कार्यं बाह्यालिङ्क(न्द)विवर्जितम् ॥
शेषं कर्म तथा कार्यं प्रथमायां यथा (भवति ?) ।
तृतीयायां पुनः कार्या चतुःस्तम्भा चतुष्किका ॥
खेलिकातोरणन्यस्ता(ः) समुखाश्च वरालकाः ।
स्तम्भानां कुटकान् पूर्वान् सिंहकर्ण(र्णा)श्चमध्यतः ॥
म(ध्य ?)लुच्छाद्यानि(वायार्ध ?) भागोच्छ्रायान्यनुक्रमात् ।
त्रीणि कुर्वीत युक्तानि शुभैरन्तरपत्रकैः ॥

घण्टां च भागिनीं कुर्यादूर्ध्वं(र्ध्वे)नामलसारकीम् ।
चन्द्रिकां भागपादेन द्विभागां कलशोच्छ्रितिम् ॥
एवंविधं यः कुरुते प्रासादं रतिवल्लभम् ।
सन्तोषयति कन्दर्पं स्याज्जनेषु स पुण्यभाक् ॥

रतिदेहः ॥

सिद्धिकाममथ ब्रूमः प्रमथैरुपशोभितम् ।
धनपुत्रकलत्राणि कृते यत्राप्नुयान्नरः ॥
चतुरश्रीकृते क्षेत्रे चतुर्भागविभाजिते ।
गर्भं द्विभागं कुर्वीत भित्तिर्भा(र्भा)गेन शोभनम् ॥
भद्रं द्विभागविस्तारं भागेनैकेन निर्गतम् ।
कर्णमेकेन भागेन कुर्यात् प्रतिदिशं बुधः ॥
अस्योर्ध्वं द्विगुणं कुर्यात् षष्ठभागविभाजितम् ।
भागे च वेदिकाबन्धं जङ्घा सार्धपदोन्नता ॥
मेखलान्तरद्र(प)त्रे च पादहीनं पदं मते ।
स्यादुच्छ्रितीश्चामा(?) जङ्घा पादोनं पदपञ्चकम् ॥
त्रिभागविस्तृता ग्रीवा भागपादसमुच्छ्रिता ।
पदार्धमण्डकं प्राहुः पदपादेन चण्डिकाम् (?) ॥
भागस्यार्धेन कलशसमुच्छ्रायो मतः समः ।
+++गुणसूत्रास्या द्वितीयाः पञ्चभूतिकाः(?) ॥
यः सिद्धिकामं कुरुते सर्वपापविमोचनम् ।
सर्वेऽस्य कामाः सिध्यन्ति ये केचिन्मनसि स्थिताः ॥

सिद्धिकामः ॥

अथाभिधीयतेऽस्माभिः प्रासादः पञ्चचामरः ।
यो भक्त्या कारयत्येनं स चिरं दिवि मोदते ॥
भक्ते द्वादशभिः क्षेत्रे चतुरश्रे समन्ततः ।
चतुर्भागे भवेद् गर्भो भित्तिं भागेन कल्पयेत् ॥

अन्धारिका तु भागौ द्वौ बाह्यभित्तिस्तु भागिकी ।
त्रि(भि)र्भागैर्विनिष्क्रान्तं तेषु कार्याश्चतुष्किकाः ॥
द्विगुणं कथिते(तं) चोर्ध्वमानं घण्टाण्डकान्वितम् ।
प्रमाणेन विधातव्यो दश भागास्तुलोदयः ॥
त्रिपदो वेदिकाबन्धो जङ्घा स्यात् + षडंशकः ।
मेखलान्तरपत्रे च भागेनैकेन कारयेत् ॥
पदत्रयेण (सादूर्ध्वं शृङ्गं कलश चाण्डकम् ?) ।
शिखरा विंशतिः कार्याः सभित्ताः (संभिन्नाः) सर्वमण्डपैः ॥
शृङ्गादधो विधातव्या(व्यं) मल्लच्छाद्यं मनोहरम् ।
एवं सर्वचतुष्केषु मल्लच्छाद्यानि कारयेत् ॥
छाद्यकैः पञ्चभिः कार्यो मध्ये प्रासादनायकः ।
घटिकानां समुच्छ्रायः सपादं पदमिष्यते ॥
घण्टायाः सार्धभागेन ग्रीवायाश्च पदादि(धि)का ।
कर्तव्यामलसारी तु (पादोनांशायबण्डिकाम् ?) ॥
द्विपदः कलशः कार्यो बीजस्वरसमन्वितः ।
पञ्चघण्टावृतं कृत्वा विमाना(नं) पञ्चचामरम् ॥
(अतीतविस्त्वयान् सर्वान् लोकः प्राप्नोति सम्भव ?) ।

पञ्चचामरः ॥

नन्दिघोषमथ ब्रूमो विपक्षभयनाशनम् ॥
य एनं भक्तितः कुर्यात् स भवेदजरामरः ।
चतुरश्रे समे क्षेत्रे चतुर्भागविभाजिते ॥
भद्रं द्विभागविस्तारं कुर्याद् भागविनिर्गमम् ।
भित्तिरत्र न कर्तव्या दिशि कस्यामपि ध्रुवम् ॥
कुर्वीत राजसेनं तु वेदिचन्द्रावलोकनम् ।
दिक्षु क्रमोऽयं सर्वासु त्यक्त्वा मार्गचतुष्टयम् ॥

१ 'स्यादूर्ध्वे शृङ्गं सकलशाण्डकम्' इति स्यात् ।

विस्तारसदृशोच्छ्राया कर्तव्या पूर्वभूमिका ।
वक्ष्यमाणैर्विभागैश्च विप्रभज्यासणाः + + (?) ॥

भागेन राजसेनं स्याद् वेदिर्भागद्वयेन च ।
भागेन चन्द्रालोकः स्यादर्धेनासनपट्टकः ॥

स्तम्भोच्छ्रायस्त्रिभिर्भागैस्ततो भागेन शीर्षकम् ।
पट्टोच्छ्रायो भागमेकं स्याच्चतुर्विंशतिर्धराः ॥

नानासङ्घैः पल्लवैश्च चारुकर्मकराननैः ।
द्वितीया भूमिका कार्या स्तम्भैः षोडशभिर्युता ॥

एवं भूमौ द्वितीयायामपि कर्म विधीयते ।
स्तम्भैश्चतुर्भिः संयुक्ता तृतीयायां चतुर्थि(ष्कि)का ॥

नन्दिघोषः कृतो येन (सूर्यं तेजो ?) स जायते ।
कर्मक्षया तुतुं (त् तनुं) त्यक्त्वा प्राप्नोति परमं पदम् ॥

नन्दिघोषः ॥

प्रासादमभिधास्यामो मनूत्कीर्णं महाद्रु(द्भु)तम् ।
विमृश्य बुद्धया निपुणं निर्मितं प्राक् स्वयम्भुवा ॥

क्षेत्रे षड्भागविस्तारे गर्भे(र्भं) भागचतुष्टये ।
कुर्वीत वृत्तं मध्ये च नवभिर्वृत्तिमालिका(?) ॥

अष्टौ (च) रथिकाः कार्याः क्षेत्रे दिक्षु विदिक्षु वा ।
ऊर्ध्वमानमथ ब्रूमो द्विगुणं द्विपदान्वितम् ॥

(छाद्ययावद्विधातव्या तत्साधाङ्गिकपञ्चकम् ?) ।
भागानष्टार्धसहितान् कुर्यादूर्ध्वं तुलोदयात् ॥

सार्धभागेन कर्तव्यो वेदीबन्धश्च शोभनः ।
भागद्वयं ततः सार्धं कार्या जङ्घासमुच्छ्रितिः ॥

भागार्धं हीरकं कुर्यान्मनोज्ञं कर्ति(र्णि)कान्वितम् ।
मेखलान्तरपत्रे च भागेनैकेन कारयेत् ॥

---

१ 'सूर्यतेजाः' इति स्यात् ।

शृङ्गोच्छ्रायस्ततः कार्यः सार्धभागद्वयोन्मितः ।
मध्येन सर्वशृङ्गाणां मस्तके वृत्तमालिखेत् ॥

षड्भागविस्तृतं तस्य+षड्भागसमुच्छ्रितम् ।
यावन्मात्राचरेत्(वरे) प्रोक्ता तावत् कार्या च मञ्जरी ॥

त्रिभौमं पञ्चभौमं च विचित्रं कारये(दि)मम् ।
ग्रीवा स्याद् भागपादेन विस्ताराद् द्विपदायता ॥

पादहीनं पदं कुर्यादण्डकं मनुसंभवे(त् ?) ।
चन्द्रिका भागपादेन पादोनं कुशलः(कलशः) पदम् ॥

प्रासादं मनसाप्येवं मनुकीर्तः[१](र्णं) करोति यः ।
स गंध्या (गत्वा) भवनं शम्भोर्गाणपत्यमवाप्नुयात् ॥

मानकीर्णः(?) ॥

अथ सुप्रभनामानं प्रासादमभिदध्महे ।
यं कृत्वा प्रभयान्येषां प्रभा हन्ति रविर्यथा ॥

चतुरश्रीकृते क्षेत्रे द्वादशांशविभाजिते ।
कुर्याच्चतुष्पदं गर्भं विस्तारो यामतः समः ॥

प्रासादार्धं भवेत् कन्दः कन्दभद्रं पदद्वयम् ।
भ्रमन्ती द्विपदा दिक्षु चतसृष्वपि शोभना ॥

पदिका बाह्यभित्तिस्तु द्विपदा कर्णविस्तृतिः ।
चतुष्पदं मध्यभद्रं विनिष्क्रान्तं त्रिभिः पदैः ॥

([२]अस्यैर्वात) पुनः कार्या द्विपदा तु चतुष्किका ।
([३]सोलायाः?) पार्श्वतः कुर्यादतिभद्रद्वयं बुधः ॥

तयोः पादेन निष्कासं पार्श्वयोरुभयोरपि ।
पार्श्वभद्रस्य कर्णस्य चान्तरं पदिके नयेत् ॥

जालैर्विचित्रितं कुर्यान्मध्ये ज्योतिर्यथा भवेत् ।
एवं दिक्षु समस्तासु कुर्वीतैनमनुक्रमात् ॥

---

१ 'मनूत्कीर्ण' इति पूर्वं व्यपदिष्टः । २ 'अस्यैवान्तः' इति स्यात् । ३ 'शालायाः' इति स्यात् ।

प्रासादभागविधिना पुरः कुर्वीत मण्डपम् ।
चतसृष्वपि मञ्जर्यो दिक्षु कार्या यथाक्रमम् ॥
लीयमूलसजङ्घात्रा स्वसार्धा च यथादिमम् (?) ।
उच्छ्रायो मूलविस्ताराद् द्विगुणो द्विकलाधिकः ॥
तुलोदयो दशपदो मञ्जरी षोडशांशिका ।
वेदीबन्धसमुत्सेधः सार्धभागद्वयोन्मितः ॥
पञ्चभागोच्छ्रिता जङ्घा हीरं भागसमुन्नतम् ।
सार्धभागेन कर्तव्ये मेखलान्तरपत्रके ॥
कर्णशृङ्गसमुत्सेधः कलशान्तस्त्रिभागिकः ।
दिङ्मञ्जरी तु कर्तव्या विस्तारेण चतुष्पदा ॥
उदयेन विधातव्या पञ्चभागा प्रमाणतः ।
ग्रीवा पदस्य पादेन कलशोऽर्धपदं भवेत् ॥
विस्तारो मूलमञ्जर्याः कर्तव्यो दशभागिकः ।
++भागत्रयोत्सेधो ग्रीवा पादे (दो)नभागिका ॥
अण्डकं सार्धभागेन द्विपदा कलशोच्छ्रितिः ।
(देशांशषट्कतो मूलास्कन्धोरेषोऽन्तको ?) भवेत् ॥
विस्तारो मूलमञ्जर्याः कर्तव्यो दशभागिकः ।
नवाण्डकोऽयं कर्तव्यः प्रासादः शुभलक्षणः ॥
यः प्रासादमिमं कुर्यात् सुप्रभं भक्तिमान् नरः ।
दिव्यते([1]जारवहस्यास्य ?) देहान्ते मुक्तिमाप्नुयात् ॥

[2]शुभलक्षणः ॥

सुरानन्दमथ ब्रूमः प्रासादमतिसुन्दरम् ।
चतुरश्रं समं क्षेत्रे(त्रं) दशधा प्रविभाजयेत् ॥
षड्भागो गर्भविस्तारो द्वौ भागौ भित्तिविस्तृतिः ।
[3]कर्तव्या सार्धभागेन(?) भागार्धेन जलाश्रयः ॥

---

१ 'जोवहः स स्याद्' इति पाठ्यं स्यात् । २ उपक्रमोपसंहारयोः सुप्रभ इत्यस्य नाम दृश्यते । ३ अत्र क्रियांश्चिच्छ्लोकांशो गलित इव भाति ।

प्रत्यङ्गस्थानकं कुर्यात् ( सप्रसं वृत्त ? )भागिकम् ।
शालास्त्रिभिः पदैः कार्याः शुभरूपाश्चतुर्दिशम् ॥

शालायाः पार्श्वयोः कार्यो वारिमार्गः पदार्धकः ।
परस्परं तु निष्कासो भागं भागं विधीयते ॥

ऊर्ध्वमानं विधातव्यं विस्ताराद् द्विगुणो ( णं ) बुधैः ।
गर्भच्छाद्यं पदान्यष्टौ भागा द्वादश मञ्जरी ॥

वास्तुविस्तारपादेन वेदीबन्धो विधीयते ।
चतुष्पदोर्ध्वतो जङ्घा भागार्धं ग्रासपट्टिका ॥

मेखलान्तरपत्रे च विधातव्ये पदोच्छ्रिते ।
कोणा द्रविडकूटस्य वृत्तस्तम्भा वराटका( ? ) ॥

मध्याङ्गतोरणानां स्युद्विशतिश्चतुरो(?) भवेत् ।
षट्पदः स्कन्धविस्तारो ग्रीवा भवति भागिकी ॥

शिरः सार्धं पदं ज्ञेयं भागमेकं च चन्द्रिका ।
कलशोऽशद्वयोच्छ्रायः कार्यः पल्लवभूषितः ॥

यः करोति सुरानन्दं वरदास्तस्य मातरः ।
सुरास्तस्य ह्यनिस्तार्यमपमृत्युं हरन्ति च ॥

सुरानन्दः ॥

अथ हर्षं प्रवक्ष्यामि सर्वलोकप्रहर्षणम् ।
नित्यं वसति यत्र श्रीः स्थानं यद् विश्वकर्मणः ॥

चतुरश्रीकृते क्षेत्रे भक्तेऽष्टादशभिः पदैः ।
प्रतिकोणं विधातव्याः ( [1]कर्णभागौ ? ) स्त्रिभिस्त्रिभिः ॥

द्विपदं कर्णभद्रं च भागेनैकेन निर्गतम् ।
वारिमार्ग( र्गं ) पदं कुर्यात् प्रवेश्य( शा )यामतः समम् ॥

त्रिभागमस्य प्रत्यङ्गं पदद्वितयनिर्गमम् ।
वेदिचन्द्रावलोकाभ्यां प्रत्यङ्गे कर्म कल्पयेत् ॥

१ 'कर्णा भागै' इति स्यात् ।

चतुष्पदं मध्यभागं द्विपदं चास्य भद्रकम् ।
विनिर्गतं च भागेन विदधीत विचक्षणः ॥
वलभ्यश्च द्विभागाः स्युः स्वा( स्वा )नुरूपाश्चतुर्दिशम् ।
गर्भो भागैश्चतुर्भिस्तु वलभीनां विधीयते ॥
द्विपदा बाह्यतो भित्तिर्द्विपदा च भ्रमन्तिका ।
स्कन्धः स्याद् दशभिर्भागैर्गर्भः षट्त्रिंशता पदैः ॥
ऊर्ध्वप्रमाणमेतस्य स्याच्चत्वारिंशता पदैः ।
भागैः षोडशभिश्चास्य विदध्याच्छादनं शुभम् ॥
वेदीबन्धः पञ्चपदो जङ्घा चाष्टपदा भवेत् ।
शाला( लां ) चान्तरपत्रं च कुर्याद् भागत्रयाद् बुधः ॥
ऊर्ध्वमन्तरपत्रं स्याद् विधातव्यं यथाक्रमम् ।
वलभीसंवृतिः प्राज्ञैरुच्छ्रायात् पञ्चभागिकी ॥
सा( स )शृङ्गैः सिंहकर्णैश्च कार्यो( र्या ) भागसमुच्छ्रितिः ।
वर्धमानेन कर्तव्या त्रिपदा कर्णमञ्जरी ॥
ऊर्ध्वं पदेभ्यस्त्रिभ्यः स्याद् भागेन कलशाण्डकम् ।
विस्तारात् षोडशपदा कर्तव्या मूलमञ्जरी ॥
ऊर्ध्व( र्ध्वं )विंशतिभागास्य स्कन्धो नवपदायतः ।
ग्रीवा सार्धपदं कार्या ततो द्विपदमण्डकम् ॥
चन्द्रिकैकेन भागेन कलशस्त्रिपदात् ततः ।
हर्षणः क्रियते यत्र स देशः सुखमेधते ॥
क्षेमं गोब्राह्मणानां स्यात् पूर्णकामश्च पार्थिवः ।

हर्षणः ॥

इदानीं दुर्धरं ब्रूमः प्रासादं शुभलक्षणम् ॥
चतुरश्रे समे क्षेत्रे चतुर्विंशतिभाजिते ।
कर्णाः (षडापदाः कार्या प्रतिरथं च ?) द्वयं भवेत् ॥
कर्तव्याष्टपदा शाला निर्गमोऽस्य चतुष्पदः ।
पदद्वयं विनिष्क्रान्ता सर्वतः कर्णशोभिता ॥

द्विपदा बाह्यभित्तिः स्याच्चतुर्भागान्धकारिका ।
द्विपदा कन्दभित्तिस्तु गर्भश्चाष्टपदायतः ॥

षट्पदा कन्दशाला च कन्दकर्णाः पदत्रयम् ।
ऊर्ध्वप्रमाणं विस्ताराद् द्विगुणं द्विपदाधिकम् ॥

(विंशत्यम ?) तुलोच्छ्रायाः शिखरं त्रिंशता पदैः ।
कुम्भः सार्धद्विभागश्च कलशो भागमुच्छ्रिति(त)ः ॥

भागार्धेनान्तरं पत्रं भागेनैकेन मेखला ।
दशभागोच्छ्रिता जङ्घा हीरकं भागिकं भवेत् ॥

भागैश्चतुर्भिः कर्तव्यं मेखलाद्वितयं ततः ।
अधस्तादूर्ध्वपट्टस्य तलपट्टस्य चोपरि ॥

भवेत् षोडशभिर्भागैरनयोरन्तरं द्वयोः ।
द्विपदो वेदिकाबन्धो वेदी कार्या चतुष्पदा ॥

आसनं चैव भागेन स्तम्भः पञ्चपदैर्भवेत् ।
भागेनैकेन भरणं शीर्षकं भागमुन्नतम् ॥

पट्टो भागद्वयोत्सेधश्छाद्यं च त्रिपदायतम् .
मूलभरणानि(?) चत्वारि कोणभद्राणि (कं भवेत्?) ॥

कर्णशृङ्गाणि दश च द्वयम(थ ?)स्मिंश्चतुर्दिशम् ।
(ग्रीवां + भगसन्तानां ?) शृङ्गाणां त्रिपदोच्छ्रितिः ॥

षट्पदाः कर्णमञ्जर्यः सप्तभागसमुच्छ्रिताः ।
ग्रीवार्धभागिकी भागः स्यादुच्छ्रायोऽण्डकस्य (तत्?) ॥

पदत्रयोन्नता कार्या सिंहकर्णश्चतुष्पदा (?) ।
मध्ये भद्रे तदुत्सेधो विस्तारादर्धभागिकः ॥

विस्तारो मूलमञ्जर्याः पदैः षोडशभिर्भवेत् ।
अष्टादशभिरुच्छ्रायो ग्रीवा सार्धपदोच्छ्रिता ॥

अण्डकं द्विपदं कार्यं चन्द्रिका पदमुच्छ्रिता ।
कलशं त्रिपदं विद्यात् सर्वलक्षणसंयुतम् ॥

अण्डकैः सप्तदशभिः प्रासादो दुर्धरो भवेत् ।
दुर्धरं यः करोतीह भागा (भर्गा)च्छक्तिं समा (आ)प्नुयात् ॥
कालेन शिवसायुज्यं ([1]निगधिश्च प्रद्यते ?) ।

दुर्धरः ॥

इदानीं दुर्जयं ब्रूमः प्रासादं शत्रुमर्दनम् ॥
यं कृत्वा (दुर्जयं[2] लोके ?) भवेत् क्रीडति च क्षितौ ।
चतुरश्रीकृते क्षेत्रे पञ्चभागविभाजिते ॥
गर्भं नवपदं कुर्याद् भित्तिः षोडशभागिकी ।
भागेन कर्णरथिका भागाभ्यां मध्यमे रथः ॥
भागेन निर्गमं (स्त)स्य वि(धि)रेष चतुर्दिशम् ।
भद्रकर्णान्तरे कुर्याद् वारिमार्गं पदाधिकम् ॥
ऊर्ध्वमानं विधातव्यं (त्वमस्मि ?) दशभागिकम् ।
वेदिबन्धः सपादांशौ जङ्घांसौ पादसंयुतौ ॥
मेखलान्तरपत्रे तु पदार्धेन प्रकल्पयेत् ।
शिखरः (खिखिरैः ?) सार्धं भागषट्कोच्छ्रितो भवेत् ॥
त्रिपदः स्कन्धविस्तारो रेखा पद्मदलाकृतिः ।
भूमयः पञ्च कर्तव्या न्यूनमाना यथाक्रमम् ॥
प्रथमा सार्धभागान्या पदपादोनिता क्रमात् ।
स्कन्ध(ः)पादोनभागेन स्याद् ग्रीवार्ध(र्ध) पदेन च ॥
अण्डकं त्वेकभागेन कर्परं चार्धभागिकम् ।
भागोत्सेधस्तु कलशः समवृत्तः सुशोभनः ॥
दुर्जयः क्रियते यत्र पुरे वा नगरेऽथवा ।
न भवेत् तत्र दुर्भिक्षं न च व्याधिकृतं भयम् ॥

दुर्जयः ॥

ब्रूमस्त्रिकूटं ब्रह्माद्यैः सेवितं त्रिदशैस्त्रिभिः ।
फलं क्रतुसहस्रस्य येन मोक्षं च विन्दति ॥

---

१ 'निधने च प्रपद्यते' इति स्यात् । २ 'दुर्जयो लोके' इति स्यात् ।

(¹संसाध्यतुल्यन्त्रिभजं ?)क्षेत्रमिष्टप्रमाणतः ।
ततोऽस्य बाहुमेकैकं चतुर्भिर्विभजेत् पदैः ॥
द्विभागं मध्यमं भद्रं भागिकीं कर्णपक्षि (ट्टि)काम् ।
अर्धेन गर्भमर्धेन कुर्याद् भित्तित्रयं बुधः ॥
विस्तारं पञ्चधा भक्ता (क्त्वा) कुर्याद् द्विगुणमुच्छ्रय (यम्) ।
वेदिबन्धो विधातव्यः सपादं भागमुच्छ्रितः ॥
जङ्घा सपादौ भागौ द्वौ कार्या तस्य समुच्छ्रितिः ।
मेखलान्तरपत्रे च भागस्यार्धेन कारयेत् ॥
मञ्जरी भागषट्केन पञ्चभागविभाजिता ।
आसमन्तात् (स्तम्भस्कन्धः ?) कार्यः पूर्वोक्तवर्त्मना ॥
पादभागेन तु ग्रीवामर्धभागेन चाण्डकम् ।
चन्द्रिका भागपादेन कलशं भागमुच्छ्रितम् ॥
त्रिकूटं कारयेद् यस्तु ब्रह्मेशानहरिप्रियम् ।
सिद्धा(द्धो)भूत्वा पुरीं तेषां यात्यसौ नात्र संशयः ॥

त्रिकूटः ॥

इदानीमभिधास्यामः प्रासादं नवशेखरम् ।
चतुरश्रं भजेत् क्षेत्रं विंशत्यकोनया पदैः ॥
कर्णाश्चतुष्पदाः कार्यास्तेषां भद्रं द्विभागिकम् ।
विनिर्गतं पदार्धेन जलमार्गस्त + + + ॥
+ + भागायता कार्या सा भवेद्धि (?) विचक्षणैः ।
शाला(कर्णपदाद्धतु ?) प्रत्यङ्गं भागमानतः ॥
त्रिपदो रथकः कार्यो मञ्जरीणां चतुष्टयम् ।
चतुष्पदा भवेद् भित्तिर्गर्भश्चैकादशांशकः ॥
चत्वारिंशत्पदादूर्ध्वं यावत् स्कन्धं समस्तकम् ।
तुलोदयः षोडशभिर्मञ्जरी चाष्टकैस्त्रिभिः ॥

१. 'संसाध्य तुल्यत्रिभुजम्' इति पाठ्यं भाति ।

चतुष्पदो वेदिबन्धो जङ्घा साष्टपदा भवेत् ।
भागेन भरणे त्र्यंशं मेखलान्तरपत्रकम् ॥

उच्छ्रायतः पञ्चपदा कर्तव्या कर्णमञ्जरी ।
ग्रीवार्धभागेन भवेदण्डकं चैव भागिकम् ॥

भागेन चन्द्रिकामूर्ध्वं भागेन कलशं तथा ।
सपादमुदयं (शाला मञ्जर्या विस्तृते ?) विदुः ॥

ग्रीवा पादेन भागेन सपा(१दासमता ? )ण्डकम् ।
भागाद्धि चन्द्रिका भागद्वयेन कलशोदयः ॥

विस्तारो मूलमञ्जर्याः कार्यः पञ्चदशांशकः ।
तथा सप्तदशोच्छ्रायः स्कन्धायामो नवांशकः ॥

ग्रीवा चास्यार्धभागेन सार्धद्विपदमण्डकम् ।
वण्डिका सार्धभागेन त्रिपदः कलशोदयः ॥

एवं यः कारयत्येनं प्रासादं नवशेखरम् ।
नवभिः सहितां खण्डैः स भुनक्ति वसुन्धराम् ॥

नवशेखरः ॥

पुण्डरीकमथ ब्रूमो यशसो वर्धनं परम् ।
यस्मिन् कृते स्थिरा कीर्तिर्भवेद् यावद् वसुन्धरा ॥

चतुरश्रं समं क्षेत्रं विभजेत् पञ्चभिः पदैः ।
त्रिपदं कल्पयेद् गर्भं तस्य भित्तिं च भागिकाम् ॥

त्रिपदं तस्य भद्रं स्यात् सार्धभागविनिर्गमम् ।
भद्रेषु वर्तुलं दिक्षु रथिकानां चतुष्टयम् ॥

भागेनैकेन रथिका मूलच्छन्दोऽयमीरितः ।
ऊर्ध्वमानं भवेद् यस्य द्विगुणो दशभागिकम् (?) ॥

भागेनोच्छालकं विद्याद् भागार्धेन तु मेखला ।
वेदिबन्धं न कुर्वीत जङ्घा सार्धद्विभागिका ॥

१ 'दांशमथ' इति स्यात् ।

मेखला चार्धभागेन भवेत् सान्तरपत्रका ।
पदानि पञ्च सार्धानि मञ्जर्याः स्यात् समुच्छ्रितिः ॥
त्रिपदः स्कन्धविस्तारो ग्रीवा वा ( पदसादिकाः ? ) ।
अण्डकं स्यात् पदार्धेन भागपादेन चन्द्रिका ॥
भागोच्छ्रायस्तु कलशः कर्तव्यः शुभलक्षणः ।
मध्येन मूलमञ्जर्यास्त्रिपदा भद्रमञ्जरी ॥
सार्धा + त्रिपदोच्छ्राया ग्रीवा भागसमुच्छ्रिता ।
अण्डकं च त्रिभागेन कलशो भागमुच्छ्रितः ॥
पञ्चाण्डः पुण्डरीकोऽयं कर्तव्यः शुभवर्धनः ।

पुण्डरीकः ॥

सुनाभ(स)मथ ब्रूमो वन्दितो (तं) देवदानवैः ॥
वल्लभं लोकपालानां पुण्यमुत्कृष्टलक्षणम् ।
विभजेत् सप्तदशभिः समक्षेत्रं चतुर्भुजम् ॥
पञ्चभागायताः कोणा गर्भः कार्यस्त्रिभिः पदैः ।
उभयोः कोणयोर्मध्ये सप्तभागिकमन्तरम् ॥
व्यक्षेपात्(?) कर्णयोर्मध्ये प्रा(प्रो)ञ्छयेत् पदमन्तरम् ।
भागप्रवेशं भागार्धे (र्धं)विस्तारा (र)मुदकान्तरम् ॥
द्विपदा बाह्यभित्तिः स्यात् त्रिपदाथ भ्रमन्तिका ।
पञ्चभागायतो मध्ये भवेत् प्रासादनायकः ॥
त्रिपदस्तस्य गर्भस्तु भित्तिर्भागं विधीयते ।
त्रिपदं कर्णभद्रं च भागेनैकेन निर्गतम् ॥
पदप्रमाणकोणांस्तु चत्वा (तु)रोप(वि)निवेशयेत् ।
यथा कन्दस्तथा कोणो विभागैः स विधीयते ॥
पञ्च गर्भास्तु कर्तव्याः सममानप्रकल्पिताः ।
द्विगुणं चोर्ध्वमानं स्याद् ग्रीवाण्डकविवर्जितम् ॥
त्रिभिः पदैर्वेदिबन्धो जङ्घा सप्तपदा भवेत् ।
पदत्रयेण कर्तव्यं मेखलाद्वितयं बुधैः ॥

ऊर्ध्वतो बाह्यच्छन्दस्या (स्य) कर्तव्या कर्णमञ्जरी ।
षट्पदाः कर्णमञ्जर्यो द्विपदं कलशाण्डकम् ॥
([1]द्वादशा सप्तविस्तारा ?) कर्तव्या मूलमञ्जरी ।
त्रयोदशपदोच्छ्राया ग्रीवास्या भागमुच्छ्रिता ॥
अण्डकं द्विपदोत्सेधं भागोत्सेधा तु चन्द्रिका ।
कलशस्त्रिपदोत्सेधो वर्तुलः शुभलक्षणः ॥
यावत् क्षितिर्यावदब्धिर्यावच्छशिदिवाकरौ ।
कर्तास्य तावद् दिव्यास्ते यावत् सुरगुरुः सुराः ॥

सुनाभाः ॥

माहेन्द्रमथ वक्ष्यामः प्रासादं भूषणं क्षितेः ।
सेवितं यक्षगन्धर्वैः फणीन्द्रैश्च महाप्रभैः ॥
माहेन्द्रं पञ्चदशभिर्भागैः प्राज्ञो विभाजयेत् ।
नवभागायतं गर्भं कुर्याद् भित्तिं त्रिभागिकीम् ॥
विस्तारेणास्य विख्याता तज्ज्ञैः शाला पदत्रयम् ।
शालायाः पार्श्वयोः कार्यौ रथौ सार्धपदौ बुधैः ॥
रथशालान्तरेणैव कर्तव्यमुदकान्तरम् ।
(रथस्याप्रातः पञ्चारि गृहकार्यं पदार्धकम् ?) ॥
प्रत्यङ्गानि पदं सार्ध++++जलान्तरम् ।
द्विपदं कर्णमानं च कार्यं कोणचतुष्टयं (ये) ॥
भागेनान्योन्यमेतेषां विधातव्यो विनिर्गमः ।
ऊर्ध्वमानं तु कर्तव्यं द्विगुणं सीमविस्तृतेः ॥
तुलोदयो दशांशः स्याद् विंशत्यंशा च मञ्जरी ।
वेदिबन्धं प्रकुर्वीत सार्धभागद्वयं बुधः ॥
जङ्घयोस्तु समुच्छ्रायमर्धपञ्चमभागिकम् ।
भागेन भरणं कुर्याल्लाञ्छितं पत्रभङ्गिभिः ॥

---

१ 'द्वादशांशसविस्तारा' इति स्यात् ।

तदूर्ध्वं मेखला कार्या भागद्वितयमुच्छ्रिता ।
ऊर्ध्वतो मञ्जरी कार्या क्रमेणैव मनोहरा ॥
नवभागायतं (रुद्धो ?)ग्रीवा भागसमुन्नता ।
अण्डकं द्विपदोत्सेधं चन्द्रिका भागमुच्छ्रिता ॥
द्विपदं कलशं कुर्याद् विस्तारोत्सेधतः समाः ।
लताः सप्त विधातव्या (रेषा ब्रूम कुलाकृति ?) ॥
मध्ये लतायाः कर्णस्य वेलकः षड्विधः क्रमः ।
प्रत्यङ्गे तिलका कूटाः पञ्चालार्धा द्विपक्षकः (:) ॥
कोणे वराटका(?) कूटाः कार्या माहेन्द्रमन्दिरे ।
कृत्वा महेन्द्रं राजा स्याद् माहेन्द्रस्य(?) वसेद् दिवि ॥

महेन्द्रः ॥

अथो ब्रूमो वराटाख्यं प्रासादं शुभलक्षणम् ।
दयितं किन्नरेन्द्राणां नागानां चातिवल्लभम् ॥
चतुरश्रं समं क्षेत्रं विभजेद् दशभिः पदैः ।
कु(र्या)त् षड्भिः पदैर्गर्भं भित्तिं भागद्वयेन च ॥
द्विपदं कर्णविस्तारं कुर्यात् कोणचतुष्टयम् (ये) ।
उदकान्तरविस्तारमर्धभागप्रवेशकम् ॥
पञ्चभागायतं भद्रमन्तरं वारिमार्गयोः ।
विस्तारार्धेन कर्तव्यस्तस्य भद्रस्य निर्गमः ॥
कुर्यान्मध्येऽष्टभिर्भागैः सपादैर्वृत (त्त)मुत्तमम् ।
सहितो वारिमार्गेण तलच्छन्दोऽयमीरितः ॥
ऊर्ध्वप्रमाणमेतस्य विस्ताराद् द्विगुणं भवेत् ।
तुलोच्छ्रायोऽष्टभिर्भागैः पदानि द्वादशोर्ध्वतः ॥
पदत्रितयमुत्सेधात् कर्तव्यं भद्रपीठकम् ।
विस्ताराभार्धमुत्सेधं वेदिबन्धस्य कारयेत् ॥
चतुर्भागोच्छ्रितां जङ्घां हीरकं चार्धभागिकम् ।
मेखलान्तरपत्रं च कुर्याद् भागमुच्छ्रितम् ॥

त्रिपदं शृङ्गमुत्सेधाद् ग्रीवा च कलशाण्डकम् ।
ष(त)दूर्ध्वं पञ्चविस्तारा स्यादुरोमञ्जरी शुभा ॥
ग्रीवा कार्या पदार्धेन भागेनैकेन चाण्डकम् ।
कलशोंऽशोच्छ्रितोऽष्टांशविस्तारा मूलमञ्जरी ॥
तस्याः कार्यः समुत्सेधः प्रमाणान्नवभागिका(क)ः ।
स्कन्धः पञ्चपदो ग्रीवा पादहीनं पदं भवेत् ॥
सपादं पदमञ्जर्या(?) पदस्यार्धेन चन्द्रिका ।
कलशो द्विपदोच्छ्रायः प्रासादे स्याद् वराटके ॥
वराटं कारयेद् यस्तु प्रासादं भक्तिमान् नरः ।
स याति यानैर्विविधैः स्वर्गं प्राप्नोति चाक्षयम् ॥

वराटः ॥

सुमुखस्याधुना लक्ष्म प्रका(क्र)मागतमुच्यते ।
भागैरेकोनविंशत्या चतुरश्रे विभाजिते ॥
तत्रैकादशभिर्गर्भश्चतुर्भिर्भित्तिरंशकैः ।
कोणो द्विभागिकस्तत्र भागपादो जलान्तरम् ॥
भागार्धेन प्रवेशोऽस्य चतुरंशकविस्तृतम् ।
भद्रमेवं विनिर्दिष्टमर्धभागेन निर्गतम् ॥
पादोनभागद्वितयादन्तरे कर्णभद्रयोः ।
त्रयः प्रतिरथाः कार्याः सहिताः सलिलान्तरैः ॥
अर्धभागोऽर्धभागश्च मिथस्तेषां विनिर्गमः ।
ऊर्ध्वमानं भवेदस्य द्विगुणं द्विकलाधिकम् ॥
अंशकैः पञ्चम(भि)श्चैव विधेयोऽस्य तुलोदयः ।
विभागैः पञ्चविंशत्या तदूर्ध्वं मञ्जरी भवेत् ॥
वेदीबन्धो विधेयोऽस्य सार्धभागचतुष्टयात् ।
जङ्घांशैरष्टभिः सार्ध(र्धैः)वरण्डी तु द्विभागिका ॥
लताभिर्नवभिर्युक्ता प्राग्वत् कार्यास्य मञ्जरी ।
स्यादेकादशभिर्भागैरेतत्स्कन्धस्य विस्तृतिः ॥

चतुर्गुणेन सूत्रेण वेणुकोशं समालिखेत् ।
कोणासन्नप्रतिरथो द्राविडोऽस्य विधीयते ॥
भूमिका नव कर्तव्याः शेषं कार्यं महेन्द्रवत् ।
पादोनभागद्वितया ग्रीवास्य च विधीयते ॥
सार्धभागद्वयमितं विदध्यादण्डकं शुभम् ।
चण्डिका सार्धभागेन कलशश्चांण्डकैस्त्रिभिः[1] ॥
इत्येष कथितः सम्यक् प्रासादः सुमुखाभिधः ।
य एनं कारयेद् भक्त्या स कामानश्नुतेऽखिलान् ॥
भुक्त्वेह विपुलान् भोगान् पदमभ्येति शाश्वतम् ।

सुमुखप्रासादः ॥

[2]चतुर्मुखा(?)श्रीधरादीनां ये प्रोक्तास्तान् प्रचक्ष्महे ॥
लक्षणैरधुना सम्यग् देवानामनिवर्तनात्(?) ।
यत् स्याद् विजयभद्रस्य रूपं तस्मिन्नथास्थिते ॥
विजयो नाम कर्तव्यः प्रासादो देवताप्रियः ।
कर्णे केसरि+++सर्वतोभद्रकः पुनः ॥
निवेशनीयो रथकैः सर्वलक्षणसंयुतः ।
तस्योपरि विधातव्या मञ्जरी चारुरूपिणी ॥
विस्तारादुदयात् तस्याः कुर्वीतैककलाधिकम् ।
स्कन्धस्तु षट्पदः कार्यो ग्रीवा भागसमुच्छ्रिता ॥
अण्डकं सार्धभागेन चन्द्रिकापि च तत्समा ।
तस्या एव हि मध्ये तु कुर्यादामलसारकम् ॥
सार्धभागद्वयोत्सेधं कलशं च तदूर्ध्वतः ।
द्राविडैश्च वराटैश्च प्रकुर्वीतास्य मञ्जरीम् ॥
+++++प्रपन्ना नापि जन्मनि जन्मनि(?) ।

नन्दः ॥

महाघोषाभिधानोऽथ प्रासादः कथ्यतेऽपरः ॥

---

१ 'श्चांशकैस्त्रिभिः' इति तु युक्तः पाठः । २ इह ग्रन्थपात इव लक्ष्यते ।

नन्दिघोषस्य संस्थाने रूपे चास्य व्यवस्थितः ।
अस्य कर्तृ (र्ण)षु सर्वेषु भद्राणि विनिवेशयेत् ॥

भद्रे चतुष्किका कार्या द्विपदायामनिर्गमा ।
भागिकी भित्तिरन्तश्च शेषं गर्भगृहं स्मृतम् ॥

शृङ्गाणि कर्णे कुर्वीतेत्येषा प्रथमभूमिका ।
द्वितीया तु पुनः कार्या भित्तिविन्यासवर्जिता ॥

चतुर्दिशं विधातव्यं वेदीचन्द्रावलोकनम् ।
विदधीत चतुःस्तम्भां तृतीयामपि भूमिकाम् ॥

छाद्यकैरूर्ध्वेन[1] तस्या कार्या संवरणा बुधैः(?) ।
कारयेन्नन्दिघोषं यः प्रासादमिममुत्तमम् ॥

विभूतिर्वाञ्छिता तस्य कुलेऽपि न विनश्यति ।

महाघोषः ।

प्रासादो मिश्रकेष्वेव वृद्धिरागो(मो) विधीयते ॥

([2]स्त्रीनिसस्य?) संस्थानं यत् तदस्यापि कीर्तितम् ।
गर्भकन्दं परित्यज्य स्तम्भैः षोडशभिर्वृतम् ॥

अस्य मध्यं विधातव्यं शेषं च श्रीनिवासवत् ।
उरोघण्टाभिरष्टाभिरश्वशालाभिरेव च ॥

अस्य भद्राणि कुर्वीत सर्वालङ्कारवन्ति च ।
वसुन्धरस्य ये भेदास्तैः सर्वैरन्वितः शुभः ॥

कलशैरेकविंशत्या वृद्धिरामः प्रशस्यते ।
प्रासादस्यास्य कर्ता च यावच्चन्द्रार्कतारकम् ॥

तावदिन्द्र इव स्वर्गे क्रीडत्यप्सरसां गणैः ।

वृद्धिरामः ॥

वृद्धिरामस्य संस्थाने प्रासादः स्याद् वसुन्धरः ॥

---

१. 'छाद्यकैरूर्ध्वतस्तस्याः कार्यं संवरणं बुधैः' इति पाठनीयं स्यात् । २. 'श्रीनिवासस्य' इति स्यात् ।

बाह्यभित्तीः परित्यज्य गर्भभित्तिर्विधीयते ।
वेदिकाकालरूपाद्यो(?) भद्रतोरणभूषितः ॥
एतद्भेदसमायुक्तः प्रासादः स्याद् वसुन्धरः ।
भक्त्या यः कारयेदेनं सोऽधितिष्ठत्यसंशयम् ॥
दुष्प्रापमपि देवानां महादेवस्य मन्दिरम् ।

वसुन्धरः ॥

प्रासादं मुद्गनामानमिदानीमभिदध्महे ॥
चतुरश्रीकृते क्षेत्रे षड्भिर्भागैर्विभाजिते ।
कुर्वीत भागिकीं भित्तिं गर्भं चैवास्य वर्तुलम् ॥
भद्रं चतुष्पदं वृत्तं निर्गमेण पदद्वयम् ।
स्वस्तिकश्च(स्य) समाकाराश्चत्वारो रथिकाः स्मृताः ॥
कर्णाश्च सर्वे कर्तव्या अश्रिभिः षड्भिरावृताः ।
जङ्घा वेदी च पीठं च (तत्र कीर्ति?)[1]निभानि च ॥
विस्तृतान्येकभागेन द्विभागोत्सेधवन्ति च ।
कर्णकूटानि कुर्वीत सपत्रा(त्र)मकराणि च ॥
भद्रं चतुष्पदायामं पञ्चभागसमुच्छ्रितम् ।
ग्रीवाण्डकं सकलशं कुर्यात् सार्धपदद्वयम् ॥
विस्तारं मूलमञ्जर्याः षट्पदं + + मालिखेत् ।
उच्छ्रयं दशभिर्भागैर्ग्रीवाकलशसंयुतम् ॥
मञ्जरीमत्र कुर्वीत (मन्नकीर्ते?)[2] यथा कृता ।
प्रासादं + + + + यो भक्तितः कारयेदिमम् ॥
गायन्ति तस्य किन्नर्यो दिवि चन्द्रामलं यशः ।

मुद्गप्रासादः ॥

इदानीं म + + + + + हच्छालं सु(रा)लयम् ॥
कमलोद्भवसंस्थाने कुर्वीतेमं यथास्थितम् ।
दिक्सूत्रे कर्णसूत्रेण रथ + + + + + + त् ॥

---

१ 'मानकीर्ण' इति स्यात् । २ 'मामकीर्णे' इति स्यात् ।

कर्णान्ते भद्रमध्ये च कारयेदुदकान्तरम् ।
पदपादेन विस्तीर्णं प्रक्षेपेण पदार्धकम् ॥
कर्णार्ध+++तव्या षड्भिरमृलिङ्गवृत्ताः(?) ।
पीठं वेदी च जङ्घा च मेखलान्तरपत्रकम् ॥
कमलोद्भववत् कार्यं बहुधा क++षितम् ।
कर्तव्यशिखरं(?) कुर्यात् ++++++++ ॥
[1]इलिकामकरग्रासैर्वरालैः सासुरैश्चिता ।
कथिता पुष्पके यादृग् ([2]ज)घा(ङ्घा)तादृगिहेष्यते ॥
ऊर्ध्वपीठप्रमाणस्य तथावच्छा[3]दकस्य च ।
यन्मध्यं तत्र कुर्वीत षड्दारुकनिवेशनम् ॥
रुष्टिकातोरणश्चारुसालभञ्जाविराजितम्(?) ।
वेदि[4]काराजसेनाढ्यं[5] (शमूतेद्भवलोकनम् ?) ॥
सस्तम्भशीर्षभरणं पट्टरङ्गोपशोभितम् ।
[6]म्लल्लं(मल्ल)च्छाद्यं विधातव्यं सिंहकर्णविभूषितम् ॥
सिंहरूपैः समा[7]क्रान्तं विचित्रैश्च वरालकैः ।
त्र्यंशोच्छ्रि[8]तं कर्णकूटं कुर्याद्वि[9]व(द्विप)दविस्तृतम् ॥
ग्रीवाण्डकसमेतं च ([10]वं)रण्ड्यां (का?)कलशान्वितम् ।
कर्णाः पृथक् पृथक् चेह स्युः षट्पञ्चाशदण्डकाः ॥
उरोमञ्जरिकाभिस्ते तिसृभिः स्युर्विभूषिताः ।
कर्णान्ते मूलरेखा च विस्तारात् सप्तभागिका ॥
सार्धभागाष्टकं चास्या विधातव्या समुच्छ्रितिः ।
उरोमञ्जरिका कार्या चतस्रोऽनुदिशं तथा ॥
प्रथमा स्यादुरोरेखा द्वादशाण्डकभूषिता ।
चतुर्दशाण्डका चान्या तृतीया षोडशांश(शाण्ड)का ॥

---

१ द. ई । २ द. जंघा ता° । ३ द. स्था । ४ द. °दे° । ५ द. व्यशस्तंतेंद्ववलोकनं । ६ द. म्लल्लच्छा° । ७ द. समकांत वि° । ८ द. स्थितं । ९ द. द्विग्वदवि° । १० द. च रेंड्यको कलसान्विता ।

अष्टादशाण्डकोपेता चतुर्थी परिकीर्तिता[1] ।
षट्त्रिंश[2]ताण्डकैर्युक्ता मूलरेखा विधीयते ॥

ग्रीवा पदं स्यात् पादोनं सपादं पदमण्डकम् ।
[3]लँवलीफलतुल्यं तच्चन्द्रिका च पदोच्छ्रिता ॥

द्विपदं कलशं विद्यात् समवृत्तं मनोरमम् ।
अर्धोतु [4]द्ध विधातव्यं बुजं तस्य चोपरि(?) ॥

विचित्रभूमिके( सप्तदश[5]म्मिमल्लिख्यराक्ष[6]ण्यपि ?) ।
स्तम्भैर्विविधविन्यासैर्बहुभङ्गविनिर्मितैः ॥

भूषितैः कर्मभिश्चित्रैः सर्वत्र शुभलक्षणैः ।
चन्द्रशालादिसंयुक्तैस्तोरणैश्चारुचामरैः ॥

तथाक्ष[7]तमुखग्रासैर्घनरूपतया स्थितैः ।
व्यालैर्व्यालोलजिह्वैश्च मकरग्राससंयुतैः ॥

मदान्धालिकुलाकीर्णगजवक्त्रविभूषितैः ।
विद्याधरवधूवृन्दैः क्रीडारम्भविभूषितैः ॥

सुराणां सुन्दरीभिश्च वीणाहस्तैश्च किन्नरैः ।
सिद्धगन्धर्वयक्षाणां वृन्दैश्च परितः स्थितैः ॥

अप्सरोभिश्च दिव्याभिर्विमानावलिभिस्तथा ।
चारुचामीकरान्दोलाक्रीडासक्तैश्च ( [8]निःसराम् ? ) ॥

नागकन्याकदम्बैश्च सर्वतः समलङ्कृतम् ।
एवंविधाभिः सर्वत्र भूमिकाभिर्निरन्तर[9]म् ॥

अलङ्कृतो विधातव्यो मेरुः प्रासादनायकः ।
मध्य( म )द्विगुणैर्ज्येष्ठः क( र्तव्यो )मेरुरण्डकैः ॥

कनीयान् मध्यमार्धेनेत्यण्डकस्थितिरीरिता[10] ।
उत्तमेषूत्तमं न्यस्येन्मध्यमेषु च मध्यमम् ॥

---

१ द. ताः । २ द. शां । ३ द. क । ४ द. द्ध । ५ द. शा । ६ द. रा । ७ द. क्षत । ८ मुद्रित पुस्तके ‘ निर्भराम् ’ इति स्यात् । परन्तु द. पुस्तके ‘ निः सराम् ’ एव पाठः अस्ति । ९ द. रां । १० द. ताः ।

(अथ)मेष्वधमं लिङ्गमेवमन्येषु धामसु।
मेरोस्तु त्रिविधस्यापि लिङ्गमुत्तममृद्धिदम्॥

अन्यथाविहित[1]++++++दिरोषकृत्।
मेरुं मेरूपमं[2] दिव्यं यः कारयति पार्थिवः॥

स[3] प्राप्नोति परां भुक्तिं++++सदाशिवाम्।
मेरुं प्रदक्षिणीकृत्य काञ्चनं यत्फलर्द्धिभाक्॥

शैलेष्टकादारुमये कृतेऽस्मिंस्तत्फलर्द्धिभाक्।

मेरुः॥

(लक्षणं) मन्दरस्याथ प्रासादस्याभिधीयते॥

सिद्धिप्रदस्य पुण्य(स्य)स्तु[4]तस्य त्रिदशैरपि।
चतुरश्रीकृतेक्षेत्रे[5] ++ भागविभाजिते॥

गर्भः कार्यश्चतुर्भागो भित्तिरेकांशविस्तृता।
अन्धारिकैकभागेन बाह्यभित्तिस्तु भागिकी॥

कोणेषु रथिकाः कार्याः पदद्वितयसंमिताः।
चत्वारो मण्डपाः कार्याः षट्त्रिंशत्पदसंमिताः॥

चतुर्दिशमलिन्दाश्च विधातव्याश्चतुष्पदाः।
भागेन निर्गतास्ते च सर्वतः शुभलक्षणाः॥

अस्योर्ध्वमानं कर्तव्यं वि[6]स्तराद् द्विगुणं बुधैः।
कर्णावेधश्च(?) विस्तारसीमा सर्वत्र गृह्यते॥

प्रासादे मूलमानं यत् तच्च सम्यक् प्रकल्पयेत्।
द्विपदं पीठमुत्सेधात् कार्यं प्रा[7]ङ्मुनतो(मूलतो) बहिः॥

तत् पद्मैरङ्कितं कार्यं सिंहैरपि च मन्दिरे।
पदार्धं [8]खुरकः कार्यः प्रासादसमवर्जितः(?)॥

सार्धं[9] पदद्वयं कार्यो वेदीबन्धः सुशोभनः।
चतुर्भागोन्नता जङ्घा भागार्धं रूपपट्टिका॥

---

१ द. °तं तत्र भवेद्वागा(मा)। २ द. मे। ३ द. स प्राप्नोति पराः भुक्ति मुक्तिं सदाशिवीं परां। ४ द. व। ५ द. दश। ६ द. °स्त°। ७ द. ध्मनतो बहिः। ८ द. मुखकः। ९ द. र्ध।

मेखलान्तरपत्रं च कार्यं पदसमुच्छ्रितम् ।
पदद्वयायतानि स्युः कर्णे शृङ्गाणि मानतः[1] ॥

उच्छ्रयस्त्रिपदस्तेषां ग्रीवाण्डकलशैः सह ।
मूलरेखा विधातव्या कर्णकूटस्य चोपरि ॥

नवभागोच्छ्रिता [2]शस्ता विस्तारेणाष्टभागिका[3] ।
विस्तारं दशधा कृत्वा तैः षड्भिः स्कन्धविस्तृतैः ॥

लताः पञ्च विधातव्याः श्रीवत्से[4] कथिता यथा ।
कुर्वीत पञ्चभौमं वा सप्त[5]भौममथापि वा ॥

ग्रीवा पादोनभागा स्यात् स[6](पादं) पदमण्डकम् ।
चन्द्रिकैकपदा कार्या कलशो द्विपदोदयः ॥

(त्रिश्वरं[7]?)त्रिपदं कुर्यात् तत्रैकं भागमुत्सृजेत् ।
[8]शुकनासोत्सृतं कुर्यात् सिंहस्थानविभूषितम् ॥

कनकाभरणैर्युक्तः पुमान् यद्वद् विराजते ।
तथा प्रासादराजोऽयं शोभते चित्रकर्मभिः ॥

मञ्जरीं[9] दशधा कृत्वा कर्मशोभां प्रकल्पयेत् ।
भागैर्भद्रस्य विस्तारः षड्भिर्भागेन निर्गमः ॥

भागिक्यौ रथिके तत्र कुर्याद् भागार्द्ध[10] विनिर्गमः ।
भागद्वयमितान् कर्णान् विदिक्षु च निवेशयेत् ॥

शालाश्चतस्रः कर्तव्या युक्ताः कूटैर्मनोरमैः ।
नीरान्तराणि ता अष्टौ मञ्जर्या द्विगुणान्विता ॥

कूटेऽर्धे प्रथमा भूमिः कार्या भागद्वयोच्छ्रिता ।
पदपादविहीनास्तु क्रमेणोपरि भूमिकाः ॥

अर्धभागोच्छ्रिता ग्रीवा भागिकोच्छ्रायमण्डकम् ।
भागेन कलशः कार्यः सर्वलक्षणसंयुतः ॥

---

१ द. ग. । २ द. शंस्यो द्विस्ता° । ३ द. की । ४ द. °त्सो । ५ द. म । ६ द. सपदं पद° ।
७ 'शिखरम्' इति स्यात्; द. त्रिस्वरं । ८ द. अ । ९ द. °री । १० द. भागार्द्धनिर्गमा ।

विस्तारार्धेन कर्तव्यो वेदीबन्धो विचक्षणैः ।
षड्गुणेनैव सूत्रेण मध्यरेखां समालिखेत् ॥
द्वितीयामालिखेत् पञ्चगुणितेन विचक्षणः ।
सार्धत्रिगुणसूत्रेण[1]++रेखां समालिखेत् ॥
मञ्जरीभिर्विचित्राभिः सर्वत्रैव विराजितः ।
प्रासादो मन्दरः[2] कार्यः प्रमाणेनामुना शुभः ॥
मन्दरं मन्दराकारं कृत्वा प्रासादमुत्तमम् ।
प्राप्नोतीह परं सौख्यं परत्र च शुभां गतिम् ॥

मन्दरः ॥

कथयामोऽथ कैलासमशेषसुरसेवितम् ।
[3]प्रमथप्रवरैर्जुष्टं प्रासादं पुण्यवर्धनम् ॥
चतुरश्रीकृते क्षेत्रे शतधा प्रविभाजिते ।
शाला षड्भागविस्तारा कर्तव्या भागनिर्गमा ॥
([4]कैलात्रिभागिका कुर्यात् सलिलान्तरसंयुतान् ?) ।
(आरभ्य ब्रह्मणः स्थानात् समा इव पादद्वयम् ?) ॥
भ्रमयित्वा समं वृत्तं गर्भं[5](गर्भमंशं) प्रकल्पयेत् ।
[6]तथा भित्तिर्विधातव्या समन्तादर्धभागिका ॥
भागिका बाह्यभित्तिः स्यात् (कार्या स्याद् ?) भद्रभूषिता ।
अन्तराले[7] तु सर्वत्र विदध्यादन्धकारिकाम् ॥
अलिन्दकाश्चतुर्भागाः कर्तव्या दिक्त्रये बुधैः ।
भागद्वयेन निष्क्रान्ताः सर्वतः शुभलक्षणाः ॥
([8]चतुर्थोकां ?) विधातव्यास्तेषु स्तम्भद्वयान्विताः ।
मुखे तु मण्डपः कार्यः स्तम्भपङ्क्तिविराजितः ॥
अथोर्ध्वमानं [9]वक्ष्यामः कैलासस्य यथास्थितम् ।
पीठं तस्य पदे द्वे तु कर्तव्यं गणभूषितम् ॥

१ द. कर्ण । २ द. मञ्जरः । ३ द. प्रथम° । ४ द. कलान् त्रि° । ५ द. गर्भं संप्र° । ६ द. ततो । ७ द. °ल्ये । ८ द. चतुर्थ्ये को वि°; मुद्रित पुस्तके तु; 'चतुष्किका' इति स्यात् । ९ द. नव° ।

पदस्यार्धेन कर्तव्यः खुरकस्तु खुरादिति(?)।
तदूर्ध्वं द्विगुणा ज्ञेया प्रासादस्य समुच्छ्रितिः ॥

एकेन कुम्भकः कार्यो भागेन समवर्जितः[1]।
मसूरकस्तु भागेन पादोनेन विधीयते ॥

कार्यं पदस्य पादेन ततश्चान्तरपत्रकम्।
मेखलार्धपदेन स्याच्चन्द्र[2]शालाविभूषिता ॥

जङ्घा तदूर्ध्वं कर्तव्या सार्धं पदचतुष्टयम्।
भागेनैकेन कुर्वीत मेखलान्तरपत्रकम् ॥

कर्णशृङ्गं त्रिभिर्भागैः कुर्यात् सकलशाण्डकम्।
तदूर्ध्वं द्विपदानि स्युः कू[3]टान्युच्छ्रायमानतः ॥

पूर्वोक्तानाममीषां च प्रक्षेपः स्यात् पदां(शतः)।
चतुर्धा कूटविस्तारं [4]संविभज्य पदद्वये ॥

([5]संद्रस्यादितिक्तयनि ?) सिंहक्रान्तानि कारयेत्।
विस्तारं मूलमञ्जर्याः कुर्यात् षड्भागसंमितम्[6] ॥

सप्तभागिकमुच्छ्रायं कैलासेऽस्याः प्रकल्पयेत्।
भागार्धेन भवेद् (भाग ?) भागिकोच्छ्रायमण्डकम् ॥

[7]चण्डिकामर्धभागेन कलशं सार्धभागिकम्।
कुर्वीत शिखरं चास्य स्वस्तिकस्य यथोदितम् ॥

युक्तं भूमीभिरष्टाभिर्मञ्जरीभिरलङ्कृतम्।
सिंहकर्णैर्विचित्रैश्च भद्राण्यस्य विभूषयेत् ॥

कर्तव्यः स्कन्धविस्तारस्तस्मिन् पदचतुष्टयम्।
विदधीत समालेखसूत्रेण त्रिगुणेन च ॥

एवं+++++कैलासं [8]विदधाति यः।
विभूतिं लभते सोऽत्र सुखसौभाग्यसंयुताम् ॥

---

१ द. °र्त्तितः। २ द. °न्द्रं। ३ द. कु°। ४ द. स। ५ द. भद्रं स्यादिति कूटानि। ६ द. तां। ७ द. वंदि°। ८ द. सं। ९ द. त।

कामानवाप्य[1] विविधान् कीर्तिमारोग्यमेव च ।
भुक्त्वा भोगांश्च कैलासे कल्पान्ते[2] यावदीप्सितम् ॥
[3]शार्वं पदमवाप्नोति शान्तं ध्रुवमनामयम् ।

कैलासः ॥

त्रिविष्टपमथ ब्रूमः प्रासादममरप्रियम्[4] ॥
सेवितं यक्षगन्धर्वसिद्धविद्याधरादिभिः ।
चतुरश्रीकृते क्षेत्रे विंशत्यंशविभाजिते ॥
षड्भागविस्तृता शाला स्याच्चतुर्भागनिर्गमा ।
चतुरंश(श्श)ती[5] कोष्ठकानां द्वासप्तत्यधिका भवेत् ॥
आशात्रयस्थितैर्भद्रैः[6] सार्धमेवं[7] प्रजायते ।
कुर्याद् गर्भगृहाण्यष्टौ (दिक्षु[8]ष्वास्वपि ?) तानि तु ॥
कोणे तु षोडशांशानि तन्मध्ये[9] चतुरोंऽशकान् (?) ।
भित्तिर्द्वादशभिर्भागैर्गर्भाणामिति निर्णयः ॥
चतुःषष्टिपदः कार्यो मध्ये प्रासादनायकः ।
पदैः षोडशभिस्तस्य मध्ये गर्भं प्रकल्पयेत् ॥
द्विभागविस्तृता भित्तिः कर्तव्या तस्य बाह्यतः ।
([10]चतुर्विंशतिं भ्रमन्ती स्य ?) ++ पञ्चपदायता ॥
वलभीः कारयेत् तद्वद् द्वि(दिग्)[11]भागेषु चतुर्ष्वपि ।
प्रत्यङ्गं द्विपदं कर्णशालावलभिकान्तरे ॥
तच्च द्विपदमुद्दिष्टं जलमार्गे पदार्धिके ।
पदैर्द्वादशभिर्दिक्षु चतसृष्वपि मण्डपान् ॥
प्रासादस्य प्रकुर्वीत कर्मशोभाविभूषितान् ।
मूला(ल)प्रासादगर्भस्य कुर्याद् द्वारचतुष्टयम् ॥
विज्ञेये(यं) तच्च दिग्भद्रे[12] सूत्रमार्गानुसारतः ।
जलान्तराणि कुर्वीत प्रत्यङ्गे[13] पार्श्वयोरपि ॥

१ द. °पिन° । २ द. न्तं । ३ द. सार्वस्पदम° । ४ द. या । ५ द. शती को° । ६ द. व । ७ 'दिक्ष्वष्टास्वपि' इति स्यात् । ८ द. षु । ९ द. ध्यं । १० 'चतुर्दिशं भ्रमन्ती स्यात् तस्याः' इत्येवञ्जातीयं पाठ्यं स्यात् । द. चतुर्दिशं भ्र° । ११ द. वि । १२ द. द्र । १३ द. ङ्ग ।

बाह्यभित्तिं तु कुर्वीत भागेनैकेन संमिताम् ।
एवं विभज्य कुर्वीत पुरतो मुखमण्डपम् ॥

ऊर्ध्वमानमथ(स्त्रिंशा[1] ?)तत्र पीठं चतुष्पदम् ।
मध्यप्रासादजङ्घा च तद्वदेव समुच्छ्रिता ॥

अतः पदैः स्याद् विस्ताराद् द्विगुणा शिखरोन्नतिः ।
तस्याश्च मध्ये कुर्वीत षोडशांशं तुलोदयम् ॥

तुलोदयस्य मध्ये द्वे वेदीबन्धं सपञ्चकाम्[2] (?) ।
जङ्घा चाष्टपदा कार्या मध्ये[3] चासनपट्टिका ॥

[4]एषा त(मन्तर)पत्रं च कर्तव्यं त्रिपदोच्छ्रितम् ।
तुलोदयस्योपरिष्टात् प्रमाणमथ कथ्यते ॥

चतुष्पदेषु कर्णेषु कूटं पञ्चपदोदयम् ।
ग्रीवा पदस्य पादोन(ना)त्रिभिः पादैस्तथाण्डकम् ॥

चन्द्रिकाकलशोत्सेधं पादेनैकेन कल्पयेत् ।
प्रत्यङ्गे तिलकास्त्र्यंशा घण्टाकलशसंयुताः[5] ॥

मध्ये तु वलभीशृङ्गमुन्नतं[6] सप्तभिः पदैः ।
ऊर्ध्वतस्तिलकानां स्यादुरोमञ्जरिका दश ॥

विस्तारेण पदान्यूर्ध्वं भवेद् द्वादशभागिका ।
स्कन्धं[7](पट्टादि ?)विस्तारो ग्रीवा पादोनभागिका ॥

अण्डकं सार्धभागेन चन्द्रिका भागमुच्छ्रिता ।
द्विपदः[8] कलशोच्छ्रायस्तद्वद्[9](द्व ?)बीजपूरकम् ॥

विस्तारो मूलमञ्जर्याः कार्यः षोडशभिः पदैः ।
उच्छ्रायः सप्तदशभिः स्कन्धो नवपदः स्मृतः ॥

कार्या सप्तलतोपेता प्रशस्ता मूलमञ्जरी ।
ग्रीवास्य भागिका[10] भागद्वयमामलसारकम् ॥

---

१ द. त्रिंशस्तत्र । २ द. कं । ३ द. मध्ये वासंतपट्टिका । ४ द. मेखांतरपत्रं । ५ द. ता । ६ द. च्छ्रि । ७ द. स्कंधः पट्टद वि° । ८ द. का । ९ द. स्तद्वहिर्वा । १० द. की ।

चन्द्रिका[1] भागमेकं स्यात् त्रिपदा कलशोच्छ्रितिः।
उक्ता या मूलमञ्जर्यः प्राक् प्रासादेषु तास्वियम्॥

कार्यं माहा[2]मांकारा(?) चारुकर्मोपशोभिता।
बाह्यभित्तिसमायुक्तं प्रासादस्य चतुर्दिशम्॥

मल्लच्छाद्यं प्रकुर्वीत यथाशोभं[3] विचक्षणैः।
सर्वतश्चारुरूपाद्यैर्विचित्रैः शुभलक्षणैः॥

विभूषयेत् सिंहकर्णैर्मल्लच्छाद्यं मनोहरैः।
वलभीत्रयसंयुक्तं कर्णकूटचतुष्टयम्॥

यथाशोभं विधातव्यं प्रासादेऽस्मिंस्त्रिविष्टपे।
वास्तौ शतपदे यानि मर्माण्युक्तानि सर्वतः॥

उत्सृज्य तानि यत्नेन परिकर्मात्र कारयेत्।
प्रासादं कारयित्वैनमुक्तरूपं त्रिविष्टपम्॥

लभेतेह यशो[6] राज्यं परत्रानन्त्यमेव च।
कृत्वा त्रिविष्टपं दिव्यं प्रासादं पुरभूषणम्॥

वसेत् त्रिविष्टपे तावद् यावदाभूतसंप्लवम्।
तस्यान्ते तु परे तत्त्वे लयमाप्नोति मानवः॥

त्रिविष्टपः॥

अथाभिधीयते सम्यक् प्रासादः पृथिवीजयः।
किन्नरासुरयक्षाद्यैर्वन्दितः सुरसत्तमैः॥

चतुरश्रीकृते क्षेत्रे([10]विभागाष्ट?) विभाजिते।
चतुर्भागा भवेच्छाला सपादे([11]दां)शविनिर्गता॥

कर्णशृङ्गद्वयं कार्यं प्रत्येकं भागविस्तृतम्।
पादोनपं[12]दनिष्क्रान्तं+++++++++॥

---

१ द. कां। २ द. माहाकरो चा°। ३ द. भां। ४ द. णाः। ५ द. ष्ट। ६ द. यत्सौ°। ७ द. शंल्य°। ८ द. (ता च यावदा° ?)। ९ द. त। १० मुद्रित पुस्तके 'भागष्टक' इति स्यात्; परन्तु द. पुस्तके 'विभागाष्ट' इत्येव पाठः। ११ द. °दोंश°। १२ द. पा।

भागैश्चतुर्भिर्गर्भः स्याद् भित्तिः कार्या तु भागिका ।
भ्रमन्तिकापि भागेन बाह्यभित्तिश्च भागिकी ॥
भागद्वयेन कुर्वीत दिक्त्रयेऽस्य चतुष्किकाम् ।
पुरतो मण्डपं कुर्यादुपेतं कर्मशोभया ॥
एवं विभागान् संकल्प्य यथोद्देशं विचक्षणः[1] ।
मन्दरस्येव कुर्वीत कर्मशोभां समन्ततः ॥
ऊर्ध्वतो यत् प्रमाणं स्यात् तदस्येहाभिधीयते ।
अधस्तान्नागपीठः[2] स्यात् प्रमाणेन पदद्वयम् ॥
[3]हीरकं भागपादेन तस्य मध्ये निवेशयेत् ।
विस्ताराद् द्विगुणं चोर्ध्वमानं भागार्धसंयुतम् ॥
ऊर्ध्वमानस्य मध्ये स्यात् षट्पदानिबर्हणादयः(?) ।
वेदीर्बन्धश्च[4] तन्मध्ये कर्तव्यः सार्धभागिकः ॥
ततो हीरकसंयुक्ता जङ्घा पदचतुष्टयौ[5] ।
मेखलान्तरपत्रं च कार्यं भागार्धसंमितम् ॥
भागद्वयेन कर्तव्यं वेदिका राजसेरका[6] ।
चन्द्रावलोकं भागेन विदधीत विचक्षणः ॥
कुर्यात् पदस्य पादेन तत्रैवासनपट्टकम् ।
पदद्वयेन सांशेन स्तम्भमूर्ध्वं निवेशयेत् ॥
अर्धभागेन कुर्वीत भरणं स्तम्भशीर्षके ।
अर्धभागेन पट्टं च छाद्यं सार्धपदायतम् ॥
([7]द्वे सन्त पठिका ?) कार्या ततो भागार्धसंमिता ।
ऊर्ध्वमन्तरपत्रस्य ( कथमोथ ? ) यथाक्रमम् ॥
कुर्याद् ग्रीवाण्डकलशं चन्द्रिकाभिः समं बुधः ।
उच्छ्रायं कर्णशृङ्गाणां सार्धभागं प्रमाणतः ॥
स्तम्भसूत्रेण कर्तव्यं नष्टशृङ्गं विचक्षणैः ।
कूटानि पञ्च कुर्वीत यथावत् प्रथमक्षितौ[9] ॥

१ द. °णैः । २ द. ठा । ३ द. परुक्खं । ४ द. °वंध्याश्च । ५ द. °यां । ६ द. कं
७ द. द्विसंत पट्टिका का° । ८ द. सच्च । ९ द. कौं ।

प्रा (त्री)णि भूमौ द्वितीयायां तृतीयायां तु कूटकम् ।
कुर्यात् तुल्यसमुच्छ्रायविस्तारं तच्च मानतः ॥
कर्णे कर्णे तु कूटानि भवन्त्येवं पृथङ् नव ।
शुकनासोन्नतिः कार्या सार्धभागद्वयं बुधैः ॥
स्यादुरोमञ्जरी पूर्वा नष्टशृङ्गस्य चोपरि ।
विस्तारात् त्रिपदा सा स्यात् सार्धभागत्रयोन्नता ॥
भागं सपादं कुर्वीत ग्रीवां सकलशाण्डकम् ।
द्वितीयशृङ्गस्योर्ध्वं स्यादुरोमञ्जरिकापरा ॥
विस्तीर्णा चतुरो भागान् कार्या पञ्चपदोच्छ्रिता ।
स्कन्धावरोहणग्रीवाचन्द्रिकाकलशैः सह ॥
एतेषां तु समुच्छ्रायः सार्धभागं विधीयते ।
उरःशिखरकाण्यष्टावेवं कुर्याच्चतुर्दिशम् ॥
तृतीयकर्णशृङ्गस्य स्यादूर्ध्वं मूलमञ्जरी ।
सा भवेत् षट्पदोच्छ्राया पदपञ्चकविस्तृता ॥
त्रिपदः स्कन्धविस्तारो दिक्षु स्याच्चतसृष्वपि ।
[2]कूटैश्च विविधन्यासैरलङ्कुर्वीत मञ्जरीम्[3] ॥
अर्धभागोच्छ्रिता ग्रीवा सार्धांशद्वयविस्तृता ।
अण्डकस्य समुच्छ्रायस्त्रिभागोनपदं भवेत् ॥
कर्परं चार्धभागेन कलशः पदमुच्छ्रितः ।
नवभिः शिखरैर्युक्तः कर्तव्योऽयं समन्ततः ॥
वेदीबन्धस्तु सर्वत्र कर्तव्यः शतवास्तुवत् ।
कुर्यात् तेन विभागेन कलशानपि शोभनान् ॥
मञ्जरीः पद्मपत्राग्रतुल्याः सर्वत्र कारयेत् ।
अण्डकानि भवन्त्यत्र चत्वारिंशच्च पञ्च च[5] ॥
एवंविधं विधत्ते यः प्रासादं पृथिवीजयम् ।
पृथ्वीं विजयते कृत्स्नां निर्जितारिः स पार्थिवः ॥

---

१ द. त्र । २ द. कूटैर्विविधं न्या° । ३ द. री । ४ द. री । ५ द. वा ।

अन्योऽपि कश्चिद् यः[1] कुर्याद् (वर्णा[2]च्छतं[3] ?) भक्तिमानिर्मम्[4] ।
सोऽपि सौख्यमवाप्नोति पश्चादन्ते परं पदम् ॥

पृथिवीजयः ॥

अतः परं प्रवक्ष्यामि[5] प्रासादं क्षितिभूषणम् ।
अमरैर्वन्दितं सर्वैस्तथा चाप्सरसां गणैः ॥
चतुरश्रीकृते क्षेत्रे द्वादशांशविभाजिते ।
भद्रे पञ्च पदानि स्युः कोणे कार्यं पदत्रयम् ॥
गर्भं षोडशभिर्भागैस्तस्य कुर्याद् विचक्षणः ।
कर्तव्या पदविंशत्यां[6] कन्दभित्तिः समन्ततः ॥
प्रासादस्यास्य कर्तव्या रमणी तु पदद्वयम् ।
पट्टि (दि)का बाह्यभित्तिः स्याद् द्विपदो भद्रनिर्गमः ॥
जलान्तरं तु[7] भागस्तु ++++ गवाक्षकाः ।
भद्राणां मध्यतः पञ्च( स ? ) प्रकाशाः स ( सु )मनोरमाः ॥
बाह्यालिन्दं प्रकुर्वीत वेदीजालविभूषितम्[8] ।
तस्योपरिष्टात् कुर्वीत माल्युच्छ्रायं सुशोभनम् ॥
ऊर्ध्वमानमथ ब्रूमः प्रासादे क्षितिभूषणे[9] ।
क्षुरकं तस्य कुर्वीत त्रिपदं पीठसंयुतम् ॥
अस्योच्छ्रायस्ततः सार्ध[10] (पदाः स्यात् ?) पञ्चविंशतिः ।
एतन्मध्ये तु दशभिः पदैः कार्यस्तुलोदयः ॥
रेखा पञ्चदशांशा स्यात् स्कन्धशीर्षं पदार्धकम्[11] ।
वेदीबन्धस्तु कर्तव्यः सार्धभागद्वयं बुधैः ॥
जङ्घा षड्भागिकोच्छ्राया भागार्धं( षेचराः ? ) शुभाः ।
मेखलान्तरपत्रं च पदेनैकेन कारयेत् ॥
कार्या चतुष्किका पञ्चविस्तारा त्रिपदोच्छ्रिता ।
तदूर्ध्वतः क्रमः कार्यो द्विपदोऽन्योऽधिकं पदम् ॥

---

१ द. दथः । २ मुद्रित पुस्तके 'वर्णानाम्' इति स्यात् । ३ द. तः । ४ द. मां । ५ द. च प्रवक्ष्यामः । ६ द. त्यां । ७ द. तु भागार्द्धं द्विभागस्तु ग° । ८. द. तां । ९ द. णं । १० द. र्द्धं । ११ द. र्द्धं° ।

भूमयः पञ्च कर्तव्या [1]न्यूना( +च ? ) यथोत्तरम् ।
प्रथमा भूमिका (का)र्या सार्धं[2] (द्विभागास्तु गवाक्ष ?) भागत्रयं बुधैः ॥
सपादास्तु त्रयो भागा द्वितीयाया ( स )मुदाहृता[3] ।
[4]तृतीया त्रिपदा + + + + + + + + परा ॥
[5]+ + + + + + + + पञ्चमी भूमिरिष्यते ।
पादहीनपदं ग्रीवा सपादपदमण्डकम् ॥
चन्द्रिका भागमेकं स्यात् पद्मपत्रनिभा शुभा ।
त्रिपदं कलशं [6]विद्यान्मातुलिङ्गसमन्वितम् ॥
द्राविडं नागरं वापि वाराटं वास्तु शोभनम् ।
( यदेकं तेवते कर्तुं ? ) तद्रूपं तं प्रकल्पयेत् ॥
नानाप्रकारैः स्तम्भैश्च नानाभूषणभूषितैः ।
कलशैः पद्मपत्रैश्च हीरकैश्चोपशोभितम् ॥
कृत्रिमग्रासयुक्ताभिश्चन्द्रशालाभिरन्वितम् ।
मकरग्राससंयुक्तैस्तोरणैर्लक्षणान्वितैः[7] ॥
( [8]कोणोत्कण्ठै ? )र्विचित्रैश्च रूपैश्चित्रैश्च शोभितम् ।
कर्म रम्यं प्रकुर्वीत यथावद् वित्तविस्तृतम्[9] ॥
गुणवान् नृपतिर्यद्वद् भूषयत्यखिलां महीम् ।
क्षितिं विभूषयत्येवं प्रासादः क्षितिभूषणः ॥
द्रव्येषु रेणुसंख्या यां[10] सुधायामपि यावती ।
तावद्युगसहस्राणि कर्ता शिवपदे वसेत् ॥

क्षितिभूषणः ॥

संस्थानं सर्वतोभद्रस्याधुना परिकीर्त्यते ।
चतुरश्रीकृतं क्षेत्रं[11] विभजेद् दशभिः पदैः ॥

---

१ मुद्रित पुस्तके ' न्यूनास्ताश्च ' इति स्यात् । २ द. सार्धं द्विभागास्तु । ३ द. ताः । ४-५ मुद्रित पुस्तके ' तृतीया त्रिपदा कार्या पादोनत्रिपदा परा । ' इति पाठ्यं स्यात् । ' अर्धहानित्रिभागा तु पञ्चमी भूमिरिष्यते ' इति पाठ्यं स्यात् । द. पुस्तकेऽपि ' तृतीया त्रिपदा परा ', ' पंचमी भूमिरिष्यते ' इत्येव पाठः । ६ द. विं । ७ द. ताः । ८ द. कोणे कूटैर्विचित्रैश्च । ९ द. त । १० द. याः । ११ द. त्रे ।

तत्र गर्भो भवेत् तावान् यावत् स्याद् ब्रह्मणः पदम् ।
[1]++++++++भित्तिश्चेति पदं पदम् ॥

भागषट्केन भद्रं स्यात् सार्धभाग[2]विनिर्गतम् ।
[3]कर्णं द्विभागिकं कुर्यात् [4]+लमाग्रसमन्वितम् ॥

पदपादस्य पादेन विस्तारो जलवर्त्मनः ।
यत्रैकमेव भद्रं स्याच्चारुस्तम्भैरलङ्कृतम् ॥

स(सं)मोददं स्यात् तद् वस्तु धनधान्यसुखावहम् ।
चतुर्भिर्विस्तृतं भागैः सार्धभागविनिर्गतम् ॥

भद्रस्यैवाग्रतो भद्रं तच्छौ[5](च्च) बाह्योदरं विदुः ।
विस्ताराद् द्विगुणश्चास्य समुच्छ्रायः प्रकीर्तितः ॥

कुम्भकं भागिकं कुर्याद् भागार्धेन मसूरकम्[6] ।
भागपादेन कुर्वीत ततश्चान्तरपत्रकम् ॥

मेखलायाः समुच्छ्रायमर्धभागेन कारयेत् ।
चतुर्भागोन्नता जङ्घा ग्रासकिङ्किणिकान्विता[7] ॥

पदं पादविहीनं स्यात् (कृष्लं[8]?)स्थानेषु हीरकम् ।
मेखलान्तरपत्रं च पदार्धेन समुघृं[9](च्छ्रि)तम् ॥

त्रिभागविनतं कुर्याद् भागे चन्द्रावलोकनम् ।
ऊर्ध्वमासनपट्टस्य स्तम्भं कुर्यात् पदद्वयम् ॥

हीरग्रहणशीर्षं च पदेनैकेन कारयेत् ।
भागेनैकेन कुर्वीत पट्टपिण्डं[10] विचक्षणः ॥

द्विपदं छाद्यविस्तारं तदर्धेन(तुलस्वनमः?) ।
जठरं बाह्यसीमा च भित्तयश्चान्धकारिका ॥

जङ्घोत्सेधश्च कर्णश्च ++++यथा[11] भवेत् ।
कोणेषु रथिकाः कार्याः कलशान्ताः पदत्रयम् ॥

---

१ द. भित्तिभ्रमंतिकां बाह्यभि° । २ द. °गेननिर्गतं । ३ द. प्रतौ इतः पूर्वं 'समोददं स्यात्तद्वस्तु धनधान्यसुखावहम्' । अयं अधिकः पाठः । ४ द. °जलमार्ग्रास° । ५ द. त्तु । ६ द. कां । ७ द. तां । ८ द. ष्णं । ९ द. ह्रूतं । १० द. ण्डि वि° । ११ द. मेरो तथा ।

द्वितीया द्विपदोच्छ्राया[1] रथिका[2] परिकीर्तिता[3] ।
उच्छ्रायः सिंहकर्णस्य[4] प्रथमस्य पदत्रयम् ॥
पदद्वयं द्वितीयस्य तत एव समुन्नतिः ।
शृङ्गाणां स्यान्मिथः क्षेपो भाग (प[6]+?)यथोत्तरम् ॥
भागान् सप्तोच्छ्रितं कुर्याच्छिखरं विस्तृतं+[5]षट् ।
अर्धभागोच्छ्रिता ग्रीवा स्यादेकं भागमण्डकम् ॥
चन्द्रिकार्धपदेन स्यात् सार्धं[7] तु कलशः पदम् ।
मञ्जरीः[8] पद्मपत्राग्रे तुल्याः सर्वत्र कारयेत् ॥
अधस्ताद् भद्रपीठं तु वास्तुवे[9](पा)देन शोभनम् ।
यः कुर्यात् सर्वतोभद्रं सर्वलक्षणसंयुतम् ॥
जयश्रीर्जायते तस्य [10]+++++++++ ।

सर्वतोभद्रः ॥

ब्रूमो([11]विमानं दस्या सादस्याथ ?) लक्षणम् ॥
गर्ण[12]गन्धर्वजुष्टस्य वल्लभस्य दिवस्पतेः ।
चतुरश्रीकृते क्षेत्रे शतधा प्रविभाजिते ॥
विमानं विभजेत् प्राज्ञः श्रेयःपुष्टिसुखावहम् ।
भद्रैश्चतुर्भिस्तं कुर्यात् कर्णप्राग्ग्रीवकैस्तैस्तथा[13] ॥
विस्तारार्धं भवेद् गर्भो यच्छेषं तेन भित्तयः ।
([14]त्रिंशद्वा )मतो ज्येष्ठो मध्यमः[15] पञ्चविंशतिः ॥
कनीयांस्तु विधातव्यः[16] षोडशाप्येकविंशतिः ।
जातिशुद्धो भवेदेको मञ्जरीभिस्तथापरः ॥
मिश्रकस्य[17] विमानस्य त्रैविध्यमिति कीर्तितम् ।
(ज्येष्ठो मिश्रको निर्मागैः[18] सर्वः कैलास इवान् ?) ॥

---

१ द. याः । २ द. काः । ३ द. ताः । ४ द. घ । ५ द. रा । ६ द. भाग । ७ द. च (तु) । ८ द. री । ९ द. देवेन । १० द. सर्वकामफलैर्युताः । ११ द. विमानं छंदस्य प्रासादस्याथल° । मुद्रितपुस्तकानुसारेण 'विमानसंज्ञस्य प्रासादस्याथ' इति पाठ्यं स्यात् । १२ द. णं । १३ द. °स्तया । १४ द. विंशस्तांम°; मुद्रित पुस्तके 'त्रिंशत्पदो' इति स्यात् । १५ द. मा । १६ द. व्याः । १७ द. श्च । १८ द. °णः स त्र कैलासद्वान् ॥

मध्यमो जातिशुद्धस्तु मञ्जरीभिर्विवर्जितः ।
कनीयांश्च विधातव्यो मञ्जरीभिरलङ्कृतः ॥

कर्णप्राग्ग्रीवविस्तारः कर्तव्यो भागसम्मितः ।
भागार्धं क्षोभणा कार्या यच्छेषं तच्च कर्णवत् ॥

भागस्यार्धेन कुर्वीत तस्माद् भद्रस्य निर्गमम् ।
मिश्रकस्य चतुर्भागः प्राग्ग्रीवो विस्तरेण तु ॥

मूलसूत्रानुसारेण पार्श्वयोः पदिकौ रथौ ।
ऊर्ध्वमानं विमानस्य यथावदथ कथ्यते ॥

द्विपदं पीठमाख्यातं किन्नरैरुपशोभितम् ।
स्कन्धं यावच्च भागानां द्वाविंशतिरुदाहृता ॥

( वेदीबन्धो तु +++ सार्धभागद्व[1] + भवेत् ? ) ।
( चतुर्भागो[2]ऽत्र + छाद्या भागार्धेन + किन्नरा ? ) ॥

मेखलान्तरपत्रं च पदमेकं समुन्नतम् ।
रूपाणि जङ्घागात्रे स्युर्वा ( चारिणां रथके[3] ? ) ॥

[4]( सैनरसेका ? )तस्य मध्ये स्यान्मकरग्रासभूषिता ।
भल्लिकातोरणैश्चारुघण्टाचमरकिन्नरैः ॥

ऊर्ध्वं तुलाप्रमाणस्य चतुर्भौमं तु प्रथम[6] ( ? ) ।
++++ भूमिकायां चतुर्भागसमुन्नता ॥

( [7]सोर्धभागा त्वपरा विस्तारा ? ) सार्धभागिकी ।
संक्षेपः प्रथमतोऽस्याः कलशान्ते पदं भवेत् ( ? ) ॥

तृतीया त्रिपदा कार्या सपादपदविस्तृता ।
[8]पदार्धेन तु संक्षेपस्तस्याः कार्यो विचक्षणैः ॥

चतुर्थी त्रिपदा कार्या भूमिर्मेखलया सह ।
ललिता[9] मञ्जरीभिश्च नीलोत्पलदलाकृतिः ॥

---

१ द. द्वं । २ द. गोऽत्रताद्या भागार्धेन किंनरैः । ३ द. पुस्तके नास्ति । ४ द. इतः पूर्वं रथके सूरसेनं स्यादुच्छ्र्येण चतुष्पदम् । पंचभागं प्रविस्तारं ग्रासैर्वा राहुं[illegible]ः ॥ इति अधिकः पाठः । ५ द. रथिका तस्य । ६ द. मा । ७ द. सा । ८ द. पा । ९ द. ललितां मञ्जरीभिश्च ।

सीम्नः पञ्चगुणं सूत्रं रेखान्तं तत्र वर्तयेत् ।
( व्यासह्वंसममात्रा ? )प्रवेशः प्रथमो भुवः ॥
ततो[3] वृद्धिर्वृद्धौ द्वावन्यस्तुर्यस्तु तत्समः ।
पदार्धे[4] वेदिकोत्सेध( धाद् ) विस्तारात् पञ्चभागिकी ॥
ग्रीवा पादोनभागं[5] स्यात् सपादं भागमण्डकम् ।
कङ्कतीफलरूपं च मन्दारकुसुमाकृति ॥
चन्द्रिका ग्रीवया तुल्या कलशो द्विपदोन्नतः ।
विमानं छन्दकं कुर्यात् सर्वलक्षणसंयुतम् ॥
अश्वमेधप्रधानैर्यदिष्टैः (क्र) तुशतैर्भवेत् ।
तदेकेन विमानेन फलमाप्नोति मानवः ॥

विमानम् ॥

नन्दनस्याथ वक्ष्यामः प्रासादस्येह लक्षणम् ।
द्वाविंशतिकरं क्षेत्रमष्टधा प्रविभाजयेत् ॥
चतुर्भागप्रविस्तारं तस्य भद्रं प्रकल्पयेत् ।
भागेनैकेन निष्क्रान्तं[7] प्राग्रीवं चास्य शोभनम् ॥
मूलकर्णस्य पदिकौ कर्तव्यौ पार्श्वगौ रथौ ।
षडङ्गुलं त्र्यङ्गुलं वा[9] चतुरङ्गुलमेव च[10] ॥
जलान्तरं प्रकुर्वीत दीयते तत्र मञ्जरी ।
गर्भश्चतुर्भिर्भागैः स्याच्छेषं भित्त्यन्धकारिका ॥
द्विपदं कन्दभद्रं स्यात् पदपादेन निर्गतम् ।
पुरतो मण्डपं चास्य सुग्रीवं नाम कारयेत् ॥
द्वैगुण्यं मूर्धविस्तारार्धे भं[11]+++वेदिका ।
रेखामस्य तथा कुर्यात् कैलासस्य यथोदिता ॥
भूमयः षड् विधातव्या द्वादशाण्डाः पृथक् पृथक् ।
नन्दयत्येष कर्तारमिह लोके परे च यत् ॥

१ द. स्न । २ द. त्राः । ३ द. द्वा द्वावन्यो तुर्यस्तु । ४ द. र्थं । ५ द. सपादभागमंजकं । ६ द. णे । ७ द. न्त । ८ द. ध्यं । ९ द. पि । १० द. वा । ११ द. द्विरतार.र्द्धे.वेदिका ।

नन्दनो नाम तेनोक्तः प्राज्ञैः प्रासादसत्तमः ।

नन्दनः ॥

अ(था)भिदध्मः प्रासादं स्वस्तिकं स्वस्तिदायकम् ॥

देवासुर[1]गणैर्वन्द्यं यक्षसिद्धमहोरगैः ।
ज्येष्ठमध्यकनिष्ठस्य तलच्छन्दोऽस्य यद्देशः (यादृशः) ॥

यादृगूर्ध्वप्रमाणं च तत् सम्यगिह कथ्यते ।
चतुरश्रे समे क्षेत्रे पञ्चविंशतिहस्तके ॥

सूत्रपातं प्रकुर्वीत कर्णतिर्यङ्मुखायतम् ।
ततः सीमार्धसूत्रेण वृत्तमालिख्य निश्चितम् ॥

द्वात्रिं[2]शता समन्ता(त्त)द्रेखाभिर्विभजेत् ततः ।
वृत्तं ([3]तथोमुघाताक्षि [4]र्दिर्विदं ?)स्थाभिरङ्कयेत् ॥

दिक्कर्णसूत्रयोर्मध्यं ([6]ततो सेव ?)त्रयं बुधः ।
कुर्याद् द्वात्रिंशदेवं स्युर्भागास्तुल्यप्रमाण[7]काः ॥

ऐन्द्र्यादिष्वीशपर्यन्तास्वष्टौ शालाः प्रकल्पयेत् ।
शालान्तरेषु कुर्वीत कोणानष्टौ[8] यथाक्रमम् ॥

कोणात् कोणं नयेत् सूत्रं त्यक्त्वा शालाद्वयं मुहुः ।
विदिक्ष्वष्टसु सूत्राग्रं[9] पद्मपत्रवदानयेत् ॥

कोणाश्च रथि[10]काश्चैव भवन्त्येवं सुलक्षणाः ।
चतुरश्रा भवन्त्यष्टौ शाला भागद्वयायताः[11] ॥

द्व्यंशानि कर्णभद्राणि पद्मपत्रनिभानि च ।
ऊर्ध्वमानं भवत्यस्य द्विगुणं (ह्यूर्ध्वमा+[12]नात् ?) ॥

विंशत्या विभजेदूर्ध्वं तत्राष्ट[13]ष्टांशस्तुलोदयः ।
शेषां तु मञ्जरीं कुर्यादास्कन्धा[14]वधि बुद्धिमान् ॥

---

१ द. °गणो वद्यं य° । २ द. विं । ३ द. म । ४ मुद्रित पुस्तके 'दिग्विदिक्स्थाभिः' इति स्यात् । ५ द. प्रतौ तु दे । ६ द. ततो सेवात्रयं । ७ द. कः । ८ द. °टो । ९ द. य । १० द. थ । ११ द. तः । १२ द. नत । १३ द. पुस्तके नास्ति । १४ द. 'विधि° ।

विस्तारपञ्चमांशेन[1] पीठोच्छ्रायं प्रकल्पयेत् ।
[2]त्रिपदं वेदिकाबन्धं (सुएकेण ?)समन्वितम्[3] ॥
जङ्घांशलं(ब)नां कुर्याच्चतुर्भागसमुच्छ्रिताम् ।
मेखलान्तरपत्रं च भागेनैकेन कारयेत् ॥
द्वादशांशोच्छ्रिता रेखा कार्या सप्त च भूमयः ।
अर्धभागोच्छ्रिता ग्रीवा विस्तारेण चतुष्पदा ॥
स्कन्धः षड्भागविस्तारः कार्यो वृत्तः सुशोभनः ।
समालिखेदेषु[5] कोशं विस्तारात् त्रिगुणात्मना ॥
सूत्रेण येन वा स्कन्धो भवेत् षड्भागविस्तृतः ।
हस्तैः स्यात् पञ्चविंशत्या ज्येष्ठः षोडशभिः परः ॥
कनीयान् स्वस्तिको ज्ञेयः करैर्द्वादशभिः पुनः ।
भागषट्कसमुच्छ्राया जङ्घा ज्येष्ठस्य कीर्तिता ॥
मध्यमाधमयोः पञ्चचतुर्भागोच्छ्रिता क्रमात् ।
स्वस्तिके कारिते स्वस्ति सर्वलोकस्य जायते ॥
विशेषतश्च भूपानां कर्तुश्च[7] स्यात् समीहितम् ।

स्वस्तिकम् ॥

मुक्तकोणमथ ब्रूमः प्रासादं स्यात् स च त्रिधा ॥
हस्तैः क्रमेण ज्येष्ठादिः षोडशद्वादशाष्टभिः ।
ज्येष्ठो(ऽष्टा)दश भागान् स्यान्मध्यमस्तु चतुर्दश ॥
[8]कनीयान् दश भागा(न्) य(स्या)त् सदस्तस्याभिधीयते ।
चतुरश्रीकृते क्षेत्रे भक्तेऽष्टादशभिः पदैः[9] ॥
कोष्ठकानां विधातव्यं चतुर्विंशं शतत्रयम् ।
भागषट्त्रिंशता कुर्यान्मध्ये गर्भगृहं शुभम् ॥
बाह्यभित्तिस्तथान्धारी मध्यभित्तिरिति त्रयम् ।
पृथक् पृथक् स्याद् द्विपदविस्तारं परिमाणतः ॥

---

१ द. रं । २ द. द्वि° । ३ द. स्तु । ४ द. तं । ५ द. °द्वेषु । ६ द. ताः । ७ द. कः ।
८ द. सकनीयांश्श भागां यं छंरस्त° । ९ द. रैः ।

चतुर्भागायता शाला भागेनैकेन निर्गता ।
शालाया भूषणं भद्रं विधायै[1]तत् पदद्वयम् ॥
तत्पार्श्वद्वितये कुर्यात् त्वधिके भागिके बुधः ।
वा[2]र्यन्तराणि कुर्वीत दिक्ष्व[3]ष्टचतसृष्वपि ॥
वा[4]र्यन्तरानन्तरं तु भागत्रितयसंमितान् ।
अष्टौ कुर्वीत रथिकां[5]श्चतुर्दिशमनुत्तमान् ॥
कोणे द्विभागिकैः कुर्याद् रथानामांससंमितां[6] (?) ।
कोणे रथान् परित्यज्य शेषं कुर्याद् यथोदितम् ॥
मध्यमोऽयं समाख्यातः कनीयान् कथ्यतेऽधुना ।
चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ॥
चतुर्भागा भवेच्छाला भागेनैकेन निर्गता ।
एकभागप्रमाणानि पार्श्वे वा[7]र्यन्तराणि च ॥
तेषां मध्ये प्रकुर्वीत सरोजदलसंनिभम् ।
रथकर्णोन्य (र्णे य)थावच्च सलिलान्तरभूषणम् ॥
भागार्धं[8] क्षोभणा कार्या चतुष्कोणे[9] व्यवस्थिता ।
सार्धभागोन्मितान् कुर्यात् कर्णप्राग्रीव[10]कान् शुभान् ॥
वार्यन्तराणां([11]+प्रोक्ता भूषश्रोभि ?) कनीयसि ।
प्रासादे[12] मध्यमेऽप्येषा ज्यायस्यपि च कल्प्यवै (ते) ॥
त्रिविधोऽयं समाख्यातो मुक्तकोणः समासतः ।
ऊर्ध्वमानं भवेदस्य विस्ताराद् द्विगुणोच्छ्रयम् ॥
(असिस्तु ?) पञ्चदशभिस्तन्मध्यं स्यात् तुलोदयः ।
चतुष्पदो वेदिबन्धो जङ्घा सार्धैश्च सप्तभिः ॥
मेखलान्तरपत्रं([13]चार्ध सार्धं ?) हीरकं पदम् ।
त्रिपदा[14] कर्णश्रृङ्गास्य कलशान्त[15]समुच्छ्रयान् (?) ॥

---

१ द. विधीयेत प°। २ द. वी (?)। ३ द. दिशाष्टा। ४ द वी। ५ द. का। ६ द. ताः। ७ द. वी। ८ द. भां। ९ द °णव्यवस्थितः। १० द °विका शुभान्। ११ मु. पुस्तके 'या प्रोक्ता भूषणश्रीः' इति स्यात्। द. पुस्तके °णां या प्रोक्ता भूषाश्रोभिः। १२ द. द। १३ द. च द्वे सार्धं ही°। १४ द. दाः। १५ द. न्ता।

सिंहकर्णश्च कर्तव्यः स्व+[1] भागे समुन्नतः ।
ऊर्ध्वतः कर्णशृङ्ग[2](स्य) विधेया मूलमञ्जरी ॥

([3]सावषो विस्तरो++)पदान्यष्टादशोच्छ्रिताः (?) ।
चतुर्दिशं समायामः स्कन्धः स्यान्नवभागिकः[4] ॥

मन्नयरत्नांशपुरेमनः[5](?) शुकनाससमुच्छ्रितिः ।
ग्रीवा+मेन भागेन कुर्याद् द्विपदमण्डकम् ॥

चण्डिकां सार्धभागेन त्रिपदं कलशोच्छ्रयम् ।
[6]+++यन्नरः कश्चिन्मुक्तकोणं महायशाः ॥

(सं)प्राप्नोति म[7]हासौख्यं विमुक्तः सर्वपातकैः ।
[8]सर्वद्वन्द्वविनिर्मुक्तः सर्वकिल्बिषवर्जि[9]तः ॥

सर्वपापविनिर्मुक्तो भोगं मोक्षं च विन्दति ।

मुक्तकोणः ॥

श्रीवत्समथ वक्ष्यामः प्रासादं सुरपूजितम् ॥

चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ।
षड्भिर्भागैर्भवेद् गर्भो भित्तिः कार्या द्विभागिकी ॥

रथकं त्रिपदं कुर्यात् प्रत्यङ्गात् सार्धभागिकात् ।
द्विपदं कर्णमस्याहुर्विदिक्षु चतसृष्वपि ॥

भागार्धं क्षोभणा क्षेपात् तदर्धार्धं जलान्तरम् ।
प्रक्षेपः स्यात् पदार्धेन पदमानस्य बाह्यतः ॥

द्वे पदे निर्गतं चास्य शुकनासं नि(वे)शयेत् ।
वास्तुविस्तारपादेन कर्तव्या द्वारविस्तृतिः ॥

द्वारोच्छ्राय(स्तु[10])विस्तारात् कर्तव्यो द्विगुणो बुधैः ।
ऊर्ध्वमानमथ ब्रूमः श्रीवत्सस्य यथोदितम् ॥

---

१ द. स्व। २ द. ङ्गं। ३ द. सा च षो पदान्यष्टा द । ४ द. षिकः । ५ द. न्द्रि । ६ द. प्रतौ नास्ति परन्तु मुद्रितपुस्तके 'निर्मापयन् नरः' इति स्यात् । ७ द. महत् । ८ द. सद्वन्द्व । ९ द. ताः । १० द. स्य ।

पीठं प्रासादपादेन खुरकश्च पदार्धकः[1] ।
विस्ताराद् द्विगुणं[2] (चार्धं ?) कर्तव्यं कुम्भकादितः ॥

अंशैर्द्वादशभिस्तेषु कुर्याच्छिखरमायतम् ।
अष्टभागं तुलोच्छ्रायं वेदी सार्धद्विभागिकी ॥

कुम्भकं पदिकं कुर्यात् पादोनांशं[3] मसूरकम् ।
(पादोनं पादेन स्यात् ?) मेखलान्तरपत्रकम् ॥

चतुर्भागोच्छ्रिता जङ्घा भागार्धं हीरकं भवेत् ।
मेखलान्तरपत्रं तु भागेनैकेन कारयेत् ॥

षड्भागविस्तृतं स्कन्धं भाजयेद् दशभिः पदैः ।
यथा मूले तथा स्कन्धेऽप्यङ्गप्रत्यङ्गकल्पना ॥

स्कन्धपार्श्वे तु या रेखा व्यक्ताश्च स्कन्धबाह्यतः ।
भजेत् ता दशभिर्भागै(रूढ ?)मेवं विभाजयेत् ॥

(ऊर्ध्वाधः प्रतिभागैस्तत्रास्यात् ?) पत्रसंहतिः ।
तदाकृतिं बाह्यरेखां गात्रे गात्रे प्रकल्पयेत् ॥

अनुमात्रगुणं[5] सूत्रं त्रिभागेन समन्वितम् ।
भ्रमयेत् (कोणरेखा स्यात् प्रत्यङ्गैस्तत्रपञ्चकान् ?) ॥

षड्गुणेन तु सूत्रेण रथरेखां समालिखेत् ।
अत्र स्युर्भूमयः सप्त प्रथमांशद्वयोच्छ्रिता ॥

द्वितीया पदपादार्धहीना भूमिस्ततो भवेत् ।
पादद्वयं भागहीनं तृतीयायां भवेद् भुवि ॥

सार्धभागविहीनं च चतुर्थी स्यात् पदद्वयम् ।
पञ्चमा सार्धभागेन पदं स्यात् स्कन्धशीर्षकम् ॥

एवं परस्परं भागं पादार्धेन(जिता ?) भुवः ।
त्रिभागीकृत्य शिखरं तत्रैकं भागमुत्सृजेत् ॥

१ द. °र्द्धि । २ द. °णं चोर्द्ध्वकं° । ३ द. 'स' इति अधिकः पाठः । ४ द. स्थ ।
५ द. °मत्रि° । ६ द. सूत्र° ।

शुकनासोच्छ्रितिः शेषं सिंहेनाधिष्ठिता भवेत् ।
पादोनभागा ग्रीवाण्डं सपादं पदमुच्छ्रितम् ॥
रेखा [1]++ विधा( त )व्यं ++ न्यूनाधिकमण्डकम् ।
सपादभागमानेन कर्तव्यं चन्द्रिकाद्वयम् ॥
पद्मपत्राकृतिं कुर्यान्मध्ये आमलसारि( काम् ) ।
द्विपदं कलशं कुर्याद् बीजपूरकवर्जितम् ॥
श्रीवत्सं कारयेद् यस्तु प्रासादमतिसुन्दरम् ।
कुलानां शतमुद्धृत्य स व्रजत्यमरावतीम् ॥

श्रीवत्सः ॥

अथ हंसस्य वक्ष्यामः प्रासादस्येह लक्षणम् ।
चतुरश्रीकृते क्षेत्रे चतुर्भिर्विभजेत् पदैः ॥
भागैश्चतुर्भिर्गर्भः स्याद् [2]भित्तिर्द्वादशभागिकी ।
भागद्वयेन भद्राणि ततश्च परिकल्पयेत् ॥
चतुर्भागेन निष्क्रामस्तेषां गर्भस्य शस्यते ।
भागस्य षोडशांशेन कुर्याद् नीर[3]( रा )न्तराणि च ॥
[4]पीठिका वेदिकाबन्धो जङ्घा मेखलया सह ।
ऊर्ध्वमानं च कर्तव्यं स्वस्तिकस्य यथोदितम्[5] ॥
मध्ये किन्नररूपाणि पद्मपत्राणि चाप्यधः ।
उपरि व्यालहाराश्च पीठमेवं विभूषयेत् ॥
त्रिभौमं पञ्चभौमं वा कुर्यादेनं विचक्षणः ।
नागरं द्रावि( डे[6] ? )श्चेति कर्णे कर्णे निवेशयेत् ॥
भूमिकाभाञ्जि कूटानि कुर्यादेकान्तराणि च ।
रथिके रथिका (?) कुर्याद् ( विन्य ? ) नागरकर्मणा ॥
विस्तारार्धेन वेदी स्याद् ग्रीवा[7] चास्य पदार्धिका ।
अण्डकं पदिकं कार्यं कङ्कतीफलसन्निभम् ॥

---

१ द. विवे । २ द. त्रृ° । ३ द. रत । ४ द. पीठकं वे° । ५ द. इतः परं 'वराटं द्राविडं चापि नागरं वा विशेषतः । जङ्घामध्ये विधातव्यं कर्मलोकेक्षणोत्सवम् ॥ इत्यधिकः पाठः । ६ द. डश्चेति । ७ द. ग्रवो ।

[1]+ चण्डिका( चार्धेन[2] ? )कलशः स्यात् पदोच्छ्रितः ।
यथा विराजते हंसो( हंसोमाशिरसि ? )स्थितः ॥

प्रासादोऽपि तथा हंसः पुरमध्ये विराजते ।
हंसाख्य[3]मेनं प्रासादं कारयेद् यो( नरोत्तमा[4] ? ) ॥

तावत् स्वर्गे वसेच्छ्रीमान् यावदिन्द्राश्चतुर्दश ।

हंसः ॥

रुचकाख्य[5]मथ ब्रूमः प्रासादं पुरभूषणम् ॥

आदौ समस्तवस्तूनां कल्पितं पद्मजन्मना ।
चतुरश्रीकृते क्षेत्रे[6] चतुर्भिर्भाजिते पदैः ॥

भागमेकं भवेद् भित्तिस्तस्य गर्भः पदद्वयम् ।
[7]वेदीबन्धं तथा जङ्घां मेखलामूर्ध्वमेखलाम् ॥

मानमूर्ध्वमधश्चास्य श्रीवत्सस्ये[8]वं कारयेत् ।
कोणेषु स्तम्भकाः कार्या( [9]हीइ हीइसार्ष ? )समन्विता ॥

मध्ये तु रथिका कार्या चारं[10]कर्मविभूषिता ।
चतुर्भौममिदं कार्यं( [11]स्तवैवसट ? )कर्मणा ॥

युक्तं मध्ये तु रथिका प्रतिभूमि विधीयते ।
रुचकः[12] कारितो येन प्रासादः शुभ[13]वास्तुनि ॥
कुलानां तारितं[14] तेन शतमात्मा तथोद्धृतः ।

रुचकः ॥

वर्धमानमथ ब्रूमो धर्मारोग्ययशस्करम् ॥
तस्याष्टगुणमैश्वर्यं[15] भवेद् यः कारयेद् यदि ।
चतुरश्रं समं क्षेत्रं भाजयेद् दशभिः पदैः ॥

---

१ द. चन्द्रिका चार्द्धेनक° । २ मुद्रित पुस्तके ' च पदार्धेन ' इति स्यात् । ३ द. ख्यामेन प्रा° । ४ द. °त्तरोत्तमः । मुद्रित पाठस्तु ' नरोत्तमः ' इति स्यात् । ५ द. ख्या° । ६ द. प्रतौ ' क्षेत्रे ' पाठः नास्ति । ७ द. वेदबंधे । ८ द. °स्यै । ९ द. °हीरसर्षे स°; मुद्रित प्रतौ ' हीरशीर्ष ' इति स्यात् । १० द. °रु । ११ द. स्तस्यैवं सटकर्मणा । १२ द. रुचका कारितौ । १३ द. द्ध । १४ द. तां । १५ द. मैल्यर्थं ।

ततो भागचतुष्केण कर्तव्यो मध्यमो रथः ।
एकैकेन विभागेन द्वौ रथौ वामदक्षिणौ ॥

([1]कर्णास्तु पदा कार्या वर्जं चारिधर्मभिः ?) ।
भद्रस्य निर्गमं तत्र भागेनैकेन कारयेत् ॥

भागस्यार्धेन पार्श्वस्थरथकानां विनिर्गतम्[2] ।
विस्तारार्धेन गर्भः स्याद्[3] यच्छेषं तेन भित्तयः ॥

ऊर्ध्वमानं भवेदस्य स्वस्तिकस्य यथोदितम् ।
[4]वर्धमानोऽयमाख्यातो यशोलक्ष्मीविवर्धनः ॥

वर्धमानः ॥

गरुडस्याधुना ब्रूमः प्रासादस्येह लक्षणम् ।
प्रासादः सर्वदैवाय्यं गरुडध्वजवल्लभः ॥

द्वाविंशतिपदं क्षेत्रं([5]भक्त्याल्या समायतम् ?) ।
पूर्वापरेण दशभिर्भागैर्भूयो विभाजितम् ॥

कुर्वीत मध्ये प्रासादं तस्मिञ् शतपदं बुधः ।
द्विपदं भित्तिविस्तारं कर्णांश्चापि द्विभागिकान् ॥

उत्सृष्टमूलप्रासादमुभयोरपि पक्षयोः ।
अग्रतः पृष्ठतश्चापि द्वौ द्वौ भागौ परित्यजेत् ॥

शेषेण षट्पदौ ++ सहसायामविस्तृती (?) ।
गर्भः षोडशभिर्भागैर्भित्तिः स्यात् पदमेतयोः ॥

श्रीवत्सहं[6]सरुचकवर्धमानेषु कोऽपि यः ।
रोचते गरुडं कुर्यात् तमेकं स्वेच्छया बुधः ॥

तस्य पक्षौ विधातव्यौ निर्गतौ वामदक्षिणम् ।
एवमेते त्रयो गर्भा गरुडे[7] परिकीर्तिताः ॥

गरुडः ॥

---

१ द. कर्णास्तु द्विपदाः कार्या वर्जिता चारिध° । २ द. मम् । ३ द. प्रतौ 'द्' नास्ति । ४ द. उर्द्ध । ५ द. पक्ताभ्या समायातं । ६ द. सं । ७ द. डं ।

प्रासादस्य गजस्याथ लक्षणं सम्प्रचक्ष्महे[1] ।
चतुःषष्टिपदं क्षेत्रं विधाय विभजेद् गजम् ॥
ततः सीमार्धसूत्रेण पृष्ठतो वृत्तमालिखेत ।
गर्भं कुर्यात् तदर्धेन ++ रेखाकृतिं त[2] + ॥
ऊर्ध्वप्रमाणमधुना गजस्य स्पष्टमुच्यते ।
स्तम्भाश्चतुष्पदोच्छ्रायाः कार्याः कोणचतुष्टये ॥
जङ्घयमस्य निर्दिष्टा( खल्लं[3]स्तम्भान्तरं ? ) भवेत् ।
पट्टिकान्तर[4]पत्राभ्यां सम[5]भागेन मेखला ॥
अग्रतः शूरसेनं स्यात् पृष्ठतस्तु गजाकृतिः ।

गजः ॥

[6]प्रासादस्या( धुना ) लक्ष्म सिंहसंज्ञस्य कथ्यते ॥
चतुरश्रं समं क्षेत्रं विभजेन्नन्दने यथा ।
गर्भो[8] भागैश्चतुर्भिः स्यात् कश्च( न्द )भित्तिस्तु भागिकी ॥
भागेनान्धारिका कार्या बाह्यभित्तिश्च भागिकी ।
भद्रं भागैश्चतुर्भिः स्याद् भागेनैकेन निर्गतम् ॥
कर्णस्तु द्विपदः कार्यो जलमार्गसमन्वितः ।
द्विपदं पीठमुत्सेधात् सिंह[9]रूपैरधिष्ठितं[10]म् ॥
[11]खुरकं च पदार्धेन कुर्यात् पीठस्य मध्यतः[12] ।
[13]कुर्यादूर्ध्वं + विस्ताराद् द्विगुणं कलयाधिकम् ॥
द्विपदं वेदिकाबन्धं जङ्घा चास्य चतुष्पदम् ।
मेखलान्तरपत्रं च विदध्याद् भागिकोदयम् ॥
त्र्यंशानि[14] कर्णशृङ्गाणि ग्रीवाण्डकलशैः सह ।
सिंहकर्णस्तु कर्तव्यः समुच्छ्रायाच्चतुष्पदः ॥
सिंहरूपसमाक्रान्ते[15] प्रासादे सिंहसंज्ञिते[16] ।
ऊर्ध्वतः कर्णशृङ्गस्य षट्पदा मूलमञ्जरी ॥

---

१ द. संप्रवक्षसे । २ द. ततः । ३ द. ल्लं । ४ द. °म्ब । ५ द. मं । ६ द. प्र । ७ द. प्रतौ नास्ति । ८ द. र्भा । ९ द. हे । १० द. °तैः । ११ द. सु° । १२ द. मव्ययः । १३ द. कुर्याददूर्ध्वं वि । १४ द. न्वि । १५ द. न्तः । १६ द. के ।

सप्तभा[1]गसमुत्सेधा लताभिः पञ्चभिर्युता ।
ग्रीवोच्छ्रायस्तु कर्तव्यः पदं पादेन वर्जितम् ॥
अण्डकं तु पदोत्सेधं रेखायां च द्विनिस्सृतम् ।
पादोनभागमुच्छ्रायश्चन्द्रिकायाः प्रकीर्तितः[2] ॥
द्विपदं कलशं कुर्याद् बीजपूरकसंयुतम् ।
([3]यदामं ?) कारयेत् स स्यादजेयः पुरुषो ध्रुवम् ॥
व्यवहारे नृपकुले सङ्ग्रामे शक्रसंसदि ।

सिंहः ॥

इदानीं पद्मकं ब्रूमः प्रासादं पद्मसन्निभम्[4] ॥
यः ([6]कसान् ?) कारयत्येनं स कामाल्लँ[5]भतेऽखिलान् ।
चतुरश्रीकृते क्षेत्रे ++ दिक्षु विदिक्षु वा ॥
न्यस्येत् पृथक् पृथक् सूत्राण्यथ वृत्तं प्रसाधयेत् ।
([7]दिघिसूत्रयोर्मध्ये [8]चतुरश्रं तु रोमकम् ॥
[9]तुल्यप्रामाण्यविन्यस्येत् स्युर्द्वात्रिंशदमीरितः ?) ।
विस्तृतान्यथ भागौ द्वौ कर्णपत्राणि षोडश ॥
पद्मपत्रसमानानि वारिमार्गान्वितानि च ।
गर्भः स्याद् बाह्य(संमोहां ?)सीमार्धं यच्छेषं तेन भित्तयः ॥
षडष्टद्वादशकरः पद्मो ज्येष्ठादिकः क्रमात् ।
द्वात्रिंशत् षोडशाष्टौ च तस्य स्यू रथकाः क्रमात् ॥
जलान्तराणि चैतस्य श्रीवत्सस्ये[11]व कारयेत् ।
पीठकं वेदिकाबन्धं जङ्घाशेखरचन्द्रिकाः ॥
अण्डकं कलशं ग्रीवामेतस्योच्छ्रे[12]यमानतः ।
कुर्वीत स्वस्तिकस्येव स्वविस्तारानुसारतः ॥

पद्मः ॥

---

१ द. म । २ द. ताः । ३ मुद्रित पुस्तके 'य इमम्' इति वा 'यः सिंहम्' इति वा स्यात् । ४ द. प । ५ द. भां । ६ मुद्रित पुस्तके 'पुमान्' इति स्यात् । ७ द. दिग्वि । ८ द. चतुरोमृतुरोंसकं । ९ द. तुल्यप्रमाणान्विन्यस्ये° । १० द. ह्य । ११ द. स्यैव । १२ द. च्छ्रा ।

अथाभिधीयते सम्यक् प्रासादो नन्दिवर्धनः ।
नन्दयत्येष कर्तारं पुत्रदारधनादिभिः ॥

चतुरश्रीकृते क्षेत्रे भजेत् षोडशभिः पदैः ।
शतद्वयं विभागाः स्युः षट्पञ्चाशत् तथा[1]( परैः ? ) ॥

गर्भः शतपदः कार्यो भित्तिश्च त्रिपदायता ।
कर्णप्रमाणं त्रिपदं नवबन्धसमन्वितम् ॥

भागायतं भागपदं( पाद )विस्तीर्णं वारिवर्त्म च ।
विभजेत् पञ्चधा कर्णं तस्य भद्रं त्रिभिः पदैः[2] ॥

भागं भागं भवेत् कर्णे[3] भागार्धं भद्रनिर्गमः ।
प्रत्यङ्गं द्विपदं कुर्याद् वारिमार्गेण संयुतम् ॥

निर्गमा[4]( मः ) सार्धभागेन पार्श्वयोरुभयोरपि ।
शालाषट्पदविस्तारा प्रत्यङ्गा[5] भागनिर्गतम्[6] ॥

भद्रं तदग्रतः कुर्याद् विस्तारेण चतुष्पदम् ।
भागार्धनिर्गमं[7] सम्यग् ( दिक्षु ) सर्वास्वयं विधिः[8] ॥

कर्णस्यार्धे नयेद्[9] गर्भाद् वृत्तं तत् पूर्वमालिखेत् ।
अनुसारेण वितरेदङ्गप्रत्यङ्गनिर्गमम् ॥

सार्धभागं गजाधारं साब्जपत्रं समेखलम् ।
कुर्यात् पदं पादहीनं जङ्घाकुम्भसमुच्छ्रितम्[10] ॥

भागपादेन कणकं पादोनान्तरपत्रकम् ।
[11]तदर्धं ग्रासहारं च भागार्धं खुरकं तथा ॥

खुरकेण समं प्रोक्ता पीठस्यैषा समुच्छ्रितिः ।
विस्ताराद् द्विगुणश्चायं (स्यादूर्ध्वकलपयाधकः ?)
तुलोदयो विधातव्यस्त्रयोदशभिरंशकैः ।
विंशत्यंशं तु शिखरं ++++ श्चतुष्पदम् ॥

---

१ द. तयापरे । २ द. पदं । ३ द. र्णो । ४ द. मा । ५ द. ङ्गा । ६ द. मम् । ७ द. °तं । ८ द. धेः । ९ द. °न यद्र° । १० द. °समुद्धृतिं । ११ द. य ।

पादोनभागद्वितयं कुम्भकं तेषु कारयेत् ।
भागेनैकेन कलशमर्धेनान्तरपत्रकम् ॥
पादहीनपदं कार्या मेखलास्य सुशोभना ।
जङ्घा षड्भागिकोच्छ्राया भागार्धं ग्रासपट्टिका ॥
हीरकं चैकभागेन कर्णस्थं परिकीर्तितम् ।
मेखलान्तरपत्रं च सार्धभागसमुन्नतम् ॥
जङ्घामध्ये तु कर्तव्या रथका रथकास्तथा(?) ।
वृत्तस्तम्भैः समकै[1]र्ग्रा[2]सैर्मुक्तावरालकैः ॥
जङ्घा तु संवृता कार्या मल्लच्छाद्यैर्विभूषिता ।
जलान्तरेषु रूपाणि कुर्यात् सङ्घाटकैः शुभैः ॥
कुर्यात् तुलोदयस्योर्ध्वमिमिं[3](?)भूमिभिरष्टभिः ।
[4]स्कन्धाष्टांशोऽस्य दूराद्या+++सपदत्रयम् ॥
द्वितीया त्रिपदा प्रोक्ता तृतीया पादवर्जिता ।
सार्धद्व्यंशौ[5] चतुर्थी च पादोना पञ्चमी ततः ॥
षष्ठी तु द्विपदा कार्या पादोना सप्तमी ततः ।
अष्टमी तु कू(क्षि)तिः कार्या सार्धभागेन संमिता[6] ॥
एकैकस्याः पदार्धेन प्रक्षेपः स्यात् परस्परम् ।
कोणे कूटानि कुर्वीत प्रत्यङ्गे तिका(ल)कानि च ॥
भद्रे कुर्वीत रथिका विविधाः कर्मसङ्कुलाः ।
रथस्य पार्श्वयोर्लेखाः कर्तव्याश्चोभयोरपि ॥
वेदिकास्य विधातव्या भागमेकं समुन्नता ।
ग्रीवा तावँद्[7] भागमेकमण्डकं द्विपदोदयम् ॥
कुर्यात् सामलसा[9]रिं च चन्द्रिकां सार्धभागिकाम् ।
कलशस्त्रिपदः कार्यो बीजपूरं बहिस्ततः ॥
पुरतः शूरसेनं स्यान्मध्ये रूपसमाकुलम् ।
मिश्रकस्य विमानस्य सदृशं कारयेदमुम् ॥

---

१ द. व । २ द. रग्रा । ३ द. म । ४ द. स्कंधो दृष्टं । सो स्यदूराद्यासपदं स्यात् पदत्रयं । ५ द. श । ६ द. तां । ७ द. भवेद् । ८ द. न्द । ९ द. री ।

भूषणं भवनस्यास्य प्रासादं नन्दि[1]वर्धनम् ।

प्रासादविंशतिरियं परिकीर्तितेह
मेर्वादिका सकलनाकसदामभीष्टा ।
तत्त्वेन वेत्ति य इमां स समग्रशिल्पि-
वर्गाग्रणीर्बहुमतश्च भवेन्नृपाणाम् ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे मेर्वादिविंशि[2]का नाम[3] षट्(सप्त)पञ्चाशोऽध्यायः ॥

## अथ प्रासादस्तवनं नाम अष्टपञ्चाशोऽध्यायः ।

प्रासादानां चतुःषष्टिरिदानीमभिधीयते ।
या पूर्वं [4]ब्रह्मणा दत्ता प्रा(प्र)सादा [5]विश्वकर्मणे ॥ १ ॥
मर्मवेधस्थिता वास्तुदेवाः पूज्[6]या यथोचितम् ।
पूज्यता च स्मृता तेषां प्रासादे मण्डपे[7] ध्वजे ॥ २ ॥
आसने वाहने तद्वत् सर्वोपकरणेष्वपि ।
प्रासादे यादृश([8]श्छन्दस्तादृङ्मन्दपीठयोः ?) ॥ ३ ॥
तथा वास्तुविरुद्धं स्यात् प्रासादाङ्गे हिते(?)विदुः ।
अष्टावष्टौ स्मृतास्तेषु त्रिदशानां पृथक् पृथक् ॥ ४ ॥
[9]शम्भो(र्हरे)र्विरिञ्चस्य ग्रहाणाम(धिपस्य च) ।
[10]चण्डिकाया गणेशस्य श्रियाः सर्वदिवौकसाम् ॥ ५ ॥
विमानः सर्वतोभद्रो गजपृष्ठोऽथ पद्मकः ।
वृषभो मुक्तकोणश्च नलिनो[11] द्राविडस्तथा ॥ ६ ॥
इत्येतेऽष्टौ[12] समुद्दिष्टाः प्रासादास्त्रि[13]पुरद्रुहः ।
गरुडो वर्धमानश्च शङ्खावर्तोऽथ पुष्पकः ॥ ७ ॥

---

१ द. न्द । २ द. शतिका । ३ द. नामष्टपंचमोध्यायः समाप्तः । ४ द. ब्रा । ५ द. द्वि । ६ द. ज्य । ७ द. मे । ८ द. च्छंदस्तादृग्मंदपीठयोः । ९ द. शंभोर्विरिवेस्यग्रहाणामध्ये यस्य च । १० द. चेन्द्रिकाया । ११ द. नी । १२ द. ज्यौ । १३ द. त्रिखुरर्दहः ।

गृहर( राट् ) स्वस्तिकश्चैव रुचकः पुण्ड्रवर्धनः ।
कार्या[1] जनार्दनस्याष्टौ प्रासादाः पुरभूषणाः ॥ ८ ॥
मेरुमन्दरकैलासा हंसाख्यो भद्र एव च ।
उत्तुङ्गो मिश्रकश्चैव तथा मालाधरोऽष्टमः ॥ ९ ॥
इत्यष्टौ ब्रह्मणः प्रोक्ताः प्रासादाः पुरमध्यगाः ।
गवयश्चित्रकूटश्च किरणः सर्वसुन्दरः ॥ १० ॥
श्रीवत्सः पद्मनाभश्च वैराजो वृत्त एव च ।
एते कार्या रवेरष्टौ प्रासादाः शुभलक्षणाः ॥ ११ ॥
( [2]नन्द्यावर्तश्चैव चलभश्चर्णादिख्यः ? ) सिंह एव च ।
विचित्रो योगपीठश्च [3]घण्टानादपताकिनौ ॥ १२ ॥
अष्टावेते विधातव्याश्चण्डि[4]कायाः सुरालयाः ।
( [5]गुहारसलोकश्च ? ) वेणुभद्रोऽथ कुञ्जरः ॥ १३ ॥
तथा च हर्षविजयावुदकुम्भोऽथ मोदकः ।
एतान् विनायकस्याष्टौ प्रासादान् कारयेच्छुभान् ॥ १४ ॥
महापद्म( [6]हर्म्यननल )मुज्जयन्तस्तथा परः ।
गन्धमादनसंज्ञं च( ज्ञश्च )शतशृङ्गानवक्ककौ( नवद्यकौ ) ॥ १५ ॥
सु( म )विभ्रान्तो ( मनो[7] )हारीत्यष्टौ लक्ष्म्याः[8] प्रकीर्तिताः ।
वृत्तो वृत्तायतश्चैत्यः किङ्किणीलयनाभिधः ॥ १६ ॥
पट्टिशो[9] विभवाख्यश्च ततश्चा( स्ता )रागणा( णोऽ )ष्टमः ।
कुर्वीत सर्वदेवानां प्रासादान् वास्तुशास्त्रवित् ॥ १७ ॥

[10]प्रासादस्तवनं नाम ?

---

१ द. र्यो । २ द. °श्चैव लक्ष्मी स्वर्णादंख्यः सिंह एव च । मुद्रित पुस्तके 'नन्द्यावर्त्तो वलभ्यश्च सुपर्ण' इति पठनीयं भाति । ३ द. घंटनादपताकिनैः । ४ द. °न्द्रि° । ५ द. गुहरसलाकश्च वे°; मुद्रित पुस्तकानुसारेण 'गुहाधरश्च शालाक' इति पाठ्यं भाति । ६ द. महापद्मो हर्म्यतलमु° । मुद्रित पुस्तकानुसारेण 'स्तथा हर्म्य' इति पाठ्यं स्यात् । ७ द. थमनो । ८ द. क्ष्याः । ९ द. को । १० मुद्रित पुस्तके इहाध्यायस्य समाप्तिरिति भाति । अतः "इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे प्रासादस्तवनं नामाष्टपञ्चाशोऽध्यायः ॥" इति लेखनीयम् । द. प्रतौ 'प्रासादस्तवनं नाम' इत्येव पाठः ।

# विमानादिचतुष्षष्टिप्रासादलक्षणं नामैकोनषष्टितमोऽध्यायः ।

विमानमथ वक्ष्यामः प्रासादं शम्भुवल्लभम् ।
स्वर्गपातालमर्त्यानां त्रयाणामपि भूषणम् ॥ १ ॥

सर्वेषां गृहवास्तूनां प्रासादानां च सर्वतः ।
प्रासादो मूलभूतोऽयं तथा च परिकर्मणाम् ॥ २ ॥

एकाशीतिपदे( दं ) वास्तु विमाने पञ्चभूमिके ।
कर्णान्तयोः शतपदं प्रासादेष्वपरेषु तु ॥ ३ ॥

ब्रह्मासृजत्[1] पञ्चभौमविमानानि पुरा रवेः[2] ।
मूलकर्णानुगैर्भद्रैर्द्विगुणोच्छ्रायवन्ति च ॥ ४ ॥

शेषभद्रस्य निष्कासो[3] भद्रदेवचतुष्टयम्( ? ) ।
आकाशदेवताधार([4]चत्र्यथा ? ) विदिक्षु च ॥ ५ ॥

दशधा कृतविस्तारो विमाने सम्प्रकीर्तितः ।
पञ्चभागय( ग )प्रमाणश्च गर्भे[5] भित्तिस्तदर्धतः ॥ ६ ॥

प्राग्ग्रीवं भित्तिविस्तारं गर्भायामत्तथाग्रतः (?) ।
ततः प्राग्ग्रीवविस्तारः क्षोभणीयः कराङ्गुलैः ॥ ७ ॥

भागिको रथविस्तारः कर्णिका चार्धभागिकी ।
भागपञ्चकविस्तारं[6] भद्रं यत् ( तत् ) प्रकीर्तितम् ॥ ८ ॥

( [7]भूणस्तोवहिस्तस्य ? ) निर्गमो भागिकः [8]स्मृतः ।
भागार्धेन विधातव्यः क्षोभणो जलवर्त्मनः ॥ ९ ॥

कर्णिकां जलमार्गं[9] ( च ) समसूत्रेण मापयेत् ।
अथोच्यते भूमिकानां स्तम्भानां चेह लक्षणम् ॥ १० ॥

विस्ताराद् द्विगुणः स्कन्धः सर्वस्मिन् [10]बुंद्धनागरे ।
++++ पञ्चभागा स्याज्जङ्घास्वसमुच्छ्रितिः ॥ ११ ॥

---

१ द. जे । २ द. रथैः । ३ द. शे । ४ द. धारं चरकप्राथा वि° । ५ द. गर्भोभित्तिस्तदर्द्धितः । ६ द. र । ७ द. तूर्णसीम्नो बहिस्तस्य नि° । ८ द. स्रतः । ९ द. आरा । १० द. °न्छुद्ध° ।

[1]तिलकानां तथोच्छ्रायो विधातव्यो द्विभागिकः ।
तिलकस्य शिरोघण्टां चैकसूत्रेण मापयेत् ॥ १२ ॥
जङ्घामानत्रिभागेन खुरपिण्डीं प्रकल्पयेत् ।
खुरकं वेदिबन्धं च समसूत्रेण मापयेत्[2] ॥ १३ ॥
[3]जङ्घामानत्रिभागेन खुरपिण्डीं प्रकल्पयेत् ।
खुरकं वेदिबन्धं च समसूत्रेण सूत्रयेत् ॥ १४ ॥
द्वितीयभूमिकोत्सेधं सिंहकर्णं[4] विभूषयेत् ।
मस्तके घण्टया युक्ता चतुर्भागोच्छ्रिता च सा ॥ १५ ॥
ततस्तृतीयभूत्सेधः पञ्चतुर्यांशवर्जितः ।
चतुर्थी भूमिका कार्या सार्धभागत्रयोच्छ्रितां[5] ॥ १६ ॥
मञ्जरीस्तम्भयोर्मध्ये सवातायनमेखला ।
द्वितीया भूमिका या सा सिंहकर्णैरलङ्कृता[6] ॥ १७ ॥
तस्या द्वारं विधातव्यं कपाटद्वयसंयुतम्[7] ।
(स्यावर्द्धात्?)पाटितं द्वारं तृतीयायां[9] सदा भुवि ॥ १८ ॥
पादे(दो)नद्विपदोत्सेधा तदूर्ध्वं वेदिमेखला ।
कैरवाणां दलैर्युक्ता कर्तव्या दृष्टिहारिभिः ॥ १९ ॥
वेदिका पञ्चविस्तारा कार्या भागसमुच्छ्रिता ।
ग्रीवार्धभागिकोत्सेधा[10] घण्टैकं[11] भागमुच्छ्रिता[12] ॥ २० ॥
पञ्चभाग + विस्तारा घण्टाकोटिर्विधीयते ।
([13]कुमान्दं?)वेदिबन्धं च घण्टाग्रं मस्तकोदयम् ॥ २१ ॥
मापयेत् समसूत्रेण समन्ताद् भूमिपञ्चके ।
व्यासार्धहस्तसङ्ख्यानि(प्रवेशा[14]?)प्रथमं क्षितेः ॥ २२ ॥
अङ्गुलानि तदा ह्यर्धो द्वितीयायाः प्रकीर्तिता[15]ः (?) ।
संयोगादनयोर्यः[16] स्यात् तृतीयायास्तमादिशेत् ॥ २३ ॥

१ द. वि । २ द. सूत्र । ३ द. अयं श्लोकः नास्ति । ४ द. सिंहं कर्णं वि° । ५ द. ताः । ६ द. ताः । ७ द. संपुटं । ८ द. स्याद्र्धोद्घाटितं । ९ द. द्वि । १० द. चां । ११ द. के । १२ द. प्रतौ इतः परं "ग्रीवार्ध भागिकोत्सेधां घंण्टैकं भाग मुच्छ्रिता ॥" अयं अधिकः पाठः । १३ द. कुमदं । १४ द. शः । १५ द. तः । १६ द. र्यत् ।

तदध्यर्धश्चतुर्थ्यास्तु पञ्चम्याः शेष ईरितः।
स्वमूलविस्तृतेर्भागस्तृतीयो वेदिकोर्ध्वतः॥ २४॥
लतया विस्तृतिर्भद्रे युक्ताया जालवर्त्मनः (?)।
(वेदिदोग्रंविधातव्यो[2] ?) सार्धसविस्तृतौ॥ २५॥
मञ्जर्याः[3] स्तम्भसीमानां क्षोभयेत् पुष्टिमाननः (?)।
(वेद्यां भागे ?) शालायां निष्क्रामो मूलकोणतः॥ २६॥
स्थानैर्विचित्ररूपैः[4] स्यात् सिंहकर्णैश्च भूषितः।
पञ्चव्यासेन सूत्रेण रेखामस्य समालिखेत्॥ २७॥
एतद् विमानं ललितं देवदेवस्य कारयेत्।

विमानम्॥

संस्थानं सर्वतोभद्रस्येदानीमभिधीयते॥ २८॥
जठरं बाह्यसीमा च तथा भित्त्यन्धकारिका[5]।
जङ्घोत्सेधश्च कर्णौ च यथा मेरोस्तथा भवेत्॥ २९॥
तथैव भद्रविस्तारः षड्भागेन समन्ततः।
रथिके च द्विभागे स्तः कोणसंज्ञे च पार्श्वयोः॥ ३०॥
मुष्टिप्रमाणं(ण)विस्तारं कर्तव्यमुदकान्तरम्।
विस्ताराद् द्विगुणः स्कन्धस्योच्छ्रायो भागविंशतिः (?)॥ ३१॥
पञ्चभागसमुत्सेधा जङ्घा कार्या सदा बुधैः।
मेखलान्तरपत्रं च सार्धभागसमुच्छ्रितम्॥ ३२॥
शृङ्गं[6] भागत्रयोत्सेधं सग्रीवामलसारकम्।
मूलशृङ्गस्य गर्भेण न्यस्येदुपरिभूमिकाम्॥ ३३॥
द्वितीयभूमिविस्तारं दशधा प्रविभाजयेत्।
द्वौ भागौ शृङ्गविस्तारौ(रो) विधेयः पार्श्वयोर्द्वयोः॥ ३४॥
सग्रीवामलसारस्य तैः शृङ्गस्योदयस्थितिः।
तस्य शृङ्गस्य गर्भेण कर्तव्योपरिभूमिका॥ ३५॥

---

१ द. स। २ द. व्यौ। ३ मुद्रित पु. 'मञ्जर्याः स्तम्भसीमानं क्षोभयेन्मुष्टिमाननः' इति पाठः स्यात्। ४ द. स्तंभैवि°। ५ द. °की। ६ द. ङ्ग। ७ द. °स्वादयस्त्रिभिः।

तस्या भूमेस्तु विस्तारं दशधा भाजयेत् पुनः ।
यः शेषः शिखरायामो ( तद्विंतिनंते ? ) विनिर्दिशेत् ॥ ३६ ॥

विभजेद् वर्धमानं[1] वा रुचकं वास्तुशोभनम् ।
कर्णान्तरे भद्रमध्ये वल्लभा[2]( लभीं ) तत्र कारयेत् ॥ ३७ ॥

भूमिकाशिखरेणोर्ध्वं[3] नवभूमिं विभेदयेत् ।
वेदिकामध्यसूत्रस्य ( कर्णेनोर्ध्वभुवस्तथा ? ) ॥ ३८ ॥

भूमिकोर्ध्वभुवश्चैव विस्तारं दशधा भवे( जे )त् ।
मूलसीमानुसारेण स्याच्छेदावधि संहृतिः[4] ॥ ३९ ॥

ग्रीवा मूलार्धभागे +++ नामलसारकम् ।
चन्द्रिका चार्धभागेन +[5]++ कलशो भवेत् ॥ ४० ॥

सर्वतोभद्रः ॥

गजस्य संस्थानमथ प्रासादस्याभिधीयते ।
चतुःषष्टिपदं वास्तु प्रासादस्य विभाजयेत् ॥ ४१ ॥

ततः सीमार्धसूत्रेण पृष्ठतो वृत्तमालिखेत् ।
पञ्चभागमिता[6] जङ्घा मेखला सार्धभागिकी ॥ ४२ ॥

अग्रतः सूरसेनः स्यात् पृष्ठतः कुञ्जराकृतिः ।
सीमानमष्टधा कृत्वा विभजेन्नन्दने यथा ॥ ४३ ॥

द्वौ द्वौ च[7] कर्णयोर्भागौ भद्रेषु चतुरो विदुः ।
विस्तारार्धेन जङ्घा स्याद् रथिकायाः पृथक् पृथक् ॥ ४४ ॥

भागत्रयोच्छ्रितं शृङ्गं कर्णदेशे विधीयते ।
सप्तभागसमुत्सेधा वलभी मध्यसंश्रिता ॥ ४५ ॥

समन्ताद् भद्रसंस्थाना रेखाग्रीवाण्डकादिभिः ।
सिंहकर्णैश्च भद्रेषु प्रासादो गर्भ उच्यते( ? ) ॥ ४६ ॥

( वित्तसाध्यविहीनेन ? ) कर्तव्यः स्वस्तिके यथा ।
( [9]सर्ववत् तस्य स्युः पत्रनिभाः ? ) ॥ ४७ ॥

---

१ द. वर्द्धीसानं वा । २ द. ल्भी । ३ द. °र्द्धां न च भूमिं । ४ स. सहृतिः । ५ द. भागेन । ६ द. तां । ७ द. तु । ८ द. नो । ९ द. रथाः सर्व° ।

विस्तारोऽ[1]+थ जङ्घा च लतिनि स्वस्तिके यथा ।
उदकान्तर +++ श्रीवत्से[2] नन्दने यथा ॥ ४८ ॥

पै[3]द्मः ॥

ब्रूमोऽथ वृषभं स स्यात् पूर्वोक्तै रूपकर्मभिः ।
चतुर्भद्रश्चतुर्द्वारो विमानो[4] ( सत्रिसाकृति ?[5] ) ॥ ४९ ॥
( तेवृद्धिस्तत्प्रमाणाश्च ? ) सीमाशिखरकोदयैः ।
कर्णवेदि[6]कपोताली[7] जङ्घाग्रे[8] मस्तकेन च( ? ) ॥ ५० ॥
सार्धद्विभागविस्तारैर( थ )कैर्वामदक्षिणौ ।
कार्यौ भद्रं चतुर्भागं भागार्धं सलिलान्तरम् ॥ ५१ ॥
स्तम्भद्वयं भवेत् तस्य सर्वभूम्यन्तरेषु च ।
एकः स्तम्भो विमाने स्याद् द्वौ स्तम्भौ वृषभे पुनः ॥ ५२ ॥
एष भेदः समाख्यातो विमानस्य वृषं[9]स्य च ।

वृषभः ॥

मुक्तकोणमथ ब्रूमस्तं भागैरष्टभिर्भजेत् ॥ ५३ ॥
मूलकर्णावुभौ भागौ भवतो वामदक्षिणौ ।
मध्यं[10]शृङ्गं चतुर्भागं प्रमाणं जठरस्य च ॥ ५४ ॥
कर्णशृङ्गान्तयोर्मध्ये कुर्वीत सलिलान्तरम् ।
रथकौ पार्श्वयोः पूर्णौ भद्रदेशे जलान्तरम् ॥ ५५ ॥
विस्तारोत्सेधजङ्घाश्च सग्रीवामलसारकः ।
लतिनामिव कर्तव्याः प्रमाणेन समन्ततः ॥ ५६ ॥

मुक्तकोणः ॥

ब्रूमोऽथ नलिनीं[11] तस्याः प्रमाणं लक्षणान्वितम् ।
तस्यां तु ( मार्गस्यश्च ? ) देवगर्भः सुरालयः ॥ ५७ ॥
भित्तिविस्तृतिरायामो मुक्तकोणे यथा तथा ।
मध्यदेशे तु यच्छृङ्गं ++ कर्णान्तरे च यत् ॥ ५८ ॥

---

१ द. °रोत्सेध° । २ द. त्स । ३ पद्मप्रासादलक्षणस्यारम्भो गजपृष्ठप्रासादलक्षणस्यावसानं च नोपलम्यते । ४ द. ना । ५ द. तिः । ६ द. त्र्छे° । ७ द. ला । ८ °ग्रैर्म° । ९ द. °षभस्य । १० द. ध्ये । ११ द. °नी तस्य ।

कुम्भकोणे यथा तत्र भेदः कर्मविभेदनात् ।
चतुरश्रे स्मृतो[1] मध्ये कर्णशृङ्गे विचक्षणैः ॥ ५९ ॥

नलिनः ॥

ब्रूमोऽथ मणिकं तस्य शालालिङ्ग(न्द)समुद्गता ।
अलिन्दकार्यसीमायां सर्वतः स्याच्चतुष्किका ॥ ६० ॥
[illegible] मणिकोऽत्र विमानवत् ।
दशधा क्षेत्रैःसीम्नः[2] स्याद् विभागः सर्वतोदिशम् ॥ ६१ ॥
रथ[3]+कर्णिकार्धं च जलवर्त्माथ भद्रकम् ।
मूलगर्भस्तथोत्सेधो घण्टा स्कन्धान्तविस्तृता ॥ ६२ ॥
भूमिजङ्घासमुत्सेधः कपोताद् द्वारनिर्गमः ।
सिंहकर्णा विमानानि स्तम्भचित्रादिकास्तथा ॥ ६३ ॥
तोरणान्यथ माल्यानि तस्यालङ्करणानि च ।
नीलोत्पलदलाकारा मञ्जर्यः सर्वशोभनाः ॥ ६४ ॥
विमानमपरं ह्येतद् योनिरेकै[4]स्तयोर्द्वयोः ।
केवलं भद्रभेदेन मणिको[5] द्राविडोऽप्ययम् ॥ ६५ ॥

मणिकः ॥

प्रासादमथ वक्ष्यामो गरुडं सर्वसुन्दरम् ।
दशधा क्षेत्रविस्तारं तस्य पूर्वं विभाजयेत् ॥ ६६ ॥
द्वौ भागौ रथिकाः कार्या मूलकर्णाद् विनिःसृताः ।
भद्रं षड्(भाग)विस्तारं पक्षवंशादिभेदितम् ॥ ६७ ॥
अलिन्दनिर्गमः कार्यः[6] सीमार्धेन चतुर्दिशम् ।
मूलसीमा तु कर्तव्या सलिलान्तरवर्जिता[7] ॥ ६८ ॥
स्यान्मूलसीमविस्तारात् स्कन्धः स्याद् द्विगुणोच्छ्रितिः ।
प्रासादस्य समुच्छ्रायात् त्रिभागेन समेखला[8]म् ॥ ६९ ॥
जङ्घामन्तरपत्रेण ([9]कुं+युक्तं कुर्वस्तसा?) ।
जी(ही)रकं वेदिबन्धं च भागत्रयसमुच्छ्रितम् ॥ ७० ॥

---

१ द. °ते मध्यः । २ द. °त्रे । ३ द. कं । ४ द. का तयोर्द्वयोः । ५ द. का द्र° । ६ द. र्गाः । ७ द. ताः । ८ द. ला । ९ द. कुं युक्तं कुर्वीत सो ।

अलिम्बा( न्दा )नां समुत्सेधं शे( शि )खरार्धेन कारयेत् ।
षड्भागं स्कन्धविस्तारं विदधीत विचक्षणः ॥ ७१ ॥
ग्रीवार्धभाग( मुत्से )धाद् भागमामलसारकम् ।
कुमुदं चार्धभागेन कुम्भः स्यादेकभागिकः ॥ ७२ ॥

गरुडः ॥

अथोच्यते वर्धमानो दशधा तं विभाजयेत् ।
पादोनांशद्वयं कुर्यात् पार्श्वयोः कर्णविस्तृतिम् ॥ ७३ ॥
सपादपदविस्तारौ रथकौ वामदक्षिणौ ।
चतुर्भागोन्मितं भद्रं विस्तारेण प्रकीर्तितम् ॥ ७४ ॥
विस्तारो( राद् ) द्विगुणोच्छ्रायं स्कन्धं यावत् प्रकल्पयेत् ।
खुरकस्याथ जङ्घाया मञ्जरीस्कन्धयोरपि ॥ ७५ ॥
ग्रीवामलसारकादेः प्रमाणं गरुडे यथा ।

वर्धमानः ॥

द्वाविंशतिकरायामः शङ्खावर्तोऽथ कथ्यते ॥ ७६ ॥
मूलसीमावृत्तनाहस्तस्य स्यात् पद्मके यथा ।
भित्तिगर्भस्य विस्तारः ( पादेनार्धनवकमात् ? )[1] ॥ ७७ ॥
अलिन्दमग्रतः कुर्यात् सिंहकर्णविभूषितम्[2] ।
उत्सेधत्र्यंशतो जङ्घा ( वेद्यं ? ) तत्र विभागतः ॥ ७८ ॥
आस्कन्धं वेदिकाबन्धाद् विस्तृतेर्द्विगुणोच्छ्रितिः ।
मेखलान्तरपत्रं च जङ्घामध्ये विधीयते ॥ ७९ ॥
भ्रमयेत् कर्णसूत्रेण बहिर्वृत्तं समन्ततः ।
कर्णदिक्पालयोर्मध्यं वृत्तसूत्रेण वर्तयन् ( येत् ) ॥ ८० ॥
अवशिष्टं त( ल )च्छन्दं स्वस्तिकस्येव कारयेत् ।
ग्रीवा( मै[3] )मलसारं च कलशं वारिनिर्गमम् ॥ ८१ ॥
कुर्वीत स्वस्तिकस्येव विस्तारोत्सेधमानतः ।
शू( मू )लसीमानुसारेण च्छेदे संवरणं भवेत् ॥ ८२ ॥

---

१ द. तथा मुद्रित पुस्तकेऽपि 'पादेनार्धेन च क्रमात्' पाठः । २ द. ण । ३ द. मा ।

तद्रूपमेव लतिनं वर्तयेद् वलनाकृतिम्[1] ।

शङ्खावर्तः ॥

ब्रूमोऽथ पुष्पकं स स्याद् विमानसदृशाकृतिः ॥ ८३ ॥
तावत्प्रमाणस्तद्वृद्धिः पञ्चभूमश्चतुरश्रकः ।
( विमानेन मानयुक्त ? ) यन्मञ्जर्या यच्च लक्षणम् ॥ ८४ ॥
तत् कार्यमत्र मञ्जर्या नतु कार्यं जलान्तरम् ।

पुष्पकः ॥

गृहराजमथ ब्रूमः स स्यात् कैलाससन्निभः ॥ ८५ ॥
विटङ्क[2]निर्गमाधारनिर्यूहैः सर्वतो वृतः[3] ।
वलभ्या भूषितो मध्ये गवाक्षद्वारसंयुतः ॥ ८६ ॥
कपोतस्तम्भपर्यन्तः शाला( ल )भञ्जीविराजितः ।
वेदिकाखण्डजालाद्यं क ++ परितो भवेत् ॥ ८७ ॥
( कुर्वीत्य ? ) मल्लकै[4]च्छाद्यैः सिंहकर्णैश्च भूषितः ।
अलिन्दभेदतः प्राहु( र्गृह )राजमितं( मं ) बुधाः ॥ ८८ ॥
कैलासस्येव संस्थानं स्यादस्योर्ध्वमधोऽपि च ।

गृहराजः ॥

ब्रूमोऽथ स्वस्तिकं तस्य पूर्ववन्मानलक्षणम् ॥ ८९ ॥
तेनैव लतिनं सर्वं कुर्वीतैनं विचक्षणः ।
यथा मूले विभक्ताः स्युर्लतिनै[5]स्वस्तिकादयः ॥ ९० ॥
तथैषां स्कन्धभक्तानां मध्ये रेखां प्रकल्पयेत् ।
प्रासादः स्वस्तिको नाम स्यादेवं लक्षणान्वितः ॥ ९१ ॥
( [6]शुधानासोदयँः[7] ? ) स्वस्य कर्तव्यः स + भागिकः ।
स्कन्धं यावत् समुत्सेधो विस्ताराद् द्विगुणो भवेत् ॥ ९२ ॥
( त्यवृ ? ) द्वागोच्छ्रिता जङ्घा मेखला[8] चा + भागिकी ।
मध्यशाला द्विभागाश्च मूलसूत्रविभागतः ॥ ९३ ॥

---

१ द. तिः । २ द. द । ३ द. दृतः । ४ द. का । ५ द. नः । ६ द. मुद्रित पुस्तके 'शुकनासोदयः' इति पाठः स्यात् । ७ द. र्यं । ८ द. लां ।

कर्णा[1] द्विभागिकाश्चैवं जलमार्गस्तु षोडश ।
अष्टौ शाला भवन्त्यस्मिन् कर्णाश्चाष्टौ समन्ततः ॥ ९४ ॥
प्राग्ग्रीवं बाह्यतः कुर्यात् ( [2]सुखभाग[3] ? ) विचक्षणः[4] ।
कलशश्चण्डिका ग्रीवा तद्वदामलसारकः ॥ ९५ ॥
ऊर्ध्वं ऊर्ध्वप्रमाणं च यथैवाद्य(?)तथा भवेत् ।

स्वस्तिकः ॥

रुचकं ब्रूमहे तस्य विभागो दशधा भवेत् ॥ ९६ ॥
भागद्वयमितौ कर्णौ भद्रं षड्भागसम्मितम् ।
तेषां विनिर्गमं विद्या( [5]द्वस्तामात्रा ? ) प्रमाणतः ॥ ९७ ॥
कुर्याद्[6]उदकमार्गांश्च प्रासादे रुचके क्वचित् ।
स्कन्धावशि[7]ष्टमुत्सेधो विस्ताराद् द्विगुणो भवेत् ॥ ९८ ॥
वेदिकायास्तु विस्तारः स्कन्धे षड्भागिकः स्मृतः ।
तृतीयांशेन कुर्वीत जङ्घामूर्ध्वं सुरोदयान्[8] ॥ ९९ ॥
जङ्घायाश्च त्रिभागेन कार्या खुरखरण्डिका ।
मेखलान्तरपत्रं च कुर्यादध्यर्धभागिकम् ॥ १०० ॥
सार्धत्रिगुणसूत्रेण पूर्वा कर्कटनां[9] भवेत् ।
( [10]चंतुर्गुणं मूलसूत्रेण मध्ये कर्कटना स्मृतौ ? ) ॥ १०१ ॥
विभज्य दशधा स्कन्धविस्तारं तैः प्रकल्पयेत् ।
भद्रं चतुर्भिः [11]कर्णाशु( र्णास्तु ) कुर्याद् भागैस्त्रिभिस्त्रिभिः ॥१०२॥
स्वच्छाया भूमिकाः कार्या [12]यो वा मूलार्धभागिकीः[13] (?) ।
भागेनामलसारं च कुमुदं चार्धभागिकम् ॥ १०३ ॥
कुम्भं भागेन कुर्वीत प्रासादे[14] रुचके[15] बुधः ।
साधारणोऽयं सर्वेषां प्रासादस्तु दिवौकसाम् ॥ १०४ ॥

रुचकः ॥

---

१ द. र्णं । २ मुद्रित पुस्तके 'मुखभागे' इति स्यात् । ३ द. गे । ४ द. णैः । ५ मु. पु. 'द्धस्तमात्रम्' इति स्यात् । ६ द. न्नो° । ७ द. विश । ८ द. त् । ९ द. ता । १० मुद्रित पु. 'चतुर्गुणेन सूत्रेण मध्यकर्कटना स्मृता' । इति स्यात् । ११ द. कर्णांशु कु° । १२ द. ग्रीवा । १३ द. की । १४ द. द । १५ द. कं ।

पुण्ड्रवर्धनकं ब्रूमः प्रासादं वल्लभं हरेः ।
भजयेन्मूलसीमास्पृग्वृत्तमादौ समन्ततः ॥ १०५ ॥

तच्छायाकर्णसंयुक्तं कर्तव्यं सर्वतोदिशम् ।
यश्छन्दः स्वस्तिकेऽस्य(स) स्याद् द्विगुणः पुण्ड्रवर्धने । १०६ ॥

जङ्घोच्छ्रायान्तभद्राणामुच्छ्रायो विस्तृतिश्च या ।
स्वस्तिके कथिता सैव विज्ञेया पुण्ड्रवर्धने ॥ १०७ ॥

पुण्ड्रवर्धनः ॥

अथाभिधीयते मेरुर्दशधा तत्र भाजयेत् ।
सीमा(नं) तस्य कुर्वीत शृङ्गं चापि (वि?) भागिकम् ॥ १०८ ॥

[1]शेषं + भागिकं भद्र(मायमाने[2]?) [3]विधीयते ।
पदस्य षोडशांसेनं[4](शांशेन) कर्तव्यमुदकान्तरम् ॥ १०९ ॥

पदैः षोडशभिर्गर्भो विधातव्यः पदं पदम् ।
भित्तिरन्धारिका बाह्यभित्तिश्चास्य विधीयते ॥ ११० ॥

भागषट्कोच्छ्रिता[5] जङ्घा मेखला चैकभागिकी[6] ।
शृङ्गं च त्रिपदोत्सेधं शिखरं स्याद् दशोच्छ्रितम् ॥ १११ ॥

कर्तव्यं वास्तुशास्त्रज्ञैस्तस्यैकादशभूमिकम् ।
अर्धपञ्चमविस्तारः स्कन्धो ग्रीवार्धभागिका ॥ ११२ ॥

उच्छ्रायेण[7] विधातव्या भा(गि)कोत्सेधमण्डकम् ।
भागार्धि[8](र्ध)कं च कुमुदं भागिका कलशोच्छ्रितिः ॥ ११३ ॥

षड्गुणेनैव[9] सूत्रेण रेखा तस्य प्रकीर्तिता ।
मेरुं मेरुगिरिप्रख्यमेवं यः कारयेदिमम् ॥ ११४ ॥

शिलाभिरिष्टकाभिर्वा स महत् पुण्यमाप्नुयात् ।

मेरुः ॥

लक्षणं मन्दरस्याथ प्रासादस्याभिधीयते ॥ ११५ ॥

१ द. शेषं षड्भागिकं भद्रमा° । २ 'मायामेन' इति मुद्रित पुस्तके पाठः स्यात् । ३ द. भि । ४ द. षोडसोंसेन । ५ द. त्तरां । ६ द. का । ७ द. च्छ्र । ८ द. र्धि । ९ द. षड्गुणो न च सू° ।

गर्भ[1]स्यार्धेन निष्क्रान्तं भद्रं कुर्वीत मन्द[2]रे ।
[3]+++ मेरुसङ्काशं विन्यस्येत् सर्वतोदिशम् ॥ ११६ ॥

वलभी[4] मध्यदेशे तु शिखरोर्ध्वसमुद्[5]धृता ।
सर्वमा( म )न्यत् प्रमाणं तु मेरोरिव भवेदिह ॥ ११७ ॥

मन्दरः ॥

कैलासमथ वक्ष्यामो दशधा तं विभाजयेत् ।
भद्रं षड्भागविस्तारं मध्यदेशे विनिःसृतम् ॥ ११८ ॥

कर्ण( र्णा ) द्विभागविस्ताराः सलिलान्तरवर्जिताः ।
गर्भस्यार्धेन निष्कासः कार्यो भद्रस्य सर्वतः ॥ ११९ ॥

( ल[6]तिस्याखरं ? ) मध्ये शिखरार्धसमोदयम् ।
भित्तिगर्भभ्रमन्[7]तीनां जङ्घामेखलयोरपि ॥ १२० ॥

विस्तारमुदयं चास्मिन् विदध्यात् स्कन्धशृङ्गयोः ।
मेरोरिवास्मिन् प्रासादे ( [8]ववचद्र ? )ग्रीवाण्डकस्य च ॥ १२१ ॥

कैलासः ॥

ब्रूमोऽथ हंसक( म )स्य स्याद् विभागो रुचके यथा ( ? ) ।
जलान्तरं विशेषोऽत्र शेषं[9] भ( रु )[10]चकवद् भवेत् ॥ १२२ ॥

हंसः ॥

भद्रस्य लक्षणं ब्रूमो दशधा तं विभाजयेत् ।
गर्भविस्तारमानेन स्यादस्मिन् भद्रविस्[11]तृतिः ॥ १२३ ॥

सार्धद्विभागविस्तारौ रथकौ वामदक्षिणौ ।
गर्भार्धा(?) तुल्यमाया[12]मात् प्राग्ग्रीवं चेह(लं?) कारयेत् ॥ १२४ ॥

प्राग्ग्रीवस्य समुत्सेधं शिखरार्धेन कारयेत् ।
वलभीं[13] मध्यदेशेऽस्य सिंहकर्णसमन्विताम् ॥ १२५ ॥

---

१ द. °र्ग° । २ द. °न्दि° । ३ द. मंदिरं । ४ द. भीं । ५ द. °च्छ्रिता । ६ द. लतिः स्याच्छिखरं मध्ये । ७ द. न्ता । ८ द. व बद्ध । ९ द. षे । १० द. व । ११ द. स्मृ । १२ द. सा । १३ द. मी ।

([1]लताजलेगवाक्षाद्यौ[2] ?)श्चतुष्काभिश्चतुर्दिशम् ।
भद्रो भवति शेषं तु स्यादत्र रुचके यथा ॥ १२६ ॥

भद्रम् ॥

अथ [3]तुङ्गं प्रवक्ष्यामो द्वितीयो ह्येष मन्दरः ।
भूषयेत् सिंहकर्णैस्तं लतामूर्ध्वं[4] च कारयेत् ॥ १२७ ॥
भूमिर्भूमिसमुत्सेधः स्तम्भचित्रादिकं[5] तथा ।
मेरोरिवात्र मध्ये तु मञ्जर्यः सर्वतो[6]दिशम् ॥ १२८ ॥

तुङ्गः ॥

ब्रूमोऽथ मिश्रकं स स्यान्मानसंस्थानलक्षणैः ।
भौमो(?)वि( मानवं )न्मध्ये श्रृङ्गं कैलासवद् भवेत् ॥ १२९ ॥

मिश्रकः ॥

( अथ मालामाकारं तु तं कृत्वा गवाक्षैरुपशोभयेत् ?[7] ) ।
यत्किञ्चिन्मानमध्यं तु तदाद्यस्येव ( प्र ? )कल्पयेत् ॥ १३० ॥

गवयः ॥

चित्रकूटमथ ब्रूमो दशधा तं विभाजयेत् ।
प्राग्ग्रीवा निर्गता(?) तस्य गर्भमानेन कारयेत् ॥ १३१ ॥
सार्धद्व्यर्धा[8]धोविस्तारांस्तत्कर्णान् वामदक्षिणान् ।
उत्सेधस्य [9]त्रिभागेन जङ्घोत्सेधं प्रकल्पयेत् ॥ १३२ ॥
जङ्घोत्सेधत्रि[10]भागेन विन्यस्येत्[11] खुरपिण्डिकाम् ।
कपो[12]तान्तरपत्रं च तत्र स्यादर्धभागिकम् ॥ १३३ ॥
शिखरोत्सेधमानं यत् तत् त्रयोदशभिः पदैः ।
तत्र( भूमा[13]स्तदुत्सेधं ? ) कल्पयेदनुसारतः ॥ १३४ ॥
( स्तास्तम्भसो भित्तिः[14] ? ) कुर्यान्मुक्ताश्च परिकर्मणा ।
कूटच्छेदेन तत्कर्म विन्यस्[15]येत् सर्वतोदिशम् ॥ १३५ ॥

---

१ मु. पु. 'लताजालगवाक्षाद्यैः' इति स्यात् । २ द. प्रतौ द्यश्चचतुष्की । ३ मु. पु. 'उत्तुङ्ग' इति लक्ष्यनिर्देशे पठ्यते । ४ द. भूं । ५ द. विवा । ६ द. वि । ७ अत्र मालाधरप्रासादलक्षणस्यावसानं, गवयप्रासादलक्षणस्यारम्भश्च मातृकायां नोपलभ्यते । ८ द. यां । ९ द. वि । १० द. वि । ११ द. से । १२ द. लासु । १३ द. मी । १४ द. तः । १५ द. से ।

भक्तमन्तरपत्रेण तलच्छन्दं तदूर्ध्वतः ।
द्वे द्वे कूटे ततो न्यस्येद् वामदक्षिणकर्णयोः ॥ १३६ ॥
शालामध्ये[1] तु चत्वारि ( नामे ? )कूटानि सर्वतः ।
भूमिकाः सिंहकर्णाश्च कपाटद्वारघट्टनाः ॥ १३७ ॥
शिखराणां समुत्सेधो त( य )थैवाद्ये तथा भवेत् ।

चित्रकूटः ॥

किरणः कथ्यते स[2] स्यात् पद्मतुल्यः[3] प्रमाणतः ॥ १३८ ॥
द्वात्रिंश[4]( दनारा ? ) नस्मिन् विदध्यात् षोडशाथवा ।
शालासु भेदः कर्णैः स्याच्छेषं मालाधरे यथा ॥ १३९ ॥

किरणः ॥

सर्वाङ्गसुन्दरं ब्रूमः कर्मभेदैरनेकधा ।
नानाशिल्प[5]लताधारं प्रासादैर्बहुभिर्युतम् ॥ १४० ॥
( तलच्छन्दतुल्यन्यासवि[6]रुक्तं ? ) बहुलक्षणम् ।
ना +++++++ प्रासादे सर्वसुन्दरे ॥ १४१ ॥
तोरणैः सिंहकर्णै[7]श्च संयुक्तं परिकर्मभिः ।
प्रमाणमिह यत्किञ्चित् सर्वं विद्यात् तदाद्यवत् ॥ १४२ ॥

सर्वसुन्[8]दरः ॥

[9]श्रीवत्समथ वक्ष्यामो दशधा तं विभाजयेत् ।
भागत्रयेण कुर्वीत शालां तत्र विचक्षणः ॥ १४३ ॥
सार्धभागप्रविस्तारौ रथकौ वामदक्षिणौ ।
मूलकर्णा भवन्त्यत्र भागद्वि[10]तयविस्तृताः ॥ १४४ ॥
प्रासादहस्तमात्राभिः प्रत्येकं भद्रनिर्गमः ।
द्व्यङ्गुलं त्र्यङ्गुलं वापि चतुरङ्गुलमे( व वा ) ॥ १४५ ॥

---

१ द. ध्यु । २ द. स्वा । ३ द. ल्याः । ४ द. विं । ५ द. °ल्पं लाला° । ६ द. भ । ७ द. णैः संयुक्तः । ८ द. प्रतौ नास्ति । ९ इह श्रीवत्सः पद्मनाभः वैराजः वृत्तकः नन्द्यावर्तः वलभ्यः सुपर्णः इत्येतेषां प्रासादानां क्रमेण लक्षणेषु वक्तव्येषु तानि आदर्शग्रन्थे तथा संकुलतया लिखितानि, यथा मिथो विवेक्तुं न शक्येरन् । अतो यथास्थित एवादर्शपाठो मुद्रणीय आपतितः । किन्तु पद्मनाभ–वैराज–वृत्तकानां लक्षणं परं क्रमिकं दृश्यते । १० द. ती ।

( भली ? )[1]मध्ये तु मञ्जर्यः कार्याः पद्मदलोपमाः ।
सर्वतः परिकर्म स्याद् रथिका कर्णसंश्रयो[2] ॥ १४६ ॥
आमलिश्चन्द्रशालाभिः[3] स्कन्धान्तं परिपूरयेत् ( ? ) ।
खुरपिण्डौ[4] च जङ्घा च कुम्भाग्रं शिखरादि[5] च ॥ १४७ ॥
यत्किञ्चित् तत् प्रमाणेन वर्धमानसमं भवेत् ।

नन्द्यावर्तः ॥

ब्रूमो वलभ्यं स भवेद् गृहराजस्य सन्निभः ॥ १४८ ॥
आव[6]( य )तश्चतुरश्रो वा प्रमाणेनैकतः समः ।
चतुरश्रस्तु[7] विस्ताराददयो( ये ) द्विगुणो भवेत् ॥ १४९ ॥
( आध्यतत्रस्य पुनः सार्धः स्कन्धोच्छ्रायो विधीयते ? ) ।
( विस्तारं दशधा समक्ष +[8]तुरश्र समन्तः ? ) ॥ १५० ॥
[9]विभजे( भागे ) स्यात् ततो मानं पूर्वप्रासादसन्निभम् ।
स्वरूपं तस्य वक्ष्यामः श्रीवत्समिव तं भवे( जे )त् ॥ १५१ ॥
यद्वा विमानरुचकवर्धमानादिसद्मना[10] ।
छन्देनैकस्य कस्यापि प्रासादस्य विभाजयेत् ॥ १५२ ॥
भूस्तम्भपरिकर्माणि विस्तारोत्सेधमेखलाः ।
सिंहकर्णरथा घण्टा तथा कुम्भाग्रषण्डकम् ॥ १५३ ॥
यत्किञ्चित् तत् प्रमाणेन यथैवाद्यं तथा भवेत् ।

वलभ्यः ॥

सुपर्णस्य ( स्व )रूपं च प्रमाणं चाभिधीयते ॥ १५४ ॥
विभक्तं सिंहरूपेण सर्वभद्रं निवेशयेत् ।
भागैश्चतुर्भिर्निष्क्रान्तं भद्रं ( ग[11]र्भयितः ? )समम् ॥ १५५ ॥
[12]द्वौ भागौ मूलकर्णौ तु षड्भागा भद्रविस्तृतिः ।
पञ्चभागोच्छ्रिता जङ्घा मेखला तस्य भागिका ॥ १५६ ॥

१ द. शाला । २ द. यां । ३ द. लै । ४ द. ण्डी । ५ द. 'रोदिव । ६ द. प । ७ द. स्रस्य । ८ द. पुरस्र समंततः । ९ द. विभजेत् । १० द. नां । ११ द. गर्भायतः; मुद्रित प्रतौ 'गवयतः' इति स्यात् । १२ द. द्वि ।

मूलजङ्घात्रिभागेन खुरवेदिसमुच्छ्रितिः[1] ।
(सच?) मध्ये तु शृङ्गे द्वे कर्तव्ये[2] वामदक्षिणे ॥ १५७ ॥

उच्छ्रायाद् द्विपदे स्यातां विभक्ते सर्वतोदिशम् ।
मूलकर्णेषु शृङ्गाणां त्रिपदा स्यात् समुच्छ्रितिः ॥ १५८ ॥

+++++ सेवापि चतुरङ्गुलमेव वा ।
कुर्याज्जालौ[3](ध?)विस्तारं श्रीवत्से नन्दने यथा ॥ १५९ ॥

विस्ताराद् द्विगुणोत्सेधः स्कन्धः षड्भागविस्तृतः ।
उत्सेधस्य त्रिभागेन जङ्घोत्सेधो विधीयते ॥ १६० ॥

तृतीयांशेन जङ्घायाः कुर्वीत खुरपिण्डिकाम् ।
मेखलान्तरपत्रं च विदध्यात् सार्धभागिकम् ॥ १६१ ॥

विभाज्या दशभिर्भागैः पूर्ववत् स्कन्धविस्तृतिः[4] ।
सार्धद्वि[5]गुणविस्तृत्या पूर्वा कर्कटना भवेत् ॥ १६२ ॥

चतुर्गुणेन सूत्रेण मध्या कर्कटना भवेत् ।
श्री(ग्री)वार्धभागमुत्सेधात् कुमुदं कुम्भकं पुनः ॥ १६३ ॥

अस्मिन्नामलसारं च यथा[6] चाद्ये तथा भवेत् ।

श्रीवत्सः ॥

पद्मनाभ[7]मथ ब्रूमः पद्मशालाभिरन्वितम् ॥ १६४ ॥

द्वितीयः[8] पद्मको ह्येष पद्ममालाधरः शुभः ।
सर्वमन्यत् प्रमाणं तु पद्मस्वस्तिकयोर्यथा ॥ १६५ ॥

पद्मनाभः ॥

वैराजमथ वक्ष्यामि[9] स विज्ञेयो विमानवत् ।
(रूपशिखं[10] + मुत्सेधस्तम्भग्रीव + रूपकम्?) ॥ १६६ ॥

[11]सभातोरणनिर्यूहसिंहकर्णा(र्णै)श्च तादृशैः[12] ।
साधारं चतुरश्रं च तं कुर्यात् पञ्चभूमिकम् ॥ १६७ ॥

---

१ द. तिं । २ द. व्यो । ३ द. ज्नलाध । ४ द. तिं । ५ द. त्रि । ६ द. यथैवाद्ये ।
७ द. क । ८ द. यं । ९ द. मः । १० द. वे । ११ द. स्तंभ । १२ द. शः ।

विमानसदृशाकारो [1]वैराजोऽयमुदाहृतः ।

[2]वैराजः ॥

ब्रूमोऽथ वृत्तकं मूले चतुरश्रः प्रकीर्तितः ॥ १६८ ॥

जङ्घामूले ततोऽष्टाभिस्त्रि( श्रि )र्वृत्तो भागतृतीयके ।
मूलमध्याग्रतः[3] पूर्णं तं कुर्यात् सर्वतोदिशम् ॥ १६९ ॥

भद्राकारं च भद्रेषु विभागे[4] चतुरश्रके ।
( [5]अष्टाश्रिवज्[6]त्रकाकारा ? ) वृत्ते स्वस्तिकसन्निभम् ॥ १७० ॥

यथा मूल[7]विभागेन लतिनः स्वस्तिकोदयः ।
तथा वृद्धिप्रमाणाभ्यामयमप्याद्यवद् भवेत् ॥ १७१ ॥

वृत्तकः ॥

नन्द्यावर्तमथ ब्रूमो दशधा तं विभाजयेत् ।
( [8]पादोमध्यंशविस्तारो ? ) कर्णौ कुर्वीत पार्श्वयोः ॥ १७२ ॥

चतुर्भागप्रविस्तारं भद्रमस्य प्रकल्पयेत् ।
सपादपदिकं कुर्याच्छाला[9]कर्णान्तरे रथम् ॥ १७३ ॥

जलाधाररथं कर्ण[10]( तः ? )शालान्तेषु यथेष्ट[11]तः ।
ष+सु शिखरायामास्तन्मध्ये वलभी भवेत् ॥ १७४ ॥

जलमार्गं [12]च कुर्वीत शालाकर्णान्तमूलयोः ।
प्रमाणमन्यथा किञ्चिद् ( भूसिंहस्येव ? ) कारयेत् ॥ १७५ ॥

सुपर्णः ॥

प्रमाणमथ सिंहस्य लक्षणं चाभिधीयते ।
दशधा क्षेत्रविस्तारं विभजेत् सर्वतः समम् ॥ १७६ ॥

द्विभागौ मूलकर्णौ तु कर्तव्यौ वामदक्षिणौ ।
मूलभद्रस्य विस्तारः षड्भिर्भागैर्विधीयते ॥ १७७ ॥

१ द. वि । २ द. वि । ३ द. तत् । ४ द. गं । ५ मुद्रित पु. 'अष्टाश्रौ वज्रकाकारम्' इति स्यात् । ६ द. ज्र । ७ द. ला । ८ मुद्रित पुस्तके 'पादोनद्व्यंशविस्तारौ' इति पाठः स्यात् । द. प्रतौ च इत्येव पाठः । ९ द. लां । १० द. र्णान्तः । ११ द. यथोष्टितः । १२ द. गांश्च ।

विस्तारो[1] द्विगुणः[2] कार्यः स्कन्धोत्सेधप्रमाणतः ।
पञ्चभागोच्छ्रिता जङ्घा मेखला सार्धभागिकी ॥ १७८ ॥
खुरकं वेदिबन्धं च तत्[3]त्रिभागेन कल्पयेत् ।
भागत्रयोच्छ्रितानि स्युः शृङ्गाणि च चतुर्दिशम् ॥ १७९ ॥
सिंह( स्य ) कर्णवन्मध्ये वलभ्या भूषयेद् बुधः ।
सर्वमन्यत् प्रमाणं च सर्वतोभद्रवद् भवेत् ॥ १८० ॥

सिंहः ॥

विचित्रकूटं वक्ष्यामो दशधा तं विभाजयेत् ।
( [4]द्विभागिको मूलभद्रस्य ? ) हस्ततुल्याङ्गुलो भवेत् ॥ १८१ ॥
शालामध्यप्रदेशे तु वलभीं सन्निवेशयेत् ।
कूटे द्वे सर्वतो न्यस्ये[5]च्छिलष्टे + मूलक + योः ॥ १८२ ॥
एष भेदः समुद्दिष्टः शाला स्यात् कूटवर्जिता ।
प्रमाणमन्यत् सर्वं तु विज्ञेयं चित्रकूटवत् ॥ १८३ ॥

[6]चित्रकूटः ॥

योगपीठमथ ब्रूमस्त्रिविष्टपमिवोत्तमम् ।
विभजेद् भागविंशत्या चतुरश्रं समन्ततः ॥ १८४ ॥
( कोष्ठान्यद्भागविस्तारा ? ) कुर्याद् दिक्षु विदिक्षु च ।
भागिकौ जलमार्गौ च विदध्याद् वामदक्षिणौ ॥ १८५ ॥
विस्तारात् तेषु गर्भः स्याद् भागत्रितयसंमितः ।
पञ्चभागोच्छ्रिता जङ्घा कपोतान्तरवर्जिता ॥ १८६ ॥
खुरकं वेदिबन्धं च कुर्याद् भागत्रयोच्छ्रितम् ।
विस्तारात् (कुर्याद् दिक्षु ?) द्विगुणोच्छ्रायः कार्योऽयं पञ्चभूमिकः ॥
सिंहकर्णै रथैर्घण्टाभ्रमिकास्तम्भतोरणैः ।
रचनास्य विधातव्या कथिता पुष्पके त[7]था ॥ १८८ ॥

---

१ द. रा । २ द. णा । ३ द. त्रि । ४ द. द्विभागिकौ मूलकर्णौ षड्भागाद्भद्रविस्तृतिः । निर्गमो मूलभद्रस्य हस्ततुल्यांगुलो भवेत् । ५ द. न्यस्येत्संश्लिष्टे मूलकर्णयोः । ६ द. मुद्रित पुस्तके ' विचित्र ' इति लक्ष्य निर्देशे पठितः । ७ द. य ।

सान्धारः केवलं कार्यः प्रासादोऽयं विचक्षणैः।

योगपीठः॥

घण्टानादमथ ब्रूमः स[1] भवेत् पञ्चभूमिकः॥ १८९॥
अष्टाश्रि[2]कोणः कर्तव्यः संस्थानात् पुष्पकोऽपरः।
भैरवो भद्रकाली च( स्थाप्य[3]ँ चात्र पाठको[4] ?)॥ १९०॥

घण्टानादः॥

पताकिनमथ ब्रूमो वातोद्भूतमिवार +।
लतिनं लतिनाकारं( ?) विभक्तं सर्वतोदिशम्॥ १९१॥
तं चण्डिकायाः कुर्वीत रुचकं वर्धमानकम्।
( [5]वृक्षपताकिनं वक्ष्यामि+भूतं शाखिनं यथा ?)॥ १९२॥

पताकिनः॥

गुहाधरमथ ब्रूमः श्रीपु[6]ष्टिसुखदायिनम्।
विभक्ते दशधा क्षेत्रे भद्रं स्याद् गर्भमानतः॥ १९३॥
अर्धेन मूलगर्भस्य कार्यो भद्रस्य निर्गमः।
सार्धभागप्रविष्टारौ कर्णौ द्वौ द्वौ च पार्श्वयोः॥ १९४॥
( [7]जलाधा ?) मूलकर्णान्ते कर्तव्यः पार्श्वयोर्द्वयोः।
तद्द्वारमध्यदेशे तु विन्यस्येत् स्तम्भतोरणम्॥ १९५॥
विस्ताराद्द्विगुणोत्सेधश्चतुःशृङ्गश्चतुर्मुखः ?।
भूग्रीवामेखलाजङ्घाः कुम्भकामलसारके॥ १९६॥
सिंहस्येव प्रकुर्वीत गुहाधारस्ततो[8] भवेत्।
द्वारभेदेन नामास्य प्रासादस्य विनिर्मितम्॥ १९७॥

गुहाधरः॥

कथयामोऽथ शालाकं दशधा तं विभाजयेत्।
द्विभागिकौ मूलकर्णौ षड्भागा भद्रविस्तृतिः॥ १९८॥
द्वाराणि भद्रमध्ये स्युर्मूलद्वारसमानि तु।
चतुर्बाहुश्चतुर्द्वारो द्वितीयो रुचको ह्यसौ॥ १९९॥

---

१ द. सं। २ द. स्त्रि। ३ द. प्या। ४ द. पीठके। ५ द. वृक्षं पंतान व°। ६ द. मु। ७ द. जलधो। ८ द. था।

द्वारमानेन नामास्य शालाक इति कीर्तितम् ।
प्रमाणमन्यद् यत्किञ्चिद् भद्रकस्येव तद् भवेत् ॥ २०० ॥

शालाकः ॥

इदानीं वेणुकं ब्रूमश्चतुरश्रं समं शुभम् ।
न कुर्याद् भद्रनिष्कामममात्रच्छत्रात्मनः(?) शुभम् ॥ २०१ ॥
विस्तारद्विगुणोच्छ्रायः कुम्भाग्रं[1] (यचेदिष्यत्?) ।
शिखाद्विगुणमानस्य जङ्घा त्र्यंशेन कल्पते ॥ २०२ ॥
जङ्घात्रिभागमुत्सेधात् कार्या खुरवरण्डिका ।
कपोतान्तरपत्रं च कर्तव्यं सार्धभागिकम् ॥ २०३ ॥
चतुर्भागो(गे)न सूत्रेण वेणुकोशं समालिखेत् ।
सर्वतः शोभनं कुर्यात् तं कपोतविनिर्गमे[2] ॥ २०४ ॥
मुखेऽस्य सिंहकर्णाः स्युश्चन्द्रशालाविवर्जिताः ।
प्रमाणमस्य यत्किञ्चिद् वेणुकं च विधीयते ? ॥ २०५ ॥

वेणुकम् ॥

इदानीं कुञ्जरं ब्रूमो गजलक्षणलक्षितम् ।
अर्धसूत्रेण तत्सा(सी)म्नः पृष्ठतो वृत्तमालिखेत् ॥ २०६ ॥
चतुर्भागा भवेजङ्घा मेखला सार्धभागिका ।
वृत्ताकारं पृष्ठदेशे तं कुर्वीत विचक्षणः ॥ २०७ ॥
शालासु सिंहकर्णाः स्युः पार्श्वतः पृष्ठतोऽग्रतः ।
कर्णाश्च तस्य कर्तव्याः श्रृङ्गैः सर्वैर(र्वै[3])ऽपि पूरिताः ॥ २०८ ॥
मध्यप्रदेशे वलभी कर्तव्या चातिशोभना ।
यत्किञ्चित् तत्प्रमाणं तु यथैवाद्ये[4] तथा भवेत् ॥ २०९ ॥

कुञ्जरः ॥

अथ हर्षं प्रवक्ष्यामश्चतुरश्रं मनोरमम् ।
विस्तारात् सार्धं उत्सेधः (स्यौद्धयटां?)मस्तकावधेः ॥ २१० ॥

---

१ द. °ग्रं यावदिष्यति । २ द. मैः । ३ द. पुस्तके नास्ति । ४ द. द्यं । ५ द. स्याद्धयंटामस्तकावधे ।

छाद्यरूपं च कुर्वीत चतुरश्रं चतुर्दिशम् ।
शुकनासं सुखातेन शोभितं परिकर्मणा ॥ २११ ॥
जङ्घामेखल[1]योश्च + कुर्यात्सिंहस्य चोच्छ्रितिः ।
घण्टाग्रं चन्द्रशाला च च्छाद्यकं च यदृच्छया ॥ २१२ ॥
कुर्यात् प्रमाणमन्यच्च यथैव मनसः [2]प्रियम् ।

हर्षणः ॥

इदानीं विजयं ब्रूमः प्रासादं ( सार्ध ? )शोभनम् ॥ २१३ ॥
लतिनो वर्धमाने[3]न ++++ विभाजयेत् ।
शुकनासोदयं न्यस्येदंशोनशिखरोदयम् ॥ २१४ ॥
अग्रप्राग्ग्रीवकौ कार्यौ रथकौ वामदक्षिणौ ।
( कर्तव्योर्ध्वलतश्चापं पूर्णः ? ) सर्वतोदिशम् ॥ २१५ ॥
विजयो वर्धमानश्च प्रमाणेन समावुभौ ।
अलिन्दभेदान्नामास्य कृतं विजय इत्यदः ॥ २१६ ॥

मह[4]ापद्मः ॥

ब्रूमोऽथ हर्म्यं प्रासादं [5]तं कुर्यादेकभूमिकम् ।
दारुजं चतुरश्रं च ( पट्टुला[6]भित्तिभिः ? ) ॥ २१७ ॥
दण्डच्छाद्यं च कुर्वीत समन्ताच्च चतुष्किकाम् ।
ऊर्ध्वतस्तुम्बिकाक्रान्तं पद्मखण्ड[7]विभूषितम् ॥ २१८ ॥
मुखैः( खे ) पत्रैर्गवाक्षैश्च वेदिकास्तम्भतोरणैः ।
वलभीशालभञ्जीभिः सिंहकर्णैश्च भूषयेत् ॥ २१९ ॥
विस्तारमस्य हर्म्यस्य कुर्यादुच्छ्रयसंमितम् ।

हर्म्यः ॥

इदानीमुज्जयन्तस्य लक्षणं सम्प्रचक्ष्महे ॥ २२० ॥
कुर्याद्[8] भूहर्म्यमानेऽत्र द्वारि मण्डपभूषितम् ।
चतुर्द्वारं च कुर्वीत सर्वतो मण्डपान्वितम् ॥ २२१ ॥

---

१ द. ला । २ द. पू । ३ द. नेनं विदाज° । ४ इह ' विजयः ' इति लेख्यं भाति । महापद्म इति लेखनेन च विजयानन्तरक्रमलक्षणीयानामुदकुम्भमोदकमहापद्मानां लक्षणश्लोका गलिता इत्यनुमीयते । ५ द. तन् । ६ द. ल्यामिदिभिः । ७ द. ण्डे । ८ द. कुर्यास्तं ह° ।

प्रमाणमन्यदप्यस्य हर्म्यस्येवाखिलं[1] भवेत् ।

उज्जयन्तः[2] ॥

इदानीमभिधास्यामो गन्धमादनलक्षणम् ॥ २२२ ॥

हर्म्यमानेन कर्तव्यः प्रासादो गन्धमादनः ।
अग्रतः पृष्ठदेशे च मण्डपं तस्य कारयेत् ॥ २२३ ॥

चतुष्कीजालपक्ष्माद्या वामदक्षिणभागयोः ।
प्रमाणमस्य कर्तव्यं यथा हर्म्यस्य कीर्तितम् ॥ २२४ ॥

गन्धमादनः ॥

ब्रूमोऽथ शतशृङ्गं[3] स त्रिविष्टपसमो[4] भवेत् ।
विभजेद् भागविंशत्या पञ्चभौमं च कारयेत् ॥ २२५ ॥

+द्विभागानि कूटानि सैकमण्डशतं भवेत् ।
भूमौ भूमौ च शृङ्गाणि भूविस्तारदशांशतः[5] ॥ २२६ ॥

प्रमाणमस्य यत्किञ्चित् तत् त्रिविष्टपवद् भवेत् ।

निरवद्यः[6] ॥

विभ्रान्तमथ वक्ष्यामः सर्वतोभद्रसन्निभम् ॥ २२७ ॥

सान्धारं तं प्रकुर्वीत सर्वतो मण्डपैर्युतम् ।
गवाक्षैा वेदिजालाद्याः(?) कुर्याद् दिक्षु चतुष्किकाः ॥ २२८ ॥

विभ्रान्तः ॥

मनोहरमथ ब्रूमः स भवेन्मण्डपो यथा ।
साच्छाद्यतोरणैर्दिक्षु चतुर्द्वारः समण्डपः ॥ २२९ ॥

वेदिर्षण्डाम्बुमार्गाद्यैः[9] प्रतोलीद्वारजालिकैः ।
सिंहपीठतलन्यासैः कलशैः परिपूरितः ॥ २३० ॥

वृत्तस्तम्भस्तुलाच्छन्नो[10] बहिश्छाद्येन भूषितः ।
सिंहव्यालगजैः पत्रैर्मुखे सस्तम्भतोरणैः ॥ २३१ ॥

---

१ द. स्यै । २ द. प्रतौ नास्ति । ३ द. ऽथ सततं शृंगं । ४ द. पस्य । ५ द. त । ६ इद 'शतशृङ्ग' इति लेख्यम् । निरयद्यस्य लक्षणमपि गलितम् । ७ द. क्षं । ८ द. ख । ९ द. द्यः । १० द. च्छंदो ।

पुनः कार्यं प्रमाणं तु यथाशोभं विधीयते ।

मनोहरः ॥

वृत्तवृत्तायतौ ब्रूमस्तयोः कम्बुसमाकृतिः ॥ २३२ ॥
वृत्तस्तत्र तलन्यासचतुरस्त्रोंऽशपञ्चकम् (?) ।
[1]वृत्ताद्यमूर्ध्वतो वृत्तं यथाशोभं समुत्थि[2]तम् ॥ २३३ ॥
कुर्यान्मुखायतं चान्यं सिंहकर्णान्वितं मुखे ।

वृत्तवृत्तायतौ ॥

चैत्यस्य लक्षणं ब्रूमः स स्याच्छा(द्य)त्रयान्वितः ॥ २३४ ॥
अस्याकारः प्रमाणं च यथा वृत्ते तथा भवेत् ।

चैत्यः ॥

किङ्किणीकमथ ब्रूमः पञ्चाण्डं नवभूमिकम् ॥ २३५ ॥
वृत्तकूटाः शुभाः कार्याः सर्वेऽमी शुभलक्षणाः ।

किङ्किणीकः ॥

इदानीं लयनं ब्रूमः स शैलखननाद् भवेत् ॥ २३६ ॥
निःश्रेण्यारोहसोपाननिर्यूहकगवाक्षकान् ।
वेदीभ्रमविटङ्कांश्च प्रतोलीद्वारसंयुतान् ॥ २३७ ॥
( उत्कीर्णानाचरे तै[3]रप्राग्रीवन्मानं च ? ) ।

लयनम् ॥

इदानीं पट्टिसं ब्रूमः प्रासादं वक्त्रसम्भवम् (?) ॥ २३८ ॥
( [4]बोह्यतो ? ) जालपादैश्च वेदीषण्डैश्च मण्डितम् ।
कूर्मपृष्ठं प्रदातव्यमिच्छता शुभलक्षणम् ॥ २३९ ॥

पट्टिसः ॥

विभवः कथ्यते स स्यात्[6] ( सुर्यामन्यसमाश्रयः ? ) ।
दारवे दारवो योज्यः शैलजे शैलसम्भवः ॥ २४० ॥
मृन्मये मृन्मयः कार्यश्चयने [8]चयनोद्भवः ।
प्रत्यन्तग्रामखेटेषु दारुस्तम्भैर्विधीयते ॥ २४१ ॥

---

१ द. चित्रा । २ द. च्छ्रि । ३ द. त्त । ४ द. बाह्यतो जा° । ५ द. नं (नां) । ६ द. त्पु । ७ द. म । ८ द. न ।

विभवस्यानुसारेण स कार्यो धार्मिकैस्त्रिभिः ।

विभवः ॥

तारागणमथ ब्रूमः स भवेन्मण्डपाकृतिः ॥ २४२ ॥
वस्त्रचीरतुलाशाण्डो(?) डोलाक्रीडाश्रमैर्गृहैः ।
वस्त्रजैश्चित्ररूपाद्यैर्घण्टादर्पणतोरणैः ॥ २४३ ॥
ध्वजच्छत्रविमानाद्यैः किङ्किणीभिर्विराजितम् ।
यत्किञ्चित् सुन्दरं सर्वं तदत्र विनिवेशयेत् ॥ २४४ ॥

तारागणः ॥

अष्टाष्टकैर्द्वे च विशेषयोगात्
प्रासादषष्टिश्चतुरन्वितैषा ।
विमानमुख्याः कथिता य एतान्[१]
(जानाय[२]स्यैस ?) शिल्पिगणाग्रणीः[३] स्यात् ॥ २४५ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
विमानादिचतुःषष्टिर्नामैकोनषष्टितमोऽध्यायः ॥

---

## अथ श्रीकूटादिषट्त्रिंशत्प्रासादलक्षणं नाम षष्टितमोऽध्यायः ।

षड्विं( ट्त्रिं )शतमथ ब्रूमः प्रासादान् नागरक्रियान् ।
साधारान् प्रथमै[४]स्तेषु श्रीकूटः श्रीमुखस्ततः ॥ १ ॥
श्रीधरो बँदर[५]श्चैव तथाभ्यः( न्यः ) प्रियदर्शनः ।
कुलनन्दोऽन्तरिक्षश्च पुष्पभा[६]सो विशालकः ॥ २ ॥
सङ्कीर्णो[७]ऽथ महानन्दो नन्द्यावर्तस्तथापरः ।
सौभाग्यश्च विभ[८]ङ्गश्च विभवस्तदनन्तरम् ॥ ३ ॥
बीभत्सकोऽथ श्रीतुङ्गो मानतुङ्गस्तथापरः ।
(भवतो[९] रुद्र[१०] ?)संज्ञश्च (भवद्राह्योदरस्तचः[११] ?) ॥ ४ ॥

---

१ द. एषां । २ मु. पु. 'जानात्यसौ' इति स्यात् । ३ द. गणा । ४ द. मा । ५ मु. पुस्तकानुसेरण 'वरद' इति लक्षणे दृश्यते । ६ द. ष्पा । ७ द. र्णाय । ८ द. भाग । ९ मु. पु. 'सर्वतोभद्र' इति स्यात् । १० द. भ । ११ मु. पु. 'भवेद् बाह्योदरस्ततः' इति पाठः स्यात् ।; द. भवेद्वाह्योदरस्तवः ।

निर्यूहोदर( संज्ञो[1]ऽन्य )स्ततो ज्ञेयः समोदरः ।
नन्दिभद्रो भद्रकोशश्चित्रकूटस्ततः परम् ॥ ५ ॥

विमलो हर्षणो भद्रसङ्कीर्णस्तदनन्तरम् ।
ततो भद्रविशालाख्यो भद्रविष्कम्भ[2] एव च ॥ ६ ॥

उज्जयन्ताभिधानश्च सुखे( मे )रुरथ मन्दरः ।
कैलासः कुम्भकाक्ष( ख्य )श्च गृहराजश्च नामतः[3] ॥ ७ ॥

एतेषां( षट् ) त्रिंशदुद्दिष्टा लक्षणं कथ्यतेऽधुना ।
चतुरश्रीकृते क्षेत्रे द्वादशांशविभाजिते ॥ ८ ॥

प्रासादं विभजेत् प्राज्ञः श्रीकू( टं ) नाम शोभने[4]( नम् ) ।
ज्येष्ठः स्याद् विंशतिर्हस्ता मध्यमो दश पञ्च च ॥ ९ ॥

कनीयान् दश विज्ञेयः प्रमाणं हस्तसङ्ख्यया ।
भद्रं षड्भागिकायासं( मं ) कर्णाः कार्या[5] द्विभागिकाः ॥ १० ॥

तिलकं भागिकं कार्यं भागेनैकेन निर्गतम् ।
तस्माद् भागेन निष्क्रान्तं भद्रमस्य विधीयते ॥ ११ ॥

भागिकी बाह्यभित्तिः स्याद् द्विपदा[6] चान्धकारिका ।
भागिकी गर्भभित्तिश्च गर्भः कार्यश्चतुष्पदः ॥ १२ ॥

अधश्छन्दः समुद्दिष्ट ऊर्ध्वच्छन्दोऽभिधीयते ।
विस्तारार्धेन जङ्घा स्यान्मेखला चैकभागिका ॥ १३ ॥

भागत्रयोच्छ्रितं शृङ्गं द्वितीयमपि तादृशम् ।
पूर्वशृङ्गस्य मध्ये तद् विधातव्यं विचक्षणैः ॥ १४ ॥

सार्धभागोदयः कार्यस्तिलकोऽन्यश्च तादृशः ।
द्वितीयतिलकस्योर्ध्वं सुश्लिष्ट( ष्टा ) रूपसंयुता ॥ १५ ॥

स्यादुरोमञ्जरी सप्तभागोत्सेधा षडायता ।
स्याद् भागिकमरछा( धश्छा )द्यं मञ्जर्या या तु विस्तृतिः ॥ १६ ॥

१ द. नामाभ्य । २ द. न्ध । ३ द. मागतः । ४ द. ते । ५ द. या । ६ द. °दः बाध° ।
७ द. य । ८ द. वस्था ।

दशधा प्रविभाज्यासौ शेषं श्रीवत्सवद् भवेत् ।
स्कन्धः षड्भागविस्तारो ग्रीवा भागार्धमुच्छ्रिता ॥ १७ ॥
अण्डकं भागिकं कार्यं कुमुदं चार्धभागिकम् ।
सार्धभागेन कलशो बीजपूरकसंयुतः ॥ १८ ॥
द्वितीयकर्णशृङ्गस्य स्यादूर्ध्वं मूलमञ्जरी ।
++++++++ अष्टभागं[1]समुच्छ्रिता ॥ १९ ॥
श्रीवत्सवद् विभागोऽस्याः स्कन्धग्रीवादिके भवेत् ।
एवं श्रीकूटसंक्षेपं( ज्ञोऽयं ) प्रासादः परिकीर्तितः ॥ २० ॥
यं कृत्वा त्रिसहस्राणि दिव्यानि दिवि मोदते ।

श्रीकूटः ॥

अथ लक्ष्म [2]+++++++ स्याभिधीयते ॥ २१ ॥
तुल्यं प्रासादमानेन विदध्यादिह मण्डपम् ।
मुखायामेन तिर्यक् तु चतुरश्रं [3]++++ ॥ २२ ॥
[4]+++ भद्रविस्तारः कर्णाश्च तिलकास्तथा ।
मध्ये चतुष्किका कार्या भद्रविस्तारसम्मिता ॥ २३ ॥
नि[5]+++++++ विधातव्यस्तु मण्डपे ।
जङ्घाप्रासादजङ्घायाः समोत्सेधा(?)विधीयते ॥ २४ ॥
मेखलं भागिक[6]++++++ च पूर्ववत् ।
स्तम्भं त्र्यंशोच्छ्रितं भागं वेदी घण्टा त्रिभागिका ॥ २५ ॥
क्रमाश्रयो यवाः पञ्च [7]सिंहक +++++ ।
शोभिताः सिंहकर्णैश्च [8]नृच्छाद्यां[9]ङ्गातिभूषिताः (?) ॥ २६ ॥
मण्डपं कारयेदेवं श्रीकूटस्य विचक्षणः ।

श्रीकूटस्य[10] मण्डपः समाप्तः ।

अलिन्दे तु यदास्यैव क्रियते[11] भद्रवेदिका[12] ( यदा ? ) ॥ २७ ॥

---

१ द. इतः पूर्वं 'प्रविस्तारा दशभाग स°' इत्यधिकः पाठः । २ द. ° मां तदीयस्य मंडपास्या° । ३ द. °स्रं समंततः । ४ द. तथैव । ५ द. निर्गमस्तेन मानेन वि° । ६ द. °कां कुर्यान्मिन्वच्छाद्यं । ७ द. सिंहव्याघ्रविभूषिताः । ८ द. नृ । ९ द. द्य । १० द. श्रीकूटस्य विक्षणं भूषणं समण्डपः समाप्तः पाठः । ११ द. न्ते । १२ काः ।

प्रासादः श्रीमुखं[1] + + तदानीं स्यात् सुखावहः ।

श्रीमुखः ॥

यदा कूर्परमस्यैव चतुरश्रमधो भवेत् ॥ २८ ॥

तदा स्याच्छ्रीधरो नाम प्रासादो देवताश्रयः ।

श्रीधरः ॥

अस्यैव तु यदालिन्दः क्रियते भद्रवर्जितः ॥ २९ ॥

(रुचेः[2] ? )भवेत् तदानीं वरदः प्रासादः शुभदायकः ।

वरदः ॥

विधीयते यदास्यैव भद्रमेकं विनिर्गतम् ॥ ३० ॥

निर्यूहैश्च[3] तदा स स्यात् प्रासादः प्रियदर्शनः ।

प्रियदर्शनः ॥

विधीयते यदास्यैव[4] नन्द्यावर्तो विनिर्गमः ॥ ३१ ॥

कुलनन्दस्तदा ज्ञेयः प्रासादः सुखकारकः ।

कुलनन्दनः ॥

इति श्रीकूटादिषट्कम् ।

अन्तरिक्षमथ ब्रूमस्तस्य[5] द्वादशभागिकाः[6](?) ॥ ३२ ॥
षड्विंशत्या करैर्ज्येष्ठमानायां[7] दशभिर्भवेत(?) ।
मध्यमे( मो) मध्यमानेन हस्तसंख्येयमीरिता ॥ ३३ ॥

पञ्चभागायतं भद्रं कर्णाः कार्या[8] द्विभागिकाः[9] ।
विस्तारस्तिलकानां[10] स्यादन्तरं भद्रकर्णयोः ॥ ३४ ॥

निर्गमः सार्धभागः स्याद् भद्रस्य तिलकस्य च ।
गर्भः षोडशभागः स्याद् भागिकी भित्तिविस्तृतिः ॥ ३५ ॥

प्रदक्षिणा तु भागौ द्वौ बाह्यभित्तिः पदं भवेत् ।
कथितोऽयमधश्छन्दो ब्रूमश्छन्दमथोर्ध्वतः ॥ ३६ ॥

---

१ द. खो नाम । २ द. रुचेत्तदानीं° । ३ द. हा । ४ द. त । ५ मुद्रित प्रतौ 'स स्याद् द्वादशभागिकः' इति स्यात् ।; द. स्तस्या । ६ द. कः । ७ मुद्रित पु. 'ज्येष्ठः कनीयान्' इति स्यात् । ८ द. कार्याः । ९ द. का । १० द. नां तु स्याद° ।

जङ्घा षड्भागिकोत्सेधा[1] भागोत्सेधा च मेखला ।
[2]++ भागत्रयोत्सेधे शिखरं प्रथमं तथा ॥ ३७ ॥

द्वितीयं तत्समं चोर्ध्वं तिलकस्योपरि स्थितम् ।
अधस्ता[3] +++++++ छाद्यं तु भागिकम् ॥ ३८ ॥

शिखरं गर्भविस्तारं कर्तव्यं षट्पदोच्छ्रितम्[4] ।
अर्धेन गर्भविस्तारा[5] ++++++ स्तथा ॥ ३९ ॥

द्वितीयं[6] शिखरस्योर्ध्वं (प्रागुल्भ्यान् ?) मूलमञ्जरी ।
इत्येष कथितः सम्यगन्तरिक्ष[7] ++++ ॥ ४० ॥

अन्तरिक्ष[8]प्रिया देवाः सर्वे वैमानिका यतः ।

अन्तरिक्षः ॥

भागैरष्टभिरत्रैव क्रियतेऽलिन्द[9] +++ ॥ ४१ ॥

पुष्पाभासस्तदा ज्ञेयः प्रासादश्चारुदर्शनः ।

पुष्पाभासः ॥

अथास्य क्रियते भद्रमलिन्दा[10] +++++ ॥ ४२ ॥
[11]+ विशालको ना[12]मप्रासादाज्जायते शुभः(?) ।

विशालकः ॥

अथास्य क्रियते भद्रयुक्तस्य[13] ++ वर्जितः ॥ ४३ ॥

तदा संकीर्णको नाम प्रासादः परिकीर्तितः ।

संकीर्णकः ॥

यदा संकीर्णकस्यैव नन्दि[14]का स(म)भागिकी ॥ ४४ ॥

क्रियते निर्गमेणैव महानन्दस्तदा भवेत् ।

महानन्दः ॥

वि[15]स्तारेण समश्च स्यान्नन्दिकानिर्गमो यदा ॥ ४५ ॥

---

१ द. धः । २ द. कार्य । ३ द. °स्तात् शिखरात् कार्य मल्लछाद्यं तु भाषिकं । ४ द. तां । ५ द. ग्रीवाण्डकलस । ६ द. यं । ७ द. क्षः सुरालयः । ८ द. °क्षाः प्रिय । ९ द. को यथा । १० द. श्चाग्रतो यदा । ११ 'विशालको नाम तदा प्रासादो जायते शुभः' इति स्यात् । इति मुद्रित पुस्तके । द. तदा । १२ द. म । १३ द. श्च यदालिंदविवर्जितः । १४ द. न्द । १५ द. स्त ।

नन्द्यावर्त इति ज्ञेयः प्रासादः स तदा बुधैः ।

नन्द्यावर्तः ॥

अन्तरिक्षषट्कम् ।

सौभाग्यमथ वक्ष्यामः स स्याद् द्वादशभिः पदैः ॥ ४६ ॥

उत्तमो विंशतिर्हस्ता मध्यमो दश पञ्च च ।
कनीयान्त्रिस(न् दश) मानेन सौभाग्यो मानतस्त्रिधा ॥ ४७ ॥

गर्भश्चतुर्भिर्भागैः स्याद् भद्रं तद्विस्तृतेः समम् ।
भद्रस्यार्धेन तिलकाः कर्णाः कार्या द्विभागिकाः ॥ ४८ ॥

द्वे द्वे पदे विधातव्यस्तथैकैकस्य निर्गमः ।
भद्राणां निर्गमं यद्वा विदध्यादेकभागिकम् ॥ ४९ ॥

भागिका[1] गर्भभित्तिस्तु[2] द्विपदा च प्रदक्षिणा[3] ।
भागिकी बाह्यभित्तिः स्याज्जङ्घोच्छ्रायः पदानि षट् ॥ ५० ॥

भागिका[4] मेखला प्रोक्ता (शृङ्गं ?) तन्मध्ये शिखरं भवेत् ।
मल्लच्छाद्यं च मध्ये स्याच्छृङ्गस्य शिखरस्य च ॥ ५१ ॥

एकभागोच्छ्रितं तच्च मञ्जर्यास्त्विह विस्तृतिः ।
गर्भ[6]भित्तिसमा कार्या सप्तभागा समुच्छ्रितिः ॥ ५२ ॥

ऊर्ध्वं द्वितीयशृङ्गस्य पूर्ववन्मूलमञ्जरी ।
अण्डकाद्यं यथोक्तं स्यात् सौभाग्योऽयं प्रकीर्तितः ॥ ५३ ॥

सौभाग्यः ॥

विधीयते यदास्यैव विना भद्रमलिन्दकः ।
तदा विभङ्गको नाम प्रासादः स्यात् सुशोभनः ॥ ५४ ॥

विभङ्गकः ॥

यदि भद्रस्य निष्कासः क्रियतेऽस्य तदा पुनः ।
प्रासादो विभवो नाम जायते परमोत्तमः ॥ ५५ ॥

विभवः[7] ॥

---

१ द. कां । २ द. सु । ३ द. णः । ४ द. की । ५ द. ङ्गं । ६ द. गर्भे । ७ द. प्रतौ नास्ति ।

भागद्वयविनिष्क्रान्ता नन्दिका[1] क्रियते यदि ।
तदा वदन्ति बीभत्ससंज्ञं प्रासादमुत्तमम् ॥ ५६ ॥

बीभत्सः[2] ॥

यदा निर्गमविस्तार[3]समा भवति नन्दिका ।
श्रीतुङ्ग इति विज्ञेयस्तदा प्रासादसत्तमः ॥ ५७ ॥

श्रीतुङ्गः ॥

यदा त्वलिन्दकोऽस्यैव क्रियते न विनिर्गतः ।
प्रासादो मानतुङ्गाख्यस्तदानीमुपजायते ॥ ५८ ॥

मानतुङ्गः[4] ॥

ब्रूमोऽथ सर्वतोभद्रं दशधा तं विभाजयेत् ।
षड्विधान्त्या (विंशत्या) भवेज्ज्येष्ठः कनीयान् दशभिः करैः ॥५९॥
हस्तैस्तथाष्टादशभिर्मध्यमः परिकीर्तितः ।
कर्णा द्विभागिकाः कार्या अलिन्दाः षट्पदोन्मिता[5]ः ॥ ६० ॥
चतुर्भागानि भद्राणि वि( द्वि ) भागस्तद्विनिर्गमः ।
गर्भभित्तिर्बहिर्भित्तिरन्धारी च पदं पदम् ॥ ६१ ॥
गर्भस्तु षोडशपद इत्येवं छन्द ईरितः ।
विस्तारार्धेन जङ्घा स्यान्मेखला चैकभागिका ॥ ६२ ॥
प्रथमं कल्पयेच्छृङ्गं विस्तारात् सार्धमुच्छ्रितम् ।
द्वितीयश्रृङ्गं तत्राल्पं पूर्वश्रृङ्गस्य मध्यग[6]म् ॥ ६३ ॥
प्राच्छ्रिता षडायाम्या सुरःशिखमिष्यते (?) ।
कर्तव्यं मूलशिखरं तद्वचोपरिश्रृङ्गयोः ॥ ६४ ॥
मञ्जर्या विभजेद् भागं विस्तारं दशधा बुधः ।
स्कन्धः षड्भागविस्तारो घनुर्ग्रीवाण्डकादिकम् ॥ ६५ ॥
श्रीवत्सस्येव तत् कार्यं मञ्जरी भागमानतः ।
क्रमार्धं वा पञ्चसिंह + + रूपैर्विभूषिता ॥ ६६ ॥

१ द. नांदिकी । २ द. त्सं । ३ द. रा । ४ इत उत्तरं 'सौभाग्यादिषट्कम्' इति पदमादर्शे लुप्तमिति पूर्वोत्तरप्रक्रमाद् विज्ञायते । ५ द. सिंताः । ६ द. मं ।

इत्युक्तः सर्वतोभद्रः + + कल्याणकारकः ।

सर्वतोभद्रः[1] ॥

अलिन्दशोभितं भद्रं यदास्यैव विधीयते ॥ ६७ ॥
तदा बाह्योदरो नाम प्रासादप्रवरो भवेत् ।

बाह्योदरः ॥

यद्यलिन्दो न भवति भद्रमेकं तु निर्गतम्[2] ॥ ६८ ॥
स्यान्निर्यूहोदरो[3] नाम प्रासादप्रवरस्तदा ।

निर्यूहोदरः[4] ॥

यदा न तत्र भद्रं स्यान्नन्दिकानिर्गमो भवेत् ॥ ६९ ॥
भद्रकोशं[5] तदा [6]विद्यात् षष्ठं प्रासादमुत्तमम् ।

[7]भद्रकोशः ॥

सर्वतोभद्रषट्कम् ।

चित्रकूटमथ ब्रूमस्तं भजेदष्टभिः पदैः ॥ ७० ॥
कुर्यात् करेभ्योऽ[8]ष्टाभ्यस्तं यावत् स्याद्धस्तविंशतिः ।
कर्णभागिकविस्ताराः शेषालिन्दति[10]विस्तृतिः (?) ॥ ७१ ॥

भद्रं चतुष्पदं [11]विद्याद् भागेनैकेन निर्गतम् ।
भागेन निर्गतोऽलिन्दो भित्त्यन्धार्यः पदं पदम् ॥ ७२ ॥

द्विपदोऽस्य भवेद् गर्भ( स्तलच्छत्ति स[12]मंशिख ? )मिष्यते ।
अण्डकं भागिकं कार्यं क्रमाच्च[13] क्रमसंवृता ॥ ७३ ॥

ऊर्ध्वं द्वितीयशृङ्गस्य कर्तव्या मूलमञ्जरी ।
सप्तभागोदया प्राग्वद् भागषट्कं तथायता[14] ॥ ७४ ॥

प्रासादमीदृशं कुर्याच्चित्रकूटं प्रमाणतः ।

चित्रकूटः ॥

( भद्रा[15]र्गवविनिष्क्रा[16] ? ) तस्यैव यदा भवेत् ॥ ७५ ॥

---

१ द. प्रतौ नास्ति । २ द. र्ति । ३ द. गूह । ४ द. प्रतौ नास्ति । ५ द. द्रं । ६ द. विं । ७ समोदरनन्दिभद्रयोर्लक्षणं च्युतम् । ८ द. कः । ९ द. भ्योष्टभ्यस्तंभस्यांद्धस्तविंशतिः । १० द. क । ११ द. विं॰ । १२ द. मं । १३ द. ॰श्च क्रमसंयुताः । १४ द. तः । १५ द. म । १६ द. क्रां ।

प्रासादो विमलो नाम तदानीमुपजायते ।

विमलः ॥

अलिन्दस्तु यदास्यैव भद्रहीनो विधीयते ॥ ७६ ॥
तदानीं हर्षणो नाम प्रासादः स विजायते ।

हर्षणः[1] ॥

क्रियते तु यदास्यैव कूर्परं भागनिर्गमम्[2] ॥ ७७ ॥
तदानीं भद्रसंकीर्णः प्रासादो जायते शुभः ।

[3]भद्रसंकीर्णः ॥

अस्यैव तु यदा भद्रं भागेनैकेन निर्गतम् ॥ ७८ ॥
भवेत् तदानीं प्रासादो नाम्ना भद्रविशालकः ।

भद्रविशालकः[4] ॥

[5]+++ भद्रैश्च विना यदा त्वेष विधीयते ॥ ७९ ॥
तदानीं भद्रविष्कम्भः प्रासादः स्यात् सुखप्रदः[6] ।

भद्रविष्कम्भः ॥

चित्रकूटादिषट्कम् ।

चतुरश्रे समे क्षेत्रे विभक्तेऽष्टभिरष्टकैः ॥ ८० ॥
प्रासादं ([7]चयेद्वा ?) उज्जयन्तं सुशोभनम् ।
पदमेकं भवेत् कर्णस्तिलकन्ता[8]वदेव च ॥ ८१ ॥
सभित्तिगर्भमानेन भद्रं कुर्याद् विचक्षणः ।
बाह्यभित्तिर्भवेद् भागं भागमेकं प्रदक्षिणा ॥ ८२ ॥
भागिका गर्भभित्तिश्च गर्भमध्ये[9] चतुष्पदम् ।
पञ्चभागोन्मिता जङ्घा भागं तत्रैव मेखला ॥ ८३ ॥
कर्तव्यं भागिकं श्रृङ्गं[10]मण्डकं चार्धभागिकम् ।
द्वितीयं साण्डकं श्रृङ्गं तत्समं पदमध्यगम् ॥ ८४ ॥

१ द. प्रतौ नास्ति । २ द. र्गमं । ३ द. प्रतौ नास्ति । ४ द. प्रतौ नास्ति । ५ द. भद्रैरलिंदैश्च । ६ द. दाः । ७ मु. पु. 'रचयेद् विद्वान्' इति पाठ्यं भाति । द. चयेद्वा तु । ८ द. स्ता । ९ द. ॰ध्यं । १० द. ङ्गं ।

मल्लच्छाद्यं विधातव्यमुत्सेधेनार्धभागिकम् ।
पदोत्सेधं च शिखरं गर्भभित्तिसमं भवेत् ॥ ८५ ॥
भागिकः कलशः कार्यो ध्वजशं[1]+स्य तत्समः ।
एतस्य मूलशिखरं कुर्यात् षड्भागविस्तृतम् ॥ ८६ ॥
भागाधिकसमुत्सेधं कार्यं कल्याणमिच्छता ।
ऊर्ध्वं तिलकशृङ्गस्य शिखरं स्यात् [2]पदोच्छ्रितम् ॥ ८७ ॥
[3]पञ्चाशद्विस्तृतं(?) शेषं श्रीवत्सस्येव कारयेत् ।
इत्येष कथितः सम्यगुज्जयन्तोऽभिधानतः ॥ ८८ ॥
कार्योऽयं [4]सर्वदेवस्य प्रासादः शुभलक्षणः ।

उज्जयन्तः ॥

चित्रकूटा(द्) यथोत्पन्नाः प्रासादा विमलादयः ॥ ८९ ॥
उज्जयन्तात् तथा पञ्च मेरुप्रभृतयो मताः ।
मेरुश्च मन्दरश्चैव कैलासः कुम्भ एव च ॥ ९० ॥
गृहराज इति प्रोक्ताः प्रासादास्ते [5]सुलक्षणाः ।
अष्टोत्तरमिहोद्दिष्टं प्रासादानां शतं बुधैः ॥ ९१ ॥
ज्येष्ठमध्यकनिष्ठानां साधाराणां तथैव च ।
तेष्वलिन्दैर्युताः केचिद् भद्रैः केचिच्च वेष्टिताः ॥ ९२ ॥
केचिद् वर्णसमाः कार्याः प्रासादाः सर्वशोभनाः ।
सर्वेऽप्येते विधातव्या (रि[6]र्जं ?)भागप्रतिष्ठिताः ॥ ९३ ॥
[7]कोणा न विषमाः कार्या वर्गभेदश्च नेष्यते ।
एकहस्ता द्विहस्ता ++++ ये प्रकीर्तिताः ॥ ९४ ॥
यक्षनारागृहादीनां(?) रक्षसां च भवन्ति ते ।
भागेन (धूमः स्वतु ?) त्रेधा विनिर्दिशेत् ॥ ९५ ॥
ज्येष्ठं मध्यं कनीयश्च ज्ञेयं तच्चांशमानतः ।
ज्येष्ठं सार्धत्रिहस्तं स्यात् त्रिहस्तं मध्यमं विदुः ॥ ९६ ॥

१ द. ध्वजवंशश्च त°। २ द. पट्ट। ३ मु. पुस्तके 'पञ्चांशविस्तृतम्' इति स्यात्। ४ द. सर्वदैव स्यात् प्रा°। ५ द. सु। ६ द. रिजुतामप्र°। ७ क्ष।

सार्धहस्तद्वयमितं कनीयस्तद् विधीयते ।
त्रिहस्तं ज्येष्ठमपरं मध्यं हस्तसमन्वितम् ॥ ९७ ॥

अर्धहस्तं कनीयश्च मानं भागस्य कीर्तितम् ।
ज्येष्ठो भागो द्विहस्तः स्यात् पादोनं मध्यमः करम् ॥ ९८ ॥

कनीयान् मध्यमार्धेन भागमानमिदं करैः ।
षडन्वितास्त्रिंशदमी विचित्राः
श्रीकूटका( ख्यातिँथिता ग्रवात् ? ) ।
प्रासादमुख्या इह षर्ट्कप्रभेदा
भिन्ना +++ सह मण्डपैश्च ॥ ९९ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
श्रीकूटादिषट्त्रिंशत्प्रासादलक्षणं नाम षष्टितमोऽध्यायः ॥

## अथ पीठपञ्चकलक्षणं नामैकषष्टितमोऽध्यायः ।

इदानीं द्राविडान् ब्रूमः प्रासादाञ् शुभलक्षणान् ।
एकभूम्यादयस्ते स्युर्यावद् द्वादशभूमिकाः ॥ १ ॥

पीठान्यपि च कथ्यन्ते तेषां पञ्चैव लक्षणैः ।
तलच्छन्दाश्च पञ्चैव तेषां ये शुभलक्षणाः ॥ २ ॥

पीठमाद्यं भवेत् तेषु पादबन्धनमुत्तमम् ।
स्त्री( श्री )बन्धाख्यं द्वितीयं च तृतीयं वेदिबन्धनम् ॥ ३ ॥

प्रतिक्रममिति प्रोक्तं चतुर्थं पीठमुत्तमम् ।
पञ्चमं पीठमुद्दिष्टं नाम्ना क्षुरकबन्धनम् ॥ ४ ॥

एतानि पञ्च पीठानि प्रोक्तानीह समासतः ।
उत्सेधं भागविंशत्या विभजेत् पादबन्धने ॥ ५ ॥

१ द. र्धं । २ द. मध्यमह° । ३ द. °क° । मुद्रित पुस्तके 'याः कथिता यथावद्' इति स्यात् । ४ द. ट्क । ५ द. पुस्तके 'प्रासादलक्षणं' इत्ययं पाठः नास्ति । ६ द. कः ।

खुरकः पञ्चभागः स्याद्( [1]द्वौ )भागौ पद्मपत्रिका ।
भागिकी कर्णिका कार्या त्रिभागं कुमुदं भवेत् ॥ ६ ॥
कण्ठस्तु भागेनैकेन कण + श्च द्विभागिकः ।
पट्टिका भागमेकं स्याद् भागिकी पद्मपट्टिका ॥ ७ ॥
त्रिभागिकं कपोतं च कुर्यान्नासिकया सह ।
भागमेकं भवेच्छेद(ः)पादबन्धाख्यपीठके ॥ ८ ॥
पद्मपत्र्याः प्रवेशः स्यात् खुरकादङ्गुलद्वयम् ।
ग्रासः षडङ्गुलस्तस्याः[2] कुमुदं सप्तनिर्गमम् ॥ ९ ॥
प्रवेशमानं तावत् स्याद् यावद्वि( द्वि )च्छेदपट्टिका ।
षडङ्गुलप्रवेशं[3] च च्छेदपट्टस्य कारयेत् ॥ १० ॥
समस्तै[4]त्रं(?) विधातव्यं छेदस्य कर्णिकस्य च ।
निर्गमेण पुनस्तस्माद् द्व्यङ्गुला कण्ठपट्टिका ॥ ११ ॥
अङ्गुलत्रितयं तस्याः पद्मपत्रीविनिर्गमैः ।
( [5]कापोत्तस्य ++++ तस्या ? )स्यादङ्गुलत्रयम् ॥ १२ ॥
पट्टिकानां ( स[6]मसूत्रच्छेदानां च [7]संष्ठिथः ? ) ।
पादबन्धोऽयमाख्यातः श्रीबन्धः कथ्यतेऽधुना ॥ १३ ॥
[8]पीठच्छेदस्य मानं तु स[9]प्तविंशतिधा भजेत् ।
( [10]तीडवर्तिचतुर्भाग ? ) द्विभागा पद्मपत्रिका ॥ १४ ॥
कर्णिकां भागिकां कुर्यात् त्रिभागं कुमुदं ततः ।
छेदमेकं पदं [11]विद्याद् भागं ( मेडथरार्थं ? ) तथा ॥ १५ ॥
मकरं भागमेकं च भागं मकरपट्टिकाम् ।
छेदमेकं पदं विद्यात् कण्ठमेकं पदं तथा ॥ १६ ॥
पट्टिकां भागमेकं च वेदी[12] भागं ततः परा[13] ।
छेदमेकपदं कुर्यात् ततः कण्ठं द्विभागिकम् ॥ १७ ॥

१ द. द्वि । २ द. स्य । ३ द. सू° । ४ द. माः । ५ द. अंगुलकपोतस्य । ६ द. मं । ७ द. समंष्ठिथः । ८ द. पीठस्थ्यो यस्य मा° । ९ द. प्ता । १० द. पी । ११ द. विं । १२ द. दीं । १३ द. रं ।

पट्टिका भागमेकं च +++ पद्मपत्रिका[1] ।
कपोतं नालिकायुक्तं विदधीत पदत्रयम् ॥ १८ ॥
छेदं च भागिकं कुर्यात् पीठे[2] श्रीबन्धनामनि ।
श्रीबन्धोऽयं समाख्यातो वेदीबन्धोऽथ कथ्यते ॥ १९ ॥
भागैरेकान्न[3]विंशत्या ([4]पीठस्याच्छोर्तिं ?) भजेत् ।
नीडवर्तिश्चतुर्भागा [5]द्विभागा पद्मपत्रिका ॥ २० ॥
कणिकां पदिकां [6]विद्यात् कुमुदं त्रिपदं तथा ।
कुर्वीत पदिकं छेदं तद्वन्मेण्ठ[7]स्तरं(?) बुधः ॥ २१ ॥
भागेनैकेन मकरं तथा मकरपट्टिकाम् ।
छेदं पदं[8] ++ कण्ठं भागिका[9] पद्मपत्रिका[10] ॥ २२ ॥
(कर्तव्या ?) भागिकीं[11] कुर्यात् कुमुदं च त्रिभागिकम् ।
छेदमेकपदं [12]विद्यात् ततः कण्ठं द्विभागिकम् ॥ २३ ॥
पट्टिकां भागिकीं कुर्याद् भागिकीं [13]++ पट्टिकाम् ।
द्विभागो रसनापट्टाइछादस्तु पट्टिको भवेत् (?) ॥ २४ ॥
इति प्रतिक्रमं पीठं क्षुरबन्धोऽ[14]धुनोच्यते ।
वि(भजेद्) भागविंशत्या पीठोच्छ्रायं विचक्षणः ॥ २५ ॥
नीरवर्तिश्चतुर्भागा +++ पद्मपत्रिका ।
कणिका भागमेकं स्याद् द्विभागं कुमुदं ततः ॥ २६ ॥
([15]भागं मेडथाक्षेपो ?) मकरो भागिकस्तथा ।
भागमेकं विधातव्या ततो मकरपट्टिका ॥ २७ ॥
([16]छेदा मकरपदं ?) कुर्यात् कण्ठमेकं पदं ततः ।
पट्टिकां भागिकीं विद्याद् भागिकी पद्मपत्रिका ॥ २८ ॥
कपोतं त्रिपदं कुर्यात् ततो नासिकया सह ।
छेदश्च भागिकः कार्यः क्षुरबन्धोऽयमीरितः ॥ २९ ॥

---

१ द. पद्मपत्रप° । २ द. ठं । ३ द. नु । ४ मुद्रित पुस्तके 'पीठकस्योच्छ्रितिम्' इति स्यात्; द. पीठस्यास्योच्छ्रृतं । ५ द. विभा° । ६ द. विं । ७ द. ण्ढ । ८ द. पदं । ९ द. कीं । १० द. कां । ११ द. कां । १२ द. विं । १३ द. पद्म । १४ द. स्तु । १५ द. भागामडधरोक्षेपो । १६ मु. पु. 'छेदमेकं पदं' इति स्यात् ।

पीठ[1]पञ्चकमित्युक्तं सूत्रि[2]तं पूर्वमेव यत्।
पीठादूर्ध्वं तु विज्ञेया प्राज्ञैः खुरवरण्डिका ॥ ३० ॥
सन्ति चान्यानि पीठानि लक्ष्[3]मभेदादनेकधा।
तेषां मध्ये प्रकृष्टत्वादेतत् पञ्चकमीरितम् ॥ ३१ ॥
प्रासादानथ वक्ष्यामस्तलच्छन्दादनन्तरम्।
तत्र पद्मो महापद्मो वर्[4]धमानस्तथापरः ॥ ३२ ॥
स्वस्तिकः सर्वतोभद्रः प्रासादाः पञ्च कीर्तिताः।
चतुरश्रीकृते क्षेत्रे कर्णसूत्रं प्रसारयेत् ॥ ३३ ॥
कर्णस्यार्धं ततः कृत्वा (गर्भाद्दक्?) बहिर्नयेत्।
तदग्रयोः सूत्रपातात् स्यादन्यच्चतुरश्रकम् ॥ ३४ ॥
[5]कूटं कुर्याद् द्विभागेन ([6]समस्तत्राद्?) विचक्षणः।
सूकराननसंस्थानं कुर्वीत सलिलान्तरम् ॥ ३५ ॥
एवं सर्वेषु कूटेषु सलिलान्तरमिष्यते।
यदायतं भवेत् सूत्रं[7]चतुर्भागविभाजिते ॥ ३६ ॥
गर्भो द्विभागिकस्तेन भागिका[8] भित्तिरुच्यते।
गर्भकर्णार्धमादाय कोणास्तं(न्तं)लाञ्छयेत् पुनः ॥ ३७ ॥
अष्टसु ++ म[9]ध्ये स्यादेवं ++++ बहिः।
एवं पद्मतलच्छन्दो विधातव्यो विचक्षणैः ॥ ३८ ॥
महापद्मतलच्छन्दमधुना सम्प्रचक्ष्महे।
पूर्वं यः कीर्तितश्छन्दः (सम्पाता सूत्रयेकृताः?) ॥ ३९ ॥
[10]तेषु संपादयेद् ++++ दिग्विदिगन्तरे।
कर्णार्धं दापयेत् तत्र बाह्यभागविनिर्मि[11]तं(गतम्) ॥ ४० ॥
([12]णंडीग्रय्यो?)र्दिशोर्मध्ये लाञ्छनं यद् व्यवस्थितम्।
नैरृतीयाम्ययोर्मध्ये तस्मात् त[13]त्र प्रसारयेत् ॥ ४१ ॥

---

१ द. पीठ कंचपंकप°। २ द. चि। ३ द. क्ष्य। ४ द. र्ध। ५ द. कूटं कुर्याद्यम्यंगेन समसूत्राद्वि°। ६ मुद्रित पुस्तके 'समसूत्रादि 'ति स्यात्। ७ द. त्रं। ८ द. की। ९ द. मध्यमे। १० द. तेषु संपातये द्वे खे द्वे द्वे ग्विदिमं (गं)तरे। ११ द. तां। १२ द. ऐंद्राग्नेयो द्विशोमध्ये; मुद्रित पुस्तके 'ऐन्द्राग्नेय्यो' इति पाठः स्यात्। १३ द. सूत्रं।

नैर्ऋतीयाम्ययोर्मध्याद् वाय्वम्बुपदिगन्तरौ( रे ) ।
वाय्वम्बुपदिशोर्मध्यादीशसोमदिगन्तरे[1] ॥ ४२ ॥
तृतीयां ++++++ कूटस्य जलान्तरम् ।
कूटयोरुभयोर्मध्ये सूक[2]राननसन्नि[3]भम् ॥ ४३ ॥
महापद्मतलच्छन्दः प्रोक्तोऽयं राजपूजितः ।
इदानीं वर्धमानस्य तलच्छन्दोऽभिधीयते ॥ ४४ ॥
चतुरश्रं भ[4]जेत् पञ्चदशधा क्षेत्रमादितः ।
कू[5]टं द्विभागिकं +++++ सलिलान्तरम् ॥ ४५ ॥
पञ्जरं सार्ध[6] +++ भागिकं सलिलान्तरम् ।
चतुर्भागा[7] भवेच्छाला ( द्विविदध्या वं पञ्जरे मः ? ) ॥ ४६ ॥
अर्धभागं प्रवे[8]शस्तु शालास( स्व )[9]त्रं जलाध( ध्व )नः ।
अष्टाङ्गुलविनिष्क्रान्ते बाह्यतः शुभदर्[10]शने ॥ ४७ ॥
भागपादं प्रवेशः स्यात् पञ्जरान्तज( र्ज )लाध्व[11]नः ।
अर्धभागं प्रवेशस्तु ++++++++ ॥ ४८ ॥
जलान्तरं तृतीयं च कर्तव्यं भागसम्मितम् ।
अनन्तरं प्रकुर्वीत पञ्जरं सार्धभागिकम् ॥ ४९ ॥
[12]भागमेकं तलच्छन्दो य[13]थावदभिधीयते ।
चतुरश्रं समं क्षेत्रमष्टाविंशतिधा भजेत् ॥ ५० ॥
कुर्यात् कूटं चतुर्भागं +++ सलिलान्तरम् ।
त्रिभागं पञ्जरं तद्वद् द्विभागं सलिलान्तरम् ॥ ५१ ॥
शालां षड्भागिकीं कुर्याज्जलमार्गं द्विभागिकम् ।
त्रिभागं पञ्जरं भूयश्चन्द्रशालाविभूषितम् ॥ ५२ ॥
पुनर्द्विभागिकं कुर्याच्चतुर्थं सलिलान्तरम् ।
विदधीत चतुर्भागं रथकं च[14] सुशोभनम् ॥ ५३ ॥

१ द. इतःपरं 'ईद्दशो मध्यादिंद्रवह्निदिगंतरे ।' इत्यधिक पाठः । २ द. को । ३ द. भां । ४ द. त्य । ५ द. क्षेत्रं । ६ द. भागं च । ७ द. गां । ८ द. च । ९ द. दे । १० द. त्र । ११ द. धनः । १२ वर्धमानतलच्छन्दलक्षणापरिसमाप्तावेव छन्दान्तरस्य लक्षणोपक्रमादादर्शे ग्रन्थपातोऽनुमीयते । मुद्रित पुस्तके पाठः । १३ द. दा । १४ द. वस्तु ।

एवं दिक्षु समस्तासु समैर्भागैः प्रकल्पयेत् ।
चतुर्भागे ततः क्षेत्रे गर्भं कुर्याद् द्विभागिकम् ॥ ७४ ॥
स्वस्तिके[1] वर्धमाने च भागिक्यो भित्तयः स्मृताः ।
स्वस्तिकोऽयं तलच्छन्दः कथितोऽतिमनोहरः ॥ ७५ ॥
इदानीं सर्वतोभद्रतलच्छन्दोऽभिधीयते ।
चतुरश्रीकृते क्षेत्रे गर्भं कुर्याद् द्विभागिकम् ॥ ७६ ॥
कुर्यात् त्रिभागिकं कूटं जलमार्गं द्विभागिकम् ।
त्रिभागिकं ततः कूटं तोयमार्गं द्विभागिकम् ॥ ७७ ॥
शालाष्टभागिकी कुर्याज्जलव(र्त्म)द्विभागिकम् ।
भूयस्त्रिभागिकं कूटं द्विभागं सलिलान्तरम् ॥ ७८ ॥
त्रिभागिकी[4] च रथिका[5] भवेद् दिक्षु (चतुर्दश[6]?) ।
चतुरश्रीकृते(तं)क्षेत्रे(त्रम्) अष्टाविंशतिधा भजेत्[7] ॥ ७९ ॥
कुर्यात् त्रिभागिकं कूटं चतुर्धा प्रविभाजिते ।
भागिक्यो भित्तयः कार्यास्तथा गर्भो द्विभागिकः ॥ ८० ॥
इत्येष सर्वतोभद्रस्तलच्छन्दो विधीयते ।
एते प्रोक्ता निरन्धाराः सान्धारांस्तु प्रचक्ष्महे[9] ॥ ८१ ॥
चतुरश्रीकृतं क्षेत्रं भजेद् द्वादशभिः पदैः ।
चतुर्भागो भवेद् गर्भो भागिक्यो भित्तयः स्मृताः ॥ ८२ ॥
भागिकान्धारिका तद्वद् द्विभागा बाह्यभित्तयः ।
एवमेते तलच्छन्दाः पद्माद्याः[10] परिकीर्तिताः ॥ ८३ ॥
पीठान्युक्तान्येवमेतानि पञ्च
प्रासादानां नामभिर्लक्षणैश्च ।
पञ्च प्रोक्ता ये तलच्छन्दभेदा-
स्तैर्विज्ञातैः पूज्यतामेति लोके ॥ ८४ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे

पीठपञ्चकाध्यायो नामैकषष्टितमोऽध्यायः ॥

---

१ द. 'कैर्व'। २ द. मू। ३ द. कां। ४ द. कीं। ५ द. कां। ६ द. र्दिशं। ७ द. भवेत्। ८ द. रा। ९ द. 'क्ष्यहे। १० द. याः।

## अथ द्राविडप्रासादलक्षणं नाम द्विषष्टितमोऽध्यायः।

ऊर्ध्वमानमथ ब्रूमो घण्टान्तपुरपादितः (?)।
प्रमाणं कर्णमानेन सर्वेषामेव धारयेत् ॥ १ ॥

तत्रैकभूमि(कः[2]) कार्यो हस्तपञ्चकविस्तृतः।
अङ्गुलद्वितयोपेतः(?) सप्तहस्तसमुच्छ्रितः ॥ २ ॥

पादो द्विहस्त उत्सेधात् सर्वालङ्कारभूषितः।
सार्धहस्तसमुत्सेध(स्तावन्मानः[4] स्तरावधि[5] ?) ॥ ३ ॥

माला तु द्विस्तरा प्रोक्ता स्तरो लशुनकं भवेत्।
भरणं स्तरमेकं स्याद् भरणार्धं स्तरद्वयम् ॥ ४ ॥

कलशाद्युत्तरं ज्ञेयो वाररायासमन्वितः (?)।
द्विस्तरं कुलकं कुर्यात् पद्मपत्रसमन्वितम् ॥ ५ ॥

वीरगन्द्रां(?) पुनः कुर्यात् स्तरमेकं तदूर्ध्वतः।
द्विस्तरं हीरकं प्रोक्तं पट्टश्चैव तथाविधः ॥ ६ ।

पट्टिका स्तरमेकं स्याद् वसन्तं द्विस्तरं विदुः।
वसन्तपट्टिका चोर्ध्वं स्तरमेकं विधीयते ॥ ७ ॥

कपोतं नासिकायुक्तं विदधीत स्तरत्रयम्।
[11]+ दन्तरं प्रकुर्वीत मेटमेकस्तवंस्ततं[13] (?) ॥ ८ ॥

स्तरप्रमाणं मकरं तद्वन्मकरपट्टिकाम्।
पुनश्छेदं स्तरं कुर्याद् वेदीबन्धस्ततः स्तरम् ॥ ९ ॥

छेदः स्तरप्रमाणश्च कण्ठः स्याद् द्विस्तरं ततः।
पट्टिका स्तरमेकं तु तद्वचाम्बुजपट्टिका ॥ १० ॥

मालादिपद्मपत्रान्तं द्विहस्तोत्सेधमीरितम्।
सार्धहस्तः समुत्सेधः कूटस्य परिकीर्तितः ॥ ११ ॥

---

१ द. खु। २ द. °का कार्या ह°। ३ द. हास। ४ द. नो। ५ द. धिः। ६ द. थ। ७ द. रा। ८ द. त्त। ९ द. वी। १० द. ङ। ११ द. छे। १२ द. ढ। १३ तरं; मुद्रित पुस्तके तु 'तदन्तरे प्रकुर्वीत मेउमेकं स्तरं ततः' इति स्यात्। १४ द. तद्वाचा।

नासिकापद्मसंयुक्तं तदूर्ध्वं कलशो भवेत् ।
एकभूमेरिदं मानं प्रासादस्य प्रकीर्तितम् ॥ १२ ॥

[illegible] ॥

द्विभूमि[illegible] प्रासादस्याभिधीयते ।
सप्तहस्तसमविस्ता +++++ [illegible] ॥ १३ ॥
[illegible] ।
द्विहस्तं कल्पयेद् बीजं जङ्घां सार्धद्वि[illegible] ॥ १४ ॥
कूटस्य [illegible] सभागिकः ।
जङ्घा द्वितीया तु पुनः [illegible] तस्य भागिका ॥ १५ ॥
[illegible] स्यात् कूटस्यार्ध[illegible] ।
([4]दिद्किकव्यस्थ ?) कर्तव्या सह कण्ठेन भागिकः ॥ १६ ॥
तस्योपरिष्टाद् घण्टा च [illegible] ।
नासि[illegible] विभातव्या [illegible] ॥ १७ ॥
पीठानां [illegible] ।
पद्मानां [illegible] ++ [illegible] कर्मात् ॥ १८ ॥
तेषां शोभावहं यत् स्यात् तत् कर्तव्यं [illegible] ।
त[7]स्योपरि भवेज्जङ्घा मालाल ++ संयुता ॥ १९ ॥
भरणं [illegible] द्वा([8]वी)रगण्ड[illegible] ।
उच्छालं पूर्वमानेन [illegible] ततः (?) ॥ २० ॥
वीरगण्डः पुनः कार्यो हीरं पूर्व[illegible] च ।
तस्योपरिष्टात् पट्टश्च भवेत् [illegible] सह ॥ २१ ॥
( [illegible]र्ध्वं तत ? )[illegible] पट्टिका ।
ततः कपोतच्छेदश्च ( मेढकर एव च ? ) ॥ २२ ॥
पट्टिका ( [10]मकरोष्या च भेद ? )[illegible]ऽथ पट्टिका ।
वेदीच्छेदश्च कण्ठश्च पट्टिका [illegible] ॥ २३ ॥

---

१ द. सि । २ द. ह्रां । ३ द. क्तः । ४ द. वेदिका व्य । ५ द. व । ६ द. नाः । ७ द. य । ८ द. वा । ९ द. त्र । १० द. मकराख्या च छेदः; मुद्रित पुस्तके ' मकराख्या च वेदी ' इति स्यात् ।

कूटं तदूर्ध्वं कुर्वीत विचित्रं नासिकान्वितम् ।
छेदान्तं पूर्वमानेन सर्वमेतद् विधीयते ॥ २४ ॥

तस्योपरि पुनर्जङ्घा सर्वाभरणभूषिता ।
ततो मालाथ ( ल )शुनं तोरणं[1] कलशास्ततः ॥ २५ ॥

वीरगण्डस्ततो( थो )च्छालं पत्रकं वीरगण्डकः ।
हीरकं पट्टिका तद्वद्वसन्तपट्टिका पुनः ॥ २६ ॥

कपोतच्छेदं[2]मेढाश्च ( मकरो[3]ऽस्य ? ) च पट्टिका ।
छेदः करपट्टिका च (?) वेदीच्छेदोऽथ कण्ठकः ॥ २७ ॥

पट्टिका पद्मपूर्वा च कर्तव्या पट्टिका ++ ।
ततश्छेदो विधातव्यः सर्वैराभरणैर्युतः ॥ २८ ॥

ततश्छित्त्वा तथा कार्यं यथा शोभा प्रजायते ।
पुनः कण्ठ्यं(?) प्रदातव्यः पट्टिका पद्मपट्टिका ॥ २९ ॥

ततः कण्ठं विधातव्यं चन्द्रमालाविभूषितम् (?) ।
प्रकुर्वीत ततश्छेदमुपरिष्टाद् विचक्षणः ॥ ३० ॥

कण्ठपट्टिकया युक्तं तदूर्ध्वं कण्ठपट्टिकाम् ।
सप्ताङ्गुलानि कर्तव्यस्ततो घण्टाविनिर्गमः ॥ ३१ ॥

भागार्धं विस्तृतिस्तस्या विस्तारार्धं समुच्छ्रितिः ।
एवं द्विभूमिकं प्राज्ञः प्रासादं परिकल्पयेत् ॥ ३२ ॥

द्विभूमिकः[4] ॥

त्रिभूमिकस्तृतीयोऽथ प्रासादोऽस्माभिरुच्यते ।
तस्यैकादश विस्तारो[5] हस्ताः पञ्चदशोच्छ्रयः[6] ॥ ३३ ॥

चतुर्दशाङ्गुलान्येषां भवेदस्याधिकापि( नि ) च ।
+++ भूमिकस्यैतत् कर्णमानमसंशयम् ॥ ३४ ॥

पीठं द्विहस्तं कुर्वीत तत्रादौ पूर्वसूचितम् ।
जङ्घां त्रिभागिकोत्सेधां कूटोच्छ्रायं तु भागिकम् ॥ ३५ ॥

---

१ द. भ । २ द. °दं मेढांश्च । ३ मुद्रित पुस्तके 'मकराख्या' इति स्यात् । ४ द. भूमिकः । ५ द. रा । ६ द. च्छ्रिताः ।

भवेज्जङ्घा तृतीया[1] च सार्धभागद्वयं ततः ।
भागं च कूटप्रस्तरश्चन्द्रशाला[2]विभूषितः ॥ ३६ ॥

पुनस्तृतीया जङ्घा ( स्याद् भाग )द्वय( स )मुच्छ्रिता ।
ततश्च( शो ? )कू( ट )प्रस्तारो भागिको भूषणान्वितः ॥ ३७ ॥

भागं स्याद् वेदिबन्धः + सगुणद्वारकण्ठकः ।
चतुर्द( र्दि )शमसौ कार्यो भूषायुक्तो यथोचितम् ॥ ३८ ॥

घण्टाच्छेदस्तु भागौ[3] (द्वौ ) द्व्यङ्गुलद्वयसंयुतौ ।
एकादशस्तरा[4] ( कुरु ? )स्तस्योपरि विधीयते ॥ ३९ ॥

इदानीं प्रविभागोऽस्य पीठादूर्ध्वं[5] विधीयते ।
हस्तमेकं भवेज्जङ्घा( ग्रंथेपि च ? )तया समा ॥ ४० ॥

माला तु द्विस्तरा प्रोक्ता लशुनं भागिकं ततः ।
भरणं स्तरमेकं स्यात् कलशोऽपि च तत्समः[6] ॥ ४१ ॥

वीरगण्डसमायुक्तमुच्छालं द्विस्तरं ततः ।
ततस्तरं वीरगण्डो [7]++++++++ ॥ ४२ ॥

हीरकं द्विस्तरं विद्यात् स( स्त )रं वासन्तपट्टिका ।
कपोतं[8] नासिकायुक्तं त्रिस्तरं कारयेत् ततः ॥ ४३ ॥

छेदं प्रस्तप्रमाणं च मेढं च तत्सम्मितम् ( ? ) ।
स्तरं कुर्वीत मकरं तदर्धेनास्य पट्टिका[9] ॥ ४४ ॥

छेदं तथैव कुर्वीत कण्ठमेकं[10]स्तरं ततः ।
पट्टिका वेदिका चैव स्तरमेकं विधीयते ॥ ४५ ॥

छेदमर्धस्तरं [11]विद्यात् कण्ठं सार्धस्तरं ततः ।
पट्टिका स्यात् स्तरं पद्मं स्तरमेकं ततो भवेत् ॥ ४६ ॥

शेषे[12] च सुन्दरं कण्ठं विधातव्यं( ? ) विचक्षणैः ।
अनन्तरं द्वितीया च जङ्घा कार्या नवस्तरा ॥ ४७ ॥

---

१ द. द्वि । २ द. श । ३ द. °ग द्व्यङ्गुल° । ४ द. रः । ५ द. दा । ६ द. मम् । ७ द. हीरकं द्विस्तरं ततः । पट्टसूरस्ततः कार्यस्तरमेकं च पट्टिका । वसन्त द्विस्तरं विघात्सरं वासन्तपट्टिकां । ८ द. ता । ९ द. कां । १० द. कं । ११ द. विं । १२ द. पं ।

मध्ये च सा प्रकर्तव्या तदूर्ध्वं तां विभाजयेत् ।
ततस्तरं भवेच्छाला स्तरार्धं लशुनं ततः ॥ ४८ ॥
तथैव भरणं ज्ञेयं पूर्वनिर्दिष्टलक्षणम् ।
वीरगण्डेन सहितः कलशोऽपि तथा भवेत् ॥ ४९ ॥
पद्मपत्रिकया युक्तं स्तरमुच्छालकं विदुः ।
वीरगण्डं[1] स्तरं विद्यादर्धभागं च हीरकम् ॥ ५० ॥
पट्टं तथैव कुर्वीत स्तरस्यार्धेन पट्टिका ।
वसन्तः स्तरमेकं स्याद् स्तरं वासन्तपट्टिका ॥ ५१ ॥
कपोतं त्रिस्तरं कुर्यात्कालिकासहितं बुधः ।
छेदमर्धस्तरं विद्यान्मेण्डं तत्तुल्यमेव च ॥ ५२ ॥
मकरं स्तरमेकं च भागार्धं पट्टिकां[2] ततः ।
भागमेकं[3] भवेच्छेदः स्तरं कण्ठस्तदूर्ध्वतः ॥ ५३ ॥
पट्टिका वेदिका चैव स्तरमेकं विधीयते ।
छेदं भागार्धिकं कुर्यात् कण्ठकं सार्धभागिकम् ॥ ५४ ॥
भागेन पट्टिकां कुर्यात् तथा [illegible] ।
कूटं ततः परं कुर्यात्कालिका च(सु) विभूषितम् ॥ ५५ ॥
तृतीयजङ्घामद्धा(तद्वत्) स्याच्चतुर्भिः कल्पिता स्तरैः ।
स्तरमेकं भवेन्माला स्तरं च लशुनं विदुः ॥ ५६ ॥
भरणं स्तरमेकं च [illegible] तथा ।
वीरगण्डसमोपेतमुच्छालं स्यात् तदूर्ध्वतः ॥ ५७ ॥
स्तरमेकं प्रकुर्वीत वीरगण्डस्तु(च्छ्रि)तिम् ।
ततश्च हीरकं कुर्याद् भागेनैकेन बुद्धिमान् ॥ ५८ ॥
सार्धभागेन पट्टिः[4] स्यात् पट्टिकार्धं स्तरं तथा ।
स्तरमेकं वसन्तं स्यात् स्तरं वासन्तपट्टिका ॥ ५९ ॥
कपोतो द्विस्तरश्छेदोऽर्धस्तरो मेण्ढकः स्तरः ।
भागिको मकरः कार्यः पट्टिका सार्धभागिकौ[5] ॥ ६० ॥

१ द. ण्ड। २ द. कां। ३ द. 'भागमेकं......सार्धभागिकम्' इति पाठः नास्ति। ४ द. ट्टः।
५ द. की।

( [1]भेदो ? )ऽर्धभागिको भागमेकं कण्ठः प्रकीर्तितः ।
पट्टिकावेदिका( भेदा ? )स्त्रयोऽप्यर्धस्तरं पृथक् ॥ ६१ ॥
कण्ठश्चार्धस्तरः कार्यः पीठिका चार्धभागिका ।
अर्धभागेन कर्तव्या तदूर्ध्वं पद्मपत्रिका ॥ ६२ ॥
[illegible] ततः कूटं विधीयते ।
स्तरमेकं भवेच्छेदः स्यात् कण्ठोऽप्येवमेव ( च ? ) हि ॥ ६३ ॥
पट्टिका स्तरमेकं स्यात् ततो वेदी स्तरद्वयम् ।
छेदः स्तरं भवेद् भूयः कण्ठः स्याद् द्विस्तरं[3] ततः ॥ ६४ ॥
कर्तव्ये स्तरमेकैकं पट्टिका पद्मपत्रिका[4] ।
घण्टा ततःक( प )रं कार्या मानतो विंशतिस्तरा ॥ ६५ ॥
एकादशस्तरः कुम्भः सर्वेषां सर्वतो भवेत् ।
त्रिभूमिकोऽयमाख्यातश्चतुर्भूमिकोच्यते ॥ ६६ ॥

त्रिभूमिकः ॥

हस्तान् पञ्चदश क्षेत्रं [5]विस्तारा( त्तु )त्प्रकल्पयेत् ।
उच्छ्रायेण तु हस्तानां स्यात् ( पादैकविंशतिः ? ) ॥ ६७ ॥
द्विहस्तं कारयेत् पीठं जङ्घां हस्तत्रयोच्छ्रिताम् ।
सार्धहस्तं भवेत् कूटं सर्वालङ्कारभूषितम् ॥ ६८ ॥
द्वितीयजङ्घा कर्तव्या पादहीनं करत्रयम् ।
सार्धहस्तं कुर्वीत कूटमन्यत् तदूर्ध्वतः ॥ ६९ ॥
तृतीयजङ्घा कर्तव्या सार्धं हस्तद्वयं ततः ।
ततश्च कूटप्रस्तारो हस्तमेकं विधीयते ॥ ७० ॥
जङ्घा चतुर्थी कर्तव्या सार्धहस्तद्वयं ततः ।
ततश्च कूटप्रस्तारो हस्तमेकं विधीयते ॥ ७१ ॥
जङ्घा चतुर्थी कर्तव्या सपादद्विकरोच्छ्रिता[10] ।
हस्तं च कूटप्रस्तारो वेदीबन्धस्तथाविधः ॥ ७२ ॥

---

१ द. 'भेदो ?......चार्धभागिका'। इति पाठः नास्ति। २ द. त्रं। ३ द. रस्ततः। ४ द. के। ५ द. विस्तारेण प्र°। ६ द. च्छ्र। ७ मुद्रित पुस्तके 'पादोनैकविंशतिः' इति स्यात्। ८ द. त। ९ द. 'जङ्घा......विधीयते॥' इति पाठः नास्ति। १० द. ताः।

गर्भार्धविस्तृता घण्टा कार्या हस्तत्रयोच्छ्रिता ।
चतुर्दशस्तरः कुम्भः सर्वेषामुपरि स्थितः ॥ ७३ ॥
सूचिका( ता )हस्तसङ्ख्यैषा विभागः कथ्यतेऽधुना ।
पीठं हस्तद्वयोत्सेधं जङ्घालङ्कृतिरुच्यते ॥ ७४ ॥
दशभागो [1]भवेदेकमुच्छालं द्विस्तरं ततः ।
वीरगण्डं स्तरं विद्याद् द्विस्तरं हीरकं भवेत् ॥ ७५ ॥
पट्टस्तथैव विज्ञेयो( त्सेधकी ? )पट्टिका ततः ।
वसन्तं द्विस्तरं ++++ वासन्तपट्टिका ॥ ७६ ॥
कपोतस्त्रिस्तरः कार्यो भागं छेदो विधीयते ।
मेढं स्तरं प्रकुर्वीत [2]स्तरं कण्ठस्य पट्टिका ॥ ७७ ॥
[3]कुर्वीत भागिकीं देवा( वेदीं )ततच्छे( छे )दे च भागिकम् ।
पुनः कण्ठं प्रकुर्वीत द्विस्तरं पट्टिकां ततः ॥ ७८ ॥
स्यात् पद्मपत्रिकाप्येवं घण्टा पञ्चस्तरा ततः ।
विचित्रं लक्षणोपेतं ततः कुम्भं निवेशयेत् ॥ ७९ ॥
जङ्घास्तम्भं द्वितीया( यां ) विदध्यादष्टभागिकम् ।
मालां[5] + द्विस्तरं कुर्याद् भागिकं [6]त( ल )शुनं ततः ॥ ८० ॥
भर( णं ) स्तरमेकं च कलशं तत्प्रमाणतः ।
वीरगण्डेन संयुक्तं ( [7]तावांश्चो ? )च्छालकं भवेत् ॥ ८१ ॥
द्विस्तरं तत्तु विज्ञेयं वीरगण्डः स्तरं भवेत् ।
हीरकं द्विस्तरं विद्यात् पट्टं[8] चैव तथाविधम् ॥ ८२ ॥
पट्टिका स्तरमेकं स्याद् वसन्तं द्विस्तरं ततः ।
वसन्तपट्टिकां भागं कपोतं त्रिस्तरोच्छ्रितम् ॥ ८३ ॥
कुर्वीत भागिकं ( [9]भेदं ? ) स्तरमेकं च मेढकम् ।
मकरं स्तरमेकं च तथा मकरपट्टिकाम् ॥ ८४ ॥

---

१ द. इतः पूर्वं 'भवेत् स्तंभो मालाबुद्धिस्तरा ततः । एकस्वरंस्याल्शुनं भरणं सूरमेव च ॥ कुंभस्तरं' इति अधिकः पाठः । २ द. इतः पूर्वं 'मकरं च तथाविधिं ॥ पट्टिकां स्तरमेकं च छेदं कुर्वीत भागिकं । कंठं तथैव कुर्वीत' इति अधिकः पाठः । ३ द. कुर्वीत भागिकी देवीं संध्यां ततः छेदं च भागिक्कां । ४ द. या । ५ द. ला तु । ६ द. ते । ७ द. ततो । ८ द. ट्टं । ९ द. छेद ।

भेदः स्तरं भवेत् कण्ठः स्तरं भागं च पट्टिका ।
वेदिका स्तरमेकं च च्छेदमर्धेन कारयेत् ॥ ८५ ॥
कण्ठं सार्धस्तरं कुर्यात् स्तरमेकं च पट्टिकाम् ।
आभा(अम्भो)जवत्रिकां भागं कुर्याद् घण्टां चतुःस्तराम् ॥ ८६ ॥
प्राग्ग्रीवभूषिता सा स्यात् कुम्भं कुर्यात् तदूर्ध्वतः ।
जङ्घास्तम्भस्तृतीयायां सप्तांशाश्चतुर[1]+कः ॥ ८७ ॥
ततो मालाथ लशुनं भरणं कुम्भकाण्डकौ ।
उच्छालं गण्डको हीरं प्रत्येकं स्युः स्तरं स्तरम् ॥ ८८ ॥
पद्मं सार्धस्तरं विद्याद् भागेऽर्धे पट्टिकां तथा ।
भागमेकं वसन्तः स्याद् भागं वासन्तपट्टिका ॥ ८९ ॥
कपोतं त्रिस्तरं कुर्याच्छेदमेकस्तरं ततः ।
ततश्च मे([3]ढंकं मरं ?) विदधीत स्तरं स्तरम् ॥ ९० ॥
तत्पट्टिका तु भागार्धं ([4]भेदं ?) भागार्धमेव च ।
कण्ठो वेदि पट्टिका (च) त्रीण्येतानि स्तरं स्तरम् ॥ ९१ ॥
स्तरस्यार्धं भवेच्छेदः कण्ठः सार्धस्तरं ततः ।
भागार्धं पट्टिका कार्या तावती पद्मपत्रिका ॥ ९२ ॥
चतुर्भागा भवेद् घण्टा गुणद्वारसमन्विता ।
द्विस्तरं कारयेत् कुम्भं घण्टायाः स्थितमूर्ध्वतः ॥ ९३ ॥
एवं भूमिस्तृतीयैषा चतुर्थी कथ्यतेऽधुना ।
कर्तव्या(पट्टरा ?)जङ्घा महास्तम्भसमन्विता ॥ ९४ ॥
मालाथ लशुनं तद्वद् भरणं कुम्भ एव च ।
उच्छालं गण्डकं हीरमिति प्रा[6]+पृथक् पृथक् ॥ ९५ ॥
सार्धभागं भवेत् पादः (पट्टः) पट्टिकार्धस्तरं ततः ।
वसन्तं (स्त[7]ँ)रमेकं स्यात् तत्संज्ञः[8](?) पट्टिका स्तरम् ॥ ९६ ॥
कपोतं द्विस्तरं विद्याच्छेदं चार्धस्तरं ततः ।
मेढं तथैव कुर्वीत मकरं च स्तरं बुधः ॥ ९७ ॥

१ द. र्थं । २ द. पट्टस्यार्द्ध° । ३ मु. पु. 'ढं मकरम्' इति स्यात् । ४ द. छे । ५ द. मे । ६ द. क् । ७ द. ह । ८ मु. पु. 'तत्संज्ञा' इति स्यात् । ९ द. रा ।

पट्टिकां मकराख्यां च च्छेदमेकस्तरं विदुः ।
स्तरमेकं भवेत् कण्ठः स्तरस्यार्धं च पट्टिका ॥ ९८ ॥

तथैव वेदिकां कुर्याच्छेदमर्धस्तरं पुनः ।
सार्धभागं प्रकुर्वीत कण्ठदेशं विचक्षणः ॥ ९९ ॥

पट्टिका (मद्म ?)[1]संज्ञा तु स्तरमेकं विधीयते ।
घण्टा स्तरद्वयं कार्या गुणद्वारविभूषिता ॥ १०० ॥

कुम्भं विदध्यादुपरि द्विस्तरं पङ्कजाननम् ।
भागमेकं भवेच्छेदस्ततः कण्ठः स्तरद्वयम् ॥ १०१ ॥

पट्टिका स्तरमेकं तु वेदिका तु स्तरावुभौ ।
पुनश्छेदो भवेद् भागं ++ कण्ठो विधीयते ॥ १०२ ॥

पट्टिका स्तरमेकं तु तद्वदम्भोजपत्रिका ।
स्तराणां विंशतिर्घण्टा भवेद् गर्भार्धविस्तृता ॥ १०३ ॥

चन्द्रशालाश्च कर्तव्या दर्शनीयाश्चतुर्दिशम् ।
एवं पद्मे महापद्मे स्वस्तिके वर्धमानके ॥ १०४ ॥

तथैव सर्वतोभद्रे कुर्याद् घण्टामिमां बुधः ।
कुम्भं तु पञ्चदशभिः स्तरैः कार्या(कुर्यात्) समुन्नतम् ॥ १०५ ॥

स्याच्चतुर्भूमिको ह्येवं तलच्छन्दस्तु कामतः ।

चतुर्भूमिकः[2] ॥

पञ्चभौममथ ब्रूमः प्रासादं राजपूजितम् ॥ १०६ ॥

विस्तारेण विधातव्यः स हस्त्र(स्तै[3]ता)नेकविंशतिम् ।
विभाजयेत् तथोत्सेधं पादोनत्रिंशतं[4] करान् ॥ १०७ ॥

पीठं भागद्वयं सार्धं जङ्घा (साराम्रा ?)त्रिभागिकी ।
कुर्वीत कूटप्रस्तारं[5] सार्धहस्तं च बुद्धिमान् ॥ १०८ ॥

जङ्घा द्वितीया कर्तव्या हस्तत्रितयमुच्छ्रिता ।
भूयोऽपि कूटप्रस्तारं सार्धहस्तं प्रकल्पयेत् ॥ १०९ ॥

१ मु. पु. 'पद्म' इति स्यात्। २ द. का। ३ द. स्रा। ४ द. नं। ५ द. र।

जङ्घा तृतीया कर्तव्या पादहीनं करत्रयम् ।
सार्धहस्तसमुत्सेधः कूटप्रस्तार इष्यते ॥ ११० ॥
चतुर्थभूमिजङ्घा च सार्धहस्तद्वयोच्छ्रिता ।
कूटप्रस्तारकं कुर्यात् पूर्वमानेन बुद्धिमान् ॥ १११ ॥
पञ्चम्यां भुवि कुर्वीत ( जङ्घा सा ? ) हि करद्वयम् ।
कुर्वीत कू[1]टप्रस्तारं तथा प्रागा( गु )दितो यथा ॥ ११२ ॥
कुर्याद्धस्तद्वयोत्सेधं कपोतमपि बुद्धिमान् ।
चतुर्भागसमुत्सेधा महाघण्टा विधीयते ॥ ११३ ॥
उपरिष्टाद् भवेत् तत्र[2] प्रासादे पञ्चभूमिके ।
कुम्भं तदूर्ध्वं कुर्वीत स्तरानेकोनै[3]विंशतिम् ॥ ११४ ॥
संस्थानमेतत् कर्तव्यं सर्वतोभद्रसंज्ञकौ( के ) ।
विभाजयेद् विशेषेण ततः स्तरविभाजनात् ॥ ११५ ॥
श्रीवन्ध[4]पीठं कर्तव्यं सार्धहस्तद्वयोच्छ्रितम् ।
चतुर्दशस्तरं जङ्घा कर्तव्या स्तम्भसंयुता[5] ॥ ११६ ॥
कर्तव्या द्विस्तरा माला लशुनं स्तरसम्मितम् ।
विदधीत स्तरं पद्मकुम्भगण्डसमन्वितम् ( ? ) ॥ ११७ ॥
उच्छालं द्विस्तरं कुर्या( [6]द्डो ? ) भागं विधीयते ।
द्विस्तरं हीरकं कार्यं पट्टाँ[7]श्चैव तथाविधा[8]ः ॥ ११८ ॥
पट्टि[9]का स्तरमेकं च वसन्तं द्विस्तरं ततः ।
वसन्तपट्टिका भागं कपोतं त्रिस्तरं ततः ॥ ११९ ॥
छेदमेकस्तरं कुर्यात् स्तरमात्रं च मे[10]ठंकम् ।
मकरं भागमेकं च भागं ( [11]चराल ? )पट्टिका( म् ) ॥ १२० ॥
कुर्वीत भागिकं छेदं ततः कण्ठं च भागिकम् ।
[12]कण्ठं छेदं ततः कण्ठं च ++++ भागिकम् ॥ १२१ ॥

---

१ द. प । २ द. सात्र । ३ द. न्न । ४ द. न्धं पीठ । ५ मु. पु. श्लोकान्ते ' पुनर्भूषणैः ' इत्यधिकं पठ्यते । द. पुनर्भूषयितव्या सा सर्वैरपि विभूषणैः । इत्यधिकं पठ्यते । ६ द. द्रण्डो । ७ द. ट्ट । ८ द. धः । ९ द. कां । १० द. मेढुकं । ११ द. वा । १२ द. पुस्तके ' कण्ठं छेदं......भागिकम् ' इत्ययं पाठः नास्ति ।

( वाख्यापट्टिकां ? )[1] भागं वेदीं विचक्षणः ।
कुर्वीत भागिकं छेदं ततः कण्ठं स्तरद्वयम् ॥ १२२ ॥
स्तरं स्तरं प्रकुर्वीत पट्टिका पद्मपट्टिका ।
कूटप्रस्तारके कुर्यान्मकराननपञ्चकम् ॥ १२३ ॥
विचित्ररूपं सर्वासु दिक्षु सर्वगुणान्वितम् ।
ऊर्ध्वतः पट्टिकायास्तु घण्टा पञ्चस्तरा भवेत् ॥ १२४ ॥
नासिकाभिर्विचित्राभिरत्युदाराभिरन्विता ।
भद्राणि यस्य दृश्यन्ते कूटे कूटे समन्ततः ॥ १२५ ॥
स सर्वतोभद्र इति प्रासादः शिल्पिनां मतः ।
अवलम्बेन तदनु स्तम्भच्छेदं प्रकल्पयेत् ॥ १२६ ॥
स्तम्भत +++[2] त्रेण समानं भुवि सूत्रयेत् ।
[3]मेढस्य निर्गमे[4] दद्यादङ्गुलैर्द्वितयं बुधः ॥ १२७ ॥
पञ्चाङ्गुलानि कर्तव्यस्ततो मकरनिर्गमः ।
सूत्रयेत् समसूत्रेण ततो मेढक[5]( स्य ? ) पट्टिका ॥ १२८ ॥
षडङ्गुलप्रवेशस्तु कार्यश्छेदस्य[6] धीमता ।
यथा प्रवेशं +++ छेदस्यापि तथा भवेत् ॥ १२९ ॥
अङ्गुलद्वितयं कार्यः पट्टिकाया विनिर्गमः ।
विनिर्गमो वेदिकाया विधातव्यः षडङ्गुलः ॥ १३० ॥
अङ्गुलद्वयनिष्क्रान्ता विधेया कण्ठपट्टिका ।
पद्माख्यानिर्गमं कुर्यादङ्गुलत्रितयं ततः ॥ १३१ ॥
अङ्गुलानि ततः पञ्च योनि + निर्गमो भवेत् ।
घण्टा त्विह विधातव्या सर्वालङ्कारभूषिता ॥ १३२ ॥
( [9]भेद ? )स्ततः स्याद् भवति भूमिका तस्य चोपरि ।
द्वितीया( य )भूमिकाजङ्घा ( सद्यः ? ) स्यादष्टभिः स्तरैः ॥ १३३ ॥
मालायैर्लशुनं चैकं भरणं कलशस्तथा ।
यथा माला तथोच्छालं वीरगण्डं स्तरं भवेत् ॥ १३४ ॥

---

१ द. कंठाख्यपट्टिका भागं । २ द. सू । ३ द. में । ४ द. मं । ५ द. लं । ६ द. में ७ द. श्छं । ८ द. शः । ९ द. छे ।

उच्छालहीरके पट्टसमे कुर्याद् विचक्षणः ।
पट्टिका भागिकोत्सेधा वासन्तं ++ का तथा ॥ १३५ ॥
कपोतं त्रिस्तरोत्सेधं ([1]छेदो ?) सत्र्यंशवर्जितम्[2] ।
छेदस्यार्धे[3] भवेन्मेंढो[4] मकरः पट्टिका तथा ॥ १३६ ॥
ततश्छेदं (च) कण्ठं च +++ पट्टिकां तथा ।
मालार्धेन प्रकुर्वीत च्छेदमेव ततो बुधैः[5] ॥ १३७ ॥
पुनः कण्ठं प्रकुर्वीत हीरकेणो(ण) समन्वितम् ।
पट्टि(का) पद्मपूर्वा च त्रिभागो(गे)न कपोतके ॥ १३८ ॥
कुर्याचतुःस्तरां घण्टां द्वाभ्यां कुम्भं तथोपरि ।
पुनश्छेदो भवेद् भागं जङ्घां कुर्वीत सप्तभिः ॥ १३९ ॥
([6]सीतमाठा ?) विधातव्या मालोचु[7](चो) द्विस्तरो भवेत् ।
लशुनं भरणं कुम्भो गण्डश्चेति स्तरं स्तरम् ॥ १४० ॥
गण्डद्विगुणमुच्छालं हीरपट्टस्तथैव च ।
पट्टिका स्तरमेकं स्याद् वसन्तं[8]पट्टिकास्य च ॥ १४१ ॥
[9]पीठं द(श)गुणं कुर्याच्छेदमेण्ठौ[10] स्तरं स्तरम् ।
स्तरं कुर्वीत ([11]राकर ?) (तथा) मकरपट्टिकाम् ॥ १४२ ॥
स्तरं छेदं च कण्ठं च पट्टिकां वेदिकां तथा ।
छेदं कुर्यात् पुनर्भागं कण्ठं तद्द्विगुणं ततः ॥ १४३ ॥
पट्टिका स्तरमेकं स्याद् वसन्तपट्टिका स्तरम् ।
चतुःस्तरा भवेद् घण्टा ([12]प्रागग्राचकभूषिता ?) ॥ १४४ ॥
तस्योपरि पुनः कुम्भं घण्टार्धेनैव कारयेत् ।
छेदं[13] भागं विजानीयाज्जङ्घा सप्तांशिका[14] स्मृता ॥ १४५ ॥
माला द्विभागिका कार्या भागिकं लशुनं[15] भवेत् ।
भरणं कुम्भकं गण्डं कुर्याल्लशुनवद् बुधः ॥ १४६ ॥

---

१ द. छं । २ द. तः । ३ द. र्धं । ४ द. में । ५ द. धैः । ६ द. सा तु माय । ७ द. माला वुद्विस्तरा भवेत् । ८ द. न्तं । ९ द. कपोतं । १० द. ण्डो । ११ द. राकारं । परन्तु मुद्रित पुस्तके तु 'मकरम्' इति स्यात् । १२ द. ेटां प्राग्ग्रीवकभूषितां; मुद्रित पुस्तके 'प्राग्ग्रीवकविभूषिता' इति स्यात् । १३ द. द । १४ द. की । १५ द. ना ।

उच्छालं गण्डकं चैव हीरकान्तं च भागिकम् ।
सार्धं[1] भागं भवेत् ++[2] पट्टिकार्धं[3] स्तरं भवेत् ॥ १४७ ॥

[4]++तं भागमेकं स्याद् वसन्ताख्या च पट्टिका ।
कपोतं त्रिस्तरं कुर्यान्नासायुक्तं विचक्षणः ॥ १४८ ॥

छेदमंशेन कुर्वीत ( मण्डमंशेन[5] ? ) कारयेत् ।
मकरे पट्टिकां छेदं विदधीत स्तरं स्तरम् ॥ १४९ ॥

कुर्वीत भागिकं ( कण्ठं ) पट्टिकां[6] वेदिकामपि ।
भागं कुर्यात् पुनश्छेदं[7] ततः कण्ठं द्विभागिकम् ॥ १५० ॥

पट्टिका पद्मपूर्वा च विधातव्या स्तरं स्तरम् ।
कुर्वीत घण्टामुपरि चतुर्भागां विचक्षणः ॥ १५१ ॥

तदर्धमूर्ध्वतः कुम्भं[8] छेदमर्धेन तस्य च ।
जङ्घा षड्भागिका कार्या ( मात्ता[9] गेन सुन कारयेन ? ) ॥ १५२ ॥

लशुनं भरणं कुम्भं गण्डमुच्छाल( वाड ? )के ।
हीरकं चेति कुर्वीत भागिकानि पृथक् पृथक् ॥ १५३ ॥

सार्ध[10]भागं भवेत् पट्टः पट्टिकार्धस्तरोच्छ्रिता ।
वसन्तं भागमेकं स्याद् वसन्ताख्या च पट्टिका ॥ १५४ ॥

कपोतं त्रिस्तरं कुर्याच्छेदं ( त्र्यंशोनशंसकाम्[11] ? ) ।
मण्डको मकरश्चैव पट्टिका छेदकण्ठकौ ॥ १५५ ॥

कण्ठं पट्टी च वेदी च च्छेदश्च स्यात् स्तरं स्तरम् ।
द्वितीयो द्विस्तरः कण्ठो भागिकी पट्टिका भवेत् ॥ १५६ ॥

तथैव पद्मसंज्ञा च स्यादुच्छ्रायेण पट्टिका ।
घण्टां कुर्याच्चतुर्भागां कुम्भमर्धेन तस्य च ॥ १५७ ॥

छेदमेकेन भागेन जङ्घाम[12] + र्धभागिकीम् ।
माला( मे )केन भागेन लशुनं सार्धभागिकम् ॥ १५८ ॥

---

१ द. र्धं । २ द. पट्टः । ३ द. र्धं । ४ द. '++ तं......कारयेत्' इति पाठः नास्ति । ५ मुद्रित पुस्तके 'मेढमंशेन' इति स्यात् । ६ द. का । ७ द. द । ८ द. म्भ । ९ द. मातागे ( रो ) न कारयेत् । १० द. र्धं । ११ द. कं । १२ द. जंङ्घां मर्द्धौ त्रिभागिकीं ।

तथैव भरणं कुर्यात् कुम्भोच्छाले[1] स्तरं स्तरम् ।
हीरकं भागिकं कुर्यात् पट्टं[2] सार्धस्तरं ततः ॥ १५९ ॥

पट्टिकार्धस्तरं कार्या वसन्तं च स्तरं ततः ।
कपोतं[3] द्विस्तरं कुर्याद् वेदीमर्धस्तरं तथा ॥ १६० ॥

यथा छेदस्तथा मण्डो मकरश्च विधीयते ।
पट्टिकार्धस्तरं कार्या छेदोऽप्यर्धस्तरं भवेत् ॥ १६१ ॥

भागं कण्ठः पट्टिका च वेदी कार्या द्विभागिकी ।
छेदो भागेन कर्तव्यः कण्ठश्चान्यस्त्रिभागिकः ॥ १६२ ॥

पट्टिकां पद्मपत्रीं च विदधीत स्तरं स्तरम् ।
तुङ्गस्य [4]चलनं कार्यं द्विभागिकमनन्तरम् ॥ १६३ ॥

घण्टा कार्या समुत्सेधा(त्) त्रयस्त्रिंशद्विभागिकी ।
सर्वतोभद्रसंयुक्ता[5] चन्द्रशालाविभूषिता ॥ १६४ ॥

कुर्वीत त्रिस्तरं पद्मं[6] चित्रपत्रसमन्वितम् ।
तस्योपरि (भवेत्) कुम्भश्चतुर्दशविभागिकः ॥ १६५ ॥

ग्रीवा द्विभागिका[7] कार्या कर्णश्चैव तथाविधः ।
बीजपूरं ततः कार्यं सा(शो)भासंयुक्तमर्धतः ॥ १६६ ॥

पद्मचक्रं [8]त्रिशूलं वा विधातव्यं यथोचितम् ।
प्रोत्तुङ्गग्राससंयुक्तं[9] [10]++ मकरमेंढकैः[11] ॥ १६७ ॥

सोत्तुङ्गकूटके[12] कुर्यादेवं[13] दिक्षु विदिक्षु च ।
भूमौ भूमौ विधातव्या शाला[14] साध्यलतोरणम् (?) ॥ १६८ ॥

कोणे कोणे च ([15]+करा) भद्रे करिक्य(क)रानपि ।
++ कूटैस्त्रिभिर्युक्तं चतुर्भिश्च जलान्तरैः ॥ १६९ ॥

कुर्वीत सर्वतोभद्रमेवंलक्षणलक्षितम् ।
एवं पद्मो महापद्मः स्वस्तिको वर्धमानकः ॥ १७० ॥

---

१ द. ल्ये । २ द. ट्ट । ३ द. त । ४ द. लवनं । ५ द. क्तो । ६ द. द्म । ७ द. स्य च° । ८ द. की । ९ द. वि । १० द. युक्तं । ११ द. में । १२ द. कैः । १३ द. व । १४ द. शालां साध्यालतोरणे । १५ मु. पु. 'मकरान्' इति स्यात् ।

सर्वतोभद्र इत्य[1]( त्ये )ते समारभ्यैकभूमिकान् ।
पञ्चभूमिकपर्यन्तं कार्याः साधारणक्रियाः[2] ॥ १७१ ॥
एतैर्विंशतिभागैश्च प्रासादाः पूर्वसूचिताः ।
पीठादारभ्य घण्टान्तं पञ्चैते लक्षणान्विताः ॥ १७२ ॥
षड्भूमिकादिको( कं ) ब्रूमो यावद् द्वादशभूमिकम् ।

पञ्चभूमिकः ॥

अथ षड्भौममेकान्तं त्रिंशद्धस्तं प्रचक्ष्महे ॥ १७३ ॥
चत्वारिंशत्कराः सैकास्तस्योच्छ्रायो विधीयते ।
पीठं प्रकल्पयेत् तस्य सार्धहस्तद्वयोच्छ्रितम् ॥ १७४ ॥
जङ्घा समुच्छ्रये कार्या सार्धहस्तचतुष्टयम् ।
कूटप्रस्तारमस्याहुः सो( सा )र्धहस्तोच्छ्रितं बुधाः ॥ १७५ ॥
जङ्घा द्वितीया तु भवेत् तस्य हस्तचतुष्टयम् ।
द्वितीयकूटस्योत्सेधं सार्धहस्तं प्रकल्पयेत् ॥ १७६ ॥
[3]घण्टा तृतीया चतुरो हस्तास्तार्धाद्विवर्जिता( ? ) ।
तृतीयकूटप्रस्तारं कुर्याद् भूयोऽपि पूर्ववत् ॥ १७७ ॥
जङ्घा भवेच्चतुर्थी + ( स सार्धा त्रे ? ) करत्रयम् ।
पूर्वमानेन कुर्वीत कूटप्रस्तारमूर्ध्वतः ॥ १७८ ॥
हस्तत्रयं विधातव्या[4] जङ्घोच्छ्रायेण पञ्चमी ।
कूटप्रस्तारकं कुर्यात् सा[5]र्धहस्तोच्छ्रितं ततः ॥ १७९ ॥
षष्ठ( ष्ठी ) हस्तत्रयं जङ्घा पादहीनं विधीयते ।
प्राग्वत् प्रस्तारकूटं तु कपोतं त्रिकरोच्छ्रितम् ॥ १८० ॥
तस्योपरि भवेद् घण्टा हस्तपञ्चकमुच्छ्रिता ।
कर्तव्यं पद्ममुपरि सुविचित्रं षडङ्गुलम् ॥ १८१ ॥
कुर्याद् भागैकविंशत्या कुम्भमाद्धरणैतम्( [6]भरणैर्युतम् ) ।
षड्भूमिकोऽयमाख्यातः कथ्यते सप्तभूमिकः ॥ १८२ ॥

षड्भूमिकः ॥

१ द. त्येते । २ द. यः । ३ द. जंघा । ४ द. व्यं । ५ द. ता । ६ द. द्ध ।

पञ्चत्रिंशत्करः[1] प्रोक्तो विस्तारात् सम( प्त )भूमिकः[2] ।
सार्धोत्तैकान्नपञ्चाशत्कर्ण[3] नित्योर्च्छ्रिता[4] करात् (?) ॥ १८३ ॥

त्रिहस्तं पीठमुत्सेधाज्जङ्घा[5] पञ्चकरोच्छ्रिता ।
सार्धहस्तोच्छ्रितः[6] कूटप्रस्तारो( ऽस्य ) विधीयते ॥ १८४ ॥

द्विहस्तो वेदिकाबन्धो जङ्घोच्छ्रायश्चतुष्करः ।
सार्धहस्तसमुत्सेधः कूटवि( प्र )स्तार इष्यते ॥ १८५ ॥

सार्धहस्तोच्छ्रिता वेदी जङ्घा सार्धकरत्रयम् ।
सार्धहस्तोच्छ्रितः कूट( : ? )प्रस्तारः परिकीर्तितः ॥ १८६ ॥

सपादहस्ता[7] वेदी स्याज्जङ्घा त्र्यंशं( त्र्यंशं ) करत्रयम् ।
सार्धहस्तस्तु कूटस्य प्रस्तारः स्यात् समुच्छ्रयात् ॥ १८७ ॥

हस्तं स्याद् वेदिकाबन्धो जङ्घांशो हि करद्वयम् ।
सपादहस्तः कूटस्य प्रस्तारो वेदिका करम् ॥ १८८ ॥

पादोनद्विकरा जङ्घा कूटं पादयुतः[8] करः ।
हस्तमात्रोच्छ्रिता वेदी जङ्घा सार्धकरोच्छ्रिता ॥ १८९ ॥

कूटप्रस्तारको हस्तं कपोतः स्यात् करत्रयम् ।
सपद्मशीर्षघण्टा तु सार्धं[9] स्याद्धस्तपञ्चकम् ॥ १९० ॥

एवमेष समुद्दिष्टः प्रासादः सप्तभूमिकः ।

सप्तभूमिकः ॥

अथाष्टभूमिकं ब्रूमः प्रासादं शुभलक्षणम् ॥ १९१ ॥

चत्वारिंशत्करांस्तस्य विस्तारं परिकल्पयेत् ।
उच्छ्रायः सप्तपञ्चाशत् कराः स्युस्त्रिं[10]( त्र्यं )शवर्जिताः ॥ १९२ ॥

नवहस्तान् प्रकुर्वीत सार्धान् प्रथमभूमिकाम् ।
द्वितीयाष्टौ ( सपादोर्धा ? )स्तृतीयाष्टौ करा[11]न् भवेत् ॥ १९३ ॥

चतुर्थी सप्तहस्ता तु षट्करा पञ्चमी भवेत् ।
पञ्चहस्ता ततः षष्ठी चतुर्हस्ता तु सप्तमी ॥ १९४ ॥

---

१ द. विं । २ द. षु । ३ द. त्रै । ४ द. च्छ्रितः । ५ द. ज । ६ द. कूटः प्रस्तरो( स्य ) वि° । ७ द. स्तो । ८ द. तं । ९ द. प्र । १० द. त्रिंशतिव° । ११ द. रो ।

ततोऽष्टमी त्रिहस्ता स्याद् वेदीबन्धः करद्वयम् ।
घण्टां चतुष्करां कुर्यादेवं स्यादष्टभूमिकः ॥ १९५ ॥

अष्टभूमिकः ॥

अथोच्यते हस्तमानात् प्रासादो नवभूमिकः ।
विस्तारादेकपञ्चाशदुच्छ्रित्या स्याद् द्विसप्ततिः ॥ १९६ ॥
कर्णप्रमाणं[1] (तस्योक्ता विस्तारो[2]ऽस्य चतुच्छ्रितिः ?) ।
पञ्चहस्ता भवेद् घण्टा वेदिबन्धस्तदर्धतः ॥ १९७ ॥
कुर्याद्धस्तत्रयं सार्धं नवमीमस्य भूमिकाम् ।
अष्टमीं चतुरः सार्धान् सपादान् पञ्च सप्तमीम् ॥ १९८ ॥
षष्ठीं षट् पादहीनांश्च ( सपादोनाम ? ) पञ्चमीम् ।
अष्टौ चतुर्थीं पादोनान् [3]हस्ता( त्रींच ? ) तृतीयकाम्[5] ॥ १९९ ॥
विलोमेनैक( ष ) कथितः[6] प्रासादो नवभूमिकः ।

नवभूमिकः ॥

इदानीमभिधास्यामः प्रासादं[8] दशभूमिकम् ॥ २०० ॥
एकोनाशीतिरुत्सेधः सपादा विस्तृतिः पुनः ।
षट्पञ्चाशत्कराः कर्णमानाद् ब्रूमोऽथ भागशः ॥ २०१ ॥
एकादशकरोत्सेधा कार्या प्रथमभूमिका ।
सार्धान् दश द्वितीया स्यात् तृतीया तु करान् दश ॥ २०२ ॥
सार्धानष्टौ चतुर्थी तु सप्तसार्धस्त्व( र्धांस्तु ) पञ्चमी ।
षष्ठी सप्तकरा प्रोक्ता सप्तमी षट्करा भवेत् ॥ २०३ ॥
पञ्चहस्ताष्टमी ज्ञेया नवमी तु चतुष्करा ।
त्रिहस्ता दशमी कार्या वेदी सांशं करद्वयम् ॥ २०४ ॥
++++[10] प्रमाणेन सार्धं करचतुष्टयम् ।
एवमेष समुद्दिष्टो विन्यासो दशभूमिके ॥ २०५ ॥

दशभूमिकः प्रासादः ॥

---

१ द. 'णं' इति स्थाने 'णां' पाठः । २ द. रस्येवमुच्छ्रितिः । ३ द. हसन्नेव । ४ मु. पु. 'नव' इति पाठ्यं भाति । ५ मुद्रित पुस्तके इत उपरि प्रथमद्वितीयभूमिकयोः प्रमाणं मातृकायां न दृश्यते । ६ द. ता । ७ द. सा । ८ द. द । ९ द. र्द्धं । १० द. घंटाद्वयं ।

ब्रूमः ([1]समासादभीथै?)कादशभूमिकम् ।
पञ्चषष्टिकरः कार्यो द्विनवत्युच्छ्रित(श्र)[2] सः ॥ २०६ ॥
कर्णमानेन विज्ञेयः प्रासाद[3]ः शास्त्रवेदिभिः ।
प्रथमा भूमिका तस्य चतुर्दशकरा[4] भवेत् ॥ २०७ ॥
द्वितीया द्वादशार्धं च तृतीयैकादशोच्छ्रि[5]ता ।
नव सा[6]र्धाश्चतुर्थी स्यात् सपादानष्ट पञ्चमी ॥ २०८ ॥
सप्तहस्ता भवेत् षष्ठी षड्ढस्ता सप्तमी ततः ।
पञ्चहस्ताष्टमी सार्धाश्चतुरो नवमी करान् ॥ २०९ ॥
चतुर्हस्ता तु दशमी सार्धमेकादशी त्रयम् ।
सपादद्विकरा वेदी घण्टा सार्धचतुष्कसा(रा) ॥ २१० ॥
प्रासादः कथित[8]ः सम्यगित्येकादशभूमिकः ।

एकादशभूमिकः ॥

ब्रूमो द्वादशभौमं स सप्तषष्टिकरायतः ॥ २११ ॥
उच्छ्रायात् पञ्चनवतिर्हस्तः स्यात् कर्णमानतः ।
आद्या चतुर्दशकरा भूमिकास्य विधीयते ॥ २१२ ॥
द्वितीयैकादशकरा(न्) तृतीयार्धयुता(न्) दश ।
दश हस्तांश्चतुर्थी स्यादष्टौ सार्धास्तु पञ्चमी ॥ २१३ ॥
सार्धसप्तकरा षष्ठी सप्तहस्ता च सप्तमी ।
अष्टमी षट्करा पञ्चहस्ता तु नवमी भवेत् ॥ २१४ ॥
दशमी स्याच्चतुर्हस्ता त्रिहस्तैकादशी क्षितिः ।
द्वादशी द्वौ करौ सार्धौ वेदीबन्धः करद्वयम् ॥ २१५ ॥
चतुर्हस्ता भवेद् घण्टा सर्वालङ्कारभूषिता ।
स्तम्भकर्णस्य मानेन कुम्भं कुर्याद् विचक्षणः ॥ २१६ ॥
उच्छालं द्विगुणं स्तम्भात् ([9]हीरसार्धसङ्गुणाम्?) ।
इत्येते द्राविडाः सम्यक् प्रासादा द्वादशोदिताः ॥ २१७ ॥

१ द. ब्रूमः समासात्प्रासादमीथैं (मथै) का; मुद्रित पुस्तके तु 'समासात् प्रासादमथै' इति स्यात् । २ द. सा । ३ द. दा । ४ द. रान् । ५ द. छ्रता । ६ द. र्धा । ७ द. ता । ८ द. स्ताः ।
९ मु. पु. 'हीरं सार्धगुणान्वितम्' इति स्यात् ।

एषां[1] पद्ममहापद्मस्वस्तिका वर्धमानकः ।
सर्वतोभद्र (लता[1] ?)स्तलबन्धान्[2] निवेशयेत् ॥ २१८ ॥
(आरभ्यन्तामरेकस्या[3] च[4] ?) द्वादशभूमिका(त्) ।
ऊर्ध्वमानं च कर्तव्यं सामान्यं तेषु पञ्चसु ॥ २१९ ॥

द्वादशभूमिकः ॥

(पीठमूल[5] ?)च्छन्दकभूमिकाभि-
विनिर्मिता द्राविडनामधेयाः[6] ।
प्रासादमुख्याः कथिता(यथा यथा[7]-
वेत्यं[8] स्वल्पविभिरुच्यतेऽसौ ?) ॥ २२० ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे

द्राविडप्रासादाध्यायो नाम द्विषष्टितमः ॥

---

## अथ मेर्वादिविंशिकानागरप्रासादलक्षणं नाम त्रिषष्टितमोऽध्यायः ।

अधुना नागरान् ब्रूमः प्रासादान् नामलक्षणैः ।
मेरुमन्दरकैलासाः[9] कुम्भोऽथ मृगराड् गजः ॥ १ ॥
विमानच्छन्दसंज्ञश्च चतुरश्रस्तथापरः ।
अष्टाश्रिः[10] षोडशाश्रिश्च[11] वर्तुलः[12] सर्वतोद(भद्र)कः ॥ २ ॥
सिंहास्यो नन्दनो नन्दिवर्ध(मा ?)नो हंसको वृषः ।
गुरुत्सा (गरुडः) पद्मकाख्यश्च समुद्र इति विंशतिः ॥ ३ ॥
नागराणामिति[13] प्रोक्ता प्रासादानां समासतः ।
शत(मुद्रं[14] ?)श्चतुर्द्वारः षोडशक्षितिरूर्ध्व(तः) ॥ ४ ॥
विचित्र[15]शिखराकीर्णो मेरुः प्रासाद उच्यते ।
मन्दरो द्वादशतलः कैलासो नवभूमिकः ॥ ५ ॥

---

१ मु. 'इत्येतां' इति पाठः स्यात् । द. लतां । २ द. छन्दान् । ३ मु. पु. 'आरभ्य भूमेरकस्या आ च' इति स्यात् । ४ द. या च । ५ द. पीठेस्तल । मुद्रित पु. 'पीठैस्तल' इति स्यात् । ६ द. द्र । ७ द. यो । ८ द. वेत्त्य स्वं च्छिल्पिभिरुच्यतेऽसौ । ९ द. सः । १० द. स्त्रि । ११ द. स्त्रि । १२ द. र्द्ध । १३ द. यं । १४ द. द्र । १५ द. त्रा ।

अनेकशिखरश्चित्रश्चतुर्द्वारो महोच्छ्रितिः ।
विमानच्छन्दकस्त्वष्टभूमिकः परिकीर्तितः ॥ ६ ॥

विंशत्यण्डकसंयुक्तः सप्तभूर्नन्दिवर्धनः ।
षड्भूमिर्नन्दनः कार्यः प्रासादः षोडशाण्डकः ॥ ७ ॥

पञ्चभूः सर्वतोभद्रो[1] भद्रशालाविभूषितः ।
अनेकशिखराकीर्णः कर्तव्यः प्रचुराण्डकः ॥ ८ ॥

[2]वलभिच्छन्दकः कार्यो देवतानां (ए ?[3]) वृषः सदा ।
वृषस्तु स्वोच्छ्रितेर्[4]स्तुल्यः सर्वतः स्वस्ति वर्तितः[5] ॥ ९ ॥

मण्डलं (?) स तु विज्ञेय एकाण्डकविभूषितः ।
सिंहः सिंहाकृतिर्[6]ज्ञेयो गजो[7] गजसमाकृतिः ॥ १० ॥

कुम्भः[8] कुम्भाकृतिस्तद्वद् भूमिकानवकोच्छ्रितः[9] ।
अञ्जलीपुटसंस्थानः पञ्चाण्डकविभूषितः ॥ ११ ॥

षोडशाश्रिः समन्ताच्च विज्ञेयः[10] स समुद्गकः ।
पार्श्वयोश्चन्द्रशाला च[11] उच्छ्रायात्[12] स द्विभूमिकः ॥ १२ ॥

तथाष्टाश्रिः पद्मनिभो भूमिकात्रयमुच्छ्रितः ।
षोडशाश्रिः स विज्ञेयो विचित्रशिखरः शुभः ॥ १३ ॥

मृगराजस्तु विख्यातश्चन्द्रशालाविभूषितः ।
प्राग्ग्रीवेण विशालेन भूमिकास यदु( सु य उ )च्छ्रितः ॥ १४ ॥

अनेकचन्द्रशालैस्[13]तु गजः प्रासाद उच्यते ।
पर्यस्तो मृगराजस्तु गरुडो नाम नामतः ॥ १५ ॥

सप्तभूम्युच्छ्रितस्तद्वच्चन्द्रशालात्रया[14]न्वितः ।
अश्रिभि([15]र्विहरं तस्य ?) षड्भिर्युक्तः समन्ततः ॥ १६ ॥

स्यादन्यो गरुडस्तद्वदुच्छ्राये दशभूमिकः ।
पद्मकः षोडशाश्रिः स्याद् भूमिकाद्वितयाधिकः ॥ १७ ॥

---

१ द. द्र । २ द. वल्लभी । ३ द. एषः सदा । ४ द. तो तु । ५ द. जिं । ६ द. ते । ७ द. जे । ८ द. कुम्भाः । ९ द. तिः । १० द. या स समुद्गकः । ११ द. वा । १२ द. स्त । १३ द. ला । १४ द. त्रयोन्विता । १५ मुद्रित पुस्तके 'र्बहिरन्तश्च' इति स्यात् ।

पद्मतुल्यप्राणन( ? )वा[1]वृक्षश्चतुरश्रकः ।
पश्चाण्डमे( ए )कभूमिस्तु गर्भं( र्भो ) हस्तचतुष्टयम् ॥ १८ ॥

वृषो भवति ना( त्रा[2]यं ? )प्रासादः सर्वका[3]मिकः ।
सप्तकापञ्चकाभूर्मि[4]प्रासादो(?) य इहोदिताः ॥ १९ ॥

( [5]हिंस्य ? )ते समा ज्ञेया ये चान्ये तत्प्रमाणकाः ।
विचित्र[6]शिखराः कार्याश्चन्द्रशालाविभूषिताः ॥ २० ॥

सर्वे प्राग्ग्रीवसंयुक्ताः कर्तव्यास्तोरणान्विताः ।
ऐष्टि[7]का दारवा यद्वा शैलजा वाजनाकुलाः ॥ २१ ॥

स्यात् पञ्चाशत्करान्मेरुसूत्रलिङ्गं नवोदयान् ( ? ) ।
गर्भास्तु द्विगुणा लिङ्गाद् भित्तयः स्युश्चतुष्कराः ॥ २२ ॥

अन्धारिका हस्तषट्कं विधातव्या समन्ततः ।
अन्धारिकां च कुर्वीत बाह्याभित्तिं विचक्षणः ॥ २३ ॥

अयं साधारकः प्रोक्तो मेरुः सर्वगुणान्वितः ।
प्रासादानां तथान्येषां गर्भो ( लिङ्गदिशंगुणः ? ) ॥ २४ ॥

प्रासादगर्भ[8]मुत्सृष्टं यच्छेषं तेन कल्पयेत् ।
सहान्धारिकया सर्वां( र्वं ) समभागेन पूर्ववत् ॥ २५ ॥

मेवा( र्वा )द्या ये विमानान्ताः ( [9]सं + ? )पूर्वं प्रकीर्तिताः ।
शस्तास्ते ( मृज्य ? ) लिङ्गानामन्येषां तु भयावहम्( हाः ) ॥ २६ ॥

वावृक्षमुख्या ये तूक्ता नन्दिवर्धनपश्चिमाः ।
तष्टो ( तेऽष्टौ ) शुभा मध्यमानामन्येषां दुःखदाः स्मृताः ॥ २७ ॥

हंसादयः समुद्रान्ताः पञ्च ये समुदाहृताः ।
प्रशस्तास्ते समुद्दिष्टा लिङ्गानां ( विधीयसा ? ) ॥ २८ ॥

मन्दरस्तु करात् कार्य[10]श्चत्वारिंशत्तु + + + ।
+ + + + + +[11] लासो विमानोष[12]रोष्टिताः (?) ॥ २९ ॥

---

१ द. म्वा । २ द. म्नायं, तथा मुद्रित प्रतौ अपि ' म्नायं ' इत्येव पाठः । ३ द. भू । ४ द. मिः । ५ मुद्रित पुस्तके तु ' हंसस्य ' इति पाठः स्यात् । ६ द. त्रा । ७ द. ष्ट । ८ द. ह्य । ९ मु. पु. ' सप्त ' इति स्यात् ।; द. स । १० द. र्या । ११ द. कै । १२ द. बट्करो° ।

हस्तद्वात्रिंशता कार्यः[1] प्रासादो नन्दिवर्धनः ।
हस्तांस्तु नन्दनस्त्रिंशत् सर्वतोभद्र एव च ॥ ३० ॥
अष्टाविंशतिमष्टाभिः( श्रिः ) षोडशा ( श्रि )स्त्रिभिर्विना ।
वर्तुलः पद्मकः श्वेतो विमानच्छन्द एव च ॥ ३१ ॥
एते द्वादशहस्ताः + कार्यौ[2] विंशतिहस्तकौ (?) ।
गजः सिंहश्च कुम्भश्च वलभीछन्द( कं[3] )स्तथा ॥ ३२ ॥
चत्वार एते तुल्याः स्युर्हस्तोन्मे[4]डसमानतः (?) ।
वावृक्षो मृगराजश्च विमानच्छन्द एव च ॥ ३३ ॥
एते द्वादशहस्ताः( स्युः ) प्रमाणेन[5] पृथक् पृथक् ।
दशहस्तो भवेद् वा स गरुते( डोऽ )ष्टकरः स्मृतः ॥ ३४ ॥
एतैः प्रमाणैः प्रासादा( न् ) कुर्यादित्यपरे स्थिताः ।
एकहस्ता द्विहस्ताश्च ( त्रि )हस्ता ये च कीर्तिताः ॥ ३५ ॥
यक्षनागग्रहादीनां विधेया रक्षसां[6] च ते ।
विधिरेष समुद्दिष्टः प्रासादानां समासतः ॥ ३६ ॥
विशेषेण पुनर्ब्रूमो विमानं शुद्धपुष्पकम् ।
चतुरश्रीकृते क्षेत्रे पञ्चात्रिंशद्[7]द्विभाजिते ॥ ३७ ॥
रथिका पञ्चभागा स्याद् द्विभागं सलिलान्तरम् ।
( कूट ? ) त्रिभागं पञ्जरं कुर्यात् प्राग्ग्रीवकविभूषितम् ॥ ३८ ॥
जलान्तरं द्वितीयं तु तदपि स्याद् द्विभागिकम् ।
शालैकादशभागा तु पूर्ववत् सलिलान्तरम् ॥ ३९ ॥
त्रिभागं पञ्जरं कुर्याद् द्विभागं सलिलान्तरम्
कूटं पञ्चकरं प्रान्ते दिक्षु सर्वास्वयं विधिः ॥ ४० ॥
नागरोऽयं तलच्छन्दः प्रासादे शुद्धपुष्पके ।
जङ्घा सपीठा क्षेत्रार्धविस्तारसदृशोदया ॥ ४१ ॥
सार्धैर्द्वितीया दशभिस्तृतीया नवभिः करैः ।
अष्टहस्ता चतुर्थी स्यात् सप्तहस्ता तु पञ्चमी ॥ ४२ ॥

---

१ द. र्या । २ द. र्यौ । ३ द. स । ४ द. न्मो । ५ द. णा । ६ द. यां । ७ द. विं ।

षष्ठी तु भूमिका कार्या प्रमाणेनास्य षट्करा ।
सप्तमी पञ्चहस्ता तु ( चतु )र्हस्ता ततोऽष्टमी ॥ ४३ ॥

त्रिहस्तं[1] वेदिकाबन्धं विचित्रं कारयेद् बुधः ।
विस्ताराद् द्विगुणोच्छ्रायः स्कन्धोऽयं ( वेदिकाबन्ध ? ) ॥ ४४ ॥

स्कन्धादूर्ध्वं भवेद्[3] घण्टा यदि वामलसारकम्[4] ।
तद् वर्तुलं शुभं कार्यं घण्टा स्कन्धार्धमुच्छ्रिता ॥ ४५ ॥

घण्टाविस्तारं( तः ) कुम्भं चतुर्थांशेन कारयेत् ।
प्रमाणं समुदायेन भूमिकानामुदाहृता( तम् ) ॥ ४६ ॥

एकैकस्या( स्य ) विशेषेण प्रविविं[6]च्याधुनोच्यते ।
प्रमाणेन विधातव्या ( खंकारा ? ) भूमिरङ्गिका[8] ॥ ४७ ॥

( यं हस्तं तु ? ) खुरकं द्विभागा पद्मपत्रिका ।
भागिका ( कणकयांयस्त्र्यंशं ? ) कुमुदं[10] छेद एव च ॥ ४८ ॥

त्र्यंशस्तद्द्विगुणः कण्ठः किङ्किणीपल्लवान्वितः[11] ।
तस्यार्धं पट्टिका कार्या तत्समा गिरिपत्रिका[12] ॥ ४९ ॥

( भात्र्यंशावरण्डीतमध्ये पच्छीतलार्धभागिकी[13] ? ) ।
पूर्वप्रोक्तेन कण्ठेन समसूत्रा च सा भवेत् ॥ ५० ॥

छेदं तदूर्ध्वं कुर्वीत स्तरमेकं विचक्षणः ।
पुनः कण्ठः प्रदातव्यो भागद्वितयसम्मितः ॥ ५१ ॥

पट्टिका स्तरमेकं तु तत्समा गिरिपत्रिका ।
चतुर्गुणाथ त्रिगुणा कार्यावि( ति )लकनासिका ॥ ५२ ॥

स्तम्भद्वितयमध्ये तु पञ्चाल्यं कर्म कारयेत् ।
शोभनं तत्तु[14] कर्तव्यं युक्तं तिलकनाम( स )या ॥ ५३ ॥

पुनश्छेदः प्रदातव्यः पूर्वमानेन धीमता ।
जङ्घा सप्तस्तरा मेठा[15] वरण्डी त्रिस्तरो[16]र्ध्वतः ॥ ५४ ॥

---

१ द. स्तां । २ द. वधः । ३ द. °द्धन्तुं । ४ द. का । ५ द. रः । ६ द. वियातु । ७ द. षट्करा । ८ द. ता । ९ द. यां । १० द. दां । ११ द. ताः । १२ द. वर्त्तिता । १३ द. ती । १४ द. च । १५ द. में । १६ द. थो ।

भवेदधस्ताज्जङ्घायास्त्रिस्तर(स्तरल?)कुम्भकः ।
घण्टापं[1](म)ण्टपसंयुक्ता माला स्यात् (षं[2]द्वरात्?) ततः ॥ ५५ ॥
अर्धेन तस्या लशुनं स्तरेण भरणं भवेत् ।
कुर्वीत द्विस्तरं कुम्भं गण्डमेकस्तरं ततः ॥ ५६ ॥
उच्छालं द्विस्तरं कुर्याद् [3]वीरगण्डं ततः स्तरम् ।
द्विस्तरं[4]ः स्यात् ततः (पट्टः) पट्टस्यार्धेन पट्टिका ॥ ५७ ॥
तत्समा गिरिपत्री च वरण्डी त्रिस्तरा ततः ।
स्तम्भस्योर्ध्वं विधातव्या मनोज्ञा त्र्य(द्व्य)र्धपट्टिका ॥ ५८ ॥
स्तरमेकं ततश्छेदस्ततः कण्ठः स्तरत्रयम् ।
पट्टिका स्तरमेकं स्यात् तत्समा गिरिपत्रिका ॥ ५९ ॥
वरण्डीं[5] त्रिस्तरां कुर्यादर्धप्रस(स्त)रसंयु[6]ताम् ।
पुनश्छेदः स्तरं कार्यः[7] कण्ठस्तेन समस्ततः ॥ ६० ॥
तत्समा[8] गिरिपत्री[9] च त्र्यंशमामलसारकम् ।
ततश्छेदं च कण्ठं च गिरिप[10]त्रीं वरण्डिकाम् ॥ ६१ ॥
पूर्वमानेन कुर्वीत च्छेदकम्पे तथा पुनः ।
गिरिपत्रीं स्तरं कुर्यात् ([11]त्र्यंशक्त[12]खुरंकततः?) ॥ ६२ ॥
[13]छेदं कण्ठं पत्रिकां च ([14]प्रास्तरमेकं ततश्छेदकं कुर्यात् पुनर्बुधः?) ।
वरण्डीं त्रिस्तरां कुर्यादर्धप्रस्तरसंयुतम् ॥ ६३ ॥
छेदं कण्ठं च पीठं च ([15]प्राग्ववामलसारकण्ठं कुर्यात् तथापरम्?) ।
पूर्ववद् गिरिपत्रीं च द्विस्तरां वेदिकां ततः ॥ ६४ ॥
छेदं कुर्यात् तदर्धं च ततः कण्ठं स्त[16]रद्वयम् ।
गिरिपत्रीं ततः कुर्यात् स्तरमेकं सुशोभनाम् ॥ ६५ ॥
चतुरश्रप्रमाणं च कुर्यादामलसारकम् ।
पद्मपत्रं तु तस्यार्धमुपरिष्टात् प्रकल्पयेत् ॥ ६६ ॥

---

१ द. पटव । २ मु. पु. 'षट्स्तरा' इति स्यात्; द. षट्स्तरा । ३ द. वा॰ ४ द. रं । ५ द. ण्डी विस्तरं । ६ द. तां । ७ द. यं । ८ द. मां । ९ द. त्रीं । १० द. गिरीपत्रां । ११ मुद्रित पुस्तके 'त्र्यंशेन खुरकं ततः' इति स्यात् । १२ द. शि । १३ द. छेदकंठप॰ । १४ द. प्रागवत् कुर्यात् । १५ द. प्रागवच्चामलसारकं । स्तरमेकं ततः छेदं कंठं । १६ द. क ।

चतुःस्तरो भवेत् कुम्भः स्तरं कण्ठस्ततो भवेत् ।
स्तरमेकं ततः कर्णो द्विस्तरं बीजपूरकम् ॥ ६७ ॥

चतुर्भिः कूटविस्तारं ततो ( [1]भागे विराजयेत् ? ) ।
द्विभागं मञ्जरी कार्या स्तं[2]( शू )रसेनैरलङ्कृता[3] ॥ ६८ ॥

वरण्डिकाख्यो बन्धश्च भागं भागं ( भागं ? ) भवेत् ततः ।
विस्तारं( राद् ) मूलमञ्जर्याः शुकनासां[4] प्रकल्पयेत् ॥ ६९ ॥

अथ निर्णीयते द्व्यर्धपादाख्यं तत्र विस्तृतिः ।
उच्छ्रायाद् द्विगुणा कार्या पञ्चभागक्रमोऽथवा ॥ ७० ॥

शूरसेनोऽथवा कार्यः[5] शु( क )नासास्त्रिवे( धे )त्यसौ ।
कृत्वा त्रिभागमुच्छ्रायं च( म )करं चोर्ध्वभागिकम्[6] ॥ ७१ ॥

स्तम्भयुक्तं गुणद्वारं ( स्योतस्योधिः संप्रताम् ? ) ।
अर्धप्र( श ? )स्तरसंयुक्तं कुर्यात् + पार्श्वयोर्द्वयोः ॥ ७२ ॥

कर्तव्यं गर्भकूटं वा शुभं तत्र विपश्चिता ।
द्वितीयभूमिकायां तु पीठं सास्त( र्ध )दशास्तरम् ॥ ७३ ॥

( [7]मेलान्ततोवती ? ) जङ्घा माला कार्या चतुःस्तरा[8] ।
लशुनं द्विस्तरं प्रोक्तं स्तरं भरणमिष्यते ॥ ७४ ॥

कुम्भं( ? ) तद्वत् प्रकर्तव्यमुच्छालं द्विगुणान्वितः( तम् ) ।
गण्डकः स्तरमेकं स्यात् ततः पट्टः स्तरद्वयम् ॥ ७५ ॥

अर्धेन पट्टिका कार्या तथैव गिरिपंत्रिका[9] ।
सू( स्त )रत्रयं वरण्डी स्याच्छूरसेनैरलङ्कृता ॥ ७६ ॥

स्तरमेकं भवेच्छेदस्ततः कण्ठः स्तरद्वयम् ।
पट्टिका भागमेकं च तत्समं गिरिपत्रिकां[10] ॥ ७७ ॥

त्रिभागं शिखरं कुर्याच्छेदं मे( रु ? ) तु भागिकम् ।
एकं कण्ठं प्रकुर्वीत ( [11]पंथिकां गिस्तरं ? ) विदुः ॥ ७८ ॥

---

१ द. भागैर्वि° । मुद्रित पुस्तके तु 'भागैर्विभाजयेत्' इति पाठः । २ द. सू । ३ द. तां । ४ द. शं । ५ द. र्याः सुना° । ६ द. ग । ७ द. मा । ८ द. रां । ९ द. वर्त्तिका । १० द. वर्त्तिका । ११ मुद्रित पुस्तके 'रथिकां त्रिस्तरां' इति स्यात् ।

स्तरमेकं भवेत् कण्ठः पट्टिकापि च तत्समा ।
गिरिपत्रीं च कुर्वीत भागार्धेन विचक्षणः ॥ ७९ ॥

द्वा(द्व्य)र्धपादिकया युक्ता त्रिस्तरा स्याद् वरण्डिका ।
छेदं कण्ठं च कुर्वीत पूर्वमानेन बुद्धिमान् ॥ ८० ॥

पट्टिका गिरिपत्री च भागं भागं विधीयते ।
द्विस्तरं शिखरं कुर्या(त् तथा) छेदं तु भागिकाम् ॥ ८१ ॥

एवं कण्ठं प्रकुर्वीत + + + + + पट्टिकाम् ।
वरण्डिका (द्विभास्[1]योद्दकारेण ?) समन्विता ॥ ८२ ॥

छेदं[2] कण्ठं च पत्री च गिरिवर्ती [3]त्रिभागिका(?) ।
प्राग्वद्[4] (विरिहिर ?)कुर्याद् यथाशोभं प्र + + + ॥ ८३ ॥

चतुर्थी भूमिका चोर्ध्वं कर्तव्या लक्षणान्विता ।
त्रयोदशस्तरं पीठं मध्यजङ्घा च तत्समा ॥ ८४ ॥

चतुःस्तरा भवेन्माला तदर्धे[5] लशुनं ततः ।
कुम्भं तेन समं कार्यमु(कुर्यादु)च्छालं द्विस्तरं भवेत् ॥ ८५ ॥

तस्यार्धे गण्डकं कुर्यात् पट्टं तद्द्विगुणं ततः ।
पट्टिका गिरिप[6]त्री च विधातव्ये स्तरं स्तरम् ॥ ८६ ॥

वरण्डी त्रिस्तरा कार्या छेदमेकस्तरं विदुः ।
कुर्वीत द्विस्तरं कण्ठं तदर्धेन तु पट्टिकाम् ॥ ८७ ॥

तत्समां गिरिपत्रीं द्वौ स्तरौ (खिरिहिरं ?) ततः ।
छेदः कण्ठः पट्टिका च गिरिपत्रीति[7] भागिकाः[8] ॥ ८८ ॥

वरण्डी द्विस्तरा कार्या ततश्छेदः स्तरं भवेत् ।
कण्ठश्च पत्रिका चेति गिरिपत्रीति भागिकाः ॥ ८९ ॥

([9]प्राग्वकाशिखिरिहिरं) कुर्याच्छेदं पूर्वक्रमेण च ।
द्विस्तरा तिलनासा (तु) विधातव्या विपश्चिता ॥ ९० ॥

---

१ द. स्या । २ द. दा; मुद्रित पाठस्तु 'छेदः कण्ठश्च पत्री च गिरिपत्रीति भागिकाः' इति स्यात् । ३ द. ति । ४ द. तरिविरिहरं । ५ द. र्धे । ६ द. वर्तिश्च । ७ द. वर्त्तीति । ८ द. का । ९ द. तथा मुद्रित पुस्तकेऽपि 'पाग्वत् खिरिहिरं' इति स्यात् ।

कुर्वीत भागिकं छेदं ततः कण्ठा[1]( ण्ठं ) द्विभागिकी( कम् ) ।
पट्टिकां भागमेकं च तत्समां गिरिपत्रिकाम् ॥ ९१ ॥
घण्टा सप्तस्तरा प्रोक्ता पद्मं द्विस्तरमुच्यते ।
द्विगुणः कलशस्तस्यां[2] छेदं पूर्ववदाचरेत् ॥ ९२ ॥
ऊर्ध्वं स्यात् पञ्चमी भूमिः पीठमेकादशस्ततः( र )म् ।
तद्व( [3]न्मद्दा ? ) भवेज्जङ्घा माला च त्रिस्तरा ततः ॥ ९३ ॥
सार्धस्तरं स्याल्लशुनं स्तरेण भरणं भवेत् ।
कुम्भं गण्डकसंयुक्तं कुर्यात् सार्धस्तरं बुधः ॥ ९४ ॥
उच्छालं द्विस्तरं प्रोक्तं स्तरं गण्डो विधीयते ।
द्विस्तरः स्यात् ( त[4]रः ? )पट्टः पट्टस्यार्धेन पट्टिका ॥ ९५ ॥
तत्समा गिरिपं[5]त्री च त्रिस्तरा तु वरण्डिका ।
स्तरमेकं भवेच्छेदः कण्ठस्तद्द्विगुणस्ततः ॥ ९६ ॥
तदर्धं पट्टिका कार्या तथैव गिरिपत्रिका[6] ।
स्तर( कं ? )द्वयं [7]विरिहिरं तदर्धं छेदमाचरेत् ॥ ९७ ॥
एवं कण्ठः पट्टिका च स्यात् तथा गिरिपत्रिका[8] ।
द्वौ स्तरौ तिलनासा स्याच्छेदः[9] सार्धकरो( रा )यतः ॥ ९८ ॥
कण्ठं तद्द्विगुणं कुर्याद् भागेनैकेन पट्टिकाम्[10] ।
तत्समा गिरिपं[11]त्री स्याद् घण्टा पञ्चस्तरा भवेत् ॥ ९९ ॥
कुर्वीत द्विस्तरं पद्मं शेषं पूर्वक्रमात् ततः ।
ततो भूमिर्भवेत् षष्ठी [12]पीठं तत्राभिधीयते ॥ १०० ॥
द्विस्तरा भूमिरङ्गा स्या( [13]तुंलः ? )खुरकस्ततः ।
छेदो भवेत् तदर्धेन ततः कण्ठः स्तरद्वयम् ॥ १०१ ॥
पट्टिका भागमेकं स्याद् भागं च गिरिपत्रिका[14] ।
वरण्डीं द्विस्तरां कुर्यात् तदर्धं छेदमादिशेत् ॥ १०२ ॥

---

१ द. ण्ठी । २ द. स्याः । ३ मु. पु. 'न्मेढा' इति स्यात् । ४ द. तः । ५ द. वर्तिश्च । ६ द. वर्त्तिका । ७ द. खि । ८ द. वर्त्तिका । ९ द. [10]दमर्द्धेन कारयेत् । १० द. का । ११ द. वर्ति १२ द. पंठं । १३ मुद्रित पुस्तके 'त्ततुल्यः' इति स्यात् । १४ द. वर्त्तिका ।

द्वादशांं( [1]शा )मिदं( तं ) पीठं जङ्घा ( माद्दा ? ) तदर्धतः ।
माला तु द्विस्तरा प्रोक्ता लशुनं तत्समं भवेत् ॥ १०३ ॥

भरणं स्तरमेकं तु द्विभागः कलशो भवेत् ।
उच्छालकं च तत्तुल्यं गण्डो भागं विधीयते ॥ १०४ ॥

कुर्वीत द्विस्तरं पट्टं भागेनैकेन पट्टिकाम् ।
पूर्ववद् गिरिपत्रीं[2] ++स्तरां तु वरण्डिकाम् ॥ १०५ ॥

स्तरमेकं भवेच्छेदः कण्ठस्तद्द्विगुणस्ततः ।
पूर्ववत् पत्रिके द्वे तु द्व्यंशं खिरिहिरं भवेत् ॥ १०६ ॥

छेदः कण्ठः पट्टिका च गिरिपत्रीति[3] भागिकाः ।
द्विस्तरा तिलनासा स्याच्छेदः[4] कार्यस्तु भागिकः ॥ १०७ ॥

द्विस्तरः स्यात् ततः कण्ठो भागिका कण्ठपट्टिका ।
भागिकी गिरिपत्री[5] च विधातव्या ततः परम् ॥ १०८ ॥

पञ्चस्तरा( न् ) त्रिभागोना( न् ) कुर्यादामलसारकम् ।
त्रिस्तरं स्यात् ततः ++शेषं पूर्वक्रमाद् भवेत् ॥ १०९ ॥

पञ्चम्यां भूमिकायां तु पीठं स्याद् द्वादशस्तरम् ।
जङ्घा पञ्चस्तरा मेठा माला च स्याद् द्विभागिकी ॥ ११० ॥

अर्धस्तरेण लशुनं स्तरेण भरं( रणं ) भवेत् ।
कुम्भं गण्डेन सहितं स्तरं कुर्याद् विचक्षणः ॥ १११ ॥

उच्छालं द्विस्तरं कुर्याद् गण्डो भागं विधीयते ।
पट्टः[6] सार्धस्तरः[7] कार्यः पट्टिका तु स्तरं भवेत् ॥ ११२ ॥

तत्समा गिरिपत्री[8] च त्रिस्तरा तु वरण्डिका ।
छेदो [9]भागत्रिभोगं कण्ठस्यार्धे गुणस्ततः ( ? ) ॥ ११३ ॥

पत्रिके द्वे तु भागिक्यौ +स्तरा तिलनासिका ।
अर्धप्रस्तार[10]युक्तासौ कार्याथ प्रस्तरान्विता ॥ ११४ ॥

---

१ द. श । २ द. त्रा । ३ द. वर्त्तीति । ४ द. दकार्यास्तु । ५ द. वार्त्तिश्च । ६ द. दः । ७ द. र्धः । ८ द. °वर्त्तिश्च । ९ द. छेदो भागं त्रिभागोनं; मुद्रित पुस्तके 'भागं त्रिभागोनं कण्ठश्चार्धगुणस्ततः' इति स्यात् । १० द. स्त ।

छेदं भागेन कुर्वीत कण्ठं तद्द्विगुणं ततः ।
( अर्धप्रस्तरं ? ) पूर्ववत् पत्रिके द्वे तु घण्टा स्तरचतुष्टयम् ॥ ११५ ॥
कुर्वीत द्विस्तरं पद्मं शेषं पूर्वक्रमेण तु ।
अष्टमी भूमिका या तु सा कार्या शुभलक्षणा ॥ ११६ ॥

मेर्वादयो विंशतिरेवमुक्ताः
प्रासादमुख्याः [1]++++++ ।
भूम्यष्टकान्तास्तदिमान् विदध्यात्
स्याच्छिल्पिनां संसदि पूजनीयः ॥ ११७ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
मेर्वादिविंशिकानागरप्रासादभूमिजा नामाध्यायस्त्रिषष्टितमः ॥

---

## अथ दिग्भद्रादिप्रासादलक्षणं नाम चतुष्षष्टितमोऽध्यायः ।

प्रासादमथ ( [2]वारोयं ? ) वक्ष्यामो नामलक्षणैः ।
लक्षणै( ? )स्तेषु दिग्भद्रैः[3] श्रीवत्सो वर्धमानकः ॥ १ ॥
नन्द्यावर्तश्चतुर्थः स्यात् पञ्चमो नन्दिवर्धनः ।
विमानश्च तथा पद्मो [4]महाभद्राख्य एव च ॥ २ ॥
श्रीवर्धमानकाख्यश्च महा( पद्मतोऽपि वा ? ) ।
एकादशः पञ्चशालो[5] द्वादशः पृथिवीजयः ॥ ३ ॥
तत्र प्रागेव ( [6]दिग्भद्रः श्रावणं ? ) प्रतिपाद्यते ।
चतुरश्रीकृते क्षेत्रे नवभागविभाजिते ॥ ४ ॥
कोणो द्विभागविस्तारः प्रत्यङ्गौ भागिकौ स्मृतौ ।
शाला भागत्रया कार्या नासिकात्रयशोभिता ॥ ५ ॥
परस्परं विनिष्कासमर्धभागेन कारयेत् ।
कोणप्रत्यङ्गयोरन्तः शालाप्रत्यङ्गयोस्तथा ॥ ६ ॥

---

१ मु. पु. 'शुभलक्ष्मयुक्ताः' इति स्यात् । २ द. व; मुद्रित पुस्तके 'वावाटम्' इति स्यात् । ३ द. द्रा । ४ मुद्रित पुस्तके 'पद्माभिधाऽपि वा' इति स्यात् । द. महापद्मस्ततोऽपि वा । ५ द. ला । ६ मुद्रित पुस्तके 'दिग्भद्रलक्षणम्' इति स्यात् ।

[1]षोडशांशेन कुर्वीत +++ सलिलान्तरम् ।
सीमास्याद् ( स्य ) दशभिर्भागैः प्रविभज्य विधीयते ॥ ७ ॥
[2]++का गर्भपादैः षड् भित्तयः स्युर्द्विभागिकाः ।
( वर्धमानेनमथ ब्रूमो ? ) विस्ताराद् द्विगुणं हि तत् ॥ ८ ॥
द्वौ भागौ वेदिकाबन्धो जङ्घा ज्ञेया चतुष्पदा ।
( [3]शान्तापत्रा ? ) कपोताली सार्ध[4]भागं समुच्छ्रिता ॥ ९ ॥
सार्धभागसमुच्छ्राया[5] कार्या प्रथमभूमिका ।
द्वितीया भूमिका ज्ञेया सार्धभागत्रयोदया[6] ॥ १० ॥
तृतीया च विधेया स्यात् सार्धभागद्वयोच्छ्रिता ।
उच्छालकं[7] च जङ्घा च भूमिकार्ध[8] विधीयते ॥ ११ ॥
कूटं ( तै ? ) चार्धतो देयं कर्मशोभासमन्वितम् ।
घण्टा भागत्रयोत्सेधा बहुभिश्चाश्रिभिर्युता ॥ १२ ॥
कलशं स्थापयेदूर्ध्वं भाग[9]द्वयसमुच्छ्रितम् ।
बीजपूरकसंयुक्तं वर्तुलं पल्लवावृतम् ॥ १३ ॥
[10]शिखरार्धस्य कुर्वीत सपादमुदयं तथा ।
इमं दिग्भद्रसंज्ञं[11] यः प्रासादं कारयेत् पुमान् ॥ १४ ॥
शतक्रतुफलं सोऽपि लभते नात्र संशयः ।
लक्ष्म श्रीवत्ससंज्ञस्य[12] प्रासादस्याभिधीयते ॥ १५ ॥
चतुरश्रीकृते क्षेत्रे भक्ते पञ्चदशांशकैः ।
(अस्योच्छ्रायो सकाश्र्यंशस्त्रं[13] क्षोणस्यादंशकैस्त्रिभिः ?) ॥ १६ ॥
कर्णशालान्तरे कार्यौ द्व्यंशौ प्रतिरथावुभौ ।
( तयोरुभयोः सार्धं सादं तु मार्ग्रौ निवेशयेत् ? ) ॥ १७ ॥
भागमेकं प्रविष्टौ च शाला भागत्रयात्मिका ।
निर्गमः स्यात् पदार्धेन गर्भस्तु नवभागिकः ॥ १८ ॥

१ द. °शः कासेन कु° । २ द. कार्यौ गर्भः पदैः षड् मित्तयः स्युर्द्विभाषकाः । ३ मुद्रित पुस्तके 'शतपत्रा' इति स्यात् । ४ द. र्धं । ५ द. यो । ६ द. श । ७ द. कश्च । ८ द. र्धं । ९ द. त्र । १० द. शिखरार्द्धस्य चोर्द्ध्वस्य चोर्द्ध्वेन सूरसेनं विधीयते । प्रासादगर्भ मानेन हीनमष्टांशकेन वा ॥ विस्तारमस्य कुर्वीत । इति अधिकः पठ्यते । ११ द. ज्ञे । १२ द. श्च । १३ द. स्त्र्यं ।

त्रिपदा च भवेद् भित्तिरूर्ध्वमस्याथ कथ्यते(?)।
श्रीवत्सः कीर्तितः[1] सम्प्रत्युच्यते वर्धमानकः ॥ १९ ॥

चतुरश्रीकृते क्षेत्रे +++ भागकल्पितम्।
छेदादि गिरिपत्र्यन्तं दद्यात् पूर्वक्रमेण(तु) ॥ २० ॥

द्विस्तरा त्रिस्तरा चापि कर्तव्या[2] वेदिका न(म)ता।
स्तरमेकं भवेच्छेदः कण्ठस्तद्द्विगुणो भवेत् ॥ २१ ॥

पट्टिकां गिरिपत्रीं[3] च तस्यैवार्धेन कारयेत्।
दशस्तरा ततो घण्टा यदि वामलसारकम् ॥ २२ ॥

द्विस्तरं स्यात् ततः पद्मं द्विगुणः कलशस्ततः।
तदूर्ध्वं भूमिका कार्या सपीठा लक्षणान्विता ॥ २३ ॥

स्तरैः स्यात् पञ्चदशभिः पीठं जङ्घापि तावता।
चतुःस्तरा भवेन्माला लशुनं तु स्तरद्वयम् ॥ २४ ॥

तस्या(स्य)र्धेन भरणं कुम्भं कुर्वीत तत्समम्।
तस्य द्विगुणमुच्छालं गण्डमेकस्तरं भवेत्[4] ॥ २५ ॥

पट्टं द्विगुणमेतस्मात् कुर्यादर्धेन पट्टिकाम्।
पट्टिकायाः प्रमाणेन कर्तव्या गिरिपत्रिका ॥ २६ ॥

वरण्डी त्रिस्तरा कार्या शूरसेनैरलङ्कृता।
एकस्तरस्ततश्छेदः कण्ठस्तु द्विगुणस्ततः ॥ २७ ॥

पट्टिका गिरिपत्री[5] च विधातव्ये स्तरं स्तरम्।
[6]उभौ (स्तरौ) खिरिहिरं भवेच्छेदः स्तरं ततः ॥ २८ ॥

तथैव कण्ठस्तद्वच्च पट्टिकागिरिपत्रिके[7]।
वरण्डिका द्विस्तरा स्याच्छेषं पूर्ववदाचरेत् ॥ २९ ॥

उभौ स्तरौ खिरिहिरं छेदं कुर्वीत भागिकम्।
[8]कण्ठश्च पत्रिका चैव गिरिपत्री[9] च पूर्ववत् ॥ ३० ॥

---

१ द. ता। २ द. व्यो। ३ द. वर्त्तिं। ४ द. ततः। ५ द. वर्त्ती। ६ द. स्तरावुभौ खिरे°। ७ द. वर्त्तिके। ८ द. कंठं च पत्रिकां। ९ द. त्रां।

द्विस्तरा वेदिका कार्या (ब्र[1]वपादिक्रया ?) युता ।
छेदमेकं स्तरं कुर्यात् कण्ठं (तद्) द्विगुणं ततः ॥ ३१ ॥

पत्रिकां गिरिपं[2]त्रीं च तस्यैवार्धेन कारयेत् ।
स्तराष्टकेन घण्टा स्याद् यदिवामलसारकम् ॥ ३२ ॥

भवेत्पमं(?) ++++ कलशो द्विगुणस्ततः ।
स्तरमेकं भवेद् ग्रीवा कर्णं कुर्वीत तत्समम् ॥ ३३ ॥

द्विगुणं बीजपूरं तु पूर्वत्राप्येवमाचरेत् ।
([3]त्कृष्टा सप्तदशांशकैर्भागैस्त्रिभिर्भवेत् ?) ॥ ३४ ॥

द्विभागिकः प्रतिरथः शाला स्यात् पञ्चभागिका ।
शालाप्रत्यङ्गयोरन्तर्भागार्धेनोदकान्तरम् ॥ ३५ ॥

परस्परं विनिष्कासः पादहीनं[4] पदं भवेत् ।
गर्भः स्याद् दशभिर्भागैर्भित्तिः सार्धपदत्र[5]यात् ॥ ३६ ॥

चतुर्भिर्वेदिकाबन्धो जङ्घा स्यादष्टभिः पदैः ।
सार्धैः पञ्चभिराद्या भूः कपोतालीसमन्विता ॥ ३७ ॥

तृ(द्वि)तीया भूमिका चास्य कर्तव्या पञ्चभिः पदैः ।
सार्धैर्भवेत् तृतीयापि चतुर्भिर्भूमिका पदैः ॥ ३८ ॥

चतुर्थी भूमिका भागैश्चतुर्भिः कीर्तिता पदैः ।
घण्टा च त्रिपदा कार्या कूटभक्त्यादि पूर्ववत् ॥ ३९ ॥

शुकनासादि कुम्भादि पूर्ववत् समुदाहृतम् ।
उक्तोऽयं वर्धमानाख्यः प्रासादः शुभलक्षणः ॥ ४० ॥

नन्द्यावर्तमथ ब्रूमः क्षेत्रे सप्तदशांशके ।
कोणांश्चतुष्पदान् कुर्यात् पञ्जरं सार्धभागिकम् ॥ ४१ ॥

षड्(भि)र्भागैर्भवेच्छाला गर्भस्तु दशभागिकः ।
सार्धत्रिभागिका भित्तिरूर्ध्वमान(द्विभागुणम् ?) ॥ ४२ ॥

---

१ द. ब्रह्मप्यदिक्रया युता; मुद्रित पुस्तके 'ब्रर्धपादिक्रया' इति स्यात् । २ द. वर्त्तीं । ३ द. कृ । ४ द. हीना पदा भवेत् । ५ द. त्रयं ।

वेदी चतुष्पदोत्सेधा जङ्घा भागाष्टकोच्छ्रिता ।
षट्पदा भूमिका + + + +[1] पञ्चपदायता ॥ ४३ ॥
स्यात् सम्पदे चतुर्भागा तृतीयान्या पदोच्छ्रिता[2] ।
(सांद्विवांसेवघंटा[3] ?) स्यात् पूर्ववत् कलशादिकाः ॥ ४४ ॥
नन्द्यावर्तोऽयमाख्यातः प्रासादः सर्वकामदः ।
अथातः सम्प्रवक्ष्यामः प्रासादं नन्दिवर्धनम् ॥ ४५ ॥
चतुरश्रीकृते क्षेत्रे पदाष्टदशकाङ्किते[4] ।
कोणस्त्रिपदविस्तारः प्रत्यङ्गं स्यात् पदद्वयम् ॥ ४६ ॥
शाला चतुष्पदा प्रोक्ता चित्रकर्मोपशोभिनौ ।
पादोनभागमानेन निर्गमः स्यात् परस्परम् ॥ ४७ ॥
कोणप्रत्यङ्गयोर्मध्ये शालाप्रत्यङ्गयोस्तथा ।
भागेन विस्तृतं कार्यं[5] सर्वत्र सलिलान्तरम् ॥ ४८ ॥
गर्भः स्याद् दशभिर्भागैर्भित्तिर्भागै[6]चतुष्टयात् ।
ऊर्ध्वमानमथ ब्रूमो द्विगुणं तत् प्रकीर्तितम् ॥ ४९ ॥
वेदीबन्धोंऽशकाः पञ्च जङ्घा स्यादष्टभागिका ।
प्रथमा भूमिका कार्या कपोतालीसमन्विताँ ॥ ५० ॥
सपादैः पञ्चभिर्भागैर्द्वितीया तद्वदेव हि ।
तृतीया तु भवत्यस्य भूमिका पञ्चभागिका ॥ ५१ ॥
चतुर्थी भूमिका ज्ञेया सार्धभागचतुष्टयी ।
घण्टा तस्योर्ध्वतः कार्या पदत्रयसमुच्छ्रिता ॥ ५२ ॥
शुकाघ्रा वे(शू)रसेनश्च स्तम्भिकाकूटभक्तयः ।
कलशस्योदयस्तस्यं[10] विधेयाश्चास्य पूर्ववत् ॥ ५३ ॥
अमुं यः[11] कारयेदन्यः प्रासादं नन्दिवर्धनम् ।
स नन्दिगणसामान्यो जायते नात्र संशयः ॥ ५४ ॥

१ द. द्धि पंचदायता । २ द. °ष्टिता । ३ द. घं । ४ द. तौ । ५ द. तं । ६ द. भागैश्च° । ७ द. तः । ८ द. यं । ९ द. घ्न । १० द. द्वद्विधेय । ११

अतः परमथ ब्रूमो विमानं शु[illegible] ।
चतुरश्रीकृते क्षेत्रे विंशत्या भाजिते पदैः ॥ ५५ ॥
को(णाः) पञ्चपदाः कार्या मध्ये च सलिलान्तरम् ।
कर्णिका सार्धभागेन [illegible] ॥ ५६ ॥
([1]सालोपद्यद ?)विस्तीर्णा सार्धभागेन निर्गता ।
कोणस्य चार्धभागेन कर्णिकानिर्गमः स्मृतः ॥ ५७ ॥
गर्भश्चास्य विधातव्यो द्वादशांशकविस्तृतः ।
भित्तिश्चतुष्पदा कार्या दिक्षु सर्वा[illegible] ॥ ५८ ॥
ऊर्ध्वमानमथैतस्य ब्रूमस्तद् द्विगुणं भवेत् ।
वेदीबन्धोंऽशकाः पञ्च जङ्घा नवपदोच्छ्रिता ॥ ५९ ॥
प्रथमा भूमिका कार्या भागैः षड्भिः समुच्छ्रिता ।
शतपत्रां कपोतालीं मध्ये चास्याः प्रकल्पयेत् ॥ ६० ॥
द्वितीया भूमिका चास्य विधेया पञ्चभिः पदैः ।
अर्धेऽस्याः स्तम्भकोच्छालं कूटं चार्धव्यवस्थितम्[2,3] ॥ ६१ ॥
([4]परस्परपार्धेन हर्मा ?)[illegible] ।
स्तम्भिकाकूटभरणशूरसेनाः[5] सघण्टकाः ॥ ६२ ॥
कलशस्योदयश्चात्र प्राग्वत् कार्या विपश्चिता ।
य इमं कारयेद् भक्त्या विमानाख्यं [6]नृपुङ्गवः ॥ ६३ ॥
इह भोगान् स लभते तथा (सत्कायदंविधे?) ।
अथ पद्माप्रियप्रीतिजननः पद्म उच्यते ॥ ६४ ॥
चतुरश्रीकृते क्षेत्रे भक्ते षोडशभिः पदैः ।
कोणाश्चतुष्पदाः कार्याः सलिलान्तरभूषिताः ॥ ६५ ॥
द्विपदः पञ्जरो ज्ञेयो गर्भे कोणाश्चतुष्पदाः ।
([8]भागःस्यात्?) षोडशांशेन तदन्ते सलिलान्तरम् ॥ ६६ ॥

---

१ मु. पु. 'शाला षट्पद' इति स्यात्; द. स । २ द. ताः । ३ द. नां । ४ मु. पुस्तके 'परस्परं पदार्धेन हीना' इति स्यात् । ५ द. ता । ६ द. नो । ७ द. त्रि । ८ द. भागस्य: मुद्रित पुस्तकेऽपि 'भागस्य' इत्येव पाठभेदः स्वीकृतः ।

गर्भः स्यान्नवभिर्भागैर्भित्तिः सार्धपदत्रयम् ।
ऊर्ध्वमानमथ ब्रूमस्तथा( द )स्य द्विगुणं भवेत् ॥ ६७ ॥

द्वितीया भूमिका ज्ञेया भागैः पञ्चभिरुच्छ्रिता ।
अन्योन्यं तु पदार्धेन हीनं स्याद् भूमिकाद्वयम् ॥ ६८ ॥

स्तम्भिकाकूटभरणशुकाग्रं[1]( ग्रा )शूरसेनकाः ।
घण्टा( का[2]रस ? )विस्तारा भवन्त्येतस्य पूर्ववत् ॥ ६९ ॥

पद्मप्रासादमेनं यः कारयेद् भक्तिसंयुतः ।
स श्रीपतिरिवं[3] श्रीशो भवत्यवनिमण्डनः ॥ ७० ॥

महाभद्रमथ ब्रूमः प्रासादमतिसुन्दरम् ।
चतुरश्रीकृते क्षेत्रे विंशत्या सैकयाङ्किते ॥ ७१ ॥

कोणाश्चतुष्पदाः सार्धद्व्यंशाः प्रत्यङ्गकाः स्मृताः ।
शाला पञ्चपदा[4] कार्या दिक्षु सर्वास्ववस्थिता[5] ॥ ७२ ॥

पादोनभागविस्तारं कर्तव्यं सलिलान्तरम् ।
गर्भस्त्रयोदशपदो भित्तयश्च चतुष्पदाः ॥ ७३ ॥

ऊर्ध्वमानमथैतस्य ब्रूमस्तद् द्विगुणं भवेत् ।
वेदी चतुष्पदोत्सेधा जङ्घा स्यादष्टभागिका ॥ ७४ ॥

सप्तभागसमुत्सेधा[6] विधेया चादिभूमिका ।
मध्ये सान्तरपत्रास्याः कपोताली पदत्रयम् ॥ ७५ ॥

द्वितीयभूमिका चास्य सार्धैः षड्भिः पदैः स्मृता ।
भागभागविहीनास्तु तिस्रोऽन्या भूमिकास्ततः ॥ ७६ ॥

घण्टा भागत्रयोत्सेधा पद्मपत्रिकया सह ।
स्तम्भिका[7]कूटभरणशुकाग्राशूरसेनकाः ॥ ७७ ॥

कलशः[8] ( कुम्भं नघाः ? ) प्राग्वत् तस्य भवन्त्यमी ।
महाभद्रमिमं[9] योऽत्र कारयेद् भक्तिमान् नरः ॥ ७८ ॥

---

१ द. ग्र । २ द. कालस; मुद्रित प्रतौ ' कलश ' इति स्यात् । ३ द. रिवाश्रेसाङ्क° । ४ द. दाः । ५ द. ताः । ६ द. धो । ७ द. स्तंभकाः कूटभरणा । ८ द. कलशः कुंभनाथाः । ९ द. मां ।

स स्वर्गे सुरनारीभिः सेव्यते मदनाज्ञया ।
अथ श्रीवर्धमानस्य लक्ष्म साम्प्रतमुच्यते ॥ ७९ ॥

चतुरश्रीकृते क्षेत्रे चतुर्विंशतिभाजिते ।
कोणाः षड्भागिकाः कार्याः शालाः स्युर्नवभागिकाः ॥ ८० ॥

सार्धं पदद्वयं कार्यः[1] शालानामत्र निर्गमः ।
कुर्याज्जलान्तरं तत्र मध्यतः कोणशालयोः ॥ ८१ ॥

विस्तृतं सार्धभागेन प्रविष्टमपि भागतः ।
([2]कोणे मध्यं ?) विधातव्यं भागेनैवोदकान्तरम् ॥ ८२ ॥

नवांशकृ(क्लृ)प्तशालायाः प्रत्यङ्गौ द्वावुदाहृतौ ।
भागं[3]द्वितयविस्तारौ भागेनैकेन निर्गतौ ॥ ८३ ॥

चतुर्दशपदो गर्भो[4] भित्तिः पञ्चपदा स्मृता ।
ऊर्ध्वमानमथ ब्रूमस्तदस्य द्विगुणं भवेत् ॥ ८४ ॥

वेदिका षट्पदोत्सेधा जङ्घैकादशभिः पदैः ।
प्रथमा भूमिका चास्य कार्या सप्तांशकोच्छ्रिता ॥ ८५ ॥

पादोनैः सप्तभिर्भागैर्द्वितीया भूमिकेष्यते ।
तृतीया भूमिका षड्भिः सपादै[5]र्जायते पदैः ॥ ८६ ॥

(पा[6]देन षटकां ?) भागेन चतुर्थी[7] भूमिका स्मृता ।
भागं भागं विधातव्यः प्रवेशः प्रतिभूमिकम् ॥ ८७ ॥

सपादैः पञ्चभिर्भागैः कार्यों घण्टासमुच्छ्रयः ।
भागत्रयसमुत्सेधस्तदूर्ध्वे कलशो भवेत् ॥ ८८ ॥

सुकाग्रासूरसेनश्च स्तम्भिकाकूटभक्तयः ।
कार्या पूर्वोक्तमार्गेण विचित्रकर्मोपशोभिताः ॥ ८९ ॥

---

१ द. र्यं । २ मु. पु. ‘ कोणमध्ये ’ इति स्यात् । ३ द. भागं द्वि° । ४ द. र्भे । ५ द. प । ६ मु. प्रतौ ‘ पादोन षट्क ’ इति स्यात् । ७ द. ट्क । ८ मुद्रित पुस्तकानुसारेण इत ऊर्ध्वं मातृकायां पत्रमेकं ( २३३ तमं ) लुप्तम् परन्तु ‘ द. ’ पुस्तकानुसारतः ‘ सुकाग्रा……अष्टाविंशति पदाङ्किते ’ इत्यन्तं अधिकः श्लोकपाठ उपलभ्यते ।

श्रीवर्द्धमानं य इमं प्रासादं कारयेन्नृपः ।
यशः श्रीश्रेयसांगस्य वृद्धि स्यादुत्तरोत्तरा ॥ ९० ॥
पद्मयोनिपृथः सद्मद्मथ कीर्त्त्यते ।
चतुरस्रीकृते क्षेत्रे विंशत्येकोनयान्तिके ॥ ९१ ॥
कोणाश्चतुष्पदाः कार्या प्रत्यङ्गा अपि तत्समाः ।
परिवर्त्तनकर्त्तव्या परस्परममी शुभाः ॥ ९२ ॥
शाला नवांशविस्तीर्णा स्यात् पदत्रयनिर्गमा ।
शालालस्ताश्च कर्त्तव्या द्विभागा बालमञ्जरी ॥ ९३ ॥
कर्णप्रत्यङ्गयोर्मध्ये बालप्रत्यङ्गयोस्तथा ।
जलान्तराणि कार्याणि तत्प्रमाणस्य मध्यतः ॥ ९४ ॥
गर्भः सप्तदशांसः ( शः )स्याद्भित्तयः षड्भिरंशकैः ।
ऊर्ध्वमानमथैतस्य ब्रूमस्तद्द्विगुणं भवेत् ॥ ९५ ॥
वेदी षड्भागिकोत्सेधा जङ्घाभागास्त्रयोदश ।
सप्तभागसमुत्सेधा कर्त्तव्या चादिभूमिका ॥ ९६ ॥
षड्भिः सार्धैः द्वितीया स्याद्भागभागोज्झिते परे ।
पञ्चमी स्याचतुर्भागा भागार्द्धेन परेत्पृथक् ॥ ९७ ॥
प्रवेशः कूटदर्भेण भूमीनां स्यात् परस्परम् ।
भूमिकार्द्धं विधातव्यं स्तम्भिकाभरणान्वितम् ॥ ९८ ॥
अपरं कूटशोभातिरर्द्धमस्याविभूषयेत् ।
घण्टापञ्चपदोत्सेधा विस्तृता गर्भमानसः ॥ ९९ ॥
सुकाग्राय परं यत्तु पूर्ववत्तत् प्रकल्पयेत् ।
महापद्माभिधयोत्र प्रासादं कारयेत् सुधीः ॥ १०० ॥
इहामुत्र च निर्द्वंद्वः स परं सुखमश्नुते ।
लक्ष्याथ पञ्चशाला प्रासादस्याभिधीयते ॥ १०१ ॥
चतुरस्रीकृते क्षेत्रे अष्टाविंशतिपदान्तिके ।
तस्यार्जनफलाः काराः कोणा पञ्चपदाः स्मृताः ॥ १०२ ॥
प्रत्यङ्गास्त्रिपदाः कार्या भागद्वितयनिर्गता ।
शाशा( ला )ष्टपदविस्तारा पदत्रितयनिर्गमा ॥ १०३ ॥

कोणप्रत्यङ्गयोर्मध्ये शालाप्रत्यङ्गयोस्तथा ।
भागेन विस्तृतं कार्यं प्रविष्टं च जलान्तरम् ॥ १०४ ॥
गर्भः षोडशभिर्भागैः भित्तयोऽपि च षट्पदाः ।
ऊर्द्धमानमथैतस्य कूटस्तद्द्विगुणं भवेत् ॥ १०५ ॥
विधेयो वेदिकाबन्धः सार्धपञ्चपदोच्छ्रयम् ।
जङ्घा चास्य भवेत् कार्या तत्रैकादशभागिका ॥ १०६ ॥
सार्द्धसप्तपदोत्सेधा विधातव्या च भूमिका ।
कपोतपाली कार्यास्य मध्ये भागत्रयोच्छ्रिता ॥ १०७ ॥
अयं भूमिप्रमाणेन स्याद्द्वितीयाऽपि भूमिका ।
तृतीया सप्तभिर्भागैश्चतुर्थी सार्धषट्पदा ॥ १०८ ॥
पञ्चमी षट्पदा कार्या घण्टा पञ्चपदोच्छ्रिता ।
शालास्थानेषु सर्वेषु कर्त्तव्यं पञ्चघण्टकम् ॥ १०९ ॥
कुमारैः पञ्चभिर्युक्तं पञ्चशालोयमुच्यते ।
शुकाघ्रासूरसेनादि यच्चान्यत् कलशादिकम् ॥ ११० ॥
तदस्य पूर्ववत् कार्यं पञ्चशालस्य धीमता ।
पञ्चशालमिमं यस्तु प्रासाद( दं )का( र )येद्भुवि ॥ १११ ॥
तस्य धन( न्य )स्य सन्तानेऽप्यतुला( लं ) जायते सुखं ।
अथातः संप्रवक्ष्यामः प्रासादं पृथिवीजयम् ॥ ११२ ॥
चतुरस्रीकृते क्षेत्रेऽष्टाविंशतिपदाङ्किते ।
[1]+ + + + + + + + + + + + + पदाः स्मृताः ।
भागद्वितयविस्ताराः कर्तव्या बालपञ्जराः ॥ ११३ ॥
शालो[2] षड्भागविस्तीर्णा भागत्रि[3]( तयमुच्छ्रिता ) ।
( को )णप्रत्यङ्गयोर्मध्ये [4]शालाप्रत्यङ्गयोस्तथा ॥ ११४ ॥
कक्षान्तरे विधातव्यं भागिकं सलिलान्तरम् ।
गर्भः [5]स्याद् दशभिर्भागैर्भित्तिः कार्यास्य षट्पदा[6] ॥ ११५ ॥

१ द. कोणाः कार्याश्चतुर्भागा प्रत्यंगास्त्रिपदाः स्मृताः । २ द. लाः । ३ द. त्रितयनिर्गताः ।
४ द. बा । ५ द. षोड । ६ द. दाः ।

षट्पदा स्यात् तृतीयात्र[1] ++ भागोच्छ्रि[2]ताः पराः ।
कर्ण[3] ++++ स्तिस्रो घण्टा चाष्टपदोच्छ्रिता ॥ ११६ ॥

कूटैरलङ्कृता कार्या शुकाघ्रादि च पूर्ववत् ।
स[4] +++ पि चैतेषां प्रासादार्धेन कारयेत् ॥ ११७ ॥

घण्टां तु संहतां श्लक्ष्णां बन्धनैरुपशोभिताम् ।
यादृशी कम[5] ++ ने कूटेष्वेषां विधीयते ॥ ११८ ॥

भद्रेषु तादृशी कार्या कृत्स्नप्रासादसिद्धये ।
य इमं कारयेद् राजा प्रासादं पृथिवीजयम् ॥
भुनक्ति निखिलां पृथ्वीं स सप्ताम्भोधि[6]मालिनीम्[7] ॥ ११९ ॥

इतीरिता द्वादश( स्यगर्ते ? )
प्रासादमुख्याः शुभलक्ष्मयुक्ताः ।
वावाटसंज्ञा[8]स्तदमून् विदित्वा
( ल[9]भेत् पूज्यस्थ[10]यंते नृ ? )पेभ्यः ॥ १२० ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
[11]( वटोक ? )प्रासादो नाम चतुःषष्टितमोऽध्यायः ॥

---

## अथ भूमिजप्रासादलक्षणं नाम पञ्चषष्टितमोऽध्यायः ।

भूमिजानां विमानानां ब्रूमो लक्ष्म क्रमागतम् ।
चतुरश्रीकृतानां च वृत्तानां (वृ[12]त पूर्वशः ?) ॥ १ ॥

केषाञ्चिन्निर्गमस्तत्र जायते भागसंख्यया ।
केषाञ्चित् पुनरेष स्याद् वृत्तमध्यमधिष्ठितः ॥ २ ॥

चतुरश्रीकृते क्षेत्रे दशभागवि[13]भाजिते ।
चतुर्भूमियुतस्याथ लक्ष्म [14]त्संशस्य ( च्छन्दस्य ) कथ्यते ॥ ३ ॥

---

१ द. भागं । २ द. ष्टि । ३ द. कर्तव्या भूमिका । ४ द. सर्वेषामपि । ५ द. कर्मरचना । ६ द. ज । ७ द. नां । ८ द. ज्ञ । ९ मु. 'लभेत् पूजां स्थपतिर्नृ' इति स्यात् । १० द. प । ११ द. वटोकप्रासादध्यायो नाम चतुःषष्टितमः ॥ छ ॥ १२ द. च वृत्तपूर्वशः । मु. पाठस्तु 'अनुपूर्वशः' इति स्यात् । १३ द. रा । १४ द. त्र्यंशस्य ।

चत्वारश्चतुरश्राः स्युर्निषधो मलयाचलः ।
माल्यवान् नवमाली च निषधस्तेषु कथ्यते ॥ ४ ॥
(कोणा[1] शंभोतरो द्वयंशं[2] भार्दशंभोर्धभागिकः ?) ।
विस्तारायामतः प्रोक्तो भद्रं पञ्चांशविस्तृतम् ॥ ५ ॥
कार्या(:) पादोनभागेन भद्रस्यैतस्य निर्गमाः[3] ।
कार्या पल्लम्बि(वि)का तस्य पादभागेन विस्तृता ॥ ६ ॥
भागेन कर्णिका कार्या विस्तृत्या निर्गमेण च ।
प्रतिभद्रं च भागार्ध[4]निर्गतं तत्र कल्पयेत् ॥ ७ ॥
पादोनभागद्वितयं[5] प्रतिभद्रस्य विस्तृतिः ।
षड्भिर्भागैर्भवेद् गर्भो भित्तिरस्य द्विभागिका ॥ ८ ॥
तलच्छन्दस्य लक्ष्मोक्तमूर्ध्वमानमथोच्यते ।
विस्तृतेर्द्विगुणं तच्च चतुर्भागा[6]धिकं भवेत् ॥ ९ ॥
वेदीबन्धो भवेदस्य सार्धभागद्वयोच्छ्रितः ।
तत्तु भागद्वयं सार्धं विभजेदर्धपञ्चमैः ॥ १० ॥
भागद्वयेन कुम्भः स्यात् कलशो भागिकः स्मृतः ।
भागार्धेनान्तरं पत्रं कपोतली तु भागिकी ॥ ११ ॥
([6]उ)क्तोऽयं वेदिकाबन्धो भागैरित्यर्धपञ्चमैः ।
अर्धपञ्चमभागैः[7] स्याज्जङ्घोच्छालकसंयुता[8] ॥ १२ ॥
त्रिभिं++++++ भूत्सेधः सवरण्डकः ।
द्वितीयास्य भवेद् भूमिरर्धपञ्चमभागिका ॥ १३ ॥
कुम्भः सोच्छालका[10] +++++ यापि तावता ।
तृतीया स्या(द्) भूर्विधेया([11]स्यासादा ?) चतुरङ्गिका ॥ १४ ॥
चतुर्थी चतुरो (भागाद्यः समु[12] +++++ ?) ।
([13]कु)म्भः सोच्छालकः कूटस्योच्छ्रायोऽपि च पूर्ववत् ॥ १५ ॥

---

१ द. णः । २ द. शादर्ध° । ३ द. मः । ४ द. त्रि । ५ द. गो । ६ द. प्रो । ७ द. गः । ८ द. तां । ९ द. रसैर्भवेद्यथ । १० द. °कोद्वेन कूटोच्छ्रायोऽपि तावता । ११ द. स्य सा पादा । १२ द. च्छ्रायतो भवेत् । १३ द. स्तं ।

वेदी स्यात् सांशका सार्धपञ्चांशा स्कन्धविस्तृतिः ।
([1]+++++खेत्सार्ध ?) चतुर्गुणितविस्तरात् ॥ १६ ॥
तले या कथिता शाला भागपञ्चकविस्तृता ।
स्कन्धस्थानं[2] ++++ भागद्वितयविस्तृता(:) ॥ १७ ॥
रेखावशेन कर्तव्याः[3] प्रवेशांश्च[4] क्रमात्तु( माद् भु )वाम् ।
मूलतः स्कन्धपर्यन्तं घण्टायाः पु+++[5] याः ॥ १८ ॥
भवेत् प्रासादविस्तारः ([6]पञ्चमणैव ?) सुन्दरः ।
(वेदं[7]कोऽर्धेतरं ?) यत् स्याच्छालायास्तत्प्रमाणतः ॥ १९ ॥
[8]++ये विस्तरः प्रोक्तस्तं + षड्भिर्विभाजयेत् ।
भागेनैकेन कण्ठस्य प्रवेशः परितो भवेत् ॥ २० ॥
कण्ठवृत्तं चतुर्भागविस्तृतं परिकल्पयेत् ।
घण्टोत्सेधं त्रिभिर्भागैर्विभजेत् तत्र भागिकां[9]( त् ) ॥ २१ ॥
घण्टोत्सेधार्दं[10]तः कार्यं पद्मं( द्म )शीर्षं विपश्चिता ।
उत्सेधात् कलशो द्व्यंशः सार्धभागेन विस्तृतः ॥ २२ ॥
शिखरात् त्र्यंशहीना स्यात् सर्वत्र ([11]द्युताशिका ?) ।
इति त्र्यंशश्चतुर्भूमिः प्रासादो नि[12]षधो मतः ॥ २३ ॥
सर्वासामेव कर्तव्यो देवतानां विभूषयेत्( तये ) ।

निषधप्रासादः ॥

मलयाद्रेरिदानीं तु लक्षणं सम्प्रचक्ष्महे ॥ २४ ॥
चतुरश्रीकृते क्षेत्रे द्वादशांशविभाजिते ।
कर्णा द्विभागिकाः कार्याः समं सलिलवर्त्मभिः ॥ २५ ॥
शाला स्यात् पञ्चभिर्भागैः सार्धांशस्तु प्रतीरथः ।
स शालाकर्णयोर्मध्ये कर्तव्यः सोदकान्तरः ॥ २६ ॥
प्रती[13]रथस्य +++ [14]श्चांर्धभागं विनिर्गमः ।
भवेत् (पथविकान्यः स विभागोऽन्य +?) पूर्ववत् ॥ २७ ॥

१ द. वेणुका संलि° । २ द. स्थानेषु सा कार्या । ३ द. व्यः । ४ द. श । ५ द. °नरुच्छ्रयः । ६ द. पंचमं णेव सुन्दरः । ७ द. दि । ८ द. घण्टयोर्विस्तरः प्रोक्तस्तं ष । ९ द. कं । १० द. °र्धं । ११ द. शुनाशिका । मुद्रित पुस्तके 'शुकनासिका' इति स्यात् । १२ द. षि । १३ द. ति । १४ द. पश्चा° ।

ते च(?) द्वादश भागा ये दशभिस्तान् विभाजयेत् ।
गर्भभित्तिं तथोत्सेधं जङ्घायाः प्रथमक्षितेः[1] ॥ २८ ॥

वेदीबन्धस्य चोत्सेधं पूर्वमानेन कारयेत् ।
मध्यं पल्लविकान्तं तु शालयोर्दशभिर्भजेत् ॥ २९ ॥

क्षितेरारभ्य पूर्वस्याः[2] स्कन्धं यावत् समुच्छ्रिता(तिः) ।
कार्या द्वादशभिर्भागैरनन्तरनिरूपितैः ॥ ३० ॥

सार्धयैकोनविंशत्या भाजयेद् भूय एव ताम् ।
द्वितीयभूमिकोत्सेधस्तैर्भवत्यथ भागिकौ[3](?) ॥ ३१ ॥

त्रिस्रोऽन्याः पदपादेन हीनाः कार्या यथाक्रमम् ।
भागेन वेदिकोत्सेधः शाला कार्या च नागरः (?) ॥ ३२ ॥

ऊर्ध्वमाद्यं(द्य)क्षितेः कार्या मालायाः[4] शूरसेनकाः ।
कोणप्रतिरथा ये तु पञ्चभागसमुच्छ्रिताः ॥ ३३ ॥

स्तम्भोच्छालकमध्येन तेषु कूटोच्छ्रिता(ति)स्तथा ।
अर्धेन प्रविधातव्या भूष्वन्यास्वप्ययं विधिः ॥ ३४ ॥

स्कन्धविस्तारेखा भूप्रवेश(शो) घण्टया सह ।
कलशः शुकनासस्य चोच्छ्रितिः पूर्ववद् भवेत् ॥ ३५ ॥

मलयाद्रिरयं प्रोक्तः प्रासादः शुभलक्षणः ।
य एनं कारयेत् तस्य तुष्यन्ति सकलाः सुराः ॥ ३६ ॥

वर्षकोटिसहस्राणि स्वर्गलोके महीयते ।

मलयाद्रिप्रासादः ॥

अथ माल्यवतो लक्ष्म यथावदभिधीयते ॥ ३७ ॥

भजेदर्धयुतैः पञ्चदशभिश्चतुर[6]++ ।
कर्णा द्विभागिकाः कार्याः शाला पञ्चांशविस्तृता ॥ ३८ ॥

कर्णाभ्यर्णेऽशयुगलं पादोनाः(नं) स्युः प्रतीरथाः ।
शालायाः पार्श्वयोः कार्यौ पण्डा(ञ्ज)रौ सार्धभागिकौ ॥ ३९ ॥

---

१ द. ते । २ द. पूर्वस्यात्स्कंधया च । ३ द. कः । ४ द. यां । ५ द. ति । ६ द. स्रकं ।

पृथक्पञ्जरशालाया[1] ++++ र्धभागिका ।
शालायाः पल्लवी या च(स्या) निर्गमश्चार्धभागिका(कः) ॥ ४० ॥
सार्धपञ्चदशोक्ता ये भागास्ता[2] +++++ ।
गर्भोऽथ भित्तिविस्तारस्तथा खुरवरण्डिका ॥ ४१ ॥
[3]जङ्घाधः क्षितिराद्या च रेखोच्छ्रायश्च पूर्ववत् ।
[4]++++++ भाज्यं पादहीनाष्टयुक्तया ॥ ४२ ॥
पञ्चभागसमुत्सेधा द्वितीया भूमिका भवेत् ।
[5]पदपादविही( नाःस्युस्तिस्रोऽन्याभू )मयः ( क्रमात् ) ॥ ४३ ॥
सार्धांशो वेदिकोच्छ्रायः कर्तव्यो वास्तुवेदिभिः ।
स्कन्धस्य विस्तृती[6] रेखा घण्टा च कलश( स्तथा ) ॥ ४४ ॥
( [7]++ यांस्नरासमाश्च ? ) स्तम्भकूटादिकल्पना ।
शुकनासोच्छ्रति( श्चेति इति एतानि ? ) पूर्ववत् ॥ ४५ ॥
[8]इत्येवं माल्य( वान् नाम ) प्रासादः परिकीर्तितः ।
य एनं कारयेत् तस्य जा[9]यन्ते सर्वसिद्धयः ॥ ४६ ॥
शिवलोके निवासोऽस्य भवेत् क[10]ल्पायुरप्ययम् ।

माल्यवान्[11] ॥

नवमालिकसंज्ञ[12]स्य लक्षणं कथ्यतेऽधुना ॥ ४७ ॥
चतुरश्रीकृते क्षेत्रे भक्तेऽष्टादशभिः पदैः ।
कर्णा द्विभागिकाः कार्याः समं सलिलवर्त्मभिः ॥ ४८ ॥
शाला स्यात् पञ्चभिर्भागैः पार्श्वयोर्बालपञ्जरौ ।
सपादभागिकौ तौ च कार्यौ ( स )सलिलान्तरौ ॥ ४९ ॥
कर्णाभ्यर्णे प्रतिरथौ ( [13]पादौ नालद्वयोन्मितौ ? ) ।
तौ सोदकान्तरौ कार्यौ [14]पञ्जरौ सार्धभागि[15]कौ ५० ॥

---

१ द. °नां निर्गमाश्चार्धभागिकाः । २ द. °स्तां दशभिर्भजेत् । ३ द. जंघोत्सेधः क्षित्तिश्चाद्या रे° । ४ द. विंशत्या शिखरं । ५ द. पदपादविहीनं स्युरपराः पंचभूमयः । ६ द. ता । ७ द. शालायां सूरसेनस्थ स्तं° । मुद्रित पुस्तके तु 'शालायां शूरसेनाश्च' इति स्यात् । ८ द. इत्येव माल्यवन्नाम । ९ द. ज । १० द. कल्पाश्रुतत्रयं । ११ द. माल्यवंतः । १२ द. ज्ञ्य । १३ मु. पु. 'पाशेनांशद्वयोन्मितौ' इति स्यात् । १४ द. पि । १५ द. गां द्वौ ।

(द्वौ ?) बालपञ्जरकस्यैतौ मध्ये प्रतिरथस्य च ।
प्रतीरथः पञ्जरो वा (बा)लपञ्जरकस्तथा ॥ ५१ ॥
शालापल्लिविकां[1] यावदेनानि तु पृथक् पृथक् ।
भागार्धनिर्गमानि स्युर्भागा येऽष्टादशोदिताः ॥ ५२ ॥
विभाजयेत् तान् दशभिर्विभागैर्वास्तुतत्त्ववित् ।
गर्भो भित्तिः समुच्छ्रायो वेदिकाजङ्घयोरपि ॥ ५३ ॥
आद्यभूम्युच्छ्रितिस्तद्वदुच्छ्रायः[3] शिखरस्य च ।
प्रासादेऽस्मिन्निदं सर्वं पूर्व[4](वत्) कथितं बुधैः ॥ ५४ ॥
तत् पञ्चत्रिंशता भागैः पादोनैः शिखरं भवेत् ।
द्वितीया भूमिका कार्या ततः पञ्चपदोच्छ्रिता ॥ ५५ ॥
पदपादविहीनास्तु शेषाः स्युः (सप्त ?) भूमयः ।
पादोनभागद्वितयं[5] वेदिकायाः समुच्छ्रितिः ॥ ५६ ॥
स्कन्धस्य विस्तृती रेखा घण्टाथ कलशस्तथा ।
शालायां शूरसेनाश्च स्तम्भकूटादिकल्पना ॥ ५७ ॥
शुकनासोच्छ्रितिर्भूमिप्रवेशश्चेह पूर्ववत् ।
य इमं कारयेद् भक्त्या प्रासादं नवमालिकम् ॥ ५८ ॥
तुष्यन्ति देवतास्तस्य भवन्ति च समृद्धयः ।

नवमालिकः ॥

इदानीमभिधीयन्ते प्रासादा वृक्ष[6]जातयः ॥ ५९ ॥
वल्लभाः सर्वदेवानां भूमिजाः पुरभूषणम् ।
आश्रयः श्रेयसामेको यशसामपि राशयः ॥ ६० ॥
भुक्तिमुक्तिप्रदातारः (समागते कृता ?) नृणाम् ।
तत्राद्यः कुमुदो नाम कमलः कमलोद्भवः ॥ ६१ ॥
(कि)रणः शतशृङ्गश्च निरवद्यस्तथापरः ।
सर्वाङ्गसुन्दरश्चेति प्रासादा वृत्त(क्ष)जातयः ॥ ६२ ॥
न विस्तरान्न संक्षेपाल्लक्ष्मैषामथ कीर्त्यते ।
तत्राद्यः कुमुदो नाम सर्वानन्दकृदुच्यते ॥ ६३ ॥

---

१ द. पि । २ द. °पल्लिकां । ३ द. य । ४ द. वं । ५ द. ती । ६ द. त ।

चतुरश्रीकृते क्षेत्रे विस्तारायामतः समे ।
विभक्ते दशभिर्भागैर्भवेद् गर्भस्त्रिषट्पदः ॥ ६४ ॥
तत्र[1] शेषेण कुर्वीत[2] + + + + चतुष्टयम् ।
+ ततः कर्णसूत्रेण तत्र वृत्तं समालिखेत् ॥ ६५ ॥
दिग्विदिक्ष्वष्ट कर्णाः स्युः सलिलान्त(रभूषिताः) ।
समन्त(?)भूमिपर्यन्तं दशभिः स्यादयं पदैः ॥ ६६ ॥
वेदीबन्धो विधातव्यः सार्धां[3]शस्य पदद्वयम् ।
[4]+ + + + + + सार्धचतुर्भिर्विभजेत् पदैः ॥ ६७ ॥
कुम्भकं द्वि [5]+ + + + + + + + + + + + ।
(भागा)र्धेनान्तरं पत्रं कपोताली च भागिका ॥ ६८ ॥
वेदीबन्धोऽयमित्युक्तो जङ्घो[6]त्सेध + + + + ।
([7]स्यादर्ध) पञ्चमैर्भागैः सोच्छाल[8]स्तलकुम्भकः ॥ ६९ ॥
आद्यभूमौ भवेत् कूटं भागत्रितयलक्षितम्[9] ।
प्रा[10]सादे पञ्चदशभिर्विभजेत समुच्छ्रयम् ॥ ७० ॥
द्वितीया भूमिका तत्र कार्या पञ्चांशकोच्छ्रिता[11]ः ।
अर्धेनोच्छालकस्तम्भैः कूटोच्छ्राय[12]स्तथोर्ध्वतः ॥ ७१ ॥
पादोनैः पञ्चभिर्भूमिं तृतीयां परिकल्पयेत् ।
चतुर्थीं रचयेद् भागैर्भूमिकामर्धपञ्चमैः ॥ ७२ ॥
द्वितीय[13]भूमिकावत् स्यात् कूटस्तम्भादिकल्पना ।
वेदिका(दी)भागोच्छ्रिता कार्या षट्पदा स्कन्धविस्तृतिः ॥ ७३ ॥
षड्गुणेन च सूत्रेण वेणुकोशं समालिखेत् ।
प्रासादपञ्चमांशेन कार्या घण्टासमुच्छ्रितिः ॥ ७४ ॥
घण्टोत्सेधं ततस्तस्य त्रिभिर्भागैर्विभाजयेत् ।
कण्ठग्रीवाण्डकान्यस्य [14]भागेन न(नैकेन) कारयेत् ॥ ७५ ॥

---

१ द. तः । २ द. तस्य भित्ति । ३ द. र्धं । ४ द. वेदीबंधमिमं सार्ध । ५ द. पदं कुर्याद्भागेन च मसूरक । ६ द. त्सवस्तु कथ्यते । ७ द. स्यात्सार्ध । ८ द. 'स्त' स्थाने त । ९ द. इतः परं प्रासादवृत्त मध्यं यत्तद्भजेद्दशभिः पदैः । अंशांसमीन भूम्यर्धे स्कंधा तद्व्यदशोच्छ्रयः । इत्यधिकं पाठः । १० द. सपादाः । ११ द. ताः । १२ द. स्तथार्घतः । १३ द. या । १४ द. भाग भागेन ।

षड्भागभक्तघण्टायाः समन्ताद् भागविच्युतेः ।
भागैश्चतुर्भिः कर्तव्ये घण्टे[1] कण्ठस्य विस्तरम्[2] ॥ ७६ ॥
घण्टोत्सेधार्धतः कुर्याद् घण्टार्धे पद्मशीर्षकम् ।
घण्टोत्सेधसमा कुम्भे बीजपूरविनो[3]( समु )च्छ्रितिः ॥ ७७ ॥
( चतुरश्रांजितोच्छ्रायो विस्तारः [4]कलशः स्मृताः ? ) ।
य इमं कारयेत् प्रीत्या[5] प्रासादं कुमुदाभिधम् ॥ ७८ ॥
स मोदते जगद्भर्तुः शिवस्य भवने शुभे ।

कुमुदप्रासादः ॥

अथातः सम्प्रवक्ष्यामः प्रासादं कमलाभिधम् ॥ ७९ ॥
चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ।
ततः कर्णार्धसूत्रेण वृत्तं [6]तत्र समालिखेत् ॥ ८० ॥
विस्तीर्णं पञ्चभिर्भागैः कुर्याद् ( भद्र )चतुष्टयम् ।
( [7]सुरेन्द्रसमर्[8]नायस ? )कुवेराशास्वनुक्रमात् ॥ ८१ ॥
भवेत् पल्लविका( या )[9]स्तु विस्तारो भागपादिकः ।
भागेन ( [10]कां ? ) कार्या ( भद्रा )णां निर्गमा [11]वृत्तबाह्यतः ॥ ८२ ॥
शालायाः प्रतिभद्रं स्यात् कर्णिकार्धेन निर्गता( तम् ) ।
पादोनभागत्रितयात् कार्या वि( वृ )त्तस्य विस्तृतिः ॥ ८३ ॥
द्विभागविस्तरायामौ[12] ( [13]रशुकं द्वयमतोध्यगौ ? ) ।
परिवर्तनया कार्यौ द्वौ कोणौ सोदकान्तरौ ॥ ८४ ॥
पूर्वप्रासादवद् गर्भो विधेयो भित्तयोऽपि च ।
वेदीबन्धादिकुम्भान्तं सर्वमेतस्य पूर्ववत् ॥ ८५ ॥
द्वितीयभूमिपर्यन्तमूर्ध्वं प्रथमभूमितः ।
शूरसेनं विधातव्यं शालासु वि( श्लि )ष्टमुत्तमम् ॥ ८६ ॥
कूटस्तम्भादिकन्यासाः[14] कोणप्रतिरथादिषु ।
( शाला स्या[15]ग्रागरास्तले ? ) पञ्चांशा द्वयंशकोपरि ॥ ८७ ॥

१ द. ण्टो । २ द. रः । ३ द. पूजविनो । ४ द. कलशो स्मृतः । ५ द. कीर्त्या । ६ द. च । ७ मुद्रित पुस्तके 'सुरेन्द्रयमतोयेश' इति स्यात् । ८ द. तोयेस । ९ द. सु । १० द. कर्णिका । ११ द. दृत्त । १२ द. मो । १३ मु. पु. रथकद्वयमध्यगौ इति स्यात् । १४ द. सः । १५ द. न्ना ।

शिखरस्य त्रिभागोना शुकाग्रायाः समुच्छ्रितिः ।
यं[1] एनं कमलं नाम प्रासादं कारयेन्नृपः ॥ ८८ ॥

त्रैलोक्ये[2] कमलाधीशविजये( यी ) स भवेन्नृपः ।

कमलप्रासादः ॥

अथातः कथ्यते सम्यक् प्रासादः कमलोद्भवः ॥ ८९ ॥

सदा लक्ष्मीपतिर्यत्र देवो विश्राम्यति स्वयम् ।
चतुरश्रीकृते क्षेत्रे चतुर्दशभि( रंशि[3]ते ) ॥ ९० ॥

[4]++++++स्नारो भद्रं पञ्चपदं भवेत् ।
वि( द्वि )भागायामविस्तारै( राः ) कार्याः प्रतिरथास्तथा ॥ ९१ ॥

कोण[5] +++++++++++++++ ।
कार्या( र्यः ) पल्लविकायाश्च नि( र्गमो ) वृत्तमध्यतः ॥ ९२ ॥

शालाविभक्तिश्चैतस्य कर्त[6]++++++ ।
[7]++++++++ न्तरेषु स्याज्जलान्तरम् ॥ ९३ ॥

द्व्यङ्गुलं ( त्र्यङ्गुलं ) वापि तद् विधेयं विपश्चिता ।
भागा[8]++++++++++++++ ल्पयेत् ॥ ९४ ॥

प्रासादस्यास्य[9] +++ भाजयेद् दशभिः पदैः ।
गर्भश्च पूर्ववत् कार्यः[10] पूर्ववद् भित्तयोऽपि च ॥ ९५ ॥

प्राग्वत् खुरवरण्डी स्याज्जङ्घाकूटाद्यभूमिका( : ) ।
शिखरस्योच्छ्रितिः प्राग्वत् तां सार्धैकानु( न्न )विंशतिम् ॥ ९६ ॥

भागान् कुर्यात् ततः कार्या भूर्द्वितीयांशपञ्चकम्[11] ।
कार्यास्तिस्रो भुवः शेषाः पादपादपरिच्युता[12]ः ॥ ९७ ॥

भागं वेदी भूप्रवेशः कार्यो रेखावशादि[13]तः ।
पूर्ववच्चार्थ( थ ) विस्तारः स्याद् घण्टाकलशादि वा ॥ ९८ ॥

---

१ द. य एवं तं क° । २ द. क्य । ३ द. क । ४ द. द्विपदः कर्ण वि° । ५ द. कोणसूत्रापरावृत्तेरष्टौ वृत्तस्य मध्यतः । ६ द. व्या पूर्ववच्छुभाः । ७ द. कोणशाला प्रतिरथा° । मु. पु. 'शालाकोणप्रतिरथा' इति पूरणीयं भाति । ८ द. श्चतुर्दशैते ये पूर्वं क्षेत्रं प्रक° । ९ द. °स्यास्य व्यर्थं ता भजेद्° । १० द. र्यां । ११ द. कात् । १२ द. ते । १३ द. ह ।

कूटस्तम्भादिकं प्राग्वच्छुकनासोच्छ्रयोऽपि च।
य इमं कारयेत्[1] कान्तं प्रासादं कमलोद्भवम् ॥ ९९ ॥
स समस्त[2]जगन्नाथः प्रतिजन्म प्रजायते।

कमलोद्भवप्रासादः ॥

लक्षणं किरणस्याथ ब्रूमः सम्यक् क्रमागतम् ॥ १०० ॥
चतुरश्रीकृते क्षेत्रे भक्ते ++++++ ।
++ पञ्चदशांशा ये तान् भजेद् दशभिः पुनः ॥ १०१ ॥
गर्भोऽत्र पूर्ववत् कार्यः पूर्ववद् भित्तयोऽपि च।
प्राग्वत् खुरवरण्डी स्याज्जङ्घाकूटोच्छ्रितिस्तथा ॥ १०२ ॥
पूर्ववच्छिखरोत्सेधस्तं भजेत् पादहीनया।
चतुरुत्तरविंशत्या भागानां तत्र भूमिका ॥ १०३ ॥
द्वितीया पञ्चभिर्भागैश्चतस्रस्त्वपराः पुनः।
पादोनप[3]दहीनाः स्युः क्रमशश्चास्य भूमिकाः ॥ १०४ ॥
वेदिका चास्य कर्तव्या सपादांशसमुच्छ्रिता।
शुकनासोच्छ्रितिः शालास्तम्भकूटविभक्तयः ॥ १०५ ॥
रेखा[4] स्तम्भस्य विस्तारो घण्टाकुम्भादि पूर्ववत्।
कूटा द्रा[5]विड(काः) कार्याः प्रतिभूम्यथ (भौमज?) ॥ १०६ ॥
हरो हिरण्यगर्भश्च हरिर्दिनकरस्तथा।
एषामेव विधेयोऽसौ नान्येषां तु कदाचन ॥ १०७ ॥
अमुं यः कारयेद् राजा प्रासादं किरणा[6]भिधम्।
स दुःसहप्रतापः स्यात् सहस्रकरवद् भुवि ॥ १०८ ॥

किरणप्रासादः ॥

क[7]थ्यते शतशृङ्गोऽथ प्रासादः (शुभलक्षणः)।
वल्लभः सर्वदेवानां (शि[8])वस्य (तु) विशेषतः ॥ १०९ ॥

---

१ द. क्षात्रं। २ द. स्तं। ३ द. पा। ४ द. स्कंधस्य। ५ द. श्च द्राविडा। ६ द. ॅणादिवं।
७ द. प्रतौ कथ्यते......(शुभलक्षणः)। इत्ययं पाठः नास्ति। ८ द. धा।

चतुरश्रीकृते क्षेत्रे विंशत्यैकोन( [1]यान्तिभे ? ) ।
कर्णार्द्धि( र्ध )सूत्रेण ततो वृत्तमत्र प्रकल्पयेत् ॥ ११० ॥
कर्णा द्विभागिकाः कार्याः शाला स्यात् पञ्चभागिका ।
शाले[2]पल्लविका चास्य ( निर्गता ) वृत्तमध्यतः ॥ १११ ॥
द्वौ द्वौ प्रतिरथौ कार्यौ द्विभागायामविस्तृतौ ।
परं[3] वर्तनतो वृत्तमध्यतौ[4]( तः ) कोणशालयोः ॥ ११२ ॥
शालाकोणप्रतिरथान्तरेषु स्याज्जलान्तरम् ।
एकोनविंशतिं[5] भागांस्तान् भजेद् दशभिः पुनः ॥ ११३ ॥
गर्भः प्राग्वत् तथा भित्तिः प्राग्वत् खुरवरण्डिका ।
जङ्घोत्सेधो( ऽथ ) भूत्सेधः[6] पूर्ववच्छिखरोच्छ्रितिः ॥ ११४ ॥
( अथाभिस्ते[7] ? )मेरारभ्य पट्टर्यन्तं[8] शिखरोच्छ्रितिः( तिम् ) ।
भागानामष्टविंशत्या( ? ) विभजेत् पादहीनया ॥ ११५ ॥
द्वितीयभूमिका तस्य कार्या पञ्चपदोच्छ्रिता ।
रेखास्तु पञ्च कर्तव्याः पदपादोच्छ्रिता[9] भुवः ॥ ११६ ॥
सार्धभागोच्छ्रिता वेदी प्रविधेयास्य तद्विदां[10] ।
( [11]शालास्य[12]स्तम्भ[13]क्तयदिविभक्तयदिविभक्तिः ? ) शुकनासिका ११७
( रेखाद्यं चक्रं[14]भस्य ? ) प्राग्वत् स्यात् सर्वमप्यदः ।
शतशृङ्गमिमं कुर्याद् यः प्रासादं मनोरमम् ॥ ११८ ॥
तस्यैकविंशतिकुला[15] + + + + + + + + ।
कर्ता कारयिता चेति द्वावेतौ जगतां प्रभोः ॥ ११९ ॥
त्रिपुरद्वेषिणः स्यातां नियतं गणनायकौ ।

शतशृङ्गप्रासादः ॥

[16] + + + + + + यामो निरवद्यस्य लक्षणम् ॥ १२० ॥

१ मु. 'यांशिते' इति स्यात् । द. प्रतौ तु 'यान्तिके' इत्येव पाठः । २ द. ल । ३ द. रि । ४ द. तौ । ५ द. तिः । ६ द. धो । ७ द. स्त । मुद्रित पुस्तके 'अथादिभू' इति स्यात् । ८ द. वयन्तं । ९ द. छि । १० द. धा । ११ मुद्रित पुस्तके 'शालास्य स्तम्भ कूटादिभक्तयः' इति पाठः । १२ द. श्व । १३ द. कूटा । १४ द. कुं । १५ द. °तिः कुर्या लात्मसर्वेमुखं । १६ द. इदानीमभिधास्यामो नि° । मुद्रित पाठभेदस्तु 'प्रासादस्याथ वक्ष्यामो' इति स्यात् ।

स स्याज्ज्येष्ठोऽथ मध्यश्च कनीयानिति च त्रिधा ।
चत्वारिंशत्करो ज्येष्ठोऽपि ( मध्यः ) त्रिंशत्करो भवेत् ॥ १२१ ॥

विंशत्या च करैरेष कनीयान् समुदाहृतः ।
चतुरश्रीकृते क्षेत्रे विंशत्या भाजिते पदैः ॥ १२२ ॥

ततः कर्णार्द्धि[1]सूत्रेण( ? ) वृत्तमत्र प्रकल्पयेत् ।
कार्यों[2] तैः पञ्चभिः शालौ[3]पल्लवी वृत्त( म )ध्यतः ॥ १२३ ॥

शालाविभक्तिः प्राग्वत् स्याच्छालयोरेतैयोः[4] पुनः ।
कोणे कोणे च षट्कर्णा + भागायामविस्तृताः ॥ १२४ ॥

परिवर्तनया कार्या वृत्तान्तः सोदकान्तराः ।
( [5]ता तागा त्रिभागै ? )र्विभजेद् दशभिस्ततः ॥ १२५ ॥

विमुच्य भूमिकाभागा[6]च्छेषं गर्भगृहादि यत् ।
तत् पूर्ववद् विधातव्यं तद्वच्च शिखरोच्छ्रितिः ॥ १२६ ॥

तामेकत्रिंशता भागैः सार्धैश्च विभजेत् पुनः ।
द्वितीयभूमिका कार्या पदैः पञ्चभिरुच्छ्रिता ॥ १२७ ॥

पदपादेन हीनाः स्युः शेषा ( [7]षड्भास ? ) भूमिर्काः[8] ।
वेदी ( पञ्चयं[9] ? ) कार्या पादोनमिह शिल्पिना ॥ १२८ ॥

स्तम्भकूटादि शालानां विन्यासः शूरसेनकाः ।
शुकनासोच्छ्रितिर्घण्टा कलशादि चं[10] पूर्ववत् ॥ १२९ ॥

य इमं निरवद्याख्यं प्रासादं कारयेत् सुधीः ।
स प्राप्नोति परं स्थानं ब्रह्मादीनां सुदुर्लभम् ॥ १३० ॥

निरवद्यप्रासादः ॥

सर्वाङ्गसुन्दरं ब्रूमः प्रासादमथ सुन्दरम् ।
भुक्तिमुक्तिप्रदातारं ( वरवालय ? ) मण्डनम्[11] ॥ १३१ ॥

---

१ द. कर्णार्धं°; मुद्रित पुस्तकेऽपि 'कर्णार्धसूत्रेण' इति पाठ्यं भाति । २ द. कार्यं । ३ द. ल । ४ द. रेते । ५ द. तान् भागान् बिशतिं भागे विं° । ६ द. °कान् । ७ मुद्रित पुस्तके 'षट् चास्य' इति स्यात् । ८ द. कः । ९ द. पदद्वयं । मुद्रित पुस्तके 'पदत्रयम्' इति स्यात् । १० द. व. । ११ द. ल ।

चतुरश्रीकृते क्षेत्रे चतुर्विंशतिभाजिते ।
कर्णा द्विभागविस्ताराः शाला स्यात् पञ्चभागिका ॥ १३२ ॥

वृत्तान्तः पल्लवी कार्या शेषाः शालासु[1] पूर्ववत् ।
त्र्यस्त्र्यः प्रतिरथा मध्ये स्युः[2] कर्णशालयोः ॥ १३३ ॥

परिवृत्त्यं[3]( त्त्या ) वृत्तमध्ये द्विभागायामविस्तृताः ।
शालाकर्णप्रतिरथप्रान्तेषु स्याज्जलान्तरे( रम् ) ॥ १३४ ॥

[4]त्रिचतुर्विंशतिर्भागा विभाज्याः[5] शिल्पिभिः पुनः ।
विधेयं गर्भभित्त्यादि प्राग्वत् स्याच्च वरण्डिका ॥ १३५ ॥

जङ्घादिभूमिकोच्छ्रायः प्राग्वद्व( द्वा ) शिखरोच्छ्रितिः ।
( तं ) पञ्चत्रिंशता[6] भागैर्विभजेच्छिखरोच्छ्रयम् ॥ १३६ ॥

द्वितीया भूमिका चास्य कार्या पञ्चपदोच्छ्रिता ।
पदपादविहीनाः स्युः शेषाः सप्तास्य भूमिकाः ॥ १३७ ॥

द्विभागो वेदिकोच्छ्रायो भूमिकानां प्रवेशनम् ।
रेखावशेन कर्तव्यं शेषमेतस्य यत् पुनः ॥ १३८ ॥

तत् पूर्ववद् विधातव्यं स्तम्भकूटादि तद्विदा ।
सर्वाङ्गसुन्दरं योऽत्र प्रासादं कारयेदमुम् ॥ १३९ ॥

स स्वर्गसुन्दरीभोगानाप्नोति विपुलान् दिवि[7] ।

सर्वाङ्गसुन्दरः प्रासादः ॥

अथाष्टशालान् वक्ष्यामो + + + भूमिजातिषु ॥ १४० ॥

तेष्वाद्यः स्वस्तिकोऽन्यश्च वज्रस्वस्तिकसंज्ञितः ।
तृतीयो हर्म्यतलकश्चतुर्थ उदयाचलः ॥ १४१ ॥

गन्धमादनसंज्ञश्च पञ्चमः परिकीर्तितः ।
अथाभिधीयते तेषु + + + [8]स्वलक्षणः ॥ १४२ ॥

चतुरश्रीकृते क्षेत्रे विस्तारायामतः[9] समे ।
कर्णार्धसूत्रपातेन वृत्तमस्य समं लिखेत् ॥ १४३ ॥

---

१ द. स्तु । २ द. स्यात् क° । ३ द. त्य । ४ द. ते । ५ द. ज्य । ६ द. त । ७ द. धिः
८ द. मुद्रित पुस्तके ‘ स्वस्तिकः शुभलक्षणः ’ इति स्यात् ; द. स्वस्तिकास्य लक्षणः । ९ द. °तो समे ।

वर्तुलं भाजयेत् क्षेत्रं षड्गुणैरष्टभिः पदैः ।
अष्टौ शाला विधातव्या विस्तारेण चतुष्पदाः ॥ १४४ ॥

पल्लवी वृत्तसूत्रेण [1]+ + + + + + + + + ।
+ + + कर्णिका ज्ञेया मानमूर्ध्वमथोच्यते ॥ १४५ ॥

वेदिबन्धो विधातव्यो भागद्वितयमुच्छ्रितः ।
तं भजेत् पञ्चभिर्भागैः + + + तत्र कुम्भकः ॥ १४६ ॥

पादयुक्तेन भागेन कर्तव्यस्तु मसूरकः ।
अर्धांशेनोत्त( नान्त )रं पत्रं कपोताली ततो भवेत् ॥ १४७ ॥

सपादेनास्य भागेन जङ्घां( ङ्घा ) भागचतुष्टयात् ।
तलकुम्भोच्छालकाभ्यां संयुक्ता शुभ[2]लक्षणा ॥ १४८ ॥

भागद्वि[3]तयमाद्या भूः कर्तव्या सवरण्डिका ।
व्यासं दशपदं कृत्वा तैर्द्वादशभिरुच्छ्रितिः ॥ १४९ ॥

स्कन्धश्च षट्पदस्तत्र विधातव्यो विजानता ।
षड्गुणेनैव सूत्रेण वेणुकोशं समालिखेत् ॥ १५० ॥

द्वादशांशो य उत्सेधो भागानां सम + + + ।
[4]तं कृत्वा पञ्चभिर्भागैस्ते द्वि( स्तैर्द्वि )तीया भवेन्मही ॥ १५१ ॥

पदपादोच्छ्रि[5]ताः कार्यास्ततस्तिस्रोऽपरा भुवः ।
( गर्भा [6]गर्भं ? ) विधातव्यं भूमिकानां प्रवेशनम् ॥ १५२ ॥

वेदिका च ततः कार्या सार्धभागसमुच्छ्रिता ।
पादोनद्विपदा घण्टा विभजेत् तां त्रिभिः पदैः ॥ १५३ ॥

पदं[7] स्यात् कण्ठकोत्सेधो ग्रीवा भागसमुच्छ्रिता ।
अण्डकं भागिकं तस्यां[8] कर्तव्यं सुमनोरमम् ॥ १५४ ॥

कर्परं सार्धभागेन कुर्या[9]त् सामलसारकम् ।
( [10]सीस्तन चाभागायाः ? ) सार्धभागचतुष्टयात् ॥ १५५ ॥

---

१ मुद्रित पुस्तके 'ब्राह्मतो भद्रकर्णिके' इत्ययं पूरणीयांशः प्रकरणान्तरादुपलभ्यते । २ द. त । ३ द. ती । ४ द. ते । ५ द. ष्टि । ६ द. द्र । ७ द. दैः । ८ द. स्याः । ९ द. रि । १० द. सीस्न-स्त्रुनवा ।

घण्टाया[1] विस्तरः कार्यस्तं भजेत् षड्भिरंशकैः ।
चतुर्भिः कन्दविस्तारात्[2] + + + + + + + + + ॥ १५६ ॥
सार्धभागः समुत्सेधः कलशस्य तदर्धतः ।
शिखरस्य त्रिभागेन शुकनासा[3] विधीयते ॥ १५७ ॥
विस्तारा[4]( द् ) गर्भमानेन हीना[5] वाष्टांशतो भवेत् ।
( विस्ताराथ सपादेन ? ) शूरसेनस्तदूर्ध्वतः ॥ १५८ ॥
द्वितीयभूमिकातुल्य आद्यभूमेः स ऊर्ध्वतः ।
शालाविस्तार[6]तुल्यास्तु शूरसेनास्त्रयो मताः ॥ १५९ ॥
शाला नागरिकाश्चाष्टौ ग्राहग्रासविराजिताः ।
य इमं कारयेद्[7] धन्यः प्रासादं स्वस्तिकं शुभम् ॥ १६० ॥
तस्यानुजन्म( शार्तानां ? ) स्वस्तिश्रीभाजनं भवेत् ।

स्वस्तिकप्रासादः ॥

अतः परं प्रवक्ष्यामो वज्रस्वस्तिकसंज्ञितम् ॥ १६१ ॥
प्रासादं लक्षणोपेतं शक्रादिसुर[10]वल्लभम् ।
पूर्वोक्तलक्षणोपेते स्वस्तिके( [11]देवमध्यदे ? ) ॥ १६२ ॥
भद्रे शृङ्गं प्रदातव्यं तीक्ष्णाग्रं सुमनोरमम् ।
पुरस्तान्मण्डपं कुर्यात् सर्वलक्षणसंयुतम् ॥ १६३ ॥
इत्येष कथितः सम्यग् वज्रस्वस्तिकसंज्ञितः[12] ।
य इमं कारयेद् धन्यः प्रासादं[13] सर्वकामदम् ॥ १६४ ॥
स स्याद् भोग्यः सुरस्त्रीणामैन्द्रं च पदमश्नुते ।

वज्रस्वस्तिकप्रासादः ॥

अथ हर्म्यतलं ब्रूमः प्रासादं मण्डनं भुवः ॥ १६५ ॥
चतुरश्रीकृते क्षेत्रे विस्तारायामतः समे[14] ।
कर्णार्धसूत्रपातेन तस्मिन् वृत्तं समालिखेत् ॥ १६६ ॥

---

१ द. ण्ट । २ द. रोग्रीवा पंचाशविस्तरात् । ३ द. शो । ४ द. विस्तरा । ५ द. नो । ६ द. स्त । ७ द. युद्धं । ८ द. 'ता' स्थाने 'ला' पठ्यते । ९ द. भोजनं क्षवेत् । १० द. पुरवल्लभां । ११ द. दे । १२ द. तं । १३ द. दः । १४ द. मं ।

तद् वृत्तं विभजेत् क्षेत्रं चतुःषष्ट्या पदैस्ततः ।
कर्तव्या विस्तरेणास्मिन्नष्टौ शालाश्चतुष्पदाः ॥ १६७ ॥

पल्लवी वृत्तसूत्रेण बाह्यतो भद्रकर्णिके ।
कर्णौ द्वौ द्वौ विधातव्यौ शालाद्वितयमध्यतः ॥ १६८ ॥

वि( द्वि )भागायामविस्तारौ सलिलान्तरभूषितौ ।
परिवर्तनतोऽन्योन्यं कोणान् कुर्वीत षोडश ॥ १६९ ॥

अष्टास्वपि च दिक्ष्वेवं( माना कर्मभिरन्विता ? ) ।
गर्भो भित्तिश्च वेदी च जङ्घाप्रथमभूमिकाः ॥ १७० ॥

कर्तव्याः पूर्वमानेन स्वस्तिकोक्तेन तद्विदा ।
द्वादशांशो य उत्सेधो विंशत्या तत्र भाजितः ॥ १७१ ॥

सोऽ( त्रा )ष्टाविंशतिविधः कर्तव्य स्तू( स्त )त्र भूमिका ।
द्वितीया पञ्चभिर्भागैः पदपादोज्झिताः पृथक् ॥ १७२ ॥

अन्याः स्युर्भूमयः पञ्च वेदी ( व्यङ्घ्रिः ? ) द्विभागिकाः ( परा ? ) ।
चतस्रो मञ्जरीः कुर्यान्नागरैः कर्मभिर्युताः ॥ १७३ ॥

चतस्रः पुनरन्याश्च युक्ता द्रविडकर्मभिः ।
घण्टा स्कन्धस्य विस्तारो वेदिकाकलशोच्छ्रयौ[२] ॥ १७४ ॥

शूरसेनः शुकाग्रा च स्तम्भिकाकूट( वि ? )भक्तयः ।
रेखा( श्च ) पूर्ववत् कार्याः प्रासादस्यास्य जानता ॥ १७५ ॥

प्रासादस्यास्य कर्ता[३] यस्तथा कारयिता च यः[४] ।
( प्राप्नुतामिव लोकं ? )[५] तौ[६] नित्यानन्दसुखोदयम् ॥ १७६ ॥

हर्म्यतलकप्रासादः ॥

अथातः सम्प्रवक्ष्यामि[७] प्रासादमुदयाचलम् ।
चतुरश्रीकृते क्षेत्रे भुजाकर्णसमे शुभे ॥ १७७ ॥

ततः कर्णार्धसूत्रेण तस्मिन् वृत्तं समालिखेत् ।
वर्तुलं कारयेत् क्षेत्रमशीतिपदभाजितम्[८] ॥ १७८ ॥

---

१ द. तः । २ द. यो । ३ द. कर्तव्यास्तथा । ४ द. सः । ५ द. मुद्रित पुस्तके 'प्राप्नुतः शिवलोकं इति स्यात् । ६ द. त । ७ द. मः । ८ द. ते ।

शालाश्चा[1]ष्टौ विधातव्याः पूर्वदिक्षु चतुष्पदाः ।
पल्लवी वृत्तसूत्रेण बाह्यतो भद्रकर्णिके ॥ १७९ ॥

कुर्याच्छालाद्वयस्यान्तः कोणानां च त्रयं त्रयम् ।
द्विभागायामविस्तारसलिलान्तरभूषिता[2]ः ॥ १८० ॥

एवं कोणा विधातव्या विंशतिश्चतुरुत्तरा[3] ।
परिवर्तनमन्योन्यमेषां कुर्याद् यथाक्रमम् ॥ १८१ ॥

एतत्सा( त्स )मप्रमाणेन गर्भं भित्तिं च वेदिकाम् ।
जङ्घां च भूमिशिखरं पूर्ववत् परिकल्पयेत् ॥ १८२ ॥

अष्टौ च मञ्जरीः कुर्याद् युक्ता नागरकर्मणा ।
रुद्रेश्वरसमायुक्ता नीरधारोपशोभिताः ॥ १८३ ॥

( घण्टाकूटाश्च रेखा च स्तम्भिकाः[4] शूरसेनकः[5] ।
शुका( घा )स्कन्धविस्तारकलशेन समन्वित[6] ? ) ॥ १८४ ।

स्वस्तिकोक्तविधानेन विदध्यादुदयाचलम्[7] ।
द्वादशांशो य उत्सेधो विंशत्या तत्र भाजितः ॥ १८५ ॥

स्यात् पञ्चत्रिंशता भाज्यो +[8]++ तत्र भूमिका ।
पञ्चभागोच्छ्रिता कार्या ततोऽन्याः सप्त भूमयः ॥ १८६ ।

( पदपादोच्छ्रिता[9] भागद्वयो यो तु वेदिका ।
+++++++++[10] सर्वलक्षगसंयुता ? ) ॥ १८७ ॥

प्रासादं यस्त्विमं सम्यग् भक्तिमान् कारयेन्नरः ।
शाश्वतं पदमाप्नोति स दुष्प्रापं सुरैरपि ॥ १८८ ॥

उदयाचलप्रासादः ॥

इदानीं प्रक्रमायातः कथ्यते गन्धमादनः ।
स्वलक्षणप्रमाणाढ्यक्षितिस्मिन्नुदयाचले ( ? ) ॥ १८९ ॥

कुर्वीत मञ्जरीरष्टौ युक्ता द्रा[11]विडकर्मभिः ।
कूटाश्च मणिकाः कार्या नानाकर्मभिरन्विताः ॥ १९० ॥

---

१ द. चा । २ द. तं । ३ द. राः । ४ द. ताः । ५ द. कं । ६ द. तं । ७ द. ले । ८ द. द्वितीया । ९ द. °ष्टितां भागे द्वयोच्छ्राया नु वेदिका । १० द. ......र्यः सर्वलक्षण संयुतः ॥ ११ द. द्र ।

स्थानेषु शूरसेना + पुरोरेखात्रयं भवेत् ।
शुकनासां च घण्टां च स्कन्धं शिखरमेव च ॥ १९१ ॥
कूटा + स्तम्भिका कुम्भं पूर्ववत् परिकल्पयेत् ।
य इमं कारयेद् धन्यः प्रासादं मण्डनं भुवः ॥ १९२ ॥
विद्याधराधिपः श्रीमान् स भवेन्नात्र संशयः ।
भुङ्क्ते च विविधान् भोगान् सुरस्त्रीभिश्च सेव्यते ॥ १९३ ॥

गन्धमादनप्रासादः ॥

उदयस्य विभेदेन रेखा याः पञ्चविंशतिः ।
लतिनागरभौमानां ताः कथ्यन्ते यथागमम् ॥ १९४ ॥
लतिनां ( स्याद्वारंगं[1]तो ? ) नागराणां तु कूटकः ।
भूमिजानां विधातव्या[2] ( माथायाः ? ) पुरतो भुवः ॥ १९५ ॥
शिखरं व्यासकर्णाभ्यां तुल्यं स्यादधमोत्तमम् ।
भाजनीयं[3]चतुर्युक्तविंशस्यों[4]दनन्तरम् ( ? ) ॥ १९६ ॥
++++++ भौ[5]गरेखास्तावत्य ईरिताः ।
संख्या[6] सा( ? )शोभना भद्रा सुँ[7]रूपा सुमनोरमा ॥ १९७ ॥
शुभा चैव तथा शान्ता कावेरी च सरस्वती ।
लोका च करवीरा च कुमुदा पद्मिनी तथा ॥ १९८ ॥
कर्नका[8] विकटा [9]देवरम्या च रमणी तथा ।
वसुन्धरा तथा हंसी विशाखा नन्दिनीति च ॥ १९९ ॥
जया च विजया चैव सुमुखा च प्रियानता ।
इत्येताः कीर्तिता रेखाः [10]++ या पञ्चविंशतिः ॥ २०० ॥

रेखा एताः[11] ( ? ) ॥

एताः शुभफलाः सर्वाः कर्तुः कारयितुस्तथा ।
चतुरश्रचतुष्कमेवमुक्तं वृत्ताः सप्त च भूमिजा इमे[12] (?) ॥ २०१ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
भूमिजं[13]प्रासादाध्यायो नाम पञ्चषष्टितमो[14]ऽध्यायः ॥

---

१ द. गं । २ द. व्यं । ३ द. यं । ४ द. त्या भाजिनंतरं । ५ द. ना । ६ द. सव्या । ७ द. स्व ।
८ द. नी । ९ द. दै । १० द. संख्य । ११ द. प्रतौ नास्ति । १२ द. मी । १३ द. जाः । १४ द. मः ।

## अथ मण्डपलक्षणं नाम षट्षष्टितमोऽध्यायः ।

इदानीं मण्डपानष्टौ ब्रूमः प्रासादसंस्थितान् ।
प्रासादं कल्पयेत् पूर्वं भागशुद्धं सुलक्षणम् ॥ १ ॥

संवृतो वा भवेदेष व्यतिरिक्तोऽथवा क्वचित् ।
(चतुरश्रो विभागैश्च [1]घटंतेः य समंवृतः ?) ॥ २ ॥

([2]पंशुभागैर्विघटते ?) व्यतिरिक्तः स कीर्तितः ।
गर्भो गर्भसमः शस्तः (सोन्य[3]घंटोषमावहेत् ?) ॥ ३ ॥

एवं निवेशयेदग्रे मण्डपान्येव [4]सद्मतः (?) ।
भजेच्छतपदाख्येन ज्येष्ठमध्यकनीयसः ॥ ४ ॥

मण्डपां[5]स्तेषु भद्रः स्यान्नन्दनाख्यस्तथापरः ।
महेन्द्रो वर्धमानश्च स्वस्तिकः सर्वभद्रकः ॥ ५ ॥

महापद्मोऽष्टमश्चैषां गृहराजः प्रकीर्तितः ।
एते यथार्थनामानो[6] लक्ष्मैतेषां प्रचक्ष्महे ॥ ६ ॥

प्रासादद्विगुणायामः पादोनद्विगुणायतः (?) ।
कार्यो यस्तथा [7]र्व्यर्थमग्रतः (?) सुरमन्दिरात् ॥ ७ ॥

प्रासादोच्छ्रायतुल्यं वा कार्या[8] मण्डपविस्तृतिः ।
शुकनासान्विताः कार्यास्ते[9] चालिन्दसमन्विताः ॥ ८ ॥

अलिन्दः सर्वतोभागनिर्गता [10]लांववि‍स्तृताः (?) ।
कदाचित् सार्धभागेन निष्क्रान्ता भागविस्तृ[11]ता ॥ ९ ॥

[12]++ भिर्भाजयेद् भागैर्भद्रं प्राज्ञः समन्ततः ।
शृङ्गाणि स्युर्द्विभागानि सहितान्युदकान्तरैः ॥ १० ॥

भागं प्रमा [13]+++ रादामूलतलमस्तकम् ।
शृङ्गेषु रथि[14]का का[15]र्या भागपादेन निर्ग[16]ता ॥ ११ ॥

१ द. घंटतैः । २ द. यः सु । ३ द. थादोष । ४ द. सप्त न । ५ द. मा । ६ द. भू । ७ द. व्यर्धमयतः । ८ द. र्यं । ९ द. स्ते वा । १० द. भा । ११ द. ताः । १२ द. दश । १३ द. ण विस्तारा । १४ द. काः । १५ द. र्याः । १६ द. ताः ।

भागेनैकेन निष्क्रान्तं विस्तृतं ( चतुर्ध्वतान् ? ) ।
मध्यभद्रं विधातव्यमाशासु चतसृष्वपि ॥ १२ ॥

पीठं प्रासादपीठस्य नात्र[1] कुर्वीत मण्डपे ।
( तलपट्टे भवेच्छोकनाशोयाक्षितिरङ्गिका ? ) ॥ १३ ॥

तलपट्टमधस्तस्या मण्डपस्य निवेशयेत् ।
कर्तव्यमेवमग्रेऽग्रे निम्नं[2] निम्नतरं ततः ॥ १४ ॥

अथवा तत्समं दद्यात् स्थपतिः शास्त्रवित्तमः ।
चतुर्भा[3]गायतद्वारं षड्द्वारुक( दारुक )समन्वितम् ॥ १५ ॥

अग्रभद्रं विधातव्यं चतुस्तम्भविभूषितम् ।
पृष्ठतश्च भवेदेवं संसृ[4]तिश्चैत्रमण्डपे ॥ १६ ॥

संसृतेः शुकनासा[5] स्याद् भूमितः[6](?) पृष्ठभद्रकम् ।
शेषं तथैव कर्तव्यं विधानं मण्डपस्य तु ॥ १७ ॥

स भित्तिभिः परिक्षिप्तः कर्तव्यः पार्श्वयोर्द्वयोः ।
भागेन कल्पयेद् भित्तिं गवाक्षैरुपशोभिताम्[7] ॥ १८ ॥

वातायनाश्च कर्तव्याः सह चन्द्रावलोकनैः ।
प्रासादद्वारवद् द्वारविस्तारो मण्डपे भवेत् ॥ १९ ॥

सपादः सत्रिभागो वा सार्धः ( सौम्याथवा ? ) भवेत् ।
ऊर्ध्वद्वारविधे( धिः ) कार्यो मूलद्वारानतिक्रमात् ॥ २० ॥

जालव्यालकपोताशीमत्तवारणकैर्युता[8] ।
भ्रमनिर्मापितैः स्तम्भैः कर्तव्याश्च गवाक्षकाः[9] ॥ २१ ॥

वातायनं तदर्धेन पादोनं द्वा( चा )वलोकनम् ।
क्षणमध्ये प्रकुर्वीत चतुष्कीं[10] विधिवच्छुभा[11]म् ॥ २२ ॥

क्षो[12]भायां बाह्यतो रेखा क्षात्या द्रुमं च विवर्जयेत् (?) ।
दारुकर्मविधे( धि )र्मध्ये यथा स्यात् कथ्यते तथा ॥ २३ ॥

---

१ द. श्च । २ द. निम्नं । ३ द. र्भा । ४ द. °तश्चेन्न मंडपः । ५ द. शः । ६ द. ते ।
७ द. तम् । ८ द. ता । ९ द. का । १० द. र्थी । ११ द. भा । १२ द. नां ।

समैः क्षणैः समैः स्तम्भैः समैश्चालिन्दकैर्युतः ।
समैः कर्णैश्च [1]+++ समद्रव्यविधानवान् ॥ २४ ॥

षड्दारुकैस्तिरश्चीनैः कार्याः कैश्चिन्मुखायतैः ।
तुला [2]समतला यद्वा प्रोत्क्षिप्रा[3] मध्यदेशगा ॥ २५ ॥

तुलाषड्दारुकाधीनां[4]स्त( ना त )दधीनानि तानि वा ।
केचिन्मन्थानसंस्थाना( लीगतिर्युनाप ? )[5] ॥ २६ ॥

अथवा मध्यतः कार्या + स्तम्भालिन्दवेष्टिताः ।
महाधरयुता कार्या चतुष्क( ष्कयुं )भयतः समा ॥ २७ ॥

गजतालुलुमाकर्म द्रव्यैः स्यादुत्तरोत्तरैः ।
एते नानाविधाः कार्या द्रव्यैरविकलैस्तथा ॥ २८ ॥

या काचिद् रोचते प्राज्ञस्तामेकां कारयेत् क्रियाम् ।
( ल ? )क्षणान्तराण्यलङ्कुर्यादिल्लीतोरणकैस्तथा ॥ २९ ॥

वज्रबन्धसमायुक्ता घण्टिकापल्लवैर्युताः ।
[6]हारपद्मदलाकीर्णाः शालँभञ्जीविराजिताः ॥ ३० ॥

स्तम्भकाश्च विधातव्याः पत्राभरणभूषिताः ।
कण्ठकैरतिचित्रैश्च रथकैस्तोरणैः सह ॥ ३१ ॥

विधानैर्विविधाकारै रूपकर्मोपशोभितैः ।
एवंविधा विधातव्या[8] सीमातुल्यातु( स्तु )लोदयाः ॥ ३२ ॥

प्राग्ग्रीवकेष्वलिन्देषु मध्ये[10] भागे च पार्श्वयोः ।
न तलानि विधीयन्ते यथाकामं क्रिया भवेत् ॥ ३३ ॥

सीमाद्वारे यथा वायोः प्रवेशं नैव पीडयेत् ।
( तथार्द्धरिका[11] ? ) कार्या पट्टस्योपर्यवस्थिता ॥ ३४ ॥

वेदिव्यालकपोताली मत्तवारणतुलोदयैः[12] (?) ।
षड्द्वारुकं ++ भद्रे तत्र कुर्वीत बुद्धिमान् ॥ ३५ ॥

१ द. कर्त्तव्यं । २ द. लाः । ३ द. प्ता । ४ द. नास्त । ५ द. प्यु । ६ द. भार । ७ द. ला ।
८ द. ता । ९ द. व्याः । १० द. ध्य । ११ द. °याद° । १२ द. या ।

बाह्यतो मण्डपेऽप्येवं मानतः कर्मतोऽपि च।
कपोतालीवरण्डीभिस्तथाचान्तरपत्रकैः ॥ ३६ ॥

कर्णप्रासादकैश्चित्रैः कर्म स्याद् भद्रमण्डपे।
उच्छ्रायस्य[1] (विवेचीयादशस्त्वन्यतमो?) बुधैः ॥ ३७ ॥

शि(ख)रस्य त्रिभागेन पादोनैकेन वा भवेत्।
उच्छ्रायो (मण्डपस्यामः शुकनाससमुच्छ्रिते?) ॥ ३८ ॥

हर्म्यं वा तत्र कुर्वीत चारुकर्णोपशोभितम्।

भद्रमण्डपलक्षणम् ॥

चतुरश्रीकृते क्षेत्रे नन्दनं प्रविभाजयेत् ॥ ३९ ॥

भद्रं षड्भागमायामाश्चतुर्भागं तथा ([3]पव?)।
भागभागं निष्क्रान्ते (?) स्तम्भैः प्राग्ग्रीवकल्पितैः ॥ ४० ॥

पञ्चभागायता ज्ञेया[4] कर्णे भद्रान्तरस्थिता।
भित्तिः स्याद् भागविस्तारा सलिलान्तरसंयुता ॥ ४१ ॥

एवं चतुर्दिशं कार्यो नन्दनो मण्डपः सदा।

नन्दनः ॥

महेन्द्रस्य तलच्छन्दः कर्णौ लाङ्गलसंयुतौ[5] ॥ ४२ ॥

चतुर्भागायतो दिक्षु दारुकर्मविभूषितः।
द्विभागिकानि शृङ्गाणि[6] क्षोभयेदुदकान्तरैः ॥ ४३ ॥

चतुर्भागायतं भाग + + मेकं तु निस्सृतम्।
एकतश्च मुखं दद्याद् दारुकर्म(परिच्युतम्?) ॥ ४४ ॥

महेन्द्रः ॥

नन्दनश्चेद् बहिर्भद्रैर्जलमार्गैर्विवर्जितः।
भागद्वितयविस्तारो भागमेकं विनिर्गतौ(?) ॥ ४५ ॥

---

१ द. 'स्यविदेदींया दश। २ द. ष्क। ३ द. परै। ४ द. ऋज्वी?। ५ द. तैः। ६ द. नि।
७ द. वृ?।

प्राग्ग्रीवपार्श्वयोर्दद्यादुच्छ्रायोर्ध्वपदस्थितौ(?)।
(¹वोतयेनौ वा?) कुर्वीत वर्धमानस्तथा भवेत् ॥ ४६ ॥

वर्धमानः ॥

पक्षद्वये नन्दनस्य भद्रे भित्त्यामिवेष्टयेत्।
गवाक्षकैरलङ्कुर्यान्न कुर्यादुदकान्तरम् ॥ ४७ ॥

स्वस्तिकोऽयं समाख्यातः सर्वलक्षणलक्षितः।

स्वस्तिकः ॥

अथाभिधीयते सम्यक् सर्वतोभद्रलक्षणम् ॥ ४८ ॥

कर्णे कर्णे (लाङ्गले चेत्सार्धे?) भागद्वयायतम्।
कार्या परस्परं तेषु दारुक(र्म)विकल्पना ॥ ४९ ॥

भागेनैकेन निर्यातं भागषट्केन चायतम्।
षड्दारुकद्वयं भद्रं कारयेद् (बाह्यवंस्थितम्?) ॥ ५० ॥

सर्वतोभद्रः ॥

चतुरश्रीकृते क्षेत्रे + प्राग्भागैर्विभाजयेत्।
त्यक्त्वा(⁴तेस मध्ये?) कर्णेष्वादध्याल्लाङ्गलानि च ॥ ५१ ॥

चतुर्भागान्तरस्थानि षड्दारुकयुतानि च।
कर्तव्यं भागनिष्क्रान्तं दिक्षु भद्रचतुष्टयम् ॥ ५२ ॥

चतुष्पदस्तदायामात् सर्वतोऽलिन्दको बहिः।
प्रतिभद्राणि कुर्वीत चतुर्भागायतानि च ॥ ५३ ॥

निर्गतानि(रभागेन?) दिक्षु स्तम्भान्वितानि च।
इत्येतैर्लक्षणैर्युक्तो महापद्मः प्रकीर्तितः ॥ ५४ ॥

महापद्मः ॥

चतुरश्रीकृते क्षेत्रे चतुष्कोणविभूषिते।
अलिन्दावेष्टितं कुर्यात् प्राग्ग्रीवं मुखसंश्रितम् ॥ ५५ ॥

---

१ द. वातायनौ वा। २ द. क्षा। ३ द. वत्। ४ द. न्ते। ५ द. था। ६ द. म्भो।

गवाक्षकाश्च कर्तव्यास्तथा चन्द्रावलोकनाः ।
वातायनास्तथोद्द्योताः समन्ताद् रूपशोभिताः ॥ ५६ ॥
गृहराजक्रिया ह्येवं[1] सर्वशोभासमन्विता ।
एवं लक्षणसंयुक्त ([2]मतृगोमपि ?) मन्दिरम् ॥ ५७ ॥

गृहराजः ॥

([3]वृंद्धरा ?) शुकनासस्य शुकनासस्य मूलतः ।
कनीयसं मण्डपानां कर्तुरिच्छावशाद् भवेत् ॥ ५८ ॥
पार्श्वयोरुभयोस्तुल्यं विदध्यात् तिर्यगायतम् ।
([4]व्यापिचक्षु [5]रंघनव्यापि वा + + + + + + ॥ ५९ ॥
प्रासादमसमं(?) स्थानं विदध्यान्मण्डपं बहिः ।
(यथापूर्व ?) द्वारविस्तारविस्तीर्णास्तेषु कार्या [6]गवाक्षकाः ॥ ६० ॥
समा सपादपादोना सार्धा चोच्छ्रितिरायता ।
अष्टाङ्गुलँ[7](भ्रूमोपेता ?) दशांशे द्वारविस्तृते ॥ ६१ ॥
विस्तारो मण्डपस्तम्भतुल्योच्छ्रायस्तस्योच्छ्रितिः ।
गर्भव्यासो मण्डपस्य साष्टांशः सांश एव च ॥ ६२ ॥
सार्धो वा मण्डपस्यायं गर्भे + + + + + + ॥ ६३ ॥
+ + + + + + + + + + + + + + +
+ + + + + + + + + + कार्यति[9] शक्त्या ।
[10]यां देवसंयति स सद्मनि देवताना-
मास्तेऽप्सरोगण[11]वृतः शरदां[12] शतानि ॥ ६४ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे

[13]मण्डपाध्यायो नाम [14]षट्षष्टितमः ॥

---

१ द. षा । २ द. मनृणामपि; परन्तु मुद्रित प्रतौ 'मातृणामपि' इत्येवं पाठः स्यात् । ३ द. वृद्धिरा शुकनासार्धं । ४ द. वा । ५ द. रत्नमथापि । ६ द. कं गवा° । ७ द. लं । ८ द. पंस्तंभे । ९ द. स्वशक्त्या । १० द. यो देवसद्मनि सद्मनि दे° । ११ द. णे । १२ द. दा । १३ द. अष्टम° । १४ द. स्ते प्सरोम ।

# अथ सप्तविंशतिमण्डपलक्षणं नाम सप्तषष्टितमोऽध्यायः ।

इदानीमभिधीयन्ते मण्डपाः सप्तविंशतिः ।
प्रासादाद् द्विगुणं कुर्यात् कनिष्ठं तत्र मण्डपम् ॥ १ ॥
पादोनद्विगुणं मध्यं प्रासादे तु कनीयसि ।
तस्मिन्नेव कनीयांसं विदध्यात् सार्धमानतः ॥ २ ॥
पादोनद्विगुणः सार्धः सपादश्चेति मध्यमे ।
सार्धः सपादस्तुल्यश्चेत्युत्तमाद्याः स्युरुत्तमे ॥ ३ ॥
सपादद्विगुणाः सार्धद्विगुणाः सान्तरोद्भवाः ।
क्षुद्र[1]प्रासादकेषु स्युर्मण्डपा बहवोऽपरे ॥ ४ ॥
क्षेत्रालाभे पुनरिमान् सर्वान् सर्वेषु योजयेत् ।
दैर्घ्याद्दैर्घ्येण गृह्णीयाद् विस्तृती[2] +++ तथा ॥ ५ ॥
प्रमाणं मण्डपे( कार्ये ? ) वलभ्यां गरुडेऽपि च ।
चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ॥ ६ ॥
भागैश्चतुर्भिर्भद्रं स्याद् द्वौ भागौ प्रतिभद्रकम् ।
अग्रतः पृष्ठतो वापि निर्गमो भागिको भवेत् ॥ ७ ॥
भद्राणां निर्गमो भागं सार्धभागमथा[3]पि वा ।
प्रासादस्य त्रिभागेन चतुर्भागेन वा भवेत् ॥ ८ ॥
अर्धेनाथ षडंशेन पञ्चांशेनाथ निर्गतिः ।
प्रासादानां समा कार्या पादोना वा प्रमाणतः ॥ ९ ॥
कार्या त्रिभागहीना वा मण्डपास्तु समैः क्षणैः ।
स्वविस्तारसमं भद्रे मुखे चैषा[4] प्रकीर्तिता[5] ॥ १० ॥
कर्णा द्विभागिका ज्ञेयास्तेषां कोणचतुष्टये ।
वामदक्षिणभागाभ्यां सह भद्रं षडंशकम् ॥ ११ ॥
प्रतिभद्रे नचैतस्मिन् विदध्यादग्रपृष्ठयोः ।
चतुःषष्टिधरोऽयं स्यात् पुष्पको नाम मण्ड[6]पः ॥ १२ ॥

पुष्पकः ॥

---

१ द. द्रः । २ द. विस्तृत्याद्विस्तृतिः तथा । ३ द. या । ४ द. षां । ५ द. ताः ।
६ द. पुष्पकः ।

दिक्त्रये प्रतिभद्राणि मुखे प्राग्ग्रीव एव हि ।
पुष्पभद्रो ( [1]तिस्तम्भश्चतुष्कः सुप्रभो? ) भवेत् ॥ १३ ॥

इति स्तम्भद्वयत्यागाद् ब्रूमो मण्डपविंशतिम् ।
( यो पुष्पभद्रस्तु व्रतोऽमृतनन्दनः ? ) ॥ १४ ॥

कौसल्यो ( युद्धि? )संकीर्णो गजभद्रो जयावहः ।
श्रीवत्सो विजयश्चैव वस्तुकीर्णश्रुतिर्जयः ॥ १५ ॥

यज्ञभद्रो विशालश्च सुश्लिष्टः शत्रुमर्दनः ।
( [3]भार्यवो? ) दमश्चैव मानवो मानभद्रकः ॥ १६ ॥

सुग्रीवो मण्डपः प्रोक्तो भद्रैर्युक्तश्चतुष्पदैः ।
चतुर्भिस्त्रिपदैः कर्णैर्निर्गमैः प्रागुदाहृतैः ॥ १७ ॥

धराणामेव विंशत्या चतुरुत्तरया युतः ।
( अस्मद्वासस्तम्भं षडन्ये द्विधरक्षयात् ? ) ॥ १८ ॥

सुग्रीवो हर्षनामा च कर्णिकारः पदार्धिकः ।
सिंहश्च सा( ग? )भद्रश्च ( सुस्तत्र? ) श्चेति सप्तमः ॥ १९ ॥

[4]सप्तविंशतिरित्युक्ता मण्डपानां समासतः ।
एषां विचित्ररूपाणां प्रासादाकृतिधारिणाम् ॥ २० ॥

मिश्रकाश्च[5] परिज्ञेया हस्तैर्द्वित्र्येकमानतः ।
मूलप्रासादतुल्या वा [6]त्र्यंशेनार्धेन [7]चोर्जिताः ॥ २१ ॥

द्विस्तम्भशुकनासाग्रे विज्ञेयः पादमण्डपः ।
प्रासादभित्तिमानेर्न मण्डपे भित्तयः स्मृताः ॥ २२ ॥

( सपादसत्रिभागा वा [9]वी स्यु+++++? ) ।
क्वचिद् भित्तिविहीनांश्च कुर्यादाकाशमण्डपान् ॥ २३ ॥
लतिष्वेष विधिः प्रोक्तः सान्धारे[11]षु स्वमानतः ।
प्रासादो यादृशस्तादृङ् मण्डपोऽपि तदग्रतः ॥ २४ ॥

---

१ द. नि । २ द. त्यागाद्नो मंडपविंशतिः । पुष्पकः । ३ द. भार्पचोद्दमेश्चैव । ४ द. सप्ता । ५ द. श्चापरे । ६ द. अं । ७ द. वोजिताः । ८ द. ले । ९ द. चो । १० द. नाश्च । ११ द. रा ।

यानि प्रासादनामानि तानि स्युर्मण्डपेष्वपि ।
वास्तुभेदेन भेदोऽयं मण्डपानां विधीयते ॥ २५ ॥
शतार्ध[1]मण्डपस्थानं (नीलार्ध[2] भोजनाय च ?) ।
यज्ञार्थो यतिमुख्यार्था विहा(रा)र्थो नृपालदो(?) ॥ २६ ॥
कार्यो (दशभ्य?) विस्तारो+++नु शतावधेः ।
हस्तानां संख्यया मानं हस्तेन स्याद् गृहेशितुः ॥ २७ ॥
उप[3]योगानुसारेण स्वधिया परिकल्पितः ।
आ[4]यतश्चतुरश्रो वा कर्तव्यो ना[5]द्यमण्डपः ॥ २८ ॥
शतमष्टोत्तरं ज्येष्ठश्चतुःषष्टिकरोऽवरः ।
कनिष्ठो मण्डपः कार्यो द्वात्रिंशत्करसंमितः ॥ २९ ॥
अर्द्धि[6]विस्तारोऽस्य स्यान्नेपथ्य[7]गृहकादि तु (?) ।
परिच्छेदानुसारेण स्वधिया परिकल्पयेत् ॥ ३० ॥
द्वा[8]रद्वयं च कर्तव्यं तत्प्रमाणानुसारतः ।
नेपथ्यगृहके चान्यत् तृतीयं रङ्गसम्मुखम् ॥ ३१ ॥
समैः क्षणैः समैः स्तम्भैरलिन्दैश्च समै[9]र्युताः ।
समकर्णाः समा द्रव्यविधेया मण्डपाः शुभाः ॥ ३२ ॥
(भित्तिमां चतुस्रस्यात् ?) कार्यः कामं सनिर्गमः ।
स्तम्भकोणाश्रितं मानं भित्तिः स्यान्मानबाह्यतः ॥ ३३ ॥
वेदिर्मण्डपभूषाद्यैः स्यान्मध्ये बाह्यतोऽपि वा ।
[10]क्षेत्रलोभे तु कर्तव्या भित्तिमानस्य मध्यतः ॥ ३४ ॥
चतुःषष्टिपदे[11] ज्येष्ठे भद्रं कुर्याच्चतुष्पदम् ।
एकाशीतिपदं मध्ये भद्रं स्यात् पञ्चभागिकम् ॥ ३५ ॥
(सतताङ्गा[12]?) विभक्ते तु खण्डशः स्यात् कनीयसि ।
कर्णा द्विभागिकाः कार्या भित्तियुक्तश्च मण्डपः ॥ ३६ ॥

१ द. र्थं । २ द. र्थोयं । ३ द. भो । ४ द. या । ५ द. द्य । ६ द. द्वि । ७ द. थ्या । ८ द. रं । ९ द. यो । १० क्षेत्रालाभे । ११ द. दे । १२ द. भा ।

भद्रप्रासादसदृशौ कर्णभद्रं च भाजयेत् ।
क्षोभणं[1] बाह्यतो रक्षेत् ([2]पाडनं?) स्याद् विपर्यये ॥ ३७॥

क्षैरकं[3] कुम्भकलाशा[4](?) कपोतं जङ्घया सह ।
प्रासादस्यानुरूपेण++++++++ ॥ ३८॥

रुचकश्चतुरश्रः स्यादष्टाश्रिर्वज्र उच्यते ।
द्विवज्रः षोडशाश्रिश्च प्रतीतो द्विगुणस्ततः ॥ ३९ ॥

मध्यप्रदेशेऽयं स्तम्भो वृत्तो वृत्तः प्रकीर्तितः ।
अथान्येन प्रकारेण षोढा कुर्वीत मण्डपान् ॥ ४० ॥

त्रिपञ्चसप्तनवभिश्चतेक्षणैः[5] उभयसमः (?) ।
(सांद्रमध्यक्षणोऽन्येभ्यः[6][7]?) सत्र्यंशः सार्ध[8] एव वा ॥ ४१ ॥

एवमेव प्रकर्तव्यः षड्प्रकारेऽपि मण्डपे ।
प्रासादगर्भस्यान्तेन (स्युस्तद्भित्तिरथापि वा?) ॥ ४२॥

स्तम्भसूत्रस्य मार्गेण क्षणे मण्डपमध्यगे ।
मूलप्रासादगर्भेण कार्या वा भद्रविस्तृतिः ॥ ४३ ॥

शेषाः क्षणा विधातव्या (समसंख्याक्षतैर्धरैः?) ।
प्रासादच्छादनासाद्भिः(?) सत्र्यंशावापि मण्डपे ॥ ४४ ॥

सदृशां स [9]समश्वशाद् द्वा + समतले भवेत् (?) ।
उच्छ्रायं मण्डपे ब्रूमः प्रकारेणापरेण च ॥ ४५ ॥

तलार्धं पदमध्येया + यस्य विहितः शुभः ।
प्रासादे दशधा भक्ते चतुःपञ्चकरे समा ॥ ४६ ॥

नव्यंश मण्डपस्यादुत्तर[10][11]पट्टयोर्द्वयोः (?) ।
षड्युद्[12]सूहस्तेत्वष्टांशं सप्तभागे[13] न वास्तके (?) ॥ ४७ ॥

दशै[14]कादशके षट् स्युः सार्धभागासु संख्यया ।
त्रयोदशक +++ [15]हस्तयोः सार्धपञ्चकम् ॥ ४८ ॥

१ द. णां । २ द. पी । ३ द. क्षु । ४ द. कलशो । ५ द. °भि रेकादशभिश्चते क्षणैः । ६ द. सांद्रि । ७ द. णा । ८ द. र्शं । ९ द. सर्वा । १० द. °पस्य स्यादु° । ११ द. रं । १२ द. सप्त हस्ते । १३ द. गं । १४ द. स्यै । १५ द. हस्तायाः ।

सपादाः पञ्चभागाः स्युश्चतुर्दश करे पुनः ।
तदूर्ध्वं विंशतिं यावदुच्छ्रितिः पञ्चभागिकी ॥ ४९ ॥

संस्तृना ( व्यतिरिक्तव्या[1] त यथा [2]वापि ? ) प्रकल्पयेत् ।
शुकनासस्य यः स्तम्भः स्तम्भो यो मण्डपस्य च ॥ ५० ॥

मिथः श्लिष्टावपि व्यक्तौ यत्र तौ संश्रितौ [3]हसः ( ? ) ।
( प्रासादकोणस्तम्भो य ग्रस्तास्ते ग्रस्तमण्डपा[4] ? ) ॥ ५१ ॥

निर्गता व्यतिरिक्ताः स्युश्चतुर्भद्रविभूषिताः ।
तलपट्टाच्छुकनासाव्यांतले(?) भूमिरङ्गिका ॥ ५२ ॥

तलपट्टमधस्तस्या मण्डपानां नियोजयेत् ।
एवं परं परं कुर्यान्निम्नान्निम्नतरं बुधः ॥ ५३ ॥

सममेवाथवा कुर्यात् प्रासादत[6]लमानतः ।
ध्रुवादिनाम्नां श्रीकूटः प्रवृत्तानां तथैव च ( ? ) ॥ ५४ ॥

रुचकप्रभृ[7]तीनां च या संज्ञा या विभक्तयः ।
मण्डपेष्वपि ता ज्ञेया त( स्त )त्सम्बन्धेषु नान्यथा ॥ ५५ ॥

देवालयोत्सवार्थाय विमानानि पृथक् पृथक् ।
मण्डपादि[8] समाख्यातादूर्ध्वं(?) स्युः सप्तविंशतेः ॥ ५६ ॥

देवयात्रानिमित्तानि तथैव परिकल्पयेत् ।
चतुःषष्टेरप्यधिकाः स्तम्भाः स्युः पदसंख्यया ॥ ५७ ॥

प्रासा[9]दाङ्गानि [10]++ स्युस्तत्क्षणान्मण्डपेन च ।
[11]संवास्तुपदं[12] संवृद्धया(?)कर्तव्यो विषमैः क्षणैः ॥ ५८ ॥

न दोषो जायते तत्र (शिल्पीच्छतेऽत्र ?) कारणम् ।
अथ दारुकलां ब्रूमः ++[13] मण्डपसंश्रयाम् ॥ ५९ ॥

(या)दृक् समतलं तत्र विभागस्तादृगुच्यते ।
प्रासादस्य विभागेन राजसेनं तु भागिकम् ॥ ६० ॥

१ द. त्वाद । २ द. त्वा । ३ द. हि । ४ द. पाः । ५ द. या । ६ द. °त नामतः । ७ द. प्रभृतीनां । ८ द. °दि षु । ९ द. °दो । १० द. यानि । ११ द. स । १२ द. द । १३ द. स ।

वेदी[1] भागद्वयं ज्ञेया द्वौ भागौ मत्तवारणम् ।
चन्द्रावलोकनं तद्वद् विधातव्यं[2] द्विभागिकाम्[3] ॥ ६१ ॥

पट्टो भवति भागार्धमर्धभागिकमासनम् ।
कूटस्तम्भं तु भागेन सपादेन प्रकल्पयेत् ॥ ६२ ॥

शीर्षकं[4] क(भ)रणं चैव सपाद भागमिष्यते ।
एतत् समतले कार्यं विषमो[5]ऽपि क्वचिद् भवेत् ॥ ६३ ॥

पट्टि[6](?)र्भागिकी विधातव्या प्रकारेणापरेण च[7] ।
अधस्तादूर्ध्वपट्टस्य तलपट्टस्य चोर्ध्वतः[8] ॥ ६४ ॥

पदे त्रिभागमध्ये वा कार्या चन्द्रावलोकने ।
तदधस्ताद् विधातव्यो विभागः पञ्चभिः पदैः ॥ ६५ ॥

भागिकं राजसेनं स्याद् वेदिकापि द्विभागिकी ।
मत्तवारणकं कार्यं भागद्वितयसंमितम् ॥ ६६ ॥

दशभक्तेऽथवा कार्या चतुर्भिश्चन्द्रलोकना ।
भागद्वयेन वेदी च तत्समं मत्तवारणम् ॥ ६७ ॥

भागेन रूपहारस्तु भागेनैकेन कण्ठिका[9] ।
मत्तवारणपातश्च त्र्यंशहीनैकभागिकः ॥ ६८ ॥

भागार्धेनाथवा पातस्तयोर्मध्ये च मध्यमः ।
कूटागारेष्विदं मानमिदं चासनपट्टके ॥ ६९ ॥

भागद्वितयविस्तारमासनं परिकल्पयेत् ।
पिण्डो भागद्विकं[10] तस्य त्र्यंशोना मत्तवारणा(?) ॥ ७० ॥

वेद्यां पिण्डः सपट्टः स्यात् कूटागारे तथैव च ।
राजसेनस्य पिण्डस्तु कूटागारसमो भवेत् ॥ ७१ ॥

कुम्भिकापि च तत्पिण्डा चोदरू[11]र्ध्वतयासनम्(?) ।
विधात् + सशिरःस्तम्भः कूटकं + + + + + ॥ ७२ ॥

---

१ द. दा । २ द. व्या । ३ द. का । ४ द. कक । ५ द. मे । ६ द. पिञ्झि° । ७ द. वा ।
८ द. तः । ९ द. कंठकः । १० द. कस्त । ११ द. दू ।

राजसेनसमा कुम्भी जङ्घा वेदिसमा भवेत् ।
एवमेतत् [1]त्रिधा प्रोक्तं ( सूर्प ? )च्छाद्यमथोच्यते ॥ ७३ ॥

अधःपट्टोर्ध्वपट्टान्तं पञ्चधा प्रविभाजयेत् ।
उभाभ्यां वा त्रिभिर्वापि भजे( [2]निगतिस्तु सा[3]र्यते ? ) ॥ ७४ ॥

++पट्टसमोऽथ ( द्वा ? ) त्रयोदशविभाजिते ।
शूर्प[4]भागं त्यजेदूर्ध्वं भ( घ[5] )टना द्वादशांशिका ॥ ७५ ॥

कुर्यान्निपातं शूर्पस्य पञ्चभागमथापि वा ।
दण्डकै[6]र्भूषयेच्छूर्पं मध्ये दण्डं विवर्जयेत् ॥ ७६ ॥

मध्ये च स्तम्भिक[7]ा वेद्या मत्तवारणकस्य च ।
भागेन पट्टपिण्डस्तु सपादेनाथवा भवेत् ॥ ७७ ॥

पृथुत्वं स्यात् स षड्भागपिण्डतुल्यं तु पट्टके ।
स्तम्भः पट्टसमः कार्यः[8] शीर्षकं त्रिगुणं ततः ॥ ७८ ॥

स्तम्भादप्य[9]धिका कूटी हीरकादपि पट्टकः ।
बाहापट्टवदुच्छ्रायः शुकनासस्य पट्टके ॥ ७९ ॥

पट्टपिण्डोच्छ्रिता वेदी यद्वा पट्टाधिका भवेत् ।
मण्डपे स्यात् तुलोच्छ्रायो विभागैः प्रमितोऽष्टभिः ॥ ८० ॥

[10]स्थलप्रासादतुल्यो वा पातस्य च सतोऽपि वा ।
निम्नोन्नतं छादयेच्च छेदिकायोगतो बुधः ॥ ८१ ॥

कण्ठकश्चे[11] + कार्थेन विधातव्यो विचक्षणैः ।
छेदिकायोगतो मध्ये स्तम्भाः स्युर्बाह्यतोऽधिकाः ॥ ८२ ॥

पञ्चांशेनाष्टषष्ठेन केशान्तात् सालभञ्जिकाः ।
रथिकाशालभञ्जीभिः स्थिताभिः पट्टिकोर्ध्वतः ॥ ८३ ॥

मध्ये क( वा )राटकं कार्यं मनोज्ञं वा सरोरुहम् ।
छादयेद् वास + मलं विमानैर्बहुभेदवत् ॥ ८४ ॥

---

१ द. स त्रि । २ द. त्रि । ३ द. प । ४ द. पैं । ५ द. तटना । ६ द. कां । ७ द. द ।
८ द. र्या । ९ द. भ्यधिकां । १० द. स्. । ११ द. °क च्छेदिकार्थेन ।

क्षणान्तरेषु रचयेद् दीर्घिकातोरणानि च ।
अन्यथा वा भवेद् वृत्तं चतुरश्रो यथा क्वचित् ॥ ८५ ॥
गजतालुयुतः पट्टस्योर्ध्वमष्टाश्रिरेव वा ।
कुर्वीत मध्ये चाष्टाश्रिबाह्यतः पङ्क्तयस्तथा ॥ ८६ ॥
(विशेषं छादये ब्रूमः स्तम्भस्तत्रभासदेत् ?) ।
षोडशं द्वादशाष्टौ वा +++ चतुरोच्छ्रायाः(?) ॥ ८७ ॥
पादान्यदूषयेत् शिल्पीभवेक्षणवशात्(?) सदा ।
त्रयोविंशतिधा भाज्यमन्तरं पट्टघण्टयोः ॥ ८८ ॥
घण्टादूर्ध्वं(?)पद्मपत्री सार्धभागसमुच्छ्रिता ।
उच्छ्रिता सार्धभागेन तदूर्ध्वं (हट्टरी ?) भवेत् ॥ ८९ ॥
कपोतां ग्राससंयुक्ताः सार्धभागसमुच्छ्रिताः ।
कण्ठकस्त(स्तु)द्विभागः स्यादमरस्तु द्विभागिकां(?) ॥ ९० ॥
भागद्वयं विनिष्क्रान्तं त्रिभागे गजतालुके ।
(दत्ताभागानुच्छितकोसलं भागं च धालिका भवेत् ?) ॥ ९१ ॥
भागद्वयं द्वितीयं च तृतीयं च द्विभागिकम् ।
तस्योपरिष्टात् कर्तव्या(वलिन्यार्धभागिका ?) ॥ ९२ ॥
निर्गमः सूत्रमार्गेण एकैकस्य स्वमानतः ।
++ गर्भकोणः स्यात् पक्ष्मपत्र्याश्च मस्तमे(?) ॥ ९३ ॥
विमृश्य सूत्रधारो वा निर्गमं कल्पयेत् स्वयम् ।
समैर्भागैश्च पत्रैश्च विकटैः पद्मपत्रकैः ॥ ९४ ॥
हस्तितुण्डैर्वरालैश्च शालभञ्जीभिरण्डकैः ।
भल्लिकातोरणैश्चैव भूषणीया चतुष्किका ॥ ९५ ॥
खेचरैर्माल(ल्य)बन्धैश्च नानाकर्मवितानिभिः ।
मन्दारकैः शुक्तिभिर्वा पद्मैर्वा नागपाशकैः ॥ ९६ ॥
मण्डपं छादयेत् प्राज्ञो बाह्यतस्त्वभिधीयते ।
द्विगुणां(?) मौलिकद्वारात् पादोनद्विगुणं क्वचित् ॥ ९७ ॥

---

१ द. का° स्तत्रभास° । २ द. शा । ३ द. यपट्टच्छ्र्या । ४ द. यन् । ५ द. घट्टा । ६ द. तो । ७ द. गा । ८ द. काः । ९ द. नून्भागा नुच्छ्रि (?)ोसल । १० द. मु । ११ द. ण ।

सार्धभागमितं यद्वा त्र्यंशोनं द्विगुणं क्वचित् ।
क्वापि त्र्यंशाधिकं कार्यं [1]चतुर्द्वारं + मण्डपे ॥ ९८ ॥

द्वारे कार्यौ प्रतीहारौ भल्लिका तोरणास्तथा ।
स्तम्भयोश्च वरालौ द्वौ [2]शालभञ्जिकया सह ॥ ९९ ॥

प्राग्ग्रीवं भद्रभद्रं च रथिका वेदिका बहिः ।
मण्डपे वर[3]कस्योर्ध्वमधस्ताच्छिखरस्य च ॥ १०० ॥

भागार्धं छेदपट्टः स्याच्छेषं कुर्वीत संवृति[4](?) ।
( शिखरा त्र्यंशयुग्मेन पादोन वा कारयेत् ? ) ॥ १०१ ॥

प्रासादे शुकनासं तु ( सन्तु सम्भ्रमेऽथवा ? ) ।
मण्डपस्योदयः स्वस्मादधस्तादथवा भवेत् ॥ १०२ ॥

वामनाद्या अनन्तान्ताः प्राक् प्रोक्ता ये दशोपयेः( दर्याः ) ।
कर्तव्यो मध्यतस्तेषामुदयः कोपि मण्डपे ॥ १०३ ॥

प्रविभज्योदयं त्रेधा घण्टां भागेन कारयेत् ।
तत् त्रिभागेन तिलकस्तिलकार्धेन( फंसना ? ) ॥ १०४ ॥

क्रमैस्त्रिभिः पञ्चभिर्वा शूर्पैर्निर्माणमिष्यते ।
स्कन्धछाद्य[6]र्वासने वामेषा सवँणोदिना(?) ॥ १०५ ॥

शोभां भद्रेषु कर्णेषु यथायोगं प्रकल्पयेत् ।
वीथीभिश्चन्द्रशालाभिः सिंहकर्णैश्च शोभनैः ॥ १०६ ॥

रथिकाभिर्वरालैश्च तिलकैश्चारुदर्शनैः ।
[9]शुकनासैर्गजैः सिंहैरन्यैरित्येवमादिभिः ॥ १०७ ॥

कर्मप्रकारैः कर्तव्या मण्डपे भूषणक्रिया ।
[10]त्रिविधैरथवा कूटैः सङ्कटैः कक्षकूटकैः ॥ १०८ ॥

तिलकैर्वा तमङ्गैर्वा खुरच्छाद्यैः [11]संघट्टकैः ।
शृङ्गादिभिः प्रभेदैश्च कार्या मण्डपसंवृतिः ॥ १०९ ॥

---

१ द. वकुद्वर । २ द. तंडि । ३ द. का सार्ध । ४ द. तिं । ५ द. पयः । ६ द. वासेनै । ७ द. °वर । ८ द. की । ९ द. शुभनार्शगरुडैः । १० द. वि । ११ द. सं ।

शुकनासोच्छ्रितेरूर्ध्वं न कार्या मण्डपोच्छ्रितिः ।
अधस्ताद् यत्र या प्रोक्ता कर्तव्या सा त्वशङ्कितैः ॥ ११० ॥
वलभ्यां शुकनासान्ता कर्तव्या मण्डपोच्छ्रितिः ।
(मण्डपः शुकनासान्तं योग्रासकु[1]लम् ?) ॥ १११ ॥
न च तत् पुरमध्ये तु यत्र सा मण्डपोच्छ्रितिः ।
(स पुत्र[2]यस्तंबन्धवर्त[3]स्य तयः कर्तकारकै[4] ?) ॥ ११२ ॥
हीनाधिकप्रमाणेषु (दू[5]विष्टेषु ?) वास्तुषु ।
द्रव्यैर्वाधिकप्रमा[6]णेषु(?) स्युरनर्थाः पदे पदे ।
ऋद्धिः पुरस्य न भवेत् स्यात् पुराधिपतेर्भयम् ॥ ११३ ॥
क्लृप्तै[7]रेवं मण्डपैः सुप्रमाणै-
र्ल[8]क्ष्मोपेतैः सद्विधानेन कर्तुः ।
ऋद्धिः सिद्धिः कारकस्यापि लोके
क्षेमं[9] च स्याद् भूमिभर्तुर्जयश्च ॥ ११४ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
सप्तविंशतिमण्डपाध्यायो नाम सप्तषष्टितमः ॥

---

## अथ जगत्यङ्गसमुदायाधिकारो नामाष्टषष्टितमोऽध्यायः ।

त्रिदशागारभूत्यर्थं भू[10]षाहेतोः पुरस्य तु ।
भुक्तये मुक्तये पुंसां सर्वकालं च शान्तये ॥ १ ॥
निवासहेतोर्देवानां चतुर्वर्गस्य(हे ?) सिद्धये ।
मनस्विनां च कीर्त्यायुर्यशस्सम्प्राप्तये नृणाम् ॥ २ ॥
जगतीनामथ ब्रूमो लक्षणं विस्तरादिह ।
प्रासादं लिङ्गमित्याहु(स्त्रिग ?)ल्लयनाद् यतः ॥ ३ ॥
ततस्तदाधारतया जगती पीठिका मता ।
आकारविस्तृतायामानुच्छ्रायं ([11]ते क्रिया ?) ॥ ४ ॥

---

१ द. तं कु° । २ द. स्तु । ३ द. न । ४ द. कौ । ५ द. दुविनिष्टेषु वा° । ६ द. हीने । ७ द. मश्च । ८ द. सा । ९ द. मू । १० द. च । ११ द. तत् ।

विना [1]तमङ्गप्रत्यङ्गा कल्पना नापि + क्रमम् (?) ।
विभक्तिं[2] तिलकन्दानां भद्रविस्तारनिर्गमम् ॥ ५ ॥

जलाधार( प्र[3]दोश्च ? ) प्रवेशं निर्गमोद्गमम् ।
मानसं[4]ख्यां च शालानां संस्थानोन्मानलक्षणम्[5] ॥ ६ ॥

परिक्रमं ( [6]तमेवासां ? )संज्ञां च त्रिविधामपि ।
षट्प्र[7]कारत्वमे( वासां ? ) सम्भवस्य च कारणः( णम् ) ॥ ७ ॥

मूलशालो( ला )परिच्छित्तिं परिक्रमविनिर्गमम् ।
सश्वयद्वारसोपानमुण्डिकामण्डसम्भवा( न् ) ॥ ८ ॥

द्वित्र्यादिदेवताधिष्ण्यो[8]ज्जगतीस्तोरणानि च (?) ।
युक्तानि लक्षणैः सर्वै[9]र्यथावत् सम्प्रचक्ष्महे ॥ ९ ॥

चतुरश्रा समा शस्ता मनोज्ञा सर्वतःप्लवा ।
अंशप्रगूढदिग्भागा प्रासादानुगता शुभा ॥ १० ॥

चतुरश्रायता यद्वा वृत्ता वृत्ताय[10]ता तथा ।
अष्टाश्रिर्वा विधातव्या सा संशोध्यादितः क्षितिम् ॥ ११ ॥

निरूप्य त्रिदशागारं संस्थानोन्मानलक्षणैः[11] ।
तदाकारवतीं[12] पार्श्वे जगतीं तस्य योजयेत् ॥ १२ ॥

कनीयसी मध्यमा च ज्येष्ठा चेति त्रिधैव सा ।
कनीयः प्रभृतिष्वेताः प्रासादेषु नियोजयेत् ॥ १३ ॥

जगत्यो( भ्रमणीभिः स्फारैकद्वित्रिश्रिभिः ? ) क्रमात् ।
( नानाशातिशान्ति[13]न्यकनिष्ठाद्या ? ) मनोरमाः ॥ १४ ॥

प्रासादस्यासु( नु )रूपेण साङ्गोपाङ्गादिसंख्यया ।
शालास्तासां मताः कर्म प्रोच्यते सामुदायिकम् ॥ १५ ॥

(श्री आ द्वादशकरादूर्ध्वमोर्ध्वा ?) विंशतिहस्ततः ।
शालात्रिभागं तुर्यांशः स्याद्वा द्वात्रिंश[14]तः पुनः(?) ॥ १६ ॥

---

१ द. ग । २ द. क्तित । ३ द. मुद्रित पुस्तके 'प्रदेशांश्च' इति स्यात् । ४ द. ख्या । ५ द. णा । ६ मुद्रित पुस्तके 'तमङ्गानाम्' इति स्यात् । द. तथैतासां संज्ञं च । ७ द. प्रा । ८ द. ता । ९ द. ष्ण्यां ज । १० द. तस्तथा । ११ द. णः । १२ द. ती । १३ द. लिन्यः क । १४ द विंशता ।

आसनार्धात्तु पश्चाशच्छाला(?) प्रासादतो भवेत् ।
बहुदेवकुला या तु प्रासादस्यानुसारतः ॥ १७ ॥

ब्रूमः प्रकारान् शालानां यथायोगमिहाधुना ।
कर्णोद्भवा भ्रमोच्छा(त्था) च भद्रजा गर्भसम्भवा ॥ १८ ॥

मध्यजा पार्श्वजा चेति भेदास्तासां भवन्ति षट् ।
(विस्तारायामतोस्यैभिः कर्णजा पूर्वमारिणा ?) ॥ १९ ॥

भ्रमजा तत्प्रमाणेन + + पादेन[3] वेष्टिता ।
भद्रजा कर्णजातीया सार्धायाम्यं[4](मा) प्रकीर्तिता ॥ २० ॥

गर्भजा मध्यजा चेति कर्णजायस(त)सम्मिते ।
पार्श्वजा भ्रमजायासा(मा) स्थानं तासामथोच्यते ॥ २१ ॥

कर्णेषु कर्णजा ख्याता भ्रमजा च परिभ्रमे ।
भद्रेषु भद्रजा ज्ञेया त्रयमध्ये च गर्भजा[6] ॥ २२ ॥

मध्ये व्यवस्थिता या तु पञ्चानां मध्यजा तु[7] सा ।
(पार्श्वसंस्थानश्चतस्रो यास्तासां[8] शान्ताः?) पार्श्वद्वये[9] स्मृताः ॥२३॥

पार्श्वद्वयं स्युः कर्णानां +[10] स्ता अपि च पार्श्वजाः( ? ) ।
प्रासादविस्तृतेर्वं विधातव्या भ्रमन्तिका ॥ २४ ॥

( पदवृद्धिनिवासस्याः कन्दा दिक्षु + + + च ।
सुरसद्मानुसारेण कुर्यादष्टौ विचक्षणः ॥ २५ ॥

( आरभ्य भद्रमालत्या यावत् त्रिंशमत्रिकाम् ?) ।
नवाण्डकाया यावत् स्यादेकत्रिंशत्तमे[11] क्रमात् ॥ २६ ॥

शालाकन्दाः स्मृतास्तासां चतुर्वर्गविभाजिताः ।
चतुष्पदा तत्र सास्यां[12](?) स्याद् द्वादशपदो भ्रमः ॥ २७ ॥

क्रमेणानेन कर्तव्यं शालाकन्दनिवेशतः(नम्) ।
तदूर्ध्वं तु भ्रमो नास्ति शालागणविभाजने ॥ २८ ॥

---

१ द. ब्रू । २ द. स्या । ३ द. नार्द्धेन । ४ द. माः । ५ द. यत्र । ६ द. गर्ज° । ७ द. ति । ८ द. स्तां । ९ द. त्रय । १० द. यास्तां । ११ द. मी । १२ द. सा ।

रु(भ)द्राद् भ्रमोऽयं न पुनः कर्णनिर्गमधारिणाम् ।
रुचकस्यैव[1] कर्तव्यः कर्णदेशात् परिक्रमः ॥ २९ ॥

शालानुसारतो भद्रे विस्तारैः[2] कन्दकाद् बहिः ।
कर्तव्यो निर्गमस्तत्र[3] बुधैः पद[4]चतुष्टयम् ॥ ३० ॥

उदकान्तरविस्तारो भागेनार्धेन वा क्वचित् ।
प्रजाङ्गस्य विधातव्यं क्षोभणं[5] च पदद्वयम् ॥ ३१ ॥

प्रासादस्य च विस्तारं दत्त्वाग्रे सलिलान्तरम् ।
गण्डौ तत्सूत्रगौ कार्यौ भ्रमाद् द्विपदनिर्गतौ[6] ॥ ३२ ॥

प्रासादानां तु विस्तृत्या स्युरेकद्वित्रिनिघ्नया(?) ।
कर्णाद् विनिस्सृतौ गण्डौ ज्येष्ठमध्यकनीयसा(म्) ॥ ३३ ॥

([7]भवग्रे सुण्डिकाः ?) कार्याः कर्णशालाविनिर्गमैः[8](ताः) ।
मालांसोपानसंयुक्ताः प्रतीहारसमाकुलाः ॥ ३४ ॥

प्रतोली चाग्रतः कार्या सपटो + [9]गैला दृढा ।
ब्रूमोऽथ जगतीपीठं तत् कुर्यादेकहस्तके ॥ ३५ ॥

प्रासादे विस्तृतेस्तुल्यसमुत्सेधे[10] विचक्षणः ।
द्विहस्तके तु पादोनं त्र्यंशहीनं त्रिहस्तकम्[11] ॥ ३६ ॥

चतुर्हस्ते (तु) कर्तव्ये सार्धहस्तद्वयोच्छ्रितम्[12] ।
चतुरिष्टा त्र्या[13] च[14] + + + द्वादशहस्तकम् (?) ॥ ३७ ॥

कनीयोमध्यमज्येष्ठानुदयान् कल्पयेत् क्रमात् ।
अर्धं वा कर्णशालायाः पादोनं[15] वाथ तत्समम् ॥ ३८ ॥

अनेन (च) प्रकारेण ज्येष्ठमध्यमयोरपि ।
प्रासादयोर्जगत्युच्चा कर्णप्रासादमानतः ॥ ३९ ॥

पीठस्य यः समुत्सेधो[16] + + + तं विभाजयेत् ।
भागेन खुरकं कुर्याद् भागेनैकेन वर्त्मना(?) ॥ ४० ॥

---

१ द. स्यै । २ द. स्त । ३ द. स्य । ४ द. पा । ५ द. णां । ६ द. मौ । ७ द. तदग्रे स्तुंडिगा । ८ द. माः । ९ द. ता । १० द. ध । ११ द. के । १२ द. तिः । १३ द. न्व । १४ द. भयाव° । १५ द. नवार्थाम् । १६ द. धो ।

कुम्भस्य खुरका(कं)भागं द्विभागं कुम्भकं तथा ।
कलशं भागिकोत्सेधं तथैवान्तरपत्रकम् ॥ ४१ ॥

वरण्डीं भागिकीं कुर्यात् तथा पट्टं च भागिकम् ।
जगत्याः खुरकाद् भागं ( [1]प्रचिशोकोद्भकः सुरः ? ) ॥ ४२ ॥

पट्टो[2] भागेन सार्धेन प्रतिष्ठा[3]जगतीखुरान् ।
( खुरकारकुम्भकाकिञ्चित्कुम्भका क्षणकस्तथा ? ) ॥ ४३ ॥

( कणकादन्तेरपत्र ? ) कपोतालीं [5]तथैव च ।
पट्टिकानां प्रवेशांश्च नासिकावर्तनास्तथा ॥ ४४ ॥

निम्नोन्नतप्रवेशांश्च विदधीत मनोहरान् ।
+ धिकाभिर्विचित्राभिः कूटैश्चानेकशेखरैः ॥ ४५ ॥

सुविभक्ता विधातव्याः शालानां कन्दकामू( स्त )ले ।
कर्माण्यतिविचित्राणि स्थानस्था[6]नोचितानि तु[7] ॥ ४६ ॥

कुर्यात् पीठेषु शोभार्थं प्रासादानां विचक्षणः ।
यथा सिंहासनं राज्ञां[8] शोभते मणिदीप्तिभिः ॥ ४७ ॥

तथा प्रासादराजस्य पीठं कर्मभिरुत्तमैः ।
पट्टस्योर्ध्वं विधातव्यमुत्कृष्टं राजसेनकम् ॥ ४८ ॥

पुष्पितैः कमलैर्युक्तं शोभितं भारपुत्रकैः ।
तदर्धं वेदिका देया नानापत्रसमाकुला ॥ ४९ ॥

( रूपं संघटकोपेता ततश्चासमघट्टकः ।
स्तम्भिकाभिरनेकाभिर्धारयेत् तं समन्वितः ? ) ॥ ५० ॥

तस्योपरि विधातव्यं ( कर[9]व्यासनसमुत्तमम् ? ) ।
अन्तरं कर्णशालानां तलपादार्धपट्टयोः ॥ ५१ ॥

राजसेनयु[10]तां वेदीं तत् त्रिभागेन कारयेत् ।
वेदिकार्धं त्रिभागं वा तले स्याद् राजसेनकम् ॥ ५२ ॥

---

१ द. प्रविशेत्कौभकः सुरः । २ द. दो । ३ द. विष्ठो । ४ द. दान्तर । ५ द. ततोऽपि च । ६ द. नौ । ७ द. ति । ८ द. ज्ञः । ९ द. क्ष्या । १० द. तावेदि ।

कूटारं + त्रिभागेन वेदेरूर्ध्वं मनोहरम् ।
करमात्रसमुत्सेधं कर्तव्यं मत्तवारणम् ॥ ५३ ॥
सुखलीलाशनार्थं तत् सप्रवेशं सनिर्गमम् ।
( गन्द्राग्रे सुकाग्रे ? ) च प्रतोल्यग्रे तथैव च ।
तोरणं त्रिविधं ज्ञेयं कनीयोमध्यमोत्तमम्[1] ॥ ५४ ॥
इत्थं जगत्यायतनस्य सम्यक्
प्रासादपीठस्य च सम्प्रदिष्टम् ।
विधानमेतज्जगतीषु ( नार्त-
मन्यथाभिदधां[2]ः सह लक्षणानाम् ? ) ॥ ५५ ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते समरङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
जगत्यङ्गसमुदायाधिकारो नामाष्टषष्टितमोऽध्यायः ॥

## अथ जगतीलक्षणं नामैकोनसप्ततितमोऽध्यायः ।

वसुधा वसुधारा ( च ) वहन्ती च तथापरे( रा ) ।
श्रीधरा भद्रिका[3] चैव एकभद्रा द्विभद्रिका ॥ १ ॥
त्रिभद्रिका भद्रमाला वैमानी भ्रमरावली ।
स्वस्तिका हरमाला च कुलशीला महीधरी ॥ २ ॥
मन्दारमालिकानङ्गलेखाथोत्सवमालिका ।
[4]नागारामा मारभव्या तथा च मकरध्वजा ॥ ३ ॥
नन्द्यावर्ता( र्तं ? ) च भूपाला पारिजातकमञ्जरी ।
चूडामणिप्रभा चैव तथा श्रवणमञ्जरी ॥ ४ ॥
विश्वरूपादिकमला तथा त्रैलोक्यसुन्दरी ।
गन्धर्वबालिका चान्या विद्याधरकुमारिका ॥ ५ ॥
सुभद्रा च समाख्याता तथान्या सिंहपञ्जरा ।
( [6]वज्रपकुरवाद्याः ? ) गन्धर्वनगरी तथा ॥ ६ ॥

---

१ द. मा । २ द. धमः । ३ द. की । ४ द. नागागानामारभ्यच्चर्या तथा च मकरध्वज । ५ द. नां । ६ द. वज्रपकुंरवाद्यः गंधर्व° ।

तथामरावती ज्ञेया रत्नधू[1]मा च नामतः ।
त्रिदशेन्द्रसं[2]भा चैव तथान्यौ[3] देवयन्त्रिका ॥ ७ ॥

चत्वारिंशाद्धिं[4]( दि )तीयं स्यादेकोना नामसंख्यया ।
( [5]यमलाम्बरधरा नेत्रा ददुडाः खण्डिला सिता ? ) ॥ ८ ॥

अथातः कथ्यते तासां प्रविभागो यथा यथा ।
जगतीनां क्रमेणैव शालानां च यथोदितः ॥ ९ ॥

चतुरश्रीकृते क्षेत्रे ( षडेते स ? )विभाजिते ।
समं वा चार्धयुक्ते वा [6]गुणेऽथ मुखायनाम्( ? ) ॥ १० ॥

मण्डपेनोज्झिते कुर्याज्जगतीमनुसारतः ।
द्वौ भागौ मध्यदेशे स्यात् प्रासादो भागिको भ्रमः ॥ ११ ॥

( कर्णाद्दशां समुज्य ? ) पार्श्वयोरुभयोः पुरः ।
श्रीखण्डिका विधातव्याः प्रासादमं + + मिमाम् ( ? ) ॥ १२ ॥

मत्तवारणसंयुक्ता प्रतोल्यादिविभूषिता ।
प्रथमे( मा ) च समाख्याता जगती वसुधाभिधा ॥ १३ ॥

वसुधा वसुधारा स्यात् समायुक्ताग्रशालया ।
निर्गमः पुरतः कार्यः प्रासादस्य प्रमाणतः ॥ १४ ॥

+ विस्तारस्तथा कार्यस्तं चतुर्धा विभाजयेत् ।
भागिका भ्रमणी कार्या शेषशाला द्विभागिका ॥ १५ ॥

सुण्डिका चापि पूर्वोक्तमानेनैवायता[8] भवेत् ।
वसुधा च पुनः कर्णशालाभ्यां राजसिंहिका ॥ १६ ॥
प्रासादार्धेन ते कार्य( र्ये ) कर्णयोरुभयोरपि ।
स्वमानार्धेन च तयोर्भ्रमणीं परिकल्पयेत् ॥ १७ ॥

मूलप्रासादविस्तारा कर्तव्या सुण्डिका पुरा ।
शाला स्याद् वसुधा[9] राजहंसाः( ? ) पुरो यदा ॥ १८ ॥

---

१ द. चूडा । २ द. मना । ३ द. न्य । ४ द. द्धि । ५ मु. पाठस्तु 'यमलाम्बुधरा नेत्रा दोर्दण्डा खण्डला सिता' इति स्यात् । ६ द. द्विगुणे । ७ द. शुंडिका स वि° । ८ द. तो । ९ द. रा च ।

श्रीधरी सा तदा तस्याः ( सुरोयचन्द्र ? ) पूर्ववत् ।
यदा तु हंसिकास्थाने शाले[1] स्तोऽपरकर्णयोः ॥ १९ ॥

तद्रूपे तत्प्रमाणे च तदा सा भद्रिका भवेत् ।
चतुरश्रीकृते क्षेत्रे षोडशांशविभाजिते ॥ २० ॥

पूर्वोक्तक्रमसम्पन्ने यथाकामं मुखागते ।
मण्डपायामसंयोगाद् यथाभागं विभाजिते ॥ २१ ॥

मध्ये देवालयः कार्यश्चतुर्वर्गपदान्वितः ।
बहिर्द्विपदविस्तारो भ्रमस्तस्य समन्ततः ॥ २२ ॥

कर्णे कर्णे च कर्तव्या द्विपदायामविस्तृता ।
चतुर्दिशं कर्णशाला या (पदि ?)भ्रमणान्विता ॥ २३ ॥

पदद्वितयविस्तारो[2] त्रिपदायामसंयु[3]ता ।
पदिका च भ्रमणा[4](?) कार्या भद्रशालाश्च सुन्दराः ॥ २४ ॥

वार्यन्तराणि परितः कुर्यान्मध्येषु शालयोः ।
पदमेकं प्रविष्टानि तदर्धं विस्तृतानि च ॥ २५ ॥

शालायाः पृष्ठभद्रे स्यादेकभद्रद्विर्भद्रिका( ? ) ।
([6]कपोकृताभ्यां त्रिभद्राणि पृष्ठकुक्षिषु ?) ॥ २६ ॥

शालाभिः स्या[7]( श्चा )थ तिसृभिर्जगती भद्रमालिनी ।

एकभद्रादिचतुष्टयम् ॥

चतुरश्रीकृते क्षेत्रे चतुर्विंशतिभाजिते ॥ २७ ॥

षड्वर्गलक्षणोपेतो मध्ये कार्यः सुरालयः ।
देवालय[8]( स्य )परितस्त्रिपदः स्यात् परिभ्रमः ॥ २८ ॥

ततः शालाविभक्तिश्च कर्तव्या प्रोक्तलक्षणा ।
पञ्चभागायता मध्ये( भूचतुविस्तृता ? ) पदैः ॥ २९ ॥

भद्रशालाश्च कर्तव्यास्तन्मध्ये भागिकभ्रमः ।
भद्रस्य पार्श्वद्वितये द्वित( प )दायामविस्तृतम् ॥ ३० ॥

---

१ द. ल। २ द. रत्रि। ३ द. विसंयुता। ४ द. णाः। ५ द. भागिका। ६ द. कुर्योः कृताभ्यां शालाभ्यां त्रिभद्रा पृष्टिकुक्षिषु। ७ द. स्याच्चत सृ°। ८ द. यं। ९ द. चतुर्भिर्वि।

शालाद्वयं विधातव्यं [1]द्वादशी शत + भ्रमम्(?)।
भागमेकं प्रवेशस्तु तयोः (कर्ण?)द्वयोर्भवेत् ॥ ३१ ॥

तिस्रस्तिस्रो भवन्त्येवं शालादिक्(क्षु) ति(स्र)ष्वपि।
षडेवोदकमार्गाश्च कार्या भागार्धनिस्सृताः ॥ ३२ ॥

भागमेकं प्रविष्टाश्च भवेयुर्दिक्त्रयेऽपि ते।
कर्णौ च पुरतः कार्यौ भागद्वितयसम्मितौ ॥ ३३ ॥

स[2]सुण्डिका(?) विमानोऽयं सुरासुरनरार्चिता(तः)।
[3]सुण्डिकाग्रे यदेतस्यां शालाप्रासादसंमुखम् ॥ ३४ ॥

संस्तुता किन्नरैः सि[4]द्धैस्तदा स्याद् भ्रमरावलिः।
वक्त्रशालाविहीना तु पार्श्वशालाद्वयान्विता ॥ ३५ ॥

तद्रूपा तत्प्रमाणा या स्वस्तिकी सा प्रकीर्तिता।
प्रासादाभिमुखी शाला स्वस्तिकयामेव चेद् भवेत् ॥ ३६ ॥

तदानीं [5]हंसमालति विख्याता जगती भुवि।
मुख्य(ख)स्य पार्श्वद्वितये भागं वार्यन्तरं यदा ॥ ३७ ॥

कृत्वा (प्रासाद[6]यद्रुग्रे?) भद्रमानेन निर्गमम्।
प्रासादसंमितं सूत्रं शालास्तु गलभूषिताः[7] ॥ ३८ ॥

शुण्डिका तदवस्थे[8] च मुखे स्याच्छालया विना।
कुलशै[9]ला तदा ज्ञेया हंसमालागर्[10]भाश्रया ॥ ३९ ॥

सदा महेश्वरस्येष्टा स्कन्दस्य तु विशेषतः।
अस्या एव यदा शाला पुरोभद्रे विधीयते ॥ ४० ॥

तदा महीधरी[11] प्रोक्ता महीधरमनःप्रिया।
चतुरस्रीकृते क्षेत्रे साष्टाविंशतिभाजिते ॥ ४१ ॥

चतुःषष्टिपदं मध्ये कुर्याद् देवालयं बुधः।
चतुष्पदो भ्रमः कार्यो देवागारस्य सर्वतः ॥ ४२ ॥

---

१ द. द्वादशांसकृतभ्रमं। २ द. सु। ३ द. सु। ४ द. द्धि। ५ द. मुद्रित पुस्तके 'हरमाले'ति लक्ष्ये पठ्यते; द. हंसमालेति। ६ द. °येऽग्रे। ७ द. त। ८ द. °स्थैव। ९ मुद्रित पाठस्तु 'कुलशीले'ति पूर्वं पठितः। द. कुलंशैला। १० द. मं। ११ द. री।

भ्रमसूत्रस्य कर्णस्था द्विपदायतविस्तृताः ।
शालाश्चतुस्त( तस्रः ) कर्तव्या भागिकभ्रमवेष्टिताः ॥ ४३ ॥

तासां पार्श्वेषु सन्त्यज्य भ्रमाद् भागचतुष्टयम् ।
( शालां[1] कं + )प्रकुर्वीत + भागायतविस्तृतम् ॥ ४४ ॥

एकभागिकविस्तारः कर्णः ( स्यात् ) पार्श्वशालयोः ।
मध्ये भागे जलाध्वा[2] स्याद् विहाय त्रिदशं बहिः ॥ ४५ ॥

द्विभागविस्तृतां तां च कुर्याद् भागत्रयायताम् ( ? ) ।
अन्तरेण जलाध्वा[3] स्याद् भद्रपार्श्वजला( शा )[4]लयोः ॥ ४६ ॥

स च भागार्ध[5]मायामा( त् ) प्रविष्टस्तावदेव च ।
कृत्वा तिसृषु दिक्ष्वेवं सुण्डिकाकन्दमध्यतः ॥ ४७ ॥

प्रासादार्धसमायामौ सम्यक् तुण्डौ निवेशयेत् ।
तयोरपि च शाले द्वे भ्रमक्रमविभूषिते ॥ ४८ ॥

कार्ये मन्दारशा( मा )ला स्यादेवं हरमनःप्रिया ।
सुण्डिकायां यदा[8] तस्याः शाला सम्पद्यते तदा ॥ ४९ ॥

अनङ्गलेखा भवति जगती पार्वतीप्रिया ।
यत्रास्मिन्नेव विन्यासे मुखशाले विना कृते ॥ ५० ॥

शुण्डिकागण्ड[6] + + न्यौ शाला सोपानमालि[7]काः ।
मुखशालान्विता सैव यदा नागाङ्गना तदा ॥ ५१ ॥

चतुरश्रीकृते क्षेत्रे द्वात्रिंशद्भाग( वि ? )भाजिते ।
चतुःषष्टिपदं मध्ये कर्तव्यं सुरमन्दिरम् ॥ ५२ ॥

कार्यस्तस्य भ्रमः सम्यक् समन्ताच्च चतुष्पदः ।
भ्रमन्ति( न्ती ) द्विपदायामे शाले( तु ) भ्रमसंयुतौ( ते ) ॥ ५३ ॥

स[10]र्वप्रमाणाद् विधातव्ये मध्यगे भद्रकर्णयोः ।
स्युः षोडशपद्रः( दाः ) [11]कन्दास्तेषु शालाश्चतुष्पदाः ॥ ५४ ॥

---

१ मु. पु. ' शालाकन्दम् ' इति स्यात् । द. शाला कं । २ द. द्वा । ३ द. धा । ४ द. य । ५ द. दि । ६ द. °ण्डमंड । ७ मु. पुस्तके ' उत्सवमालिके 'ति निर्देशो दृश्यते । ८ द. काः । ९ मुद्रित पुस्तके ' नागरामे 'ति पूर्वत्र पठिता । १० द. सु । ११ द. स्कंधा ।

चतुर्ष्वपि च कर्णेषु प्रविष्टा भ्रमजाः पदम् ।
कर्तव्यं द्विपदायामं भद्रशालायुगं तथा ॥ ५५ ॥

विस्तारात्[1] प्र + पादोनमन्योन्याभिमुखं भवेत् ।
आयता( द् ) द्व्यंशविस्तारा पदेनैकेन वेष्टिता ॥ ५६ ॥

भद्रशाला विधातव्या सार्धत्रिपदनिर्ग[2]मा ।
सौम्यानिर्ऋतिवारुणीषु नैर्ऋतीया( म्ययो )रपि ॥ ५७ ॥

शालास्तिस्रः प्रतिदिश( [3]मशालाग्नेय्या[4]यदिना मुरविद्विषः ? ) ।
अस्या एव मुखे शाला यदि तन्मकरध्वजा[5] ॥ ५८ ॥

अमराणां कृतानन्दा कृत्वैनां मोक्षमाप्नुयात् ।
मुखशालां[6] परित्यज्य यदैकैकाग्रकर्णयोः ॥ ५९ ॥

शाला प्रदीयते सा स्यान्नन्द्यावर्त[7]( यत्यहर्पतेः ? ) ।
विकर्ण[8]कन्दधो[9]राग्रे(?) यदास्याः पृष्ठवंशगा ॥ ६० ॥

द्विभागायामविस्तारा शाला भवति शोभना ।
चतुष्[10]र्वसंस्थिता( ? ) शाला शालायाः [11]संमुखी भवेत् ॥ ६१ ॥

[12]ताम्रमूला तदा ज्ञेया[13]ः ब्रह्मविष्णुहरि( र )प्रिया ।
[14]यदास्याः पृष्ठवंशस्था ( हस्तायाम्[15]योत्तरात्तथा ॥ ६२ ॥

शाले क्रि[16]यते ? ) तदा ज्ञेया पारिजातकमञ्जरी ।
( वारणीचतुष्टःस्थिता ? ) शालायाः सम्मुखी भवेत् ॥ ६३ ॥

( ताम्रयाम्यासौम्यासु ? ) [17]शालाः स्युर्यदि वंशगाः ।
प्रिया स्यात् सर्वदेवानां तदा चूडा( [18]मणिः प्रभोः ? ) ॥ ६४ ॥

चतुरश्रीकृते क्षेत्रे [19]चतुरश्रः समन्ततः ।
दशांशः ( स्यादुभायान्ता ? ) मध्ये प्रासादनायकः ॥ ६५ ॥

---

१ द. च्च । २ द. माः । ३ द. मे । ४ द. इतः पूर्वं ' ......द्व्यं द्व्यं ॥ निर्दिष्टा मा वंचैषा विंशत्यंडकमंडिकौ । कर्तव्या ब्राह्मणःशंभोर्यदि ' इत्ययं अधिकः पाठः । ५ द. जाः । ६ द. लं । ७ मु. पु. ' र्ता त्वहर्पतेः ' इति स्यात् । ८ द. र्णः । ९ द. धा । १० द. ष्क । ११ द. स । १२ मु. ' भूपाले 'ति लक्ष्यनिर्देशे पठ्यते । द. ताम्रचू° । १३ द. याः । १४ द. पदस्या । १५ द. म्योन्तरे तथा । १६ द. य । १७ द. लाभा । १८ मु. ' मणि प्रभा ' इति पाठ्यं भाति । द. णि° । १९ मु. इह क्षेत्रविभाजकांशादर्शनात् किञ्चिल्लुप्तमिव प्रतिभाति ।

+++पुरतश्चैवं[1] पार्श्वयोरुभयोरपि ।
भ्रमास्तस्या[2] विधातव्याः[3] +++पञ्चभिः पदैः ॥ ६६ ॥

कर्णकन्दाश्च कर्तव्या भ्रमसूत्राद् बहिः स्थिताः ।
द्विभागायामविस्ताराश्चतुःशालोपशोभिताः ॥ ६७ ॥

[4]अमुनैव क्रमेण स्युर्भद्रकन्दाः पदाधिकाः ।
मूलप्रासादमालायां मालात्रितयधारिणाम्(?) ॥ ६८ ॥

कर्णे कर्णे तु याः शालास्ता द्व्यंशायामविस्तृताः ।
द्विभागिकजलाधारा(स्तथा) भागपरिभ्रमाः ॥ ६९ ॥

पदप्र(वि)ष्टाम्बुपदा भ्रमपद्धतिसंयुताः ।
तुल्याश्चतुर्षु कर्णेषु तुल्या भद्रत्रयेऽपि च ॥ ७० ॥

भागद्वितयविस्तीर्णा[5] भागत्रितयमायताः ।
(सृग ?) भ्रमाश्च कर्तव्या भ्रमशालादिशान्तयोः ॥ ७१ ॥

शेषं च पूर्ववत् कार्यं शुण्डिकागण्डमण्डनम् ।
स्यात् कर्णमञ्जरीत्येषा त्रिलोक्यानन्ददायिनी[6] ॥ ७२ ॥

कर्णमञ्जरिकाभद्रे विभक्ते[7] दशभिः पदैः ।
द्विभागायामविस्तारां तुर्यां शालां निवेशयेत् ॥ ७३ ॥

उद(र्क)क्षणपूर्वाणि मुखान्यासां प्रकल्पयेत् ।
परिक्रमस्त्रि(स्तु) सर्वासां भागैकः सर्वतो भवेत् ॥ ७४ ॥

द्वौ भागौ भद्रकर्णाभ्यां संक्षेपो(भ्यां[8]भयपार्श्वयो[10]?) ।
भागिकोभयविस्तारा भद्रेऽन्या कर्णिका भवेत् ॥ ७५ ॥

पदैः षोडशभिर्युक्त[11](क्ता) विचित्रभ्रमविभ्रमं(मा) ।
भद्रास्या[12] (च) चतुष्की स्यात् पुरतः संवृतान्तरैः[13](रा)) ॥ ७६ ॥

श्रीमण्डपं प्रकुर्वीत प्रभूतस्तम्भमण्डितम् ।
(दितामेतानेन परिक्षिप्तं छाद्यकाले हसंयुतं[14]?) ॥ ७७ ॥

---

१ द. पुरतः पृष्ठत । २ द. म । ३ द. व्यः । ४ द. अमुनैव......विस्तृताः इति यावत् पाठः नास्ति । ५ द. त्रि । ६ द. यनं । ७ द. कैर्द्दे । ८ द. ग्द । ९ द. भ्यो । १० द. योः । ११ द. र्मुक्तं । १२ द. भद्रशा चतुष्क स्यात्पुरतः । १३ द. रं । १४ द. क्तं ।

(एश्वास्याद् विश्वरूपे च कस्यायास्तुदपुरस्करा ?)
चतुष्किका(भि)स्तिसृभिर्भवेत् त्रैलोक्यसुन्दरी ॥ ७८ ॥

चतुरश्रीकृते क्षेत्रे भक्ते द्वादशभिः पदैः।
त्रिभागायामविस्तारा मध्ये शाला चतुर्मुखी ॥ ७९ ॥

सर्वतः सार्धभागाश्च(च) कर्तव्या पदपद्धतिः।
तस्याः प्रागुदक[1] ++++शालाचतुष्टयम् ॥ ८० ॥

द्विभागायामविस्तारं विधातव्यं सुशोभनम्।
भागिकालिन्दकेनैतत् स्यात् प्राक्से+न वेष्टितम् ॥ ८१ ॥

कक्ष्यास्थाभिर्द्विभागाभिः[2] कर्णिकाभिरलङ्कृतम्।
एवै(त)त् कर्णमञ्जर्याः कर्णे++विधीयते(?) ॥ ८२ ॥

जगती स्याच्छिवस्येष्टा[3] तदा गन्धर्वमा(वा)लिका।
इयवे(मे)वापरे भागे चतुर्थ्या शालयान्वितं(ता) ॥ ८३ ॥

विज्ञेया जगती नाम्ना विद्याधरकुमारिका।
अपरस्यां चतुर्थी(र्थीं) तु हित्वा शालां (विनीयते ?) ॥ ८४ ॥

ते द्वे + (कुद्यो ?) कुर्वीत सुभद्रां त्रिदशप्रियाम्।
(चतसृषु भद्रेषु प्रत्येकं पञ्च कर्णिगा ॥ ८५ ॥

शालाः स्युर्यदिश्चन्द्राष्टा ?) तदा स्यात् सिंहपञ्जरा[7]।
चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते ॥ ८६ ॥

त्रिभागायामविस्तीर्णं मध्ये देवकुलं भवेत्।
भागेनैकेन कर्तव्यो भ्रमो दिक्षु विसृष्वथ ॥ ८७ ॥

प्रासादायामविस्तीर्णे तस्याग्रे मुखमण्डपः।
भद्रस्य पार्श्वद्वितये बाह्यतो भद्रविस्तृतं(म्) ॥ ८८ ॥

शालायुग्मं विधातव्यं त्रिपदायामविस्तृति[9]।
भागिकभद्रमा(भ्रम)णोपेतं (यदिकाच पयास्वित ?) ॥ ८९ ॥

---

१ द. क्षु। २ द. गि। ३ द. ष्टां। ४ द. सा। ५ द. च। ६ द. णी। ७ द. राः। ८ द. ते। ९ द. तिः।

द्विभागायामविस्तारे भागिकभ्रमणान्विते ।
शाले[1] द्वे पुरतः कार्ये[2] [3]साम्मुख्याच्च परस्परम् ॥ ९० ॥

( पञ्चस्वलं ? ) भवेदेवं पृष्ठभद्रं यदा शुभम् ।
याम्योत्तरे चतुःशाले ( भद्रद्वयपञ्चकञ्जरा ? ) ॥ ९१ ॥

पृष्ठभद्रं यदैतस्या+++न्मध्यशालया ।
( कक्षाभद्रे तथा स्या[4]युते ? ) गन्धर्वनगरी तदा ॥ ९२ ॥

प[5]ञ्च त्रीण्येव भद्राणि पञ्चशालान्वितानि च ।
( शिशुतत् ? ) षट्त्रिंशत्तमा ज्ञेया सा जगत्यमरावती ॥ ९३ ॥

शुण्डिकाग्रे यदैतस्याः शाला सम्पद्यते क्वचित् ।
तदा स्याद् [6]दन्तचूडेति जगती जगतः प्रिया ॥ ९४ ॥

( इयनि[7] ? ) शुण्डिकाशाला गण्डशालाद्वयान्विता[8] ।
त्रिदशेन्द्रसभा ज्ञेया ससुण्डी देवर्य[9]न्त्रिकां[10] ॥ ९५ ॥

( इति [11]चतुरस्राणां कीर्त्य[12]न्तेषायताः कासा[13]न्कामा ? ) ।
सप्तभागायते क्षेत्रे भागपञ्चकविस्तृते ॥ ९६ ॥

द्विभागायतविस्तारे स्तः शाले वामदक्षिणे ।
चतुष्किकैकभागेन तयोरेवाग्रतो भवेत् ॥ ९७ ॥

भ्रमश्च भागिको मध्ये समन्ताच्च विधीयते ।
प्रतोल्या भूषिता खण्डशुण्डिकाभिरलङ्कृता ॥ ९८ ॥

मत्तवारणशोभाढ्या ( [14]यमालेखा ? ) प्रकीर्तिता ।
यदा स्यात् पृष्ठतः कन्दो भागत्रितयविस्तृतः ॥ ९९ ॥

भागत्रितयनिष्कामश्चतुर्धा भाजितः पुनः ।
द्विभागायामविस्तारा शाला भागद्वयं भ्रमः ॥ १०० ॥

---

१ द. ला । २ द. र्यौ । ३ द. संमुख्यौ च । ४ द. युगते ? । ५ द. द । ६ मु० 'रत्नधूमा' इति पूर्वं पठितम् । ७ द. निः । ८ द. ताः । ९ द. ग । १० द. काः । ११ द. इतः पूर्वं 'चतुरस्राः चत्वारि संदियं सम्यणेकोना परिकीर्तिताः । शालीनां ।' इत्ययं अधिकः पाठः । १२ द. त्र्यं । १३ द. त् कामान् । १४ मु. पुस्तके 'यमलैषा' इति स्यात् ; द. यमलैषो ।

तदा पयोधरा नेत्रा शालाभ्यामग्रपृष्ठयोः ।
( नेत्रा[1]द्यांश्चेत्परशालास्यातां तु काया[2] ॥ १०१ ॥
पौरस्त्ययोरुभयोः सान्न[3]मूत्कन्दो भागनिर्गतः[4] ? ) ।
भागमन्तः प्रविष्टश्च विभाज्यः सोऽपि पूर्ववत् ॥ १०२ ॥
( शालयोः स्यातमोमानभ्रमयोरपि पूर्ववत् ।
पार्श्वयोर्भ्रामण्यं [5]चागौ द्वे[6] च चेन्मूलशालायाः ॥ १०३ ॥
शेषं तु पूर्ववत् सर्वदोर्दण्डा प्रासादाः प्रकीर्तिताः ? ) ।
दोर्दण्डयो( ण्डाया )स्तु पार्श्वे[7]ऽपि शालासुश्लि[8]ष्टकर्णयोः ॥ १०४ ॥
राक्षसानिलयोः शाले कुर्यादाखण्डला भवेत् ।
अखण्[9]डालायास्तु यदा पश्चाच्छाला विधीयते ॥ १०५ ॥
( पयो यं सरयोनि इव [10]वंच्छिदेति ? ) जगती भवेत् ।
( शिवायं वारुणी यद्वा[11] शालात्रयविभूषिता ॥ १०६ ॥
शुण्डिकाराले[12]य मचेन्माहेन्द्री वंपका तदा ।
[13]कोकैणेषु यमेलायासाद्यदा शालाचतुष्टयं[14] ॥ १०७ ॥
भद्रत्र[15]योऽपि तिस्रस्ताः पूर्वभद्रममालकम् ।
ये कर्ण[16] च + कन्दाः स्युः सार्ध[17]भ्रंशविनिर्गतैः ? ) ॥ १०८ ॥
चतुर्भिस्तेषु भक्तेषु शाला भागद्वयं भवेत् ।
भागं भागं भ्रमण्यः स्युः कर्णशाला इमा बहिः ॥ १०९ ॥
( त्रिनिष्क्रान्ता सुविस्तीर्णा भद्रकन्दास्थिते बहिः ।
चतुर्भि[18]स्त्येषुतैः शाला स्यु[19]राघौ भ्रमस्तथा ॥ ११० ॥
पदार्धसंमितः कुष्टौ जलमार्गौ विधीयते ।
पृष्ठसाधोसिकास्तस्या द्वै[20] कुलामोदिकाष्टमी[21] ॥ १११ ॥

---

१ द. द्यश्चेत्परः शाखास्या । २ द. कयोः । ३ द. स्त । ४ द. मः । ५ द. भा । ६ द. द्वौ । ७ द. श्वान् । ८ द. पृ । ९ द. ण्ड । १० द. त । ११ द. द्वच्छा । १२ द. °लेयैमं । १३ द. कोणेषु यमलायाः साद्यदाशा° । १४ द. ये । १५ द. ये च । १६ द. र्णे । १७ द. ताः । १८ द. त्ते° । १९ द. स्युर्द्वेनर्द्धेभ्र° । २० द. द्वे । २१ द. मी ।

भागार्धयलमाला +++ द्विलयशालिना ।
पृष्ठभद्रेण जगतीतिलकाले[1] केचिस्तुता ? ) ॥ ११२ ॥

एतस्यां[2] शुण्डिकायां स्याच्छाला चेन्मुखभूषणम् ।
असौ + पल्लवा नाव( म ) जगती जायते तदा ॥ ११३ ॥

तिलका गण्डकण्डेषु( ? ) शाला( ले ) द्वे भ( व )तो यदा ।
( तेदा सिद्धार्थसंमुखा[3] ? ) तदा विद्याधरी भवेत् ॥ ११४ ॥

त्रिविस्तृतं द्विनिष्क्रान्तं पृष्ठशालातलं यदि ।
विद्याधर्याः पृष्ठभद्रे तदा यक्षं विनिर्दिशेत् ॥ ११५ ॥

षड्भागविस्तृते क्षेत्रे दशभागकृतायते ।
द्विभागायामविस्तारं कुर्याच्छाला[4]त्रयं बुधः[5] ॥ ११६ ॥

तदग्रे तत्समं[6] कुर्यान्मण्ड( पा अधिवाधिकात् ? ) ।
यथाकामं प्रकुर्वीत कर्मशोभाँ[7]विभूतये ॥ ११७ ॥

[8]++ भागं भ्रमं कुर्यात् तासां पार्श्वचतुष्टये ।
( विशेषकरणायंच शालानां मध्यमैरपि ? ) ॥ ११८ ॥

मत्तवारणसंयुक्ताः सुण्डिकागण्डमण्डिताः ।
इयं त्रिकूटा[9] जगती ख्याता[10] ( तृपुषपूर्या ? ) ॥ ११९ ॥

त्रिकूटा पूर्ववंशस्था त्रिभागायामविस्तृता[11] ।
( विदध्यात् सवमां शालां प्राग्वत् स्याच्चित्रकूटिका ? ) ॥ १२० ॥

यथा पृष्ठे तथाग्रेऽपि यदि शाला विधीयते ।
तदा[12] सरनिकूटीति विज्ञेया जगती बुधैः ॥ १२१ ॥

( युक्ता प्राणाँ[13]स्य लाभ्यामग्रशालाविवर्जिता ) ।
उपमेवाजोत्तमा ? ) सा जगती विश्रुता भुवि ॥ १२२ ॥

नैर्ऋतानलवाय्वीशकर्णप्रासादकैर्युता ।
( त्रिकूटैर्भवेन्नन्दै विभक्तषडला यथा ॥ १२३ ॥

---

१ द. लोकविश्रुता । २ द. स्याः । ३ द. खा । ४ द. ल । ५ द. धैः । ६ द. मा । ७ द. भां । ८ द. भागं । ९ द. क । १० द. ताः । ११ द. तं । १२ द. सारं । १३ द. ण ।

चित्रकूटा क्रमान्नर्या[1] द्विभजनं पूर्वविकूटवद् विचक्षणः ।
त्रिकूटायामतो रूपे सिद्धिद्वं[2]यायामविस्तृतम् ? ) ॥ १२४ ॥

कर्णे कर्णे कृतं कन्दं चतुर्धा प्रविभाजयेत् ।
भागद्वयेन शाला स्याद् भागेन भ्रमणं तथा ॥ १२५ ॥

( मूलतार्धविस्तारं भवें[3]तच्चेह मानतः ।
याम्योत्तरे चतुर्भागविस्तारं[4] भागं निर्गताम् ॥ १२६ ॥

+ + + + + + + भद्रं भागिकं[5]द्वयान्विनम् ? ) ।
[6]शेषं तु भ्रमणं तत्र मध्यपार्श्वेषु कारयेत् ॥ १२७ ॥

एवमग्रेऽपि शाले द्वे द्वारस्योभयपार्श्वयोः ।
कर्तव्ये भागनिष्क्रान्ते भागिकायामविस्तृती ॥ १२८ ॥

पृष्ठभद्रं च कर्तव्यं सार्धांशद्वयविस्तृतम् ।
द्विभागनिर्गमं [7]युक्तं शालया सार्धभागया ॥ १२९ ॥

याम्योत्तरेण चास्यैव कार्यं शालाद्वयं ततः ।
( प्रमाणे पसन्नकार्ये भागे प्रवेशनम् ? ) ॥ १३० ॥

शेषो भ्रमः स्याच्छालानां सप्तानां मध्यगस्ततः ।
स्याच्छैवी ( श्रयणी ? ) त्वेषा सर्वामरगणप्रिया ॥ १३१ ॥

अस्या एव मुखे शाला यदा सञ्जायते तदा ।
त्रिविक्रमेति[8] विख्याता जगती जायते शुभा ॥ १३२ ॥

यदा[9] सार्धविनिष्क्रान्ते सार्धांशद्वयविस्तृते ।
पार्श्वभद्रद्वये शाले भवेतां भागविस्तृते ॥ १३३ ॥

+ + + + + + सार्धभागिकं( क )भ्रमणान्विते ।
( [10]लिप्यते चापि मा शाला ? ) क्रमायाता तदा भवेत् ॥ १३४ ॥

शालायाः शुण्डिकाग्रे तु त्रिपथा सैव जायते ।
( [11]चतुर्यातो प्रोक्ता ? ) कथ्यन्ते वृत्तजातयः ॥ १३५ ॥

---

१ द. र्नर्या । २ द. द्वेष्या । ३ द. भवेत्तच्चेह । ४ द. रं । ५ द. कं । ६ द. शीर्षं । ७ द. व्य । ८ द. ण । ९ द. यदा सार्धा सति क्रांते । १० द. लु । ११ मु. 'चतुरश्रायताः प्रोक्ताः' इति स्यात् ; द. र्यं ।

चतुरश्रीकृते क्षेत्रे चतुर्भागविभाजिते ।
मध्ये देवगृहं वृत्तं [1]सार्धांशायामविस्तृति ॥ १३६ ॥
भ्रमयेज्जगतीवृत्तं ( समगां ? ) भागिकं ततः ।
पूर्वोक्तविधिना कार्यं पार्श्वतो मत्तवारणम् ॥ १३७ ॥
गोपुरद्वारशोभा[2]ढ्या जगती वलया भवेत् ।
वलयापृष्ठतः कन्दं मूलशालासमायतं[3]म् ॥ १३८ ॥
पूर्वोक्तविधिना भक्तां शालां कुर्यात् तदर्धतः ।
कलशेयं समाख्याता जगती कलशाकृतिः ॥ १३९ ॥
कर्णस्थं द्विपदायामं कर्णशालाचतुष्टयम् ।
चतुरश्रं भवेद् यत्र ( शौं[4]ताम्र्यैं + ? )भिधीयते ॥ १४० ॥
सप्तभागायते क्षेत्रे चतुरश्रे समन्ततः ।
भागांस्त्रीन् वर्ज[5]येदग्रे चतुरः( पृ[6]ष्ठ्यन्तरश्चै[7]तान् ? ) ॥ १४१ ॥
सार्धांस्त्रीन् पार्श्वयोर्भागांस्त्यक्त्वा ( र्ग[8]र्भततोकयेत् ? ) ।
द्विभागायामविस्तारं[9] वृत्तं स्याद् देवमन्दिरम् ॥ १४२ ॥
भागमेकं भ्रमस्तस्य विधातव्यः समन्ततः ।
भ्रमण्याः पृष्ठतः कन्दो भागायामविभूषितः ॥ १४३ ॥
तस्यार्धेन भवेच्छाला तदर्धेन परिक्रमः ।
गर्भाद् भागद्वयस्यान्त ईशानानलयोर्दिशोः ॥ १४४ ॥
द्विभागौ भवतः कन्दावर्धभागप्रवेशितौ ।
पृष्ठशालोर्ध्वगे तिर्यक्सूत्रे( ण ? ) दत्ते भ्रमान्तिके ॥ १४५ ॥
कर्णिकाद्वितयं कार्यं राक्षसानिलयोर्दिशोः[10] ।
( व्यय ? )शालां च कुर्वीत पृष्ठशालासमां ततः ॥ १४६ ॥
प्राक् ( च ? ) पश्चात् कन्दगर्भस्था( स्थ )सूत्रद्वि[11]तययोगतः ।
कुर्वीत कर्णिका( कां ) तीक्ष्णा( क्ष्णां )पार्श्वयोरुभयोरपि ॥ १४७ ॥

---

१ द. स्याद्विंशायामतिष्ठतिः । २ द. ढ्य । ३ द. तिं । ४ मु. 'सा कर्णेत्य' इति स्यात् । ५ द. °यद्वर्गे । ६ मु. पुस्तके 'पृष्ठतश्च तान्' इति स्यात् । ७ द. त्स्व । ८ मु. पुस्तके 'गर्भं ततोऽङ्कयेत्' इति स्यात् । द. °त्त° । ९ द. रा । १० द. शः । ११ द. त्रि ।

(शेषा भ?) पूर्ववत् सर्वा शुण्डिकादिक्रिया भवेत्।
(यदागभी[1]?) करवीरेयमीशादित्रिदशप्रिया ॥ १४८ ॥

एतस्या एव पृष्ठस्था[2] यदा सन्त्यष(ष्ट) कर्णिको[3](काः)।
वामशाले विधीयेते नलिनीनि तदा भवेत् ॥ १४९ ॥

(दत्तंशस्य सालि[4]ख्यात् तयौ दशभिः पदैः?)।
सूत्राणि पातयेत् तस्य तनो दिक्षु विदिक्षु च ॥ १५० ॥

प्रासादभ्रमणस्यान्ते द्विपदायामव(वि)स्तृती(न्)।
कुर्वीताष्टसु सं[5]म्पातेष्वष्टौ कन्दान् समन्ततः ॥ १५१ ॥

(वि[6]धाय तां चतु[7]र्भक्तां कुर्याद् ग्रा[8]मांस्तथा?)।
अन्तरेण च कन्दानां कर्तव्यं कर्णिकाष्टकम् ॥ १५२ ॥

देशात् सार्धं यदा सूत्रे(?) यथा सं[9]म्पतस्यते मिथः।
पार्श्वद्वयात् कर्णिकानां संस्थानं स्यात् तथाविधम् ॥ १५३ ॥

भक्त्वैवं सर्वभद्राणि त्रिपदोऽन्तः सुरालयः।
पार्श्वभ्रमो व्यर्धपादो(?) दशधा भाजिते भवेत् ॥ १५४ ॥

कन्दाश्च द्विपदाः कार्या बहिर्दिक्षु विदिक्षु च।
अन्योन्याभिमुखास्तेषु शालाः कार्या यथोदिताः ॥ १५५ ॥

([10]शक्तियस्ता समीक्षते?) विष्णोरप्रतिमौजसः।
कार्येयं तस्य (ता[11]न्येस्युः?) (पु[12]ण्डरीकविनामतः?) ॥ १५६ ॥

एतस्याः कर्णिकास्थाने यदा वृत्तं प्र[13]कल्प्यते।
तदानीमातपत्रं स्यात् कर्तव्या ब्रह्मणश्च सा ॥ १५७ ॥

कृत्वा वृत्तायतं क्षेत्रं विभजेद् दशभिः पदैः।
तस्य मध्ये विधातव्यं देवागारं पदैस्त्रिभिः ॥ १५८ ॥

---

१ द. भीं। २ द. स्थे। ३ द. के। ४ द. ख्य स्यात्। ५ द. संतापे। ६ मुद्रित प्रतौ 'विधाय तांश्चतुर्भक्तान् कुर्याद् दिक्षु भ्रमांस्तथा' इति स्यात्। ७ द. तांश्चतुर्भक्ताः। ८ द. ग्रा°। ९ द. संपन्नसो मिथः। १० द. शक्तयस्ता समाख्यपेत् रष्टोर प्र°। ११ द. नान्येस्य। १२ मुद्रित पुस्तके 'केति नामतः' इति स्यात्। १३ द. प्रकल्पयेत्।

तस्य पार्श्वेषु कर्तव्यो[1] भ्रमः[2] सार्ध( द्वि )भागिकः[3] ।
द्विभागं बाह्यवृत्तं स्यात् तत्र कुर्यादिमां क्रियाम् ॥ १५९ ॥

भागैर्द्वादशभिस्तच्च तुल्यमानैर्विभाजयेत् ।
एकैकं च पुनर्भागं चतुर्धा तेषु भाजयेत् ॥ १६० ॥

द्विभागायामविस्तारा शाला मध्ये विधीयते ।
भागिकश्चतुरश्रश्च[4] दिक्छा[6]( ? )लानु( त्रि )तये भ्रमः ॥ १६१ ॥

वामदक्षिणतः शाले ( तां ? ) ये भवतः शुभे ।
ते वृत्ते संविधातव्ये संमुखे च परस्परम् ॥ १६२ ॥

( [8]शाला तु खुमार्गस्याच्छालार्धभागार्धविस्तृतः ? ) ।
[9]कल्प्यस्तेनैव मानेन ( सच्चावा ? ) भ्रमणं भवेत् ॥ १६३ ॥

जगत्येषा समाख्याता चक्रवालेति नामतः ।
दिवाकराय कर्तव्या सग्रहायाथवेन्दवे ॥ १६४ ॥

( समक्षवायभद्रायामात्रिषुक्तार्यं वा पुन ? ) ।
चतुरश्रीकृते क्षेत्रे दशभागविभाजिते[11] ॥ १६५ ॥

गर्भात् कोणगसूत्रेण सर्वतो वृत्तमालिखेत् ।
बहिस्त्रिपदविस्तारं कन्दं कुर्याच्चतुष्पदम् ॥ १६६ ॥

शालायां( लां ) च द्विपदायामां विस्तारात् सार्धभागिकाम्[12] ।
शेषं तु भद्रशालायाः समन्ताद् भ्रमणं भवेत् ॥ १६७ ॥

भद्रस्योभयतो वृत्ते द्विभागायत[13]विस्तृते ।
शाले च वृत्तयोरन्तर्भागिकायामविस्तृती ॥ १६८ ॥

याम्यसौम्या[14]परास्वेवं दिक्षु भद्रत्रयं भवेत् ।
सार्धमायामविस्तारास्त( त्त )दर्धभ्रमणान्विताः ॥ १६९ ॥

शाला विदिक्षु कर्तव्याः शोभनाश्चतसृष्वपि ।
भद्रमध्ये स्थितां शालां हित्वा प्राच्यां[15]( तु सा ) भवेत् ॥ १७० ॥

---

१ द. व्यं । २ द. मं । ३ कं । ४ द. ग । ५ द. ग्र । ६ द. च्छा । ७ मुद्रित पुस्तके 'तासां' इति स्यात् । ८ द. शालातुरिवमार्गस्याच्छालार्द्ध भा° । ९ द. क्षम्य । १० द. यथो वंदने । ११ द. गि । १२ द. क । १३ द. गोयत्त । १४ द. म्य । १५ द. च्य ।

सार्ध[1]मायामविस्तारास्त( त्त )दर्धभ्रमणान्विता ।
सनक्षत्राय सोमाय कर्तव्या पुष्टिहेतवे ॥ १७१ ॥

चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ।
पञ्चभागायतां मध्ये शालां वृत्तां प्रकल्पयेत् ॥ १७२ ॥

सार्धभागद्वय( स्त ? )मिता देवागारस्य बाह्यतः ।
( [2]भ्रमण संविद्यातव्य ? ) कर्णशालाश्च कर्णगाः ॥ १७३ ॥

कर्णमानं[3] बहिर्वृत्तं भ्रमयित्वासारन्द[4]( समन्त )तः ।
भद्रोपभद्रकर्णेषु वृत्ताः शालाः प्रकल्पयेत् ॥ १७४ ॥

पदद्वयसमायामा( : ) पदत्रितयविस्तृता[5]( : ) ।
भागिका( क )भ्रमणोपेता( : ) शालाः कुर्वीत भद्रजाः ॥ १७५ ॥

द्वे भद्रात् पार्श्वयोः शाले द्वे च प्रतिरथाश्रये ।
भागिकायामविस्तारा( रे ) कुर्यादर्धपरिभ्रमे ॥ १७६ ॥

वौ( बा )हल्यायामतः सार्धभागा( : ? ) शालार्धकर्णगा[6] ।
तासां तदर्धमानेन विधातव्यः परिक्रमः ॥ १७७ ॥

प्रविष्टौ तु पदार्धेन भद्रान् प्रतिरथावुभौ ।
इत्येषा जगती प्रोक्ता सामनश्चन्द्रमण्डला[7] ॥ १७८ ॥

अथ [8]वृत्ता ++ [9]ब्रूमो जगतीः षड् यथाक्रमम् ।
पञ्चभागायताः क्षेत्रा विस्तरेण चतुष्पदाः( ? ) ॥ १७९ ॥

विद्ध्यादायतं[10] वृत्तं ( चमस्यां भैवभागिकः[11] ? ) ।
मध्ये स्यात्( त्रिपदास्तामा[12] सद्विपदविस्तृताः[13] ? ) ॥ १८० ॥

मत्तवारणसंयुक्ता य( प्र )तोल्यालङ्कृता शुभा ।
सोपानशुण्डिकाप्रान्तं ++ गण्डितमण्डिता[14] ॥ १८१ ॥

---

१ द. भाग । २ द. भ्रमणी संविधातव्यः क°; मुद्रित पुस्तके 'भ्रमणाः संविधातव्याः' इति स्यात् । ३ द. नाद्व । ४ द. दं ततः । ५ द. तः । ६ द. श्च कर्णगाः । ७ द. लाः । ८ मु. पु. 'वृत्तायताः' इति स्यात् । ९ द. व्रगो । १० द. °ध्यायितं । ११ द. त । १२ मु. पु. 'त्रिपदायामा सार्धद्विपदविस्तृता' इति स्यात् । १३ द. सा । १४ द. का ।

उक्तेयं मातुलिङ्गीति जगत्यमरवल्लभा ।
अस्या एव यदा पृष्ठे द्विभागायामविस्तृतिः ॥ १८२ ॥

शाला पूर्वक्रमेण स्यात् तदा ज्ञेया घटीति सा ।
तद्रूपे ( तद्यतालालं ? ) द्वे शाले वामदक्षिणे ॥ १८३ ॥

( यदि पश्चिमशाला च [1]तन्त्रेस्यायमती जगती तदा ? ) ।
घटीकर्णेषु सर्वेषु द्विभागायामविस्तृती ( ताः ) ॥ १८४ ॥

यदि स्यु[2]र्भ्रमसंयुक्ता( : ) शाला( : ) प्राग्वद विभाजिता( : ) ।
( कुरुक्ष्येयेधार्यंतरिक्षे द्वे च पृष्ठे वार्तन्त[3]दूर्ये ? ) ॥ १८५ ॥

कालिङ्गीयं भवेदेवं ( पार्श्वयो अंयु[4]र्लेमदात्रेपु ? ) ।
[5]पुंस्यांसु ( एतस्यां तु ) यदा शाला शुण्डिकाननसंत्रि( स्थि )ता ॥

वृत्तायतविनिर्माणा जगती स्याष्ट( त् ) ++++ ।

[6]एता वृत्तायताः ।

ब्रूमोऽथाष्टाश्रिसंस्थान( ना ) जगतीः शुभलक्षणाः ॥ १८७ ॥

चतुरश्रीकृतं क्षेत्रं सपादैर्दशभिर्भजेत् ।
परित्यजेत् ततः [7]सूत्रं [8]कर्णे कर्णे पदत्रयम् ॥ १८८ ॥

सपादांश्चतुरो भागान् मध्यभागेऽवशेषयेत् ।
[9]संसिध्यते( ति ) च साष्टाश्रि तस्यार्धे स्यात् सुरालयः ॥ १८९ ॥

अष्टाश्रिमध्यभागस्थः + शेषं [10]भ्रमणं भवेत् ।
प्रासादश्च ( च )तुर्द्वारश्च( च ? )तुर्भिर्मण्डपैर्युताः( तः ) ॥ १९० ॥

( प्रासादसाकसूत्र ? ) मुखलिङ्गं निवेशयेत् ।
मूलकन्दार्धतः ( [11]कन्दा क्र[12]मादिक्षु [13]च ? ) ॥ १९१ ॥

तुल्यप्रमाण[14]कानष्टौ चतुर्भागविभाजिता( तान् ) ।
भ्रमशालाश्च पूर्वोक्तक्रमेण परिकल्पयेत् ॥ १९२ ॥

---

१ द. नेत्रे । २ द. वौं । ३ द. पू । ४ द. अंयु र्ण्मदा । ५ द. त्रपु स्यां । ६ द. एतदाः । ७ द. स्तत्र । ८ द. प । ९ द. स । १० द. तु भ्रमणं । ११ द. मुद्रित पुस्तके 'कन्दान् क्रमाद् दिक्षु विदिक्षु च' इति स्यात् । १२ द. या । १३ द. विदिक्षु । १४ द. ता ।

सोपानशुण्डिकागण्डै[1]स्ता( गो )पुराद्यैरलङ्कृ[2]ताः ।
( करव्यासामेरुपेता [3]वैवा सर्वायमुदाहृता ? ) ॥ १९३ ॥
कृत्वा पूर्ववदष्टाश्रि क्षेत्रं भद्रं वि( [4]द्वि )धा भजेत् ।
कुर्याद् भागार्धकं भद्रे पक्षयोश्च विनिर्गतम् ॥ १९४ ॥
तद्विस्तारं भजेत् चतुर्भिर्निर्गमस्तैस्त्रिभिः पदैः ।
परिक्रमो भवेत् ++ पार्श्वयोः पृष्ठ( तोऽ )ग्रतः ॥ १९५ ॥
शेषं ( शाला )युगं कार्यं भागद्वितयमायतम्[5] ।
सार्धभागिकविस्तारं ( संवचेस्यरस्यं च ? ) ॥ १९६ ॥
अनेनैव प्रकारेण भद्रे भद्रे भवेद् गतिः ।
कर्णभद्रं विधातव्यं त्रिपदायामविस्तृति[6] ॥ १९७ ॥
चतुर्धा भाजिते तस्मिन् भागेन भ्रमणं भवेत् ।
शेषं तु शाला विज्ञेया द्विपदायामविस्तृता ॥ १९८ ॥
विदिग( न्ते )षु सर्वेषु न्यासोऽयमतिसुन्दरः ।
मूलशाला तु कन्दार्धे ( [7]भ्रमश्चार्धीभ्रमं ततः ? ) ॥ १९९ ॥
मातृकेयं समाख्याता[8] ( जगतुपसरचन्दितकिन्नरो[10]शंप्रदि[9]ति ? ) ।
[11]भद्रं ++ पदेभ्यः स्याद् भद्र( भाग )त्रितयनिर्गतम् ॥ २०० ॥
चतुर्भागिकविस्तारं त्रिपदायामकन्दकम् ।
तदा स्याच्छेखरा नाम भद्रत्रितयभूषिता ॥ २०१ ॥
नित्यप्रमुदितानेकदेववृ[12]न्दद( न्द )कृतास्पदा ।
[13]प्रागष्टय( ष्टा )श्रीकृते क्षेत्रे चतुर्भागविभाजिते ॥ २०२ ॥
द्विभागायामविस्तारे प्रासादे दशमे भ्रमे ।
अश्रिभिः समविस्तारा( [14]दासष्टौ ++ ? ) प्रकल्पयेत् ॥ २०३ ॥
सदा भागप्रविस्तारं( रान् ) तांश्च कुर्यात् पृथक् पृथक् ।
निर्गमेण चतुर्भागो( गान् ) भागिकै[15] भ्रमणान्वितान् ॥ २०४ ॥

१ द. ण्डं स्तो । २ द. ता । ३ द. च । ४ द. तथा । ५ द. तीम् । ६ द. तिः । ७ मुद्रित पुस्तके 'भ्रमश्चार्धभ्रमस्ततः' इति स्यात् । ८ द. द्धि । ९ द. त । १० द. किन्नरा रा । ११ द. प्रति भद्रं । १२ द. °वृतदक्षतास्पदा । १३ द. प्र । १४ मुद्रित पुस्तके पाठभेदस्तु 'नष्टौ कन्दान्' इति स्यात् । १५ द. कः ।

द्विभागायामविस्तारं मध्ये शालाद्वयं भवेत् ।
पद्मगर्भेयमित्युक्ता प्रजापतिमनःप्रिया ॥ २०५ ॥

भवेतां[1]( दा )र्यादिदेवीनां सदा चित्र( त्त )प्रसादिनी ।
विधाय( क्षेत्रं[2]मष्टास्रृतवदर्धायामविस्तृतौ ? ) ॥ २०६ ॥

मध्ये देवगृहं कार्यं तदर्धेन भ्रमो बहिः ।
[3]भद्रं भवेद् द्वादशभिस्तैश्चतुर्भिर्विनिर्गमः ॥ २०७ ॥

तस्य( स्यात्य ? ) भद्राणां निर्गमोऽपि चतुष्पदः ।
[4]विस्तारः षट्पदस्तेषां चतुर्भिस्तं विभाजयेत् ॥ २०८ ॥

भागार्धेन (च) शाला स्याद् भागत्रितय( स ? )मायात्( यता ) ।
भ्रमश्च स्या + ( त्तु )कर्तव्यो भागं तत्पार्श्वयोः ( रुद्राया ? ) ॥२०९॥

द्विभागायामविस्तारा( रे ) शाले स्यातां पदभ्रमे ।
इयमंशुमती प्रोक्ता जगती शुभलक्षणा[5] ॥ २१० ॥

विधाय क्षेत्रमष्टाश्रि तदर्धायामविस्तृति ।
मध्ये देवगृहं कार्यं तदर्धेन भ्रमो बहिः ॥ २११ ॥

प्रा[6]सादसमविस्तारं भद्रं कृत्वा ततो भजे[7]त् ।
चतुर्दशभिरस्य ( स्या[8]न्नितिर्यमो ? ) दशभिश्च तैः ॥ २१२ ॥

मौलिकभ्रमणस्यान्ते त्रिपदायतविस्तृता[9] ।
शालातिशोभना कार्या सार्धभागभ्रमान्विता ॥ २१३ ॥

द्विपदायामविस्तारे भागिकभ्रमणान्विते ।
कर्तव्ये पार्श्वयोस्तस्याः शाले द्वे चारुदर्शने ॥ २१४ ॥

प्रतिभद्रं विधातव्यं भागपञ्चकविस्तृतम् ।
भागत्रयं प्रविष्टं च तत्र शाला त्रिभागिकी ॥ २१५ ॥

भागद्वितयविस्तारा भागिकभ्रमणान्विता ।
पार्श्वयोः प्रतिभद्रस्य कर्णिके भागनिर्गमे ॥ २१६ ॥

---

१ द. द्धा । २ मुद्रित पुस्तके ‘ क्षेत्रमष्टाश्रि तदर्धायामविस्तृति ’ इति स्यात् । ३ द. भद्रवाय । ४ द. त्रिस्तरे । ५ द. णः । ६ द. प्रदोद स° । ७ द. वे । ८ मुद्रित पुस्तके ‘ स्यान्निर्गमो ’ इति स्यात् । ९ द. ताः ।

सार्धभागायते स्यातां कर्णाः शालायुगान्विताः ।
पूर्ववच्छुण्डिकाद्यं च कमलेयमुदाहृता[1] ॥ २१७ ॥
चतुर्दशविभक्तासु सप्तस्वस्तिषु( ? ) कल्पयेत् ।
निर्गमायामतुल्यासु[2] शालाः पञ्च पृथक् पृथक् ॥ २१८ ॥
अग्रभद्रे तु कर्तव्यं शालात्रितयमुत्तमम् ।
इति विज्ञेय( ज्ञैः ) समाख्याता शाला वज्रधरप्रिया ॥ २१९ ॥

इत्थं जगत्यश्चतुरश्रसंस्थाः
( [3]स्पदायतां[4] ? ) वर्तुलसन्निवेशाः ।
( वृत्तायता थस्तियुताश्चयः सम्यग् ? )
जङ्घाः सदा शिल्पिभिरप्रमत्तैः ॥ २२० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
जगतीलक्षणाध्यायो नामैकोनसप्ततितमः ॥

---

## अथ लिङ्गपीठप्रतिमालक्षणं नाम सप्ततितमोऽध्यायः ।

अथ प्रमाणं लिङ्गानां लक्षणं चाभिधीयते ।
( लोहं हस्तत्रिभागेन कनीयसम् ? )[5] ॥ १ ॥
( [6]व्यंशवृद्धानां[7]वेवं स्युराहस्तांत्रतवाविधे[8] ? ) ।
( ह्रस्वमध्योत्तमाख्यानि त्रीणि त्रीण्यकल्पकादिभिः ॥ २ ॥
लिङ्गनामभिः[9] प्रासादस्यानुसारतः ? ) ।
अतश्च द्विगुणानि( स्युंवारुणाजानि[10] प्रमाणतः ? ) ॥ ३ ॥
( त्रिगुणान्यस्माज्जातानि ? )[11] मृत्तिकाप्रभवानि[12] च ।
स्वस्य स्वस्य कनिष्ठस्य पदेन परिवर्तनात् ॥ ४ ॥

---

१ द. तः । २ द. स्तु । ३ मुद्रित पुस्तके पाठभेदस्तु 'स्तदायता' इति स्यात् । ४ द. दांता । ५ द. प्रतौ '.........' इत्येवास्ति । ६ मुद्रित पुस्तके 'व्यंशवृद्धा नवैवं स्युरा हस्तत्रितयावधेः' इति स्यात् । द. व्यं । ७ द. नवैत्रं । ८ द. सूत्रे तथा विधे । ९ द. लिङ्गिनाममभिः प्राहुः प्रा° । १० द. वारुण्या । मुद्रित पुस्तके 'स्युर्दारुजानि प्रमाणतः' इति स्यात् । ११ मुद्रित पुस्तके 'त्रिगुणान्यश्मजातानि' इति स्यात् । १२ द. तिकी ।

